॥ श्रीगणेशायनमः ॥ ॥ श्रीकालिकायैनमः ॥ ॥ यद्योगिभिर्भवभयार्त्तिविनाशयोग्यमासाद्यवन्दितमतीवविविक्त
चित्तैः ॥ तद्वःपुनातुहरिपादसरोजयुग्ममाविर्भवत्क्रमविलङ्घितभूर्भुवःस्वः ॥ १ ॥ सापातुवःसकलयोगिजनस्यचित्तेऽ
विद्यातमिस्रतरणिर्य्यतिमुक्तिहेतुः ॥ याचास्यजन्तुनिवहस्यविमोहिनीतिमायाविभोर्ज्जनुषिशुद्धसुबुद्धिहन्त्री ॥ २ ॥ ईश्व
रञ्जगतामाद्यम्प्रणम्यपुरुषोत्तमम् ॥ नित्यज्ञानमयव्वँक्ष्येपुराणङ्कालिकाह्वयम् ॥ ३ ॥ मार्क्कण्डेयम्मुनिश्रेष्ठंस्थितंहिमधरा
न्तिके ॥ मुनयःपरिपप्रच्छुःप्रणम्यकमठादयः ॥ ४ ॥ भगवन्सम्यगाख्यातंसर्व्वशास्त्राणितत्त्वतः ॥ वेदान्सर्व्वाँस्तथासा
ङ्गान्सारभूतम्प्रमथ्यच ॥ ५ ॥ सर्व्ववेदेषुशास्त्रेषुयोयोनःसंशयोऽभवत् ॥ ससच्छिन्नस्त्वयाब्रह्मन्सवित्रेवतमश्चयः ॥ ६ ॥ जै
वात्रकाश्चभवतःप्रसादाद्द्विजसत्तम ॥ निःसंशयावयञ्जातावेदेशास्त्रेचसर्व्वशः ॥ ७ ॥ कृतकृत्यावयम्ब्रह्मँस्त्वत्तोऽधीत्यसम
न्ततः ॥ सरहस्यन्धर्म्मशास्त्रय्यँदगादिस्वयम्भुवा ॥ ८ ॥ भूयस्तच्छ्रोतुमिच्छामोहरङ्कालीपुराकथम् ॥ मोहयामासयतिनं
सतीरूपेणचेश्वरम् ॥ ९ ॥ सर्व्वदाध्याननिलयय्यँमिनय्यँतिनाव्वँरम् ॥ सङ्क्षोभयामासकथंसंसारविमुखंहरम् ॥ १० ॥ स
तीवाकथमुत्पन्नादक्षदारेषुशोभना ॥ कथंहरोमनश्चक्रेदारग्रहणकर्म्मणि ॥ ११ ॥ कथँव्वादक्षकोपेनत्यक्तदेहासतीपुरा ॥
हिमवत्तनयाजाताभूयोवाकथमागता ॥ १२ ॥ कथमर्द्धशरीरंसाऽहरत्स्मररिपोःपुनः ॥ एतत्सर्व्वँसमाचक्ष्वविस्तरेणद्विजो

त्तम ॥ १३ ॥ नान्योस्तिसंशयच्छेत्तात्वत्समोनभविष्यति ॥ यथाजानीमविप्रेन्द्रतत्[1]कुरुष्वैतदात्मवित् ॥ १४ ॥ ॥ मार्क्कण्डेय
उवाच ॥ ॥ शृणुध्वम्मुनयःसर्वेगुह्याद्गुह्यतरम्मम ॥ पुण्यंशुभकरंसम्यग्ज्ञानदङ्कामदम्परम् ॥ १५॥ एतद्ब्रह्मापुरोवाचनारदा
यमहात्मने ॥ पृष्टस्तेनततःसोपिवालखिल्येभ्यउक्तवान् ॥ १६॥ वालखिल्यामहात्मानस्ततआचक्षिरेपुनः ॥ यवक्रीतायमुन
येसप्रोवाचासितायच ॥ १७॥ असितोमेसमाचष्टएतद्विस्तरतोद्विजाः ॥ अहव्वँःकथयिष्यामिकथामेताम्पुरातनीम् ॥ १८॥
प्रणम्यपरमात्मानञ्चक्रपाणिञ्जगत्पतिम् ॥ व्यक्ताऽव्यक्तस्वरूपायसदसद्व्यक्तिरूपिणे॥१९॥स्थूलायसूक्ष्मरूपायविश्वरू
पायवेधसे ॥ नित्यायनित्यज्ञानायनिर्व्विकारायतेजसे ॥ २०॥ विद्याऽविद्यास्वरूपायकालरूपायवैनमः ॥ निर्म्मलायोर्म्मि
षट्कादिरहितायविरागिणे ॥२१॥ व्यापिनेविश्वरूपायसृष्टिस्थित्यन्तकारिणे ॥ योगिभिश्चिन्त्यतेयोसौवेदान्तान्तगचिन्तकैः[2]॥
॥२२॥ अन्तरन्तःपरञ्ज्योतिःस्वरूपम्प्रणमामितम्॥ तमेवाराध्यभगवान्ब्रह्मालोकपितामहः॥२३॥ प्रजाःससर्ज्जसकलाः
सुरासुरनरादिकाः ॥ सृष्ट्वाप्रजापतीन्दक्षप्रमुखान्सयथाविधि ॥ २४ ॥ मरीचिमत्रिम्पुलहन्तथैवाङ्गिरसङ्क्रतुम् ॥ पुलस्त्यञ्च
शिष्ठञ्चनारदञ्चप्रचेतसम् ॥२५॥ भृगुञ्चमानसान्पुत्रान्यदादशससर्ज्जसः॥तदातन्मनसोजाताचारुरूपावराङ्गना॥२६॥ना

१ तदेतत्कुरुष्वेत्यर्थः । २ वेदान्तान्तगाश्चतेचिन्तकाइतिकर्मधारयः ।

म्नासन्ध्येतिविख्यातासायंसन्ध्याजयन्तिका ॥ नतादृशीदेवलोकेनमर्त्त्यैनरसातले॥२७॥ कालत्रयेपिभवितासम्पूर्णगुणशा
लिनी ॥ निसर्गचारुनीलेनकचभारेणराजते ॥२८॥ मयूरीवविचित्रेणवर्षासुद्विजसत्तमाः ॥ आरक्तगौरमलिनमाकर्णान्त
न्तथाऽलकैः ॥ २९ ॥ रेजेसुराधिपधनुश्चारुबालेन्दुसन्निभम् ॥ प्रफुल्लनीलनलिनश्यामलन्नयनद्वयम् ॥ ३० ॥ चकाशेचकि
तायास्तुकुरङ्ग्याःसदृशञ्चलम् ॥ निसर्गचञ्चलञ्चारुभ्रूयुग्मंश्रवणायतम् ॥३१॥ मीनाङ्ककोदण्डसमन्नीलन्तस्याद्विजोत्तमाः
भ्रूमध्याधोनिम्नभागादायतप्रांशुनासिका ॥ ३२ ॥ लावण्यान्निद्रवन्तीवललाटात्तिलपुष्पवत् ॥ तद्रक्तंशोणपद्माभपूर्णचन्द्र
समप्रभम् ॥ ३३ ॥ बिम्बाधरारुणिम्नाभिरेजेरागिमनोहरम् ॥ सौन्दर्य्यलावण्यगुणैरापूर्णवदनम्पुनः ॥ ३४ ॥ अभितश्चिबु
कर्य्यातमुद्यताविवतत्कुचौ ॥ राजीवकुड्मलाकारौपीनोत्तुङ्गौनिरन्तरौ ॥ ३५ ॥ श्यामास्यौतत्कुचौविप्रामुनीनामपिमोहनौ ॥
बलिभाजिक्षीणमध्यमुष्टिग्राह्यमिवाशुगम् ॥ ३६ ॥ तन्मध्यन्ददृशुःसर्वेशक्तितुल्यम्मनोभुवः ॥ तस्याश्चोरुयुगंरेजेस्थूलो
द्दृढङ्करभायतम् ॥ ३७॥ आनमद्वारणकरप्रतिमम्मृदुमन्थरम् ॥ स्थलाम्बुजारुणम्पादयुग्मंसत्पार्ष्णिराजितम् ॥ ३८॥ अङ्गु
लीदलसङ्कीर्णङ्कुसुमायुधबाणवत् ॥ ताञ्चारुदशनान्तन्वीन्तनुरोमावलीवृताम् ॥ ३९ ॥ सस्वेदवदनान्दीर्घनयनाञ्चा
रुहासिनीम् ॥ चारुकर्णयुगाक्रान्तान्त्रिगम्भीरांषडुन्नताम् ॥ ४० ॥ दृष्ट्वाधातासमुत्थायचिन्तयामासहृद्गतम् ॥ दक्षादयस्ते

स्त्रष्टारोमरीच्याद्यास्तुमानसाः ॥ ४१ ॥ दध्युःसमुत्सुकाःसर्व्वैतान्दृष्ट्वावरवर्ण्णिनीम् ॥ किङ्कर्म्मास्याभवेत्सृष्टौकस्यवावर
वर्ण्णिनी ॥ ४२ ॥ भविष्यतीतितेसर्व्वैचिन्तयामासुरुत्सुकाः ॥ एवञ्चिन्तयतस्तस्यब्रह्मणोमुनिसत्तमाः ॥ ४३ ॥ मनसः
पुरुषोवल्गुराविर्भूतोविनिःसृतः ॥ काञ्चनीचूर्ण्णपीताभःपीनोरस्कःसुनासिकः ॥ ४४ ॥ सुवृत्तोरुकटीजङ्घोनीलवेष्टित
केशरः ॥ लग्नभ्रूयुगलोलोलःपूर्णचन्द्रनिभाननः ॥ ४५ ॥ कपाटविस्तीर्ण्णहृदिरोमराजिविराजितः ॥ शुभ्रमातङ्गकरवत्पी
ननिस्तलबाहुकः ॥ ४६ ॥ आरक्तपाणिनयनमुखपादकरोद्भवः ॥ क्षीणमध्यश्चारुदन्तःप्रमत्तगजबन्धनः ॥ ४७ ॥ प्रफु
ल्लपद्मपत्राक्षःकेशरघ्राणतर्प्पणः ॥ कम्बुग्रीवोमीनकेतुःप्रांशुर्म्मकरवाहनः ॥ ४८ ॥ पञ्चपुष्पायुधोवेगीपुष्पकोदण्डम
ण्डितः ॥ कान्तःकटाक्षपातेनभ्रामयन्नयनद्वयम् ॥ ४९ ॥ सुगन्धिमरुताभान्तंशृङ्गाररससेवितम् ॥ तव्वींक्ष्यतादृशन्दक्षप्र
मुखामानसाश्चते ॥ ५० ॥ मरीच्याद्यादशततोविस्मयाविष्टचेतसः ॥ औत्सुक्यम्परमञ्जग्मुरापुर्व्वैकारिकम्मनः ॥ ५१ ॥
सचापिवेधसव्वींक्ष्यस्त्रष्टारञ्जगताम्पतिम् ॥ प्रणम्यपुरुषःप्राहविनयानतकन्धरः ॥ ५२ ॥ ॥ पुरुषउवाच ॥ ॥ किङ्क
रिष्याम्यहङ्कर्म्मब्रह्मँस्तत्रनियोजय ॥ मान्नयाय्येपुरुषोयस्माद्रुचितेशोभतेविधे ॥ ५३ ॥ अभिधानञ्चयद्योग्यंस्थानम्पत्नीच

१ हरिद्राचूर्णेत्यर्थः ।

यामम ॥ तन्मेकुरुष्वलोकेशत्वंस्रष्टाजगतार्य्यतः ॥ ५४ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ एवन्तस्यवचःश्रुत्वापुरुषस्यमहा
त्मनः ॥ क्षणन्नकिञ्चित्प्रोवाचस्वसृष्टावपिविस्मितः ॥ ५५ ॥ ततोमनःसुसर्य्यम्यसम्यगुत्सृज्यविस्मयम् ॥ उवाचपुरुषम्ब्र
ह्मातत्कर्म्मोद्देशमावहन् ॥ ५६ ॥ ॥ब्रह्मोवाच ॥ ॥ अनेनचारुरूपेणपुष्पबाणैश्चपञ्चभिः ॥ मोहयन्पुरुषांस्त्रीश्चकुरुसृ
ष्टिंसनातनीम् ॥ ५७ ॥ नदेवोनचगन्धर्वोनकिन्नरमहोरगाः ॥ नासुरोनचदैत्योवानविद्याधरराक्षसाः ॥ ५८ ॥ नयक्षानपि
शाचाश्चनभूतानविनायकाः ॥ नगुह्यकानवासिद्धानमनुष्यानपक्षिणः ॥ ५९ ॥ पशवोनमृगाःकीटपतङ्गाजलजाश्चये ॥ न
तेसर्व्वेभविष्यन्तिनलक्ष्यायेशरस्यते ॥ ६० ॥ अहव्वाँवासुदेवोवास्थाणुर्व्वापुरुषोत्तम ॥ भविष्यामस्तववशेकिमन्यैःप्रा
णधारिभिः ॥ ६१ ॥ प्रच्छन्नरूपीजन्तूनाम्प्रविशन्हृदयंसदा ॥ सुखहेतुःस्वयम्भूत्वाकुरुसृष्टिंसनातनीम् ॥ ६२ ॥ त्वत्पुष्पबाण
स्यसदामुख्यलँक्ष्यम्मनोस्तुच ॥ सर्व्वेषाम्प्राणिनान्नित्यम्मदमोदकरोभवान् ॥ ६३ ॥ इतितेकर्म्मकथितंसृष्टिप्रावर्त्तकम्पुनः
॥ नामापिचगदिष्यामियत्तेयोग्यम्भविष्यति ॥ ६४ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इत्युक्त्वाचसुरश्रेष्ठोमानसानाम्मुखानिच ॥
आलोक्यस्वासनेपद्मेसूपविष्टोऽभवत्क्षणात् ॥ ६५ ॥ ॥ इतिश्रीकालिकापुराणेकामप्रादुर्भावोनाम प्रथमोऽध्यायः ॥ १ ॥
॥ मार्कण्डेयउवाच ॥ ॥ ततस्तेमुनयःसर्व्वेतदभिप्रायवेदिनः ॥ चक्रुस्तदुचितन्नाममरीच्यत्रिमुखास्तदा ॥ १ ॥ मुखावलो

कनादेवज्ञात्वावृत्तान्तमन्यतः ॥ दक्षादयस्तुस्त्रष्टारःस्थानम्पत्नीश्चतेददुः ॥ २ ॥ ततोनिश्चित्यनामानिमरीचिप्रमुखाद्विजाः
॥ ऊचुःसङ्गतमेतस्मैपुरुषायद्विजोत्तमाः ॥ ३ ॥ ॥ ऋषयऊचुः ॥ ॥ यस्मात्प्रमथ्यचेतस्त्वञ्जातोऽस्माकन्तथाविधेः ॥
तस्मान्मन्मथनाम्नात्वँल्लोकेख्यातोभविष्यसि ॥४॥ जगत्सुकामरूपस्त्वन्त्वत्समोनहिविद्यते ॥ अतस्त्वङ्कामनाम्नाऽपिख्या
तोभवमनोभव ॥ ५ ॥ मदनान्मदनाख्यस्त्वंशम्भोर्द्दर्प्पाच्चदर्प्पकः ॥ तथाकन्दर्प्पनाम्नापिलोकेख्यातोभविष्यसि ॥ ६॥ त्व
दाशुगानाय्यँद्वीर्य्यन्तद्वीर्य्यन्नभविष्यति ॥ वैष्णवानाञ्चरौद्राणाम्ब्रह्मास्त्राणाञ्चतादृशम् ॥ ७॥ स्वर्गेमर्त्येचपातालेब्रह्मलो
केसनातन ॥ तवस्थानानिसर्व्वाणिसर्व्वव्यापीभवान्यतः ॥ ८ ॥ किंवाँचातिविशेषेणसामान्येनास्तितेसमः ॥ यत्रयत्रभ
वत्प्राणीशाद्वलास्तरवोऽथवा ॥ ९ ॥ तत्रतत्रतवस्थानमस्त्वाब्रह्मसदोदयम् ॥ दक्षोऽयम्भवतःपत्नींस्वयन्दास्यतिशोभनाम्
॥ १० ॥ आद्यःप्रजापतिर्य्योहियथेष्टम्पुरुषोत्तम ॥ एषाचकन्यकाचारुरूपाब्रह्ममनोभवा ॥ ११ ॥ सन्ध्यानाम्नेतिविख्याता
सर्व्वेलोकेभविष्यति ॥ ब्रह्मणोध्यायतोयस्मात्सम्यग्जातावराङ्गना ॥ १२ ॥ अतःसन्ध्येतिलोऽस्मिन्नस्याःख्यातिर्भविष्य
ति ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥इत्युक्त्वामुनयःसर्व्वेतूष्णीन्तस्थुर्द्विजोत्तमाः ॥ १३ ॥ अवेक्ष्यब्रह्मवदनव्विँनयावनताःपुरः॥

१ जनसमूहे । २ स्थितिः ।

ततःकामोपिकोदण्डमादायकुसुमोद्भवम् ॥ १४ ॥ उन्मादनेतिविख्यातङ्कान्ताभ्रूतुल्यवेल्लितम् ॥ कौसुमानितथास्त्राणिपञ्चा
दायद्विजोत्तमाः ॥ १५ ॥ हर्षणंरोचनाख्यञ्चमोहनंशोषणन्तथा ॥ मारणञ्चेतिसञ्ज्ञाभिर्म्मुनिमोहकराण्यपि ॥ १६ ॥ प्रच्छ
न्नरूपीतत्रैवचिन्तयामासनिश्चयम् ॥ ब्रह्मणाममयत्कार्य्यंसमुद्दिष्टंसदातनम् ॥१७॥ तदिहैवकरिष्यामिमुनीनांसन्निधौविधेः
॥ तिष्ठन्तिमुनयश्चात्रस्वयंश्चापिप्रजापतिः ॥१८॥ एषासन्ध्यावरस्त्रीचदक्षोप्यत्रप्रजापतिः ॥ एतेशरव्यभूतामेभविष्यन्त्यद्य
निश्चयम् ॥१९॥ सन्ध्यापिब्रह्मणाप्रोक्तमिदानीमेवयद्वचः ॥ अहव्विँष्णुर्हरश्चापितवास्त्रवशवर्त्तिनः ॥ २०॥ किमन्यैर्ज्जन्तुभि
रितितत्सार्थङ्करवाण्यहम् ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ इतिसंचिन्त्यमनसानिश्चित्यचमनोभवः ॥२१॥पुष्पज्याम्पुष्पचापस्य
योजयामासमार्गणैः ॥आलीढस्थानमासाद्यधनुराकृष्ययत्नतः ॥ २२ ॥ चकारवलयाकारङ्कामोधन्विवरस्तदा ॥ संहितेतेन
कोदण्डेमारुताश्चसुगन्धयः ॥२३॥ ववुस्तत्रमुनिश्रेष्ठाःसम्यगाल्हादकारिणः ॥ ततस्तानथधात्रादीन्सर्व्वानेवचमानसान्
॥ २४ ॥ पृथक्पृथक्पुष्पशरैर्म्मोहयामाससमोहनः ॥ ततस्तेमुनयःसर्व्वेमोहिताश्चतुराननः ॥ मोहितोमनसाकिञ्चिद्विकारम्प्रा
पुरादितः ॥ २५ ॥ सन्ध्यांसर्वेनिरीक्षन्तःसविकारामुहुर्म्मुहुः ॥ आसन्प्रवृद्धमदनाःस्त्रीयस्मान्मदवर्द्धिनी ॥ २६॥ततःसर्व्वा

१ औदा।

न्त्समदनोमोहयित्वापुनःपुनः ॥ यथेन्द्रियविकारांस्तेप्रापुस्तानकरोत्तथा ॥ २७ ॥ उदीरितेन्द्रियोधातावीक्षाञ्चक्रेयदाथताम्
॥ तदैवत्थ्यूनपञ्चाशद्भावाजाताःशरीरतः ॥ २८ ॥ बिव्वोकाद्यास्तथाहावाश्चतुःषष्टिकलास्तथा ॥ कन्दर्प्पशरविद्धायाःस
न्ध्यायाअभवन्द्विजाः॥२९॥सापितैर्व्वीक्ष्यमाणाऽथकन्दर्प्पशरपातजान्॥चक्रेमुहुर्म्मुहुर्भावान्कटाक्षावरणादिकान्॥३०॥
निसर्गसुन्दरीसन्ध्यातान्भावान्मदनोद्भवान् ॥ कुर्व्वन्त्यतितरांरेजेस्वर्णदीवतनूर्[illegible]भिः ॥३१॥ अथभावयुतांसन्ध्याव्वी
क्षमाणःप्रजापतिः ॥ घर्म्माम्भःपूरिततनुरभिलाषमथाकरोत् ॥ ३२ ॥ ततस्तेमुनयःसर्व्वेमरीच्यत्रिमुखाअपि ॥ दक्षाद्याश्च
द्विजश्रेष्ठाःप्रापुर्व्वैकारिकेन्द्रियम् ॥ ३३ ॥ दृष्ट्वातथाविधान्दक्षमरीचिप्रमुखान्विधिम् ॥ सन्ध्याञ्चकर्म्मणिनिजेश्रद्दधेमदन
स्तदा ॥ ३४ ॥ यदिदम्ब्रह्मणाकर्म्ममनोहिष्टम्मयापितत् ॥ कर्त्तुंशक्यमितिश्रद्धाभावितात्माभवत्तदा ॥ ३५ ॥ ततोवियद्गतः
शम्भुर्व्विधिन्दृष्ट्वातथाविधम्॥ सदक्षान्मानसान्वापिजहासोपजहासच ॥३६॥ ससाधुवादन्तान्त्सर्व्वान्विहस्यचपुनःपुनः ॥
उवाचेदन्द्विजश्रेष्ठालज्जयंस्तान्वृषध्वजः॥ ३७॥ ॥ईश्वरउवाच॥ ॥अहोब्रह्मंस्तवकथङ्कामभावःसमुद्गतः॥ दृष्ट्वास्व
तनयान्नैतद्योग्यंव्वेदानुसारिणाम् ॥ ३८ ॥ यथामातातथायामिर्य्यथायामिस्तथासुता॥एषवैवेदमार्ग्गस्यनिश्चयस्त्वन्मुखो
त्थितः ॥ ३९ ॥ कथन्तुकाममात्रेणतत्तेविस्मारितव्विधे ॥ धैर्य्येजगदिदम्ब्रह्मन्त्समस्तञ्चतुरानन ॥ ४० ॥ कथङ्क्षुद्रेणकामेन

तत्ते विघटितँव्विधे ॥ एकान्तयोगिनस्तस्मात्सर्व्वदा दिव्यदर्शनाः ॥ ४१ ॥ कथन्दक्षमरीच्याद्यो लोलुपा स्त्रीषु मानसाः ॥
कथङ्कामोपि मन्दात्मा प्राप्तकर्म्माधुनैव तु ॥ ४२ ॥ युष्माञ्छरव्यान्कृतवानकालज्ञोऽल्पचेतनः ॥ धिगस्तु तम्मुनिश्रेष्ठा
यस्य कान्ताजनो हठात् ॥ ४३ ॥ धैर्य्यमाकृष्य लौल्येषु मज्जयत्यपि तन्मनः ॥ ॥ मार्क्कण्डेय उवाच ॥ ॥ इति तस्य
वचः श्रुत्वा लोकेशो गिरिशस्य च ॥ ४४ ॥ व्रीडया द्विगुणीभूतस्वेदार्द्रो ह्यभवत्क्षणात् ॥ ततो निगृह्येन्द्रियकविकारञ्चतुरा
ननः ॥ ४५ ॥ जिघृक्षुरपि तत्याज तां सन्ध्याङ्कामरूपिणीम् ॥ तच्छरीरात्तु घर्म्माम्भो यत्पपाताद्द्विजोत्तमाः ॥ ४६ ॥ अ
ग्निष्वात्ता बर्हिषदो जाताः पितृगणास्ततः ॥ भिन्नाञ्जननिभाः सर्वे फुल्लराजीवलोचनाः ॥ ४७ ॥ नितान्तयतयः पुण्याः
संसारविमुखाः पराः ॥ सहस्राणाञ्चतुःषष्टिरग्निष्वात्ताः प्रकीर्त्तिताः ॥ ४८ ॥ षडशीतिसहस्राणि तथा बर्हिषदो द्विजाः ॥ घ
र्म्माम्भः पतितम्भूमौ यद्दक्षस्य शरीरतः ॥ ४९ ॥ समस्तगुणसम्पन्ना तस्माज्जाता वराङ्गना ॥ तन्वङ्गी तनुमध्या च तनुरो
मावली शुभा ॥ ५० ॥ मृद्वङ्गी चारुदशना तप्तकाञ्चनसप्रभा ॥ मरीचिप्रमुखैः षड्भिर्निगृहीतेन्द्रियाक्रिया ॥ ५१ ॥ ऋते क्रतु
व्वँशिष्ठञ्च पुलस्त्याङ्गिरसौ तदा ॥ क्रत्वादीनाञ्चचतुर्णाञ्च यो भूमौ निपपात ह ॥ ५२ ॥ ततः पितृगणा जाता अपरे द्वि
जसत्तमाः ॥ सोमपा आज्यपा नाम्ना तथैवान्ये स्वकालिनः ॥ ५३ ॥ हविर्भुजस्तु ते सर्वे कव्यवाहाः प्रकीर्त्तिताः ॥ क्रतो

१ ब्राह्मणोमनोजाताः ॥

स्तु सोमपाः पुत्रा वसिष्ठस्य स्वकालिनः ॥ ५४ ॥ आज्यपाख्याः पुलस्त्यस्य हविष्मन्तोऽङ्गिरःसुताः ॥ जातेषु तेषु विप्रे
न्द्रा अग्निष्वात्तादिकेष्वथ॥५५॥लोकानाम्पितृवर्ग्गेषु कव्यवाहा समन्ततः॥सर्वेषामेव भूतानाम्ब्रह्मा भूतः पितामहः॥५६॥
सन्ध्या पितृप्रसूर्भूता तदुद्देशाद्यतोऽभवत् ॥ अथ शङ्करवाक्येन लज्जितः सपितामहः ॥ ५७ ॥ कन्दर्प्पाय चुकोपाशु भ्रुकुटी
कुटिलाननः ॥ पुरैव तदभिप्रायं विदित्वा सोपि मन्मथः ॥ ५८ ॥ स्वबाणान्संजहाराशु भीतः पशुपतेर्विधेः ॥ ततः क्रो
धसमाविष्टो ब्रह्मा लोकपितामहः ॥ यच्चकार द्विजेन्द्रास्तच्छृणुध्वंसुसमाहिताः ॥ ५९ ॥ ॥ इति श्रीकालिकापुराणे द्वि
तीयोध्यायः ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ ततः कोपसमाविष्टः पद्मयोनिर्ज्जगत्पतिः ॥ प्रजज्वालातिबल
वद्दिधक्षुरिव पावकः ॥ १ ॥ उवाच चेश्वरङ्कामो भवतः पुरतो यतः ॥ पुष्पेषुभिर्मामभजत्तत्फलस्याप्नुयाद्धर ॥ २ ॥ तव
नेत्राग्निनिर्दग्धः कन्दर्प्पो दर्प्पमोहितः ॥ भविष्यति महादेव कृत्वा कर्मातिदुष्करम् ॥ ३ ॥ इति वेधाः स्वयङ्कामं शशाप
द्विजसत्तमाः॥ समक्षव्योमकेशस्य मुनीनाञ्च यतात्मनाम् ॥ ४ ॥ अथ भीतो रतिपतिस्तत्क्षणात्त्यक्तमार्गणः ॥ प्रादुर्ब
भूव प्रत्यक्षं शापं श्रुत्वातिदारुणम् ॥ ५॥ उवाच चेदम्ब्रह्माणं सदक्षं समरीचिकम् ॥ तथ्यञ्च गद्गदम्भीत्या भीतिर्हि गुणहा
निकृत् ॥ ६ ॥ मन्मथ उवाच ॥ ब्रह्मन्किमर्थम्भवता शप्तोहमतिदारुणम् ॥ अनागास्तव लोकेश न्यायमार्गानुसारिणः॥७॥

त्वयैवोक्तन्तु तत्कर्म यत्तु कुर्यामहँव्विभो॥तत्र योग्यो नशापो मे यतो नान्यन्मया कृतम्॥८॥अहँव्विष्णुस्तथा शम्भुःसर्वे त्व
च्छरगोचराः॥ इति यद्भवता प्रोक्तन्तन्मयापि परीक्षितम्॥९॥नापराधो ममास्त्यत्र ब्रह्मन्मयि निरागसि॥दारुणं शमयस्वै
नं शापम्मम जगत्पते ॥ १० ॥ ॥ मार्क्कण्डेय उवाच ॥ ॥ इति तस्य वचः श्रुत्वा विधाता जगताम्पतिः॥ प्रत्युवाच
यतात्मानम्मदनं सदयम्मुहुः ॥ ११ ॥ ॥ ब्रह्मोवाच ॥ आत्मजा मम सन्ध्येयञ्ँयस्मादेतत्सँकाशतः॥ लक्षीकृतोहम्भ
वता ततः शापो मया कृतः॥१२॥अधुना शान्तरोषोह त्वाव्ँवदामि मनोभव॥भवतः शापशमनम्भविष्यति यथा तथा ॥ १३
त्वम्भस्म भूत्वा मदन भर्ग्गलोचनवह्निना ॥ तस्यैवानुग्रहात्पश्चाच्छरीरं समवाप्स्यसि ॥१४॥ यदा हरो महादेवः कुर्य्याद्दा
रपरिग्रहम् ॥ तदा स एव भवता शरीरम्प्रापयिष्यति ॥ १५ ॥ ॥ मार्क्कण्डेय उवाच ॥ ॥ एवमुक्त्वाथ मदनम्ब्रह्मा लो
कपितामहः॥ अन्तर्द्दधे मुनीन्द्राणाम्मानसानाञ्च पश्यताम् ॥ १६ ॥ तस्मिन्नन्तर्हिते शम्भुः सर्व्वेषाञ्च विधातरि ॥ य
थेष्टदेशङ्गतवान्ब्रह्मन्मारुतरंहसा ॥ १७॥ वेधस्यान्तर्हिते तस्मिन् गते शम्भौ निजास्पदम् ॥ दक्षः प्राहाथ कन्दर्प्पम्पत्नीन्त
स्य निदेशयन् ॥ १८॥ दक्ष उवाच॥ मद्देहजेयङ्कन्दर्प्प मद्रूपगुणसंय्युता॥ एनाङ्गृह्णीष्व भार्यार्थम्भवतः सदृशीङ्गुणैः॥ १९ ॥
एषा तव महातेजाः सर्व्वदा सहचारिणी भविष्यति यथाकामन्धर्मतो वशवर्त्तिनी॥ २० ॥ ॥ मार्क्कण्डेय उवाच॥

१ समीपेइत्यर्थः ॥

इत्युक्त्वा प्रददौ दक्षो देहस्वेदाम्बुसम्भवाम् ॥ कन्दर्पायाग्रतः कृत्वा नाम कृत्वा रतीति ताम्॥२१॥ताँव्वीक्ष्य मदनो रामां र
त्याख्यां सुमनोहराम्॥आत्माशुगेन विद्धोसौ मुमोह रतिरञ्जितः ॥२२॥ क्षणप्रभा[1]वदेकान्तगौरी मृगदृशी सदा॥लोला[2]पा
ङ्गयथ तस्यैव मृगीव सदृशी बभौ॥२३॥तस्या भ्रूयुगलँव्वीक्ष्य संशयम्मदनोकरोत्॥ उन्मादकन्मे कोदण्डं किन्धात्रास्या
न्निवेशितम्॥२४॥कटाक्षाणामाशुगतिन्दृष्ट्वा तस्या द्विजोत्तमाः॥ आशुगत्वान्निजास्त्राणां श्रद्दधते च चारुताम्॥२५॥तस्याः
स्वभावसुरभिन्धीरंश्वासानिलन्तथा ॥ आघ्राय मदनः श्रद्धान्त्यक्तवान्मलयानिले ॥२६॥ पुर्णेन्दुसदृशँव्वक्त्रन्दृष्ट्वा सूल
क्ष्मलक्षितम् ॥ ननिश्चिकाय मदनो भेदन्तन्मुखचन्द्रयोः ॥ २७ ॥ सुवर्णपद्मकलिकातुल्यन्तस्याः कुचद्वयम् ॥ रेजे चूचु
कयुग्मेन भ्रमरेणेव सेवितम् ॥ २८ ॥ दृढपीनोन्नतघनस्तनमध्याद्विलम्बिनीम् ॥ आनाभितो रोमराजीन्तन्वीं चार्वायतां
शुभाम् ॥ २९ ॥ ज्याम्पुष्पधनुषः कामः षट्पदावलिसंभृताम् ॥ विसस्मार च यस्मात्तांविगृह्यैनान्निरीक्षते ॥ ३० ॥ ग
म्भीरनाभिरन्ध्रान्तश्चतुःपार्श्वत्वगावृताम् ॥ आननाब्जेक्षणद्वन्द्वमारक्तकमलय्यँथा ॥ ३१ ॥ क्षीणा मध्येन वपुषा निसर्गा
ष्टापद[3]प्रभा ॥ रत्नवेदी[4]व ददृशे कामेन द्विजसत्तमाः ॥ ३२ ॥ रम्भास्तम्भायतस्निग्धन्तदूरुयुगलं मृदु ॥ निजशक्तिसमङ्का
मो वीक्षाञ्चक्रे मनोहरम् ॥ ३३ ॥ आरक्तपार्ष्णिपादाग्रप्रान्तभागम्पदद्वयम् ॥ अनुरागमिवामेने स्थितन्तस्याम्मनोभवः

१ विद्युदिवेत्यर्थः। २ मृगीवलोलापाङ्गीत्यन्वयः। ३ अष्टापदः शरभः। ४ रुक्मदेवी इति पाठः।

॥ ३४ ॥ तस्याः करयुगं रक्तन्नखरैः किंशुकोपमैः ॥ वृताभिरङ्गुलीभिश्च सूक्ष्माग्राभिर्म्मनोहरम् ॥ ३५ ॥ इति दृष्ट्वा स्म
रो मेने ममास्त्रैर्द्विगुणीकृतैः ॥ माम्मोहयितुमद्युक्ता किमेषा द्विजसत्तमाः ॥ ३६ ॥ तद्बाहुयुगलङ्कान्तम्मृडालयुगलायत
म् ॥ मृदुस्निग्धं रराजातिकान्तितोयप्रवाहवत् ॥ ३७ ॥ नीलनीरदसङ्काशः केशपाशो मनोहरः ॥ चमरीबालभरवद्विभा
ति स्म स्मरप्रियः ॥ ३८ ॥ ताँवीक्ष्य मदनो देवीं रतीमतिमनोहराम् ॥ कान्तितोयौघसम्पूर्णाङ्कुचवक्त्राब्जकुड्मलाम् ॥
॥ ३९ ॥ वक्त्रपद्माश्चारुबाहुमृडालीशकलान्विताम् ॥ भ्रूयुग्मविभ्रमव्राततनूर्म्मिपरिराजिताम् ॥ ४० ॥ कटाक्षपातभृ
ङ्गौघान्नेत्रनीलोत्पलान्विताम् ॥ तनुलोमालिशैवालाम्मनोद्रुमविशातिनीम् ॥ ४१ ॥ निम्ननाभिह्रदान्दक्षप्रालेयाद्रिसमु
द्भवाम् ॥ गङ्गामिव महादेवो जग्राहोत्फुल्ललोचनः ॥ ४२ ॥ उवाच च तदा दक्षङ्कामो मोदभरान्वितः ॥ विस्मृत्य शापञ्च
तदा विधिदत्तं सुदारुणम् ॥ ४३ ॥ मदन उवाच ॥ अनया सहचारिण्या सम्यक्सुन्दररूपया ॥ समर्थो मोहितुं शम्भुं किमन्यै
र्जन्तुभिर्व्विभो ॥ ४४ ॥ यत्र यत्र मया लक्ष्यङ्क्रियते धनुषोऽनघ ॥ तत्रानयापि चेष्टव्यम्मायया रमणाह्वया ॥ ४५ ॥ यदा दे
वालयय्याँमि पृथिवीव्वाँ रसातलम् ॥ तदैषाप्यस्तु सध्रीची सर्व्वदा चारुहासिनी ॥ ४६ ॥ यथा पद्मालया विष्णोर्ज्जलदाना
य्यँथा तडित् ॥ तथा ममैषा भविता प्रजाध्यक्षसहायिनी ॥ ४७ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इत्युक्त्वा मदनो देवीं रतीञ्जग्राह

१ मृणालेति पाठः ।

सोत्सुकः ॥ सागराद्दुत्थिताल्लँक्ष्मीं हृषीकेश इवोत्तमाम् ॥ ४८ ॥ रराज स तया सार्द्धम्भिन्नपीतप्रभः स्मरः ॥ जीमूत इव स
न्ध्यायां सौदामिन्या मनोज्ञया ॥ ४९॥ इति रतिपतिरुच्चैर्म्मोदयुक्तो रतीन्तां हृदि परिजगृहेयथ्यौँगदर्शीव विद्याम् ॥ रति
रपि पतिमग्र्यम्प्राप्य तोषञ्च लेभे हरिमिव कमलोत्था पूर्णचन्द्रोपमास्या ॥५०॥ इति श्रीकालिकापुराणे तृतीयोध्यायः
॥ ३॥ ॥ मार्कण्डेय उवाच ॥ ॥ ततः प्रभृति धातापि यदैवान्तर्हितःपुरा॥चिन्तयामास सततं शम्भुवाक्यविषार्द्दितः ॥१॥
कान्ताभिलाषमात्रम्मे दृष्ट्वा शम्भुरगर्हयत् ॥ मुनीनाम्पुरतः कस्मात्स दाराञ्सङ्ग्रहिष्यति ॥ २॥ का वा भवित्री तज्जाया काच
तन्मनसि स्थिता ॥ योगमार्गमवज्ञाप्य तस्य मोहङ्करिष्यति ॥ ३ ॥ मन्मथोपि समर्थो नो भविष्यत्यस्य मोहने ॥ निता
न्तयोगी रामाणान्नामापि सहते न सः ॥ ४ ॥ अगृहीतेषु दारेषु हरेण कथमादितः ॥ मध्ये चैव भवेत्सृष्टिस्तद्वधो नान्य
कारितः ॥ ५ ॥ केचिद्भविष्यन्ति भुवि मया वध्या महाबलाः ॥ केचिद्विष्णोर्ब्बाधनीयाःकेचिच्छम्भोरुपायतः ॥ ६ ॥ संसार
विमुखे शम्भौ तथैकान्तविरागिणि॥अस्मादृते न कर्म्मान्यत्करिष्यति न संशयः ॥७॥चिन्तयन्निति लोकेशो ब्रह्मा लोकपि
तामहः ॥ पुनर्द्ददर्श भूमिष्ठान्दक्षादीन्वियति स्थितः ॥८॥ रतिद्वितीयम्मदनम्मोदयुक्तन्निरीक्ष्य च ॥ पुनस्तत्र गतः प्राह सा
न्त्वयन्पुष्पसायकम् ॥ ९ ॥ ब्रह्मोवाच ॥ अनया सहचारिण्या राजसे त्वम्मनोभव ॥ एषा च भवता पत्या युक्ता संशोभते भृ

१ नाशः ।

शम् ॥१०॥ यथा श्रिया हृषीकेशो यथा तेन हरिप्रिया॥ क्षणदा विधुना युक्ता तया युक्तो यथा विधुः ॥११॥ तथैव युवयोः शो
भा दाम्पत्यञ्च पुरस्कृतम् ॥ अतस्त्वञ्जगतः केतुर्विश्वकेतुर्भविष्यसि॥१२॥जगद्धिताय वत्स त्वम्मोहयस्व पिनाकिनम्॥
यथासुखमनाः शम्भुःकुर्य्याद्दारपरिग्रहम् ॥१३॥ विजने स्निग्धदेशे च पर्व्वतेषु सरित्सु च ॥ यत्र यत्र प्रयातीशस्तत्र तत्रान
या सह ॥१४॥मोहयस्व यतात्मानव्वँनिताविमुखं हरम् ॥ त्वदृते विद्यते नान्यः कश्चिदस्य विमोहकः॥१५॥भूते हरे सानुरा
गे भवतोपि मनोभव ॥ शापोपशान्तिर्भविता तस्मादात्महितङ्कुरु ॥ १६ ॥ सानुरागो वरारोहाय्यँदीच्छति मनोभव ॥ तदा
तवोपभोगाय स त्वां सम्भावयिष्यति॥१७॥तस्माज्जगद्धिताय त्वय्यँतस्व हरमोहने ॥ विश्वस्य भवकेतुस्त्वम्मोहयित्वा महे
श्वरम्॥१८॥ ॥ मार्कण्डेय उवाच ॥ ॥ इति श्रुत्वा वचस्तस्य ब्रह्मणः परमात्मनः ॥ उवाच मन्मथस्तथ्यम्ब्रह्माणञ्जगतो
हितम् ॥१९॥ मन्मथ उवाच ॥ करिष्येऽहन्तव विभो वचनाच्छम्भुमोहनम्॥ किन्तु योषिन्महास्त्रम्मे तत्र कान्ताम्प्रभो सृज
॥२०॥मया सम्मोहिते शम्भौ यया तस्यानुमोहनम् ॥ कार्य्यन्मनोरमां रामान्तान्निदेशय लोकभृत् ॥ २१ ॥ तामहन्नहि प
श्यामि यया तस्यानुमोहनम् ॥ कर्त्तव्यमधुना धातस्तत्रोपायन्तथा कुरु ॥२२॥ ॥मार्कण्डेय उवाच॥ ॥ एवव्वँादिनि कन्द
र्प्पे धाता लोकपितामहः॥ कुर्य्यां सम्मोहनीय्यँोषामिति चिन्ताञ्जगाम ह ॥२३॥ चिन्ताविष्टस्य तस्याथ निःश्वासो यो वि

निःसृतः ॥ तस्माद्वसन्तः सञ्जातः पुष्पवातविभूषितः ॥ २४ ॥ चूताङ्कुरान्मुकुलितान्बिभ्रद्भ्रमरसंहतिम् ॥ किंशुकान्त्सार
सान्त्रेजेप्रफुल्ल इव पादपः ॥ २५ ॥ शोणराजीवसङ्काशः फुल्लतामरसेक्षणः ॥ सन्ध्योदिताखण्डशशिप्रतिमास्यः सुना
सिकः ॥ २६ ॥ शङ्खवच्छ्रवणावर्त्तः श्यामकुञ्चितमूर्द्धजः ॥ सन्ध्यांशुमालिसदृशकुण्डलद्वयमण्डितः ॥ २७॥ प्रमत्तमातङ्ग
गतिर्व्विस्तीर्ण्णहृदयस्थलः ॥ पीनस्थूलायतभुजः कठोरकरयुग्मकः ॥ २८ ॥ सुवृत्तोरुकटीजङ्घः कम्बुग्रीवोन्नतांसकः ॥
गूढजत्रुः पीनवक्षाः सम्पूर्ण्णः सर्व्वलक्षणैः ॥ २९ ॥ तादृशेऽथ समुत्पन्ने सम्पूर्ण्णे कुसुमाकरे ॥ ववौ वायुः ससुरभिः पाद
पा अपि पुष्पिताः ॥ ३० ॥ पिकाश्च नेदुः शतशः पञ्चमम्मधुरस्वराः ॥ प्रफुल्लपद्मा अभवन्त्सरस्यः पुष्टपुष्कराः ॥ ३१ ॥
तमुत्पन्नमवेक्ष्याथ तथाभूशमुशत्तमम् ॥ हिरण्यगर्भो मदनञ्जगाद मधुरव्वँचः ॥ ३२ ॥ ब्रह्मोवाच ॥ एष मन्मथ ते मित्रं
सदा सहचरोऽभवत् ॥ आनुकूल्यन्तव कृतौ सर्व्वदैव करिष्यति ॥ ३३ ॥ यथाग्नेःश्वस नो मित्रं सर्व्वत्रोपकरोति च ॥ तथा
यम्भवतो मित्रं सदा त्वामनुयास्यति ॥ ३४ ॥ वसते बंत हेतुत्वाद्वसन्ताख्यो भवत्वयम् ॥ तवानुगमनङ्कर्म्म तथालोकानुर
ञ्जनम् ॥ ३५ ॥ असौ वसन्ते शृङ्गारो वसन्ते मलयानिलः ॥ भवन्तु सुहृदो भावाः सदा त्वद्वशवर्तिनः ॥ ३६ ॥ विव्वोका
द्यास्तथा हावाश्चतुःषष्टिकलास्तथा ॥ कुर्व्वन्तु रत्याः सौहृद्यं सुहृदस्ते यथा तव ॥ ३७॥ एभिः सहचरैः काम वसन्तप्रमु

१ खेदहेतुत्वादित्यर्थः ।

खैर्भवान् ॥ अनया सहचारिण्या त्वय्युक्तः परिवारया ॥३८॥ मोहयस्व महादेवङ्कुरु सृष्टिं सनातनीम् ॥ यथेष्टदेशङ्गच्छत्वं
सर्व्वैः सहचैरर्व्वृतः ॥ ३९ ॥ अहन्ताम्भावयिष्यामि या हरम्मोहयिष्यति ॥ एवमुक्तोऽथ मदनः सुरज्येष्ठेन हर्षितः॥४०॥
जगाम सगणस्तत्रसपत्न्यनुचरस्तदा ॥ दक्षम्प्रणम्य तान्सर्व्वान्मानसानभिवाद्य च ॥ ४१ ॥ यत्रास्ति शम्भुर्ग्गतवाँस्त
त्स्थानम्मन्मथस्तदा ॥ तस्मिन्गते सानुचरेऽथ मन्मथे शृङ्गारभावादियुते द्विजोत्तमाः ॥ प्रोवाच दक्षम्मधुरम्पितामहः सार्द्धं
म्मरीच्यत्रिमुखैर्म्मुनीश्वरैः ॥ ४२ ॥ ॥ इति श्रीकालिकापुराणे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ मार्क्कण्डेय
उवाच ॥ ॥ अथ ब्रह्मा तदोवाच दक्षाय सुमहात्मने ॥ मरीचिप्रमुखेभ्यश्च वचनञ्चेदमञ्जसा ॥ १ ॥ ॥ ब्रह्मोवाच ॥
भवित्रीशम्भुपत्नी का का तं सम्मोहयिष्यति ॥ इति सञ्चिन्तयन्कान्तान्न स्थिरीकर्त्तुमुत्सहे ॥ २ ॥ विष्णुमायामृते दक्ष
महामायाञ्जगन्मयीम् ॥ नान्या तन्मोहकर्त्री स्यात्सन्ध्यासावित्र्युमामृते ॥ ३ ॥ तस्मादहँविष्णुमायाँयोगनिद्राञ्ज
गत्प्रसूम् ॥ स्तौमि सा चारुरूपेण शङ्करम्मोहयिष्यति ॥ ४ ॥ भवाँस्तु दक्ष तामेव यजताँविश्वरूपिणीम् ॥ यथा
तव सुता भूत्वा हरजाया भविष्यति ॥ ५ ॥ ॥ मार्क्कण्डेय उवाच ॥ ॥ एवँवचनमाकर्ण्य ब्रह्मणः परमात्मनः ॥ उवाच
दक्षः स्रष्टारम्मरीच्यादिभिरीरितः ॥ ६ ॥ दक्ष उवाच ॥ यथात्थ भगवँस्तथ्यन्त्वँल्लोकेश जगद्धितम् ॥ तत्करिष्याम
हे सम्यग्यथा स्यात्तन्मनोहरा ॥ ७ ॥ तथातथा यतिष्यामि यथा मम सुता स्वयम् ॥ विष्णुमाया भवेत्पत्नी भूत्वा

शम्भोर्म्महात्मनः ॥ ८॥ मार्कण्डेय उवाच ॥ एवमेवेति तैरुक्तम्मरीचिप्रमुखैस्तदा ॥ यष्टुन्दक्षः समारेभे महामाया
ञ्जगन्मयीम् ॥ ९ ॥ क्षीरोदोत्तरतीरस्थस्ताङ्कृत्वा हृदयस्थिताम् ॥ तपस्तप्तुं समारेभे द्रष्टुम्प्रत्यक्षतोम्बिकाम् ॥ १० ॥
दिव्यवर्षेण दक्षोपि सहस्राणान्त्रयं समाः॥ तपश्चचार नियतःसय्यँतात्मा दृढव्रतः ॥११॥ मारुताशी निराहारो जलाहारी
च पर्ण्णभुक् ॥एवन्निनाय तत्कालञ्चिन्तयँस्ताञ्जगन्मयीम् ॥१२॥ गते दक्षे तपः कर्त्तुम्ब्रह्मा सर्व्वजगत्पतिः॥ जगाम मन्द
राभ्याशम्पुण्यात्पुण्यतरव्वँरम् ॥ १३ ॥ तत्रतत्र जगद्धात्रीँव्विष्णुमायाञ्जगन्मयीम् ॥ तुष्टाव वाग्भिरुग्राभिरेकतानं शतं
समाः ॥ १४॥ ॥ब्रह्मोवाच॥ ॥विद्याविद्यात्मिकां शुद्धान्निरालम्बान्निराकुलाम् ॥ स्तौमि देवीञ्जगद्धात्रीँस्थूलाणीयःस्वरू
पिणीम् ॥ १५ ॥ यस्या उदेति च जगत्प्रधानाख्यञ्जगत्परम् ॥ यस्यास्तदंशभूतन्ताँस्तौमि निद्रां सनातनीम् ॥ १६ ॥
त्वङ्क्षितिः परमानन्दपरमात्मस्वरूपिणी ॥ शक्तिस्त्वं सर्व्वभूतानान्त्वं सर्व्वेषाञ्च पाविनी ॥ १७॥ त्वं सावित्री जगद्धात्री
त्वं सन्ध्या त्वं रतिर्द्धृतिः ॥ त्वं हि ज्योतिःस्वरूपेण संसारस्य प्रकाशिनी ॥ १८ ॥ तथा तमःस्वरूपेण छादयन्तो सदा जग
त् ॥ त्वमेव सृष्टिरूपेण संसारपरिपूरणी ॥ १९ ॥ स्थितिरूपेण च हरेर्ज्जगताञ्च हितैषिणी ॥ तथैवान्तस्वरूपेण जगताम
न्तकारिणी ॥ २० ॥ त्वम्मेधा त्वम्महामाया त्वं स्वधा पितृमोदिनी ॥ त्वं स्वाहा त्वन्नमस्कारवषट्कारौ तथा स्मृतिः ॥ २१ ॥

त्वम्पुष्टिस्त्वन्धृतिर्म्मैत्री करुणा मुदिता तथा॥ त्वमेव लज्जा त्वं शान्तिस्त्वङ्कान्तिर्ज्जगदीश्वरी ॥२२॥ महामाया च त्वं स्वा
हा स्वधा च पितृदेवता ॥ या सृष्टिशक्तिरस्माकं स्थितिशक्तिश्च या हरेः ॥२३॥ अन्तशक्तिस्तथेशानी सा त्वं शक्तिः सनात
नी ॥ एका त्वन्द्विविधा भूत्वा मोक्षसंसारकारिणी ॥२४॥ विद्याविद्यास्वरूपेण स्वप्रकाशा प्रकाशतः ॥ त्वँल्लक्ष्मीः सर्व्वभूता
नान्त्वञ्छाया त्वं सरस्वती ॥२५॥ त्रयीमयी त्रिमाता त्वन्त्वञ्चतुःस्वररूपिणी॥ उद्गीतिः सामवेदस्य या पितृगणरञ्जनी॥
॥ २६॥॥ त्वँव्वेदिःसर्व्वयज्ञानां सामिधेनी तथा हविः ॥ यदव्यक्तमनिर्देश्यन्निष्कलम्परमात्मनः ॥ २७॥ रूपन्तथैव तन्मात्रं
सकलञ्च जगन्मयम् ॥ यामूर्त्तिर्व्विततां सर्व्वंधरित्रीम्बिभ्रती क्षितिम् ॥ २८ ॥ सा त्वँव्विश्वम्भरे लोके शक्तिभूतिप्रदा स
दा ॥ त्वल्लँक्ष्मीश्चेतना कान्तिस्त्वम्पुष्टिस्त्वं सनातनी ॥ २८॥ त्वङ्कालरात्रिस्त्वम्मुक्तिः शान्तिः प्रज्ञा तथा धृतिः ॥ संसार
सागरोत्तारतरणिः सुखमोक्षदे ॥ ३० ॥ प्रसीद सर्व्वजगतान्त्वङ्गतिस्त्वम्मतिः सदा ॥ त्वन्नित्या त्वमनित्या च त्वञ्चराचर
मोहिनी ॥३१॥ त्वं सन्धिनी सर्व्वयोगसाङ्गोपाङ्गविभाविनी॥ चिन्ताकीर्त्तिर्य्यतीनान्त्वन्त्वन्तदष्टाङ्गसय्युँता ॥३२॥ त्वङ्ख
ड्गिनी शूलिनी च चक्रिणी घोररूपिणी ॥ त्वमीश्वरी जनानान्त्वंसर्व्वानुग्रहकारिणी॥३३॥विश्वादिस्त्वमनादिस्त्वँव्विश्वयो
निरयोनिजा ॥ अनन्ता सर्व्वजगतस्त्वमेवैकान्तकारिणी ॥ ३४॥ नितान्तनिर्म्मला त्वंहि तामसीति च गीयसे ॥ त्वं हिंसा

त्वमहिंसा च त्वङ्काली चतुरानना ॥ ३५ ॥ त्वम्परा सर्व्वजननी दमनी दामिनी तथा॥ त्वय्येव लीयते विश्वम्भाति तत्तद्विभ
र्त्ति च ॥ ३६ ॥ त्वं सृष्टिहीना त्वं सृष्टिस्तमकर्ण्णापि सश्रुतिः ॥ तरस्विनीपाणिपादहीना त्वन्नितराङ्घ्रिहा ॥ ३७ ॥ त्वन्द्यौस्त्व
मापस्त्वञ्ज्योतिर्व्वायुस्त्वञ्च नभो मनः ॥अहङ्कारोपि जगतामष्टधा प्रकृतिः कृतिः ॥ ३८ ॥ जगन्नाभिर्म्मेरुरूपधारिणी नालि
कापरा ॥ परापरात्मिका शुद्धा मायामोहातिकारिणी ॥ ३९ ॥ कारणङ्कार्य्यभूतञ्च सत्यं शान्तं शिवाशिवे ॥ रूपाणि तव वि
श्वार्थे रागवृक्षफलानि च॥४०॥नितान्तन्ह्रस्वा दीर्घा च नितान्ताणुबृहत्तनुः॥ सूक्ष्माप्यखिललोकस्य व्यापिनी त्वञ्जगन्म
यी ॥ ४१ ॥ मानहीना विमानातिविमानोन्मानसम्भवा ॥ यदाष्टिव्याष्टिसम्भोगरागादिगलिताशया॥४२॥तत्ते महिम्नि तद्रू
पन्तव भ्रान्त्यादिकञ्च यत् ॥ इष्टानिष्टविपाकज्ञा यथेष्टानिष्टकारणम् ॥ ४३ ॥ सर्ग्गादिमध्यान्तमयन्निम्नरूपन्तथैव च ॥ वि
चाराष्टाङ्गयोगेन सम्पाद्यैवम्मुहुर्म्मुहुः ॥ ४४ ॥ यत्स्थिरीक्रियते तत्त्वन्तत्ते रूपं सनातनम् ॥ बाह्याबाह्ये सुखन्दुःख
ञ्ज्ञानाज्ञाने लयालयौ ॥ ४५ ॥ उपतापस्तथा शान्तिर्ब्भूतिस्त्वञ्जगतःपतेः ॥ यस्य प्रभावन्नो वक्तुं शक्नोति भुवनत्रये
॥ ४६ ॥ तस्यैवं सम्मोहकरी सा त्वङ्किं स्तूयसे मया ॥ योगनिद्रा महानिद्रा मोहनिद्रा जगन्मयी ॥ ४७ ॥ विष्णमाया
च प्रकृतिः कस्त्वां स्तुत्या विभावयेत् ॥ ममविष्णोः शङ्करस्य या वपुर्व्वहनात्मिका ॥ ४८ ॥ तस्याःप्रभावाङ्के वक्तुङ्गुणान्वे

तुञ्च कः क्षमः ॥ प्रकाशकरणज्योतिःस्वरूपान्तरगोचरा ॥ ४९ ॥ त्वमेव जङ्गमस्थेयरूपैका बाह्यगोचरा ॥ प्रसीद सर्व्वं
जगताञ्जननी स्त्रीस्वरूपिणी ॥ विश्वरूपिणि विश्वेशे प्रसीद त्वं सनातनि ॥ ५० ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एवं संस्तू
यमाना सा योगनिद्रा विरञ्चिना ॥ ५१ ॥ आविर्ब्बभूव प्रत्यक्षम्ब्रम्हणः परमात्मनः ॥ स्निग्धाञ्जनद्युतिश्चारुरूपोत्तु
ङ्गा चतुर्भुजा ॥ ५२ ॥ सिंहस्था खड्गनीलाब्जहस्ता मुक्तकचोत्करा ॥ समक्षमथ ताव्वीक्ष्य स्त्रष्टा सर्व्वजगद्गुरुः ॥ ५३ ॥ भ
क्त्या विनम्रतुङ्गांसस्तुष्टाव च ननाम च ॥ ५४ ॥ ब्रम्होवाच ॥ नमो नमस्ते जगतः प्रवृत्तिनिवृत्तिरूपे स्थितिसर्ग्गरूपे ॥
चराचराणाम्भवती च शक्तिः सनातनी सर्व्वविमोहनीति ॥ ५५ ॥ याश्रीः सदा केशवमूर्त्तिमाया विश्वम्भरा या सकलाम्बि
भर्त्ति ॥ न्हीर्य्योगिनी या महिता मनोज्ञा सात्वन्नमस्ते परमार्थसारे ॥ ५६ ॥ यमादिपूते हृदि योगिनो याव्विँभावयन्ति प्रमि
तिप्रतीताम् ॥ प्रकाशशुद्धादियुताव्विँरागां सा त्वं हि विद्या विविधा बलँव्वा ॥ ५७ ॥ कूटस्थमव्यक्तमचिन्त्यरूपन्त्वाम्बिभ्रती
कालमयञ्जगन्ति ॥ विकारबीजम्प्रकरोषि नित्यम्प्रत्नानि[1] न्यूनान्यथ मध्यमानि ॥ ५८ ॥ सत्वं रजोथो तम इत्यमीषाव्विँ
कारहीना समवस्थितिर्य्या ॥ सा त्वङ्गुणानाञ्जगदेकहेतुर्ब्बाह्यान्तरालम्भवतीव याति अशेषजगताम्बीजे ज्ञेयज्ञानस्व
रूपिणी ॥ ५९ ॥ जगद्धिताय जगताव्विँष्णुमाये नमोस्तुते ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इत्याकर्ण्य वचस्तस्य काली लो

१ प्रत्नानिपुरातनानिश्रेष्ठानीनियावत् ।

कविमोहिनी ॥ ६० ॥ ब्रह्माणमूचे जगतां स्रष्टारङ्घनशब्दवत् ॥ ॥ देव्युवाच ॥ ॥ ब्रह्मन्किमर्थम्भवता स्तुताहमवधार
य ॥ ६१ ॥ उच्यतामर्थ्यँदथ्र्ष्योस्ति तच्छीघ्रम्पुरतो मम ॥ प्रत्यक्षम्मयि जातायां सिद्धिः कार्य्यस्य निश्चिता ॥ ६२ ॥ तस्मात्ते
वाञ्छितम्ब्रूहि यत्करिष्यामि भाविता ॥ ॥ ब्रह्मोवाच ॥ ॥ एकश्चरति भूतेशो न द्वितीयां समीहते ॥ ६३ ॥ तम्मोहय यथा
दारान्स्वयं स च जिघृक्षति ॥ त्वदृते तस्य नो काचिद्भविष्यति मनोहरा ॥ ६५ ॥ तस्मात्त्वमेकरूपेण भवस्य भव मोहनी ॥ यथा
धृतशरीरा त्वल्लँक्ष्मीरूपेण केशवम् ॥ ६६ ॥ आमोदयसि विश्वस्य हितायैतन्तथा कुरु ॥ कान्ताभिलाषमात्रम्मे निनिन्द वृ
षभध्वजः ॥ ६७ ॥ कथम्पुनः सवनितां स्वेच्छया सङ्ग्रहिष्याति ॥ हरेऽगृहीतकान्ते तु कथं सृष्टिः प्रवर्त्तते ॥ ६८ ॥ आद्यन्तम
ध्यहेतौ च तस्मिञ्छम्भो विरागिणि ॥ इति चिन्तापरो नाहं त्वदन्यं शरणन्त्विह ॥ ६९ ॥ लब्धवाँस्तेन विश्वस्य हितायैतत्कुरु
ष्व मे ॥ नविष्णुरस्य मोहाय न लक्ष्मीर्न्न मनोभवः ॥ ७० ॥ न चाप्यहञ्जगन्मातस्तस्मात्त्वम्मोहयेश्वरम् ॥ कीर्त्तिस्तु सर्व्व
भूतानाय्यँथा त्वं ह्नीय्यतात्मनाम् ॥ ७१ ॥ यथा विष्णोः प्रियैका त्वन्तथा सम्मोहयेश्वरम् ॥ ॥ मार्कण्डेय उवाच ॥ ॥ अथ
ब्रह्माणमाभाष्य काली योगमयी पुनः ॥ ७२ ॥ यदुवाच महाभागास्तच्छृण्वन्तुद्विजोत्तमाः ॥ ७३ ॥ ॥ इति कालिकापुराणे
पञ्चमोध्यायः ॥ ॥ ५ ॥ ॥ देव्युवाच ॥ ॥ यदुक्तम्भवता ब्रह्मन्त्समस्तं सत्यमेव तत् ॥ मदृते मोहयित्रीह शङ्क

रस्य न विद्यते ॥१॥ हरे ऽगृहीतदारे तु सृष्टिर्न्नैषा सनातनी ॥ भविष्यतीति तत्सत्यम्भवता प्रतिपादितम् ॥ २ ॥ ममापिमेहा
ने यत्नो विद्यतेस्य जगत्पतेः॥त्वद्वाक्याद्द्विगुणा मेद्य प्रयत्नो भुत्सुनिर्भरः॥३॥ अहन्तथा यतिष्यामि यथा दारपरिग्रहम् ॥
हरः करिष्यत्यवशः स्वयमेव विमोहितः ॥ ४ ॥ चार्व्वीम्मूर्तिमहन्धृत्वा तस्यैव वशवर्त्तिनी ॥ भविष्यामि महाभाग यथा
विष्णोर्हरिप्रिया ॥ ५ ॥ यथा सोपि ममैवेह वशवर्ती सदा भवेत् ॥ तथा चाहङ्करिष्यामि यथेतज्जनं हरम् ॥ ६ ॥ प्रतिसर्ग्गा
दिमध्यन्तमहं शम्भुन्निराकुलम् ॥ स्त्रीरूपेणानुयास्यामि विशेषेणान्यतो विधे ॥ ७ ॥ उत्पन्ना दक्षजायायाञ्चारुरूपेणशङ्क
रम् ॥ अहं सभाजयिष्यामि प्रतिसर्गम्पितामह ॥ ८ ॥ ततस्तु योगनिद्राम्माव्विँष्णुमायाञ्जगन्मयीम् ॥ शाङ्करीति वदि
ष्यन्ति रुद्राणीति दिवौकसः ॥९॥ उत्पन्नमात्रं सततम्मोहये प्राणिनर्य्यँथा ॥ तथा सम्मोहयिष्यामि शङ्करम्प्रमथाधिपम् ॥
॥१०॥ यथान्यजन्तुरवनौ वर्त्तते वनितावशे ॥ ततोप्यतिहरो वामावशवर्त्ती भविष्यति ॥ ११ ॥ विभिद्य भुवनाधीनां
लीनांस्वहृदयान्तरे ॥ माव्विँद्याञ्च महादेवो मोहात्प्रतिग्रहिष्यति ॥ ११ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इति तस्मै समाभा
ष्य ब्रह्मणे द्विजसत्तमाः ॥ वीक्ष्यमाणो जगत्स्रष्टा तत्रैवान्तर्द्दधे ततः ॥ १३ ॥ तस्यामन्तर्हितायान्तु धाता लोकपिता
महः ॥ जगाम तत्र भगवान्स्थितो यत्र मनोभवः ॥ १४ ॥ मुदितोत्यर्थमभवन्महामायावचः स्मरन् ॥ कृतकृत्यन्तदात्मान

म्मेने च मुनिपुङ्गवः॥१५॥ अथ दृष्ट्वा महात्मानँव्विरीञ्चिम्मदनस्तथा॥ गच्छन्तं हंसयानेन चाभ्युत्तस्थौ त्वरान्वितः॥१६॥
आसन्नन्तमथासाद्य हर्षोत्फुल्लविलोचनः॥ ववन्दे सर्व्वलोकेशम्मोदयुक्तम्मनोभवः॥१७॥ अथाह भगवान्धाता प्रीत्या
मधुरगद्गदम्॥ मदनम्मोदयन्त्सूक्तय्यँद्देव्या विष्णुमायया॥१८॥ ब्रह्मोवाच॥ यदाह वत्स शर्व्वस्य मोहने त्वम्पुरा वचः॥
अनुमोहनकर्त्रीं या तां सृजेति मनोभव॥१९॥ तदर्थं संस्तुता देवी योगनिद्रा जगन्मयी॥ एकतानेन मनसा मया मन्द
रकन्दरे॥२०॥ स्वयमेव तया वत्स प्रत्यक्षीभूतया मम॥ तुष्टयाऽङ्गीकृतं शम्भुम्मोहनीयो मयेति वै॥२१॥ तया चद
क्षभवने स समुत्पन्नया हरः॥ मोहनीयस्तु न चिरादिति सत्यम्मनोभव॥२२॥ मदन उवाच॥ ब्रह्मन्का योगनिद्रेति
विख्यातायाजगन्मयी॥ कथन्तया हरो वश्यः कार्य्यस्तपसि संस्थितः॥२३॥ किम्प्रभावाथ सा देवी का वा सा कुत्र
संस्थिता॥ तदहं श्रोतुमिच्छामि त्वत्तो लोकपितामह॥२४॥ यस्य त्यक्तसमाधेस्तु न क्षण न्दृष्टिगोचरे॥ शक्नुमो पि वयं
स्थातुन्तङ्कस्मात्सा विमोहयेत्॥२५॥ ज्वलदग्निप्रकाशाक्षञ्जटाराजिकरालितम्॥शूलिनव्वीँक्ष्य कः स्थातुम्ब्रह्मञ्छक्नोति त
त्पुरः॥२६॥ तस्य तादृक्स्वरूपस्य सम्यङ्मोहनवाञ्छया॥ यथाभ्युपेतन्तां श्रोतुमहमिच्छामि तत्त्वतः॥२७॥ ॥ मार्क
ण्डेय उवाच॥ ॥ मनोभवस्य वचनं श्रुत्वाऽथ चतुराननः॥ विवक्षुरपि तद्वाक्यं श्रुत्वा उत्साहकारकम्॥२८॥ शर्व्वस्य

मोहने ब्रह्मा चिन्ताविष्टोभवन्नहि ॥ समर्थो मोहितुमिति निशश्वास मुहुर्म्मुहुः ॥ २९ ॥ निःश्वासमारुतात्तस्य नानारू
पा महाबलाः ॥ जाता गणा लोलजिह्वा लोलाश्चातिभयङ्कराः ॥ ३० ॥ तुरङ्गवदनाः केचित्केचिद्गजमुखास्तथा ॥ सिंह
व्याघ्रमुखाश्चान्ये श्ववराहखराननाः ॥ ३१ ॥ ऋक्षमार्जारवदनाः शरभास्याः शुकाननाः ॥ प्लवगोमायुवक्त्राश्च सरीसृप
मुखा परेः ॥ ३२ ॥ गोरूपा गोमुखाः केचित्तथा पक्षिमुखाः परे ॥ महादीर्घा महाह्रस्वा महास्थूला महाकृशाः ॥ ३३ ॥
पिङ्गाक्षा विरलाक्षाश्च त्र्यक्षैकाक्षा महोदराः ॥ एककर्णास्त्रिकर्णाश्च चतुःकर्णास्तथा परे ॥ ३४ ॥ स्थूलकर्णा महाक
र्णा बहुकर्णा विकर्णकाः ॥ दीर्घाक्षाः स्थूलनेत्राश्च सूक्ष्मनेत्रा विदृष्टयः ॥ ३५ ॥ चतुष्पादाः पञ्चपादास्त्रिपादैकपदा
स्तथा ॥ ह्रस्वपादा दीर्घपादा स्थूलपादा महापदाः ॥ ३६ ॥ एकहस्ताश्चतुर्हस्ता द्विहस्तास्त्रिशयास्तथा[1] ॥ विहस्ताश्च वि
रूपाक्षा गोधिकाकृतयः परे ॥ ३७ ॥ मनुष्याकृतयः केचिच्छिशुमारमुखास्तथा ॥ क्रौञ्चाकारा बकाकारा हंससारसरू
पिणः ॥ ३८ ॥ तथैव मद्गुकुररकङ्ककाकमुखास्तथा ॥ अर्द्धनीला अर्द्धरक्ताः कपिला पिङ्गलास्तथा ॥ ३९ ॥ नीलाः शुक्ला
स्तथापीता हरिताश्चित्ररूपिणः ॥ अवादयन्त ते शङ्खान्पटहान्परिवादिनः ॥ ४० ॥ मृदङ्गाण्डिण्डिमांश्चैव गोमुखान्पण
वांस्तथा ॥ सर्व्वे जटाभिः पिङ्गाभिस्तुङ्गाभिश्च करालिताः ॥ ४१ ॥ निरन्तराभिर्व्विप्रेन्द्रा गणाः स्यन्दनगामिनः ॥ शू

[1] त्रिहस्ता इत्यर्थः ।

लहस्ताः पाशहस्ताः खड्गहस्ता धनुर्द्धराः ॥ ४२ ॥ शक्त्यङ्कुशगदाबाणपट्टिशप्रासपाणयः ॥ नानायुधा महानादङ्कुर्व्वन्ति
स्ते महाबलाः ॥ ४३ ॥ मारय छेदयेत्यूचुर्ब्रह्मणः पुरतो गताः ॥ तेषान्तु वदतान्तत्र मारयछेदयेत्युत ॥ ४४ ॥ योगनि
द्राप्रभावान्स विधिर्व्वक्तुम्प्रचक्रमे॥अथ ब्रह्माणमाभाष्य तान्दृष्ट्वा मदनो गणान् ॥४५॥ उवाचवारयन्वक्तुङ्गणानामग्रतः
स्मरः ॥ मदन उवाच ॥ किङ्कर्म्मैते करिष्यन्ति कुत्रस्थास्यन्ति वा विधे ॥ ४६ ॥किन्नामधेया एते वा तत्रैतान्विनियोजय ॥
नियोज्यैतान्निजे कृत्ये स्थानन्दत्वा च नाम च ॥ ४७ ॥ कृत्वा पश्चान्महामाया प्रभावङ्कथयस्व मे ॥ मार्कण्डेय उवाच ॥
अथ तद्वाक्यमाकर्ण्य सर्व्वलोकपितामहः ॥ ४८ ॥ गणान्समदनानाह तेषाङ्कर्म्मादिकन्दिशन् ॥ ब्रह्मोवाच ॥ एत उत्प
न्नमात्रा हि मारयेत्यवदँस्तराम् ॥ ४९ ॥ मुहुर्म्मुहुरतोमीषान्नाम मारेति जायताम् ॥ मारात्मकत्वादप्येते माराः सन्तु
च नामतः॥५०॥सदा विघ्नङ्करिष्यन्ति जन्तूनाञ्च विनार्च्चनम्॥तवानुगमनङ्कर्म्म मुख्यमेषाम्मनोभव॥ ५१ ॥ यत्र यत्र भवा
न्याता स्वकर्म्मार्थंय्यदायदा॥गन्तारस्तत्रतत्रैते साहाय्याय तदातदा॥५२॥ चित्तोद्भ्रान्तिङ्करिष्यन्ति त्वदस्त्रवशवर्त्तिनाम् ॥
ज्ञानिनाञ्ज्ञानमार्ग्गञ्च विघ्नयिष्यन्ति सर्व्वदा ॥५३॥ यथा सांसारिकङ्कर्म्म सर्व्वे कुर्व्वन्ति जन्तवः ॥तथा चैते करिष्यन्ति
सविघ्नमपि सर्व्वतः ॥ ५४ ॥ इमे स्थास्यन्ति सर्व्वत्र वेगिनः कामरूपिणः ॥ त्वमेवैषाङ्गणाध्यक्षः प ञ्चयज्ञांशभोगिनः ॥

॥ ५५ ॥ नित्यक्रियावतान्तोयभोगिनो वै भवन्त्विति ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इति श्रुत्वा तु ते सर्व्वे मदनं सवि
धिन्ततः ॥ ५७॥ परिवार्य्य यथा कामन्तस्थुः श्रुत्वा निजाकृतिम् ॥ तेषाव्वँर्णयितुं शक्यो भुवि किम्मुनिसत्तमाः ॥ ५८ ॥
माहात्म्यञ्च प्रभावश्च ते तपःशालिनो यतः ॥ नैषाञ्जाया न तनया निःसमीहाः सदैव हि॥५९ ॥ न्यासिनोपि महात्मानः
सर्व्वे ते ऊर्द्धरेतसः ॥ अतो ब्रम्हा प्रसन्नः स माहात्म्यम्मदनाय च ॥ ६० ॥ गदितुर्य्योगनिद्रायाः सम्यक्समुपचक्रमे ॥
ब्रम्होवाच ॥ ॥ अव्यक्तव्यक्तरूपेण रजःसत्त्वतमोगुणैः ॥६१॥ विभज्य यार्थङ्कुरुते विष्णुमायेति सोच्यते ॥ यानिम्ना
न्तस्थलाम्भःस्था जगदण्डकपालतः ॥ ६२ ॥ विभज्य पुरुषर्य्याँति योगनिद्रेतिसोच्यते॥मन्त्रान्तर्भावनपरा परमानन्द
रूपिणी ॥ ६३ ॥ योगिनां सत्वविद्यान्तः सा निगद्या जगन्मयी ॥ गर्भान्तर्ज्ञानसम्पन्नम्प्रेरितं सूतिमारुतैः ॥ ६४ ॥
उत्पन्नज्ज्ञानरहितङ्कुरुते या निरन्तरम् ॥ पूर्व्वातिपूर्व्वं सन्धातुं संस्कारेण नियोज्य च ॥६५॥ आहारादौ ततोमोहं ममत्व
ञ्ज्ञानसंशयम् ॥ क्रोधोपरोधलोभेषु क्षिप्त्वाक्षिप्त्वा पुनःपुनः ॥६६॥ पश्चात्कामे नियोज्याशु चिन्तायुक्तमहर्न्निशम् ॥ आ
मोदयुक्तव्व्यँसनासक्तञ्जन्तुङ्करोति या ॥६७॥ महामायेति सा प्रोक्ता तेन सा जगदीश्वरी ॥ अहङ्कारादिसंसक्तसृष्टिप्रभव
भाविनी ॥ ६८ ॥ उत्पत्तिरितिलोकैः सा कथ्यतेऽनन्तरूपिणी ॥ उत्पन्नमङ्कुरम्बीजाद्यथापो मेघसम्भवाः ॥६९ ॥ प्ररोह

१ निम्नं गभीरमन्तः स्थलं मध्यभागो यस्य तादृशाम्भसि स्थिता सती अण्डकपालयोर्ज्जगद्विभज्य पुरुषर्य्यांतीत्यर्थः।

यति सा जन्तूस्तँथोत्पन्नान्प्ररोहयेत् ॥ सा शक्तिः सृष्टिरूपा च सर्व्वेषां ख्यातिरीश्वरी ॥ ७० ॥ क्षमा क्षमावतान्नित्यङ्करुणा सा दयावताम् ॥ नित्या सा नित्यरूपेण जगद्गर्भे प्रकाशते ॥ ७१ ॥ ज्योतिःस्वरूपेण परा व्यक्ताव्यक्तप्रकाशिनी ॥ सा योगिनाम्मुक्तिहेतुर्व्विद्यारूपेण वैष्णवी ॥ ७२ ॥ सांसारिकाणां संसारबन्धहेतुर्व्विपर्य्यया ॥ लक्ष्मीरूपेण कृष्णस्य द्वितीया सुमनोहरा ॥ ७३ ॥ त्रयीरूपेण कण्ठस्था सदा मम मनोभव ॥ सर्व्वत्रस्था सर्व्वगा दिव्यमूर्त्तिर्न्नित्या देवी सर्व्वरूपा पराख्या ॥ कृष्णादीनां सर्व्वदा मोहयित्री सा स्त्रीरूपैः सर्व्वजन्तोः समन्तात् ॥ ७४ ॥ इतिश्रीकालिकापुराणे षष्ठोऽध्यायः ॥ ६ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ अथ ब्रह्मा महामायास्वरूपम्प्रतिपाद्य च ॥ मदनाय पुनः प्राह युक्तासौ हरमोहने ॥ १ ॥ ब्रह्मोवाच ॥ विष्णुमाया महादेवो यथा दारपरिग्रहम् ॥ करिष्यति तथाकर्त्तुमङ्गीकारम्पुराकरोत् ॥ २ ॥ साऽवश्यन्दक्षतनया भूत्वा शम्भोर्म्महात्मनः ॥ भविष्यति द्वितीयेति स्वयमेवावदत्स्मर ॥ ३ ॥ त्वमेभिः स्वगणैः सार्द्धं रत्या च मधुना सह ॥ यथेच्छति तथा दारान्गृहीतुङ्कुरु शङ्करः ॥ ४ ॥ शम्भो गृहीतदारे तु कृतकृत्या वयं स्मर ॥ अविच्छिन्ना सृष्टिरियम्भविष्यति न संशयः ॥ ५ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ तथाब्रवीद्द्विजश्रेष्ठा लोकेशाय मनोभवः ॥ मधुरर्थ्यँकृतन्तेन महादेवस्य मोहने ॥ ६ ॥ ॥ मदन उवाच ॥ शृणु ब्रह्मन्यथास्माभिः क्रियते हरमोहने ॥ प्रत्यक्षे वा परोक्षे वा तस्य तद्वदतो मम ॥ ७ ॥ यदा समाधिमाश्रित्य स्थितः शम्भुर्ज्जिते

न्द्रियः॥तदा सुगन्धिवातेन शीतलेन विवेगिना॥८॥तम्वीजयामि लोकेश नित्यम्मोहनकारिणा॥स्वसायकांस्तथा पञ्च समा
दाय शरासनं॥९॥ भ्रमामि तस्य सविधे मोहयँस्तद्गणानहम् ॥ सिद्धद्वन्द्वानहन्तत्र रमयामि दिवानिशम् ॥१०॥भावा हावा
श्च ते सर्व्वे प्रविशन्ति च तेषुवै॥मयि प्रविष्टे सविधे शम्भोः प्राणी पितामह ॥११॥ को वा न कुरुते द्वन्द्वभावन्तत्र मुहुर्म्मुहुः
मम प्रवेशमात्रेण तथा स्युः सर्व्वं जन्तवः ॥१२॥ न शम्भुर्न्न वृषस्तस्य मानसीर्व्विक्रियाङ्गतौ ॥ यदाहि भवतःप्रस्थं सया
ति प्रमथाधिपः ॥ १३ ॥ तत्र गन्ता तदैवाहं सरतिः समधुर्व्विधे ॥ यदा मेरुम्प्रयात्येष यदा वा नाटकेश्वरम् ॥ १४ ॥ कै
लासव्वा यदा याति तत्र गच्छाम्यहन्तदा ॥ यदा त्यक्तसमाधिस्तुहरस्तिष्ठति वैक्षणम् ॥ १५॥ततस्तस्य पुरश्चक्रमिथुनर्य्यौ
जयाम्यहम् ॥ तच्चक्रयुगलम्ब्रह्मन्हावभावयुतम्मुहुः ॥ १६ ॥ नानाभावेन कुरुते दाम्पत्यंक्रममुत्तमम् ॥ नीलकण्ठानपि
मुहुः सजायानपि तत्पुरः ॥ १७ ॥ सम्मोहयामि स विधे मृगानन्यांश्च पक्षिणः ॥ विचित्रभावमासाद्य यदा प्रकुरुते रति
म् ॥ १८ ॥ मयूरमिथुनव्वीक्ष्य तत्तदा को नचोत्सुकः ॥ मृगाश्च तत्पुरस्थाश्च स्वजायाभिस्तु सोत्सुकाः ॥ १९ ॥ अ
कुर्व्वन्रुचिरम्भावन्तस्य पार्श्वे पुरस्तदा ॥ अपश्यव्विवरन्नास्य कदाचिदपि मच्छरः ॥ २० ॥ निपात्यः स यदा देहे तन्म
या सर्व्वं लोककृत् ॥ बहुधा निश्चितञ्ज्ञातं रामासङ्गादृते हरम् ॥ २१ ॥ अलञ्च सम्मोहयितुं ससहायोपि निष्कलम् ॥

१ कःप्राणीत्यन्वयः । २ द्वन्द्वीभूताः । तुष्टा इति वा पाठः । ३ मयुरान् ॥

मधुश्च कुरुते कर्म्म यद्यत्तस्य विमोहने ॥ २२ ॥ तच्छृणुष्व महाभाग नित्यन्तस्योचितम्पुनः ॥ चम्पकान्केशरान्नास्त्रान्क
रुणान्पाटलाँस्तथा ॥ २३ ॥ नागकेशरपुन्नागान्किंशुकान्केतकान्धवान् ॥ माधवीर्म्मल्लिकाः पर्णधारान्कुरुबकांस्तथा ॥
॥ २४ ॥ उत्फुल्लयति तत्तस्य यत्र तिष्ठति वै हरः ॥ सरांस्युत्फुल्लपद्मानि बीजयन्मलयानिलैः ॥२५ ॥ सुगन्धीकृतवाँश्च
त्वादतीव शङ्कराश्रमम् ॥ लताः सर्व्वाः सुमनसः फुल्लपादपसञ्चयान् ॥ २६ ॥ वृक्षान्रुचिर भावेन वेष्टयन्ति स्म तत्र
च ॥ तान्वृक्षांश्चारुपुष्पौघाँस्तैः सुगन्धिसमीरणैः ॥ २७॥ दृष्ट्वा कामवशय्याँतो न तत्र मुनिरप्युत ॥ तद्गणा अपि लोके
श नानाभावैः सुशोभनैः ॥ २८ ॥ वसन्ति स्म सुराः सिद्धा येये चाति तपोवनाः ॥ न तस्य पुनरस्माभिर्दृष्टम्मोहस्य
कारणम् ॥ २९ ॥ भावमात्रन्न कुरुते कायोत्थमपि शङ्करः ॥ इति सर्व्वमहन्दृष्ट्वा ज्ञात्वा च हरभावनाम् ॥ ३० ॥ वि
मुखोहं शम्भुमोहान्नियतव्वाँ यया विना ॥ इदानीन्त्वद्वचःश्रुत्वा योगनिद्रोदितम्पुनः ॥ ३१ ॥ तस्याः प्रभावं श्रुत्वाथ
गणान्दृष्ट्वासहायकान् ॥ मया शम्भोर्व्विमोहाय क्रियते मुहुरुद्यमः ॥ ३२ ॥ भवानपि त्रिलोकेश योगनिद्रा द्रुतम्पु
नः ॥ भवेद्यथा शम्भुजाया तथैव विदधात्वरम् ॥ ३३ ॥ यमानान्नियमानाञ्च प्राणायामस्य नित्यशः ॥ आसनस्य महे
शस्य प्रत्याहारस्य गोचरे ॥ ३४॥ ध्यानस्य धारणायाश्च समाधेर्व्विघ्नसम्भवं ॥ मन्ये कर्त्तुंन्न शक्यः स्यादपि मारशतै

रपि ॥ ३५ ॥ तथाप्ययम्मारगणः करोतु हरस्य योगाङ्गविकारविघ्नम् ॥ यदेव शक्यं किमु वा समर्थः समक्षमन्यस्य न कर्त्तुमोजः ॥ ३६ ॥ ॥ इति कालिकापुराणे सप्तमोध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ ततो ब्रह्मापि मदनमुवाचेदँव्वचः पुनः ॥ निश्चित्य योगनिद्रायाः स्मृत्वा वाक्यन्तपोधनाः ॥ १ ॥ ब्रह्मोवाच ॥ ॥ अवश्यं शम्भु पत्नी सा योगनिद्रा भविष्यति ॥ यथाशक्ति भवाँस्तत्र करोत्वस्याः सहायताम् ॥२॥ गच्छत्वं स्वगणैः सार्द्धय्यँत्र तिष्ठति शङ्करः ॥ द्रुतम्मनोभवत्वञ्च तत्स्थानम्मधुना सह ॥ ३ ॥ रात्रिन्दिवस्य तुर्य्यांशञ्जगन्मोहय नित्यशः ॥ भागत्रयं शम्भुपार्श्वे तिष्ठ सार्द्धङ्गणैः सदा ॥ ४ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इत्युक्त्वा सर्व्वलोकेशस्तत्रैवान्तरधीयत ॥ शम्भोः सकाशम्मदनो गतवान्त्सगणस्तदा ॥ ५ ॥ एतस्मिन्नन्तरे दक्षश्चिरं कालन्तपोरतः ॥ नियमैर्ब्बहुभिर्देवीमाराधयत सुव्रतः ॥ ६ ॥ ततो नियमयुक्तस्य दक्षस्य मुनिसत्तमाः ॥ योगनिद्राम्पूजयतः प्रत्यक्षमभवच्छिवा ॥ ७ ॥ ततः प्रत्यक्षतो दृष्ट्वा विष्णुमायाञ्जगन्मयीम् ॥ कृतकृत्यमथात्मानम्मेने दक्षः प्रजापतिः ॥ ८ ॥ सिंहस्थाङ्कालिकाङ्कृष्णाम्पीनोत्तुङ्गपयोधराम् ॥ चतुर्भ्भु

१तथापीति यद्यपि मारशतैरपि महेशस्य यमादीनांव्विघ्नसम्भवः कर्तुन्नशक्यः स्यादित्यहम्मन्ये तथापि तस्य योगांगविकारविघ्नं यदेव शक्यम्भवति तदेवायम्मारगणःकरोतु किमुवाऽथवा हरस्य समक्षं अन्यस्य तेजोबलंव्वा किमपि कर्तुन्नसमर्थम्भवतीत्यर्थः एवञ्चविघ्नोद्यमं मा वा करोत्विति भावः यदेव शक्यं हरस्य योगांगविकारविघ्नं तदेवायम्मारगणःकरोति शिवस्य समक्षं अन्यस्य ओजः बलं तेजोविघ्नं कर्तुं वा किमपि विघ्नं कर्तुं भवतीत्यर्थः ।

जाञ्चारुवक्त्रान्नीलोत्पलधरां शुभाम् ॥ ९ ॥ वरदाऽभयदाड्डुहस्तांसर्व्वगुणान्विताम् ॥ आरक्तनयनाञ्चारु मुक्तकेशीम्म
नोहराम् ॥ १० ॥ दृष्ट्वा दक्षोथ तुष्टाव महामायाम्प्रजापति ॥ प्रीत्या परमया युक्तो विनयानतकन्धरः ॥ ११ ॥ दक्ष उ
वाच ॥ आनन्दरूपिणीन्देवीञ्जगदानन्दकारिणीम् ॥सृष्टिस्थित्यन्तरूपान्तां स्तौमि लक्ष्मीं हरेः शुभाम्॥१२॥ सत्त्वोद्रेक
प्रकाशेन यज्ज्योतिस्तत्त्वमुत्तमम् ॥ स्वप्रकाशञ्जगद्धाम तत्तवांशम्महेश्वरि ॥ १३ ॥ रजोगुणातिरेकेण यत्कामस्य प्रका
शनम् ॥ रागस्वरूपम्मध्यस्तन्तत्तेंशांशञ्जगन्मयि ॥ १४ ॥ तमोगुणातिरेकेण यद्यन्मोहप्रकाशनम् ॥ आच्छादनञ्चेतनाना
न्तत्तेचांशांशंगोचरम् ॥ १५ ॥ परा परात्मिका शुद्धानिर्म्मला लोकमोहिनी ॥ त्वन्निरूपा त्रयीकीर्त्तिर्व्वार्त्तास्य जगतो
गतिः ॥ १६ ॥ बिभर्त्ति माधवो धात्रीय्यँया मूर्त्या निजोत्थया ॥ सा मूर्तिस्तवसर्व्वेषाञ्जगतामुपकारिणी ॥ १७ ॥ महा
नुभावा त्वँव्विश्वशक्तिः सूक्ष्मा पराजिता ॥ यदूर्ध्वाधोनिरोधेन व्यज्यते पवनैः परम् ॥ १८॥तज्ज्योतिस्तव मात्रार्थे सात्त्वि
कम्भावसम्मतम् ॥ यद्योगिनो निरालंबं निष्कलन्निर्म्मलम्परम् ॥ १९ ॥ आलंबयन्ति तत्तवन्त्वदन्तर्ग्गोचरन्तु तत् ॥ या
प्रसिद्धा च कूटस्था सुप्रसिद्धातिनिर्म्मला ॥ २० ॥ सा ज्ञप्तिस्त्वन्निःप्रपञ्चा प्रपञ्चापि प्रकाशिका ॥ त्वव्विँद्या त्वमविद्या
च त्वमालंबा निराश्रया॥२१॥प्रपञ्चरूपा जगतामादिशक्तिस्त्वमीश्वरी॥ब्रह्मकण्ठालया शुद्धा वाग्वाणी या प्रगीयते॥२२॥

१ अवयव इत्यर्थः। २ प्रपञ्चविशिष्टापीत्यर्थः

वेदप्रकाशनपरा सा त्वव्विँश्वप्रकाशिनी ॥ त्वमाग्निस्त्वन्तथा स्वाहा त्वं स्वधा पितृभिः सह ॥ २३ ॥ त्वन्नभस्त्वङ्कालरूपा
त्वङ्काष्ठा त्वम्बहिष्कृता ॥ त्वमचिन्त्या त्वमव्यक्ता तथा निर्देश्यरूपिणी ॥ २४ ॥ त्वङ्कालरात्रिस्त्वं शान्ता त्वमेव प्रकृतिः परा ॥
यस्याः संसारलोकानाम्परित्राणाय यद्बहिः ॥ २५ ॥ रूपञ्जानन्ति धात्राद्यास्तत्त्वाञ्ज्ञास्यन्ति केपराम् ॥ प्रसीद भगवत्य
म्ब प्रसीद योगरूपिणि ॥ २६ ॥ प्रसीद घोररूपे त्वञ्जगन्मयि नमोस्तुते ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इति स्तुता म
हामाया दक्षेण प्रयतात्मना ॥ २७ ॥ उवाच दक्षञ्ज्ञात्वापि स्वयन्तस्येप्सितन्द्विजाः ॥ ॥ भगवत्युवाच ॥ ॥ तुष्टाहन्द
क्षभवतो मद्भक्त्या त्वनया भृशम् ॥ २८ ॥ वरव्वँणीष्व चाभीष्टं तत्ते दास्यामि तत्स्वयम् ॥ नियमेन तपोभिश्चस्तुतिभि
स्ते प्रजापते ॥ २९ ॥ अतीव तुष्टा दास्येह व्वँरव्वँरय वाञ्छितम् ॥ ॥ दक्ष उवाच ॥ ॥ जगन्मयि महामाये यदि त्वँव्व
रदा मम ॥ ३० ॥ तदा मम सुता भूत्वा हरजाया भवाधुना ॥ ममैष न वरो देवी केवलञ्जगतामपि ॥ ३१ ॥ लोकेशस्य
तथा विष्णोः शिवस्यापि प्रजेश्वरि ॥ ॥ देव्युवाच ॥ ॥ अहन्तव सुता भूत्वा त्वज्जायायां समुद्भवा ॥ ३२ ॥ हरजाया भ
विष्यामि न चिरात्तु प्रजापते ॥ यदा भवान्मयि पुनर्भवेन्मन्दादरस्तदा ॥ ३३ ॥ देहन्त्यक्ष्यामि सपदि सुखिन्यप्यथ वेत
रा ॥ एषदत्तस्तव वरः प्रतिसर्गम्प्रजापते ॥ ३४ ॥ अहन्तव सुता भूत्वा भविष्यामि हरप्रिया ॥ तथा सम्मोहयिष्यामि म

१ इतरा असुखिनी ।

हादेवम्प्रजापते ॥ ३५ ॥ प्रतिसर्ग्गय्यँथा मोहं सम्प्राप्स्यति निराकुलम् ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एवमुक्त्वा महामाया
दक्षम्मुख्यम्प्रजापतिम्॥ ३६ ॥ अन्तर्द्दधे ततो देवी सम्यग्दक्षस्य पश्यतः ॥ अन्तर्हितायाम्मायायान्दक्षोपि निजमाश्रम
म् ॥ ३७ ॥ जगाम लेभे च मुदम्भविष्यति सुतेति सा ॥ अत्र चक्रे प्रजोत्पादव्विँना स्त्रीसङ्गमेन च ॥ ३८ ॥ सङ्कल्पाविर्भवा
स्यान्तु मनसा चिन्तनेन च ॥ तत्र ये तनया जाता बहुशो द्विजसत्तमाः ॥ ३९ ॥ ते नारदोपदेशेन भ्रमन्ति पृथिवीमिमाम् ॥
पुनःपुनःसुता येये तस्य जाताः सहस्रशः॥ ४० ॥ ते सर्व्वे भ्रातृपदवीय्यँयुर्न्नारदवाक्यतः ॥ पृथिव्यां सृष्टिकर्त्तारः सर्व्वे यूय
न्द्विजोत्तमाः ॥ ४१ ॥ पश्यध्वम्पृथिवीङ्कृत्स्नामुपान्तप्रान्तमायताम्॥ इतिनारदवाक्येन नोदिता दक्षपुत्रकाः॥ ४२॥ अद्यापि
न निवर्त्तन्ते भ्रमन्तः पृथिवीमिमाम्॥ ततः समुत्पादयितुम्प्रजा मैथुनसम्भवाः॥ ४३॥ उपयेमे वीरणस्य तनयान्दक्ष ईप्सिता
म्॥ वीरणी नाम तस्यास्तु असक्नीत्यपि सत्तमाः॥ ४४ तस्याम्प्रथमसङ्कल्पो यदा भूतः प्रजापतेः॥ सद्योजातामहामायातदा
तस्यान्द्विजोत्तमाः ॥ ४५ ॥ तस्यान्तुजातमात्रायांसुप्रीतोभूत्प्रजापतिः ॥ सैवैषेतितदामेनेतान्दृष्ट्वातेजसोज्ज्वलाम्॥ ४६॥
बभूवपुष्पवृष्टिश्चमेघाश्चववृषुर्ज्जलम् ॥ दिशःशान्तास्तदातस्याञ्जातायाञ्चसमुद्गताः ॥ ४७॥ अवादयन्तस्त्रिदशा शुभ
व्वाँद्यव्वियँद्गताः ॥ जज्वलुश्चाग्नयःशान्तास्तस्यांसत्यान्नरोत्तमाः ॥ ४८ ॥ वीरिण्यालक्षितोदक्षस्तान्दृष्ट्वाजगदीश्वरीम् ॥

विष्णुमायाम्महामायान्तोषयामासभक्तितः ॥ ४९ ॥ ॥ दक्षउवाच ॥ ॥ शिवाशान्तामहामायायोगनिद्राजगन्मयी ॥ या
प्रोच्यते विष्णुमायातान्नमामिसनातनीम् ॥ ५० ॥ ययाधाताजगत्सृष्टौ[1]नियुक्तस्ताम्पुराकरोत् ॥ स्थितिञ्चविष्णुरकरोद्यान्नि
योगाज्जगत्पतिः ॥ ५१ ॥ शम्भुरन्तन्ततोदेवीन्तान्नमामिमहीयसीम् ॥ विकाररहितांशुद्धामप्रमेयाम्प्रभावतीम् ॥ ५२ ॥
प्रमाणमानमेयाख्याम्प्रणमामिसुखात्मिकाम् ॥ यस्त्वांविंचिन्तयेद्देवीव्विंद्याऽविद्यात्मिकाम्पराम् ॥ ५३ ॥ तस्यभोग्यञ्च
मुक्तिश्चसदाकरतलेस्थिता ॥ यस्त्वाम्प्रत्यक्षतोदेवींसकृत्पश्यतिपावनीम् ॥ ५४ ॥ तस्यावश्यम्भवेन्मुक्तिर्व्विद्याऽविद्याप्र
काशिका ॥ योगनिद्रेमहामायेविष्णुमायेजगन्मयि ॥ ५५ ॥ याप्रमाणार्थसम्पन्नाचेतनासातवात्मिका ॥ येस्तुवन्तिजग
न्मातर्भ्भवतीमम्बिकेतिच ॥ ५६ ॥ जगन्मयीतिमायेतिसर्व्वन्तेषाम्भविष्यति ॥ मार्क्कण्डेय उवाच ॥ ॥ इतिस्तुताजगन्मा
तादक्षेणसुमहात्मना ॥ ५७ ॥ तथोवाचतदादक्षय्यँथामाताशृणोतिन ॥ सम्मोह्यसर्व्वन्तत्रस्थय्यँथादक्षःशृणोतितत् ॥ ५८ ॥
नान्यःशृणोतिचतथामाययाहतदाम्बिका ॥ ॥ देव्युवाच ॥ ॥ अहमाराधितापूर्व्वय्यँदर्थम्मुनिसत्तम ॥ ५९ ॥ ईप्सितन्तव
सिद्धन्तदवधारयसाम्प्रतम् ॥ ॥ मार्क्कण्डेय उवाच ॥ ॥ एवमुक्तातदादेवीदक्षञ्चनिजमायया ॥ ६० ॥ आस्थायशैशवम्भा
वञ्जनन्यङ्केरुरोदसा ॥ ततस्तांव्वीरिणीयत्नात्सुसंस्कृत्ययथोचितम् ॥ ६१ ॥ शिशुपालेनविधिनातस्यैस्तन्यादिकन्ददौ ६२ ॥

१ सृष्टिमित्यर्थः ।

पालितासाथवीरिण्यादक्षेणसुमहात्मना ॥ ववृधेशुक्लपक्षस्यनिशानाथोयथान्वहम् ॥ ६३ ॥ तस्यान्तुसद्गुणाःसर्व्वेविविशु
र्द्विजसत्तमाः ॥ शैशवेपियथाचन्द्रेकलाःसर्व्वामनोहराः ॥ ६४ ॥ रेमेसानिजभावेनसखीमध्यगतायदा ॥ तदालिखतिभ
र्गस्यप्रतिमामन्वहम्मुहुः ॥ ६५ ॥ यदागायतिगीतानितदाबाल्योचितानिसा ॥ उग्रंस्थाणुंहरंरुद्रंसस्मारस्मरमानसा ६६ ॥
तस्याश्चक्रेनामदक्षःसतीतिद्विजसत्तमाः ॥ प्रशस्तायाःसर्व्वगुणैःसत्वादपिनयादपि ॥ ६७ ॥ ववृधेदक्षवीरिण्योःप्रत्यह
ङ्करुणातुला ॥ तस्याम्बाल्येपिभक्तायान्तयोर्न्नित्यम्मुहुर्म्मुहः ॥ ६८ ॥ सर्व्वकान्तगुणाक्रान्तासदासानयशालिनी ॥ तोष
यामासपितरौनित्यन्नित्यन्नरोत्तमाः ॥ ६९ ॥ अथैकदापितुःपार्श्वेतिष्ठन्तीन्तांसतीव्विँधिः ॥ नारदश्चददर्शाथरत्नभूताङ्क्षितौ
शुभाम् ॥ ७० ॥ सापितौवीक्ष्यमुदिताविनयावनतातदा ॥ प्रणनामसतीदेवम्ब्रह्माणमथनारदम् ॥ ७१ ॥ प्रणामान्तेसती
व्वीक्ष्यविनयावनताव्विँधिः ॥ नारदश्चतथैवाशीर्व्वादमेतदुवाचह ॥ ७२ ॥ त्वामेवयःकामयतेयन्त्वङ्कामयसेपतिम् ॥ तमा
प्नुहिपतिन्देवंसर्व्वज्ञञ्जगदीश्वरम् ॥ ७३ ॥ योनान्याञ्जगृहेनापिगृह्णातिनग्रहीष्यति ॥ जायांसतेपतिर्ब्भूयादनन्यसदृशः
शुभे ॥ ७४ ॥ इत्युक्त्वासुचिरन्तौतुस्थित्वादक्षाश्रमेपुनः ॥ विसृष्टौतेनसय्याँतौस्वस्थानन्द्विजसत्तमाः ॥ ७५ ॥ ॥ इति
कालिकापुराणेअष्टमोध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ मार्क्कण्डेय उवाच ॥ बाल्यव्व्यतीत्यसाप्रापयौवनंशोभनन्ततः ॥

अतीवरूपेणाङ्गेनसर्व्वाङ्गसुमनोहरा ॥ १ ॥ ताव्वीँक्ष्यदक्षोलोकेशःप्रोद्भिन्नान्तर्व्वयःस्थिताम् ॥ चिन्तयामासभर्ग्गायक
थन्दास्यइमांसुताम् ॥ २ ॥ अथसापिस्वयम्भर्ग्गम्प्राप्तुमैछत्तदान्वहम् ॥ आराधयामासचतङ्गृहेमातुरनुज्ञया ॥ ३ ॥ आ
श्विनेनन्दकाख्यायाल्लँवणैःसगुडोदनैः ॥ पूजयित्वाहरम्पश्चाद्बवन्देसानिनायतत् ॥४ ॥कार्तिकस्यचतुर्द्दश्यांसापूपैः पाय
सैर्हरम् ॥ समाकीर्णैःसमाराध्यसस्मारपरमेश्वरम् ॥ ५ ॥ कृष्णाष्टम्याम्मार्ग्गशीर्षैसलिलैःसयवोदनैः ॥ पूजयित्वाहरन्नी
लैर्न्निनायदिवसम्पुनः ॥६ ॥ पौषेतुकृष्णसप्तम्याङ्कृत्वाजागरणान्निशि ॥ अपूजयञ्छिवम्प्रातःकृशरान्नेनसासती ॥७॥माघस्य
पौर्णमास्यान्तुकृत्वाजागरणन्निशि ॥ आर्द्रवस्त्रानदीतीरेत्थ्यकरोद्धरपूजनम् ॥ ८ ॥ नानाविधैःफलैःपुष्पैःसम्यक्तत्कालसम्भ
वैः ॥ चकारनियताहारन्तम्मासंहरमानसा ॥ ९ ॥ चतुर्द्दश्याङ्कृष्णपक्षेतपस्यस्यविशेषतः ॥ कृत्वाजागरणन्देवम्बिल्वपत्रैर
पूजयत् ॥ १० ॥ चैत्रेशुक्लचतुर्द्दश्याम्पालाशैःकुसुमैःशिवम् ॥ अपूजयद्दिवारात्रौतंस्मरन्तीनिनायतत् ॥ ११ ॥ वैशाखस्य
तृतीयायांशुक्लायांसयवोदनैः ॥पूजयित्वाहरन्देवङ्गव्यैर्म्मासञ्चरन्त्यनु ॥१२॥निनायसानिराहारास्मरन्तीवृषवाहनम् ॥ज्ये
ष्ठस्यपूर्णिमारात्रौसम्पूज्यवृषवाहनम् ॥ १३ ॥ वसनैर्बृहतीपुष्पैर्न्निराहारानिनायताम् ॥ आषाढस्यचतुर्द्दश्यांशुक्लायाङ्कृत्ति
वाससः ॥ १४ ॥ बृहतीकुसुमैःपूजादेवस्याकारिवैतया ॥ श्रावणस्यसिताष्टम्याञ्चचतुर्दश्याञ्चसाशिवम् ॥१५॥ यज्ञोपवीतै

१ नीलवृषैर्दूर्व्वाभिर्व्वा नीलवर्णैः पत्रैः पुष्पैर्व्वा ।

व्वांसोभिः पवित्रैरप्यपूजयत् ॥ भाद्रेकृष्णत्रयोदश्याम्पुष्पैर्न्नानाविधैः फलैः ॥ १६ ॥ सम्पूज्याथचतुर्द्दश्याञ्चकारफलभोजनम् ॥ इतिव्रतय्यँदारब्धम्पुरासत्यातदैवतु ॥ १७ ॥ सावित्रीसहितोब्रह्माजगामाथहरान्तिकम् ॥ वासुदेवोपिभगवान्सहलक्ष्म्यातदन्तिकम् ॥ १८ ॥ प्रस्थंहिमवतः शम्भुः स्थितोयत्रगणैः सह ॥ तौतुदृष्ट्वाब्रह्मकृष्णौसस्त्रीकौसङ्गतौहरः ॥ १९ ॥ यथोचितंसमाभाष्यपप्रच्छागमनन्तयोः ॥ तथाविधाँस्तुतान्दृष्ट्वादम्पतीभावसय्युँतान् ॥ २० ॥ काञ्चिदीहाञ्चमनसाचक्रेदारपरिग्रहे ॥ अथागमनहेतुन्नः कथयध्वञ्चतत्त्वतः ॥ २१ ॥ किमर्थमागतायूयङ्किङ्कार्य्यव्वोत्रविद्यते ॥ इतिपृष्टस्त्र्यम्बकेनब्रह्मालोकपितामहः ॥ २२ ॥ उवाचचमहादेवव्विष्णुनापरिचोदितः ॥ ॥ ब्रह्मोवाच ॥ ॥ यदर्थमागतावावान्तच्छृणुष्वत्रिलोचन ॥ २३ ॥ विशेषतश्चदेवार्थव्विश्वार्थञ्चवृषध्वज ॥ अहंसृष्टिरतः शम्भोस्थितिहेतुस्तथाहरिः ॥ २४ ॥ अन्तहेतुर्भवानस्यजगतः प्रतिसर्गकम्[1] ॥ तत्कर्म्मणिसदैवाहम्भवद्भ्यांसहितोह्यलम् ॥ २५ ॥ हरिः स्थितावपितथामयालम्भवतासह ॥ त्वमन्तकरणेशक्तोविनानावाम्भविष्यसि ॥ २६ ॥ तस्मादन्योन्यकृत्येषुसर्व्वेषाव्वृँषभध्वज ॥ साहाय्यन्नः सदायोग्यमन्यथानजगद्भवेत् २७ केचिद्भविष्यन्त्यसुराममवध्यामहेश्वर ॥ अपरेतुहरेर्व्वध्याभवतोपितथापरे ॥ २८ ॥ केचित्त्वद्वीर्य्यजातस्यकेचिन्मेशभवस्यवै ॥ मायायाः केचिदपरेवध्यास्युर्द्देववैरिणः ॥ २९ ॥ योगयुक्तत्वयिसदारागद्वेषादिवर्ज्जिते ॥ दयामात्रैकनिरतेनवध्या

[1] सर्गकर्म्मणि ।

असुरास्तव ॥ ३० ॥ अबाधितेषुतेष्वीशकथंसृष्टिस्तथास्थितिः ॥अन्तश्चभवितायुक्तन्नित्यन्नित्यँव्वृषध्वज ॥ ३१ ॥ सृष्टिस्थि
त्यन्तकर्म्माणिनकार्य्याणियदाहर ॥ शरीरभेदमस्माकम्मायायाश्चनयुज्यते ॥ ३२ ॥एकस्वरूपाहिवयम्भिन्नाःकार्य्यस्यभे
दतः ॥ कार्य्यभेदोनसिद्धश्चेद्रूपभेदोऽप्रयोजनः ॥ ३३ ॥ एकएवत्रिधाभूत्वावयम्भिन्नस्वरूपिणः ॥ भूतामहेश्वरइतितत्त्व
व्विँद्धिसनातनम् ॥ ३४ ॥ मायापिभिन्नरूपेणकमलाख्यासरस्वती॥ सावित्रीचाथसन्ध्याचभूताकार्य्यस्यभेदतः ॥ ३५ ॥ प्र
वृत्तेरनुरागस्यनारीमूलम्महेश्वर॥ रामापरिग्रहात्पश्चात्कामक्रोधादिकोद्भवः ॥ ३६॥ अनुरागेतुसञ्जातेकामक्रोधादिकारणे॥
विरागहेतुर्य्यँत्नेनसान्त्वयन्तीहजन्तवः ॥ ३७॥ सङ्गःप्रथमएवस्याद्रागवृक्षात्फलम्महत्॥ तस्मात्सञ्जायतेकामःकामात्क्रोध
स्ततोभवेत् ॥ ३८॥ वैराग्यञ्चनिवृत्तिश्चशोकात्स्वाभाविकादपि ॥संसारविमुखेहेतुरसङ्गश्चसदातनः ॥ ३९ ॥ दयातत्रभवे
न्नित्यंशान्तिश्चापिमहेश्वर ॥ अहिंसाचतपःशान्तिर्ज्ञानमार्ग्गानुसाधनम् ॥ ४० ॥ त्वयितावत्तपोनिष्ठेविसङ्गिनिदयायुते ॥
अहिंसाचतथाशान्तिःसदातवभविष्यति ॥ ४१ ॥ ततोसुखविधौयत्नस्तवकस्माद्भविष्यति ॥ अकृतेदूषणय्यँद्यत्तत्सर्व्वङ्क
थितन्तव ॥ ४२ ॥ तस्माद्विश्वहितायत्वन्देवानाञ्चजगत्पते ॥ परिगृह्णीष्वभार्य्यार्थेवामामेकांसुशोभनाम् ॥ ४३ ॥ यथाप
द्मालयाविष्णोः सावित्रीचयथामम ॥ तथासहचरीशम्भोर्य्यास्यात्ताङ्गृह्णसम्प्रति ॥ ४४ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इति

श्रुत्वावचस्तस्यब्रह्मणःपुरतोहरेः ॥ तदाजगादलोकेशंस्मिताहितमुखोहरः ॥ ४५ ॥ ॥ ईश्वरउवाच ॥ ॥ एवमेवयथात्थत्व
म्ब्रह्मन्विश्वनिमित्ततः ॥ ४६ ॥ नस्वार्थतःप्रवृत्तिर्म्मेसम्यग्ब्रह्मविचिन्तनात् ॥ तथापियत्करिष्यामितत्तेवक्ष्येजगद्धितम् ॥
॥ ४७ ॥ तच्छृणुष्वमहाभागयुक्तमेवत्रचोमम ॥ यामेतेजःसमर्थास्याद्गृहीतुमिहभागशः ॥ ४८ ॥ तान्निर्देशयभार्य्यार्थेयो
गिनीङ्कामरूपिणीम् ॥ योगयुक्तेमयितथायोगिन्येवभविष्यति ॥ ४९ ॥ कामासक्तेमयिपुनर्म्मोहिन्येवभविष्यति ॥ ताम्मे
निर्देशयब्रह्मन्भार्य्यार्थेवरवर्णिनीम् ॥ ५० ॥ यदक्षरव्वेँदविदोनिगदन्तिमनीषिणः ॥ ज्योतिःस्वरूपम्परमञ्चिन्तयिष्येस
नातनम् ॥ ५१ ॥ तच्चिन्तायांसदाशक्तोब्रह्मन्गच्छामिभावनाम् ॥ तत्रयाविघ्नजननीनभवित्रीहसास्तुमे ॥ ५२ ॥ त्वव्वा
विष्णुरहव्वाँपिपरब्रह्मस्वरूपिणः ॥ अङ्गभूतामहाभागयोग्यन्तदनुचिन्तनम् ॥ ५३ ॥ तच्चिन्तयाविनानाहंस्थास्यामिक
मलासन ॥ तस्माज्जायाम्प्रादिशस्वमत्कर्म्मानुगतांसदा ॥ ५४ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इतितस्यवचःश्रुत्वाब्रह्मास
र्व्वजगत्पतिः ॥ सस्मितम्मोदितमनाइदव्वँचनमब्रवीत् ॥ ५५ ॥ ब्रह्मोवाच ॥ अस्तीदृशीमहादेवमार्गितायादृशीत्वया ॥
दक्षस्यतनयायाभूत्सतीनाम्नीसुशोभना ॥ ५६ ॥ सैवेदृशीभवद्भार्य्याभविष्यतिसुधीमती ॥ तान्त्वदर्थेतपस्यन्तीन्त्वत्प्रा
प्तिम्प्रतिकामिनीम् ॥ ५७ ॥ विद्धित्वन्देवदेवेशसर्व्वेष्वात्मसुवर्त्तसे ॥ ॥ मार्कण्डेय उवाच ॥ ॥ अथब्रह्मवचःशेषेभगवान्म

धुसूदनः ॥ ५८ ॥ यदुक्तम्ब्रह्मणासर्व्वन्तत्कुरुष्वेत्युवाचसः ॥ करिष्यइतितेनोक्तेस्वेष्टन्देशम्प्रजग्मतुः ॥ ५९ ॥ हरिर्ब्ब्रह्मा चमुदितौसावित्रीकमलायुतौ ॥ कामोपिवाक्यानिहरस्यश्रुत्वाचामोदयुक्तोरतिनासमित्रः ॥ शम्भुंसमासाद्यविविक्तरूपी तस्थौवसन्तव्विँनियोज्यशश्वत् ॥ ६० ॥ ॥ इतिकालिकापुराणेनवमोध्यायः ॥ ९ ॥ ॥ ॥ छ ॥ ॥

॥ मार्क्कण्डेय उवाच ॥ अथसत्यापुनःशुक्लपक्षेष्टम्यामुपोषिता ॥ आश्विनेमासिदेवेशम्पूजयामासभक्तितः ॥ १ ॥ इतिनन्दाव्रतेपूर्णेनवम्यान्दिनभागतः ॥ तस्यास्तुभक्तिनम्रायाःप्रत्यक्षमभवद्धरः ॥ २ ॥ प्रत्यक्षतोहरव्वीँक्ष्यसामोदहृदयासती ॥ ववन्दे चरणौतस्यलज्जयावनतानता ॥ ३ ॥ अथप्राहमहादेवःसतीन्तद्व्रतधारिणीम् ॥ तामिच्छन्नपिभार्य्यार्थेतस्याश्चर्य्याफलप्रदः ॥ ४ ॥ ॥ ईश्वरउवाच ॥ ॥ अनेनत्वद्व्रतेनाहम्प्रीतोस्मिदक्षनन्दिनि ॥ वरव्वँरप्रदास्यामियस्तवाभिमतेभवेत् ॥ ५ ॥ मार्क्कण्डेयउवाच ॥ जानन्नपीहतद्भावम्महादेवोजगत्पतिः ॥ ६ ॥ ऊचेथवरयस्वेतितद्वाक्यश्रवणेच्छया ॥ सापित्रपासमाविष्टानोवक्तुंहृदयेस्थितम् ॥ शशाकबालाभिष्टय्यँल्लज्जयाछादितय्यँतः ॥ एतस्मिन्नन्तरेकामःसाभिप्रायंहरन्तदा ॥ ॥ ७ ॥ वामापरिग्रहेनेत्रेवक्रव्यापारलिङ्गितम् ॥ सम्प्राप्यविवरञ्चायंसन्दधेपुष्पहेतिना ॥ ८ ॥ हर्षणेनाथबाणेनविव्याधहृदयेहरम् ॥ ततोसौहर्षितःशम्भुर्व्वीक्षाञ्चक्रेसतीम्मुहुः ॥ ९ ॥ विस्मृत्यचपरंब्रह्मचिन्तनम्परमेश्वरः ॥ ततः पुनर्म्मो

१ रतिनेत्यार्षम् ।

हनेनबाणेनैनम्मनोभवां ॥ १० ॥ विव्याधहार्षितःशम्भुर्म्मोहितश्चतदाभृशम् ॥ ततोयदासौमोहस्यहर्षस्यचद्विजोत्तमाः ॥
११॥भावंव्यक्तीचकारैषमाययापिविमोहितः ॥ अथत्रपांस्वांसंष्टभ्ययदाप्राहहरंसता ॥ १२ ॥ ममेष्टन्देहिवरदवरमित्यर्थ
कारकम् ॥ तदावाक्यस्यावसानमनपेक्ष्यवृषध्वजः ॥ १३ ॥ भवस्वममभार्येतिप्राहदाक्षायणीम्मुहुः ॥ एतच्छ्रुत्वावचस्त
स्यसाभीष्टफलभावनम् ॥ १४ ॥ तूष्णीन्तस्थौप्रमुदितावरम्प्राप्यमनोगतम्॥ सकामस्यहरस्याग्रेतत्रसाचारुहासिनी॥
॥ १५ ॥ अकरोन्निजभावाँश्चहावानपिद्विजोत्तमाः ॥ स्वस्यभावान्समादायशृङ्गाराख्योरसस्तदा ॥ १६ ॥ तयो
र्व्विवेशविप्रेन्द्राःकलाहावायथोचितम्॥हरस्यपुरतोरेजेस्निग्धभिन्नाञ्जनप्रभा ॥१७॥चन्द्राभ्यासेभ्रलेखेवस्फटिकोज्ज्वलव
र्ष्मणः ॥ अथसातमुवाचेदंहरन्दाक्षायणीमुहुः ॥ १८ ॥ पितुर्म्मेगोचरीकृत्यमाङ्गृह्णीष्वजगत्पते ॥ एवम्मितव्वँचोदेवीयदो
वाचसतीतदा ॥ १९ ॥ ममभार्य्याभवेत्यूचेपुनःकामेनमोहितः ॥ अथैतद्वीक्ष्यमदनःसरतिःससखोमुदा ॥ २० ॥ युक्तो
बभूवशश्वच्चआत्मानञ्चाभ्यनन्दयन् ॥ अथदाक्षायणीशम्भुंसमाभाष्यद्विजोत्तमाः ॥ २१ ॥ जगाममातुरभ्यासंहर्षमोहस
मन्विता ॥ हरोपिहिमवत्प्रस्थम्प्रविश्यचनिजाश्रमम् ॥ २२ ॥ दाक्षायणीविप्रलम्भदुःखाद्ध्यानपरोभवत् ॥ विप्रलब्धो
पिभूतेशोब्रह्मवाक्यमथास्मरत् ॥ २३ ॥ जायापरिग्रहस्यार्थेयदुक्तम्पद्मयोनिना ॥ स्मृत्यैवब्रह्मवाक्यस्यपुराविश्वासतः

१ शरीरस्य २ चिन्ता।

परम् ॥ २४ ॥ चिन्तयामाससमनसाब्रह्माणव्वँषभध्वजः ॥ अथसञ्चिन्त्यमानोपिपरमेष्ठोत्रिशूलिनः ॥ २५ ॥ पुरस्ता
त्प्राविशत्तूर्णमिष्टसिद्धिप्रचोदितः ॥ यत्रायंहिमवत्प्रस्थेविप्रलब्धोहरःस्थितः ॥ २६ ॥ सावित्रीसहितोब्रह्मातत्रैवसमुप
स्थितः ॥ अथतव्वीक्ष्यधातारंसावित्रीसहितंहरः ॥ २७ ॥ सोत्सुकोविप्रलब्धश्चसत्यर्थैतमुवाचह ॥ ॥ ईश्वरउवाच ॥ ॥
ब्रह्मन्विश्वार्थतोदारपरिग्रहकृतौचयत्॥२८॥त्वमात्थतत्सार्थमिवप्रतिभातिममाधुना ॥अहमाराधितोभक्त्यादाक्षायण्याति
भक्तितः ॥ २९ ॥ तस्यावरमहन्दातुय्यँदायातःप्रपूजितः ॥ तत्सकाशेतदाकामोमाव्विँव्याधमहेषुभिः ॥ ३० ॥ माय
यामोहितश्चाहन्तत्प्रतीकारमञ्जसा॥नशक्तःकर्त्तुमभितःपुराहङ्कमलासन॥३१॥तस्याश्चवाञ्छितम्ब्रह्मन्नेतदेवम येक्षितम्॥
यदहंस्याव्विँभोभर्त्ताव्रतभक्तिसमायुतः॥३२॥तस्मात्त्वङ्कुरुविश्वार्थेमदर्थेचप्रजापते॥दक्षोयथामामामन्त्र्यसुतान्दातात
थाद्रुतम् ॥ ३३ ॥ गच्छत्वन्दक्षभवनङ्कथयस्ववचोमम ॥ यथासतीवियोगोमेभङ्गःस्यात्त्वन्तथाकुरु ॥ ३४ ॥ मार्कण्डे
यउवाच ॥ इत्युदीर्य्यमहादेवः सकाशेस्यप्रजापतेः ॥ सावीत्रीव्वीक्ष्यसत्यास्तुविप्रयोगोव्यवर्धत ॥ ३५ ॥ तंसमा
भाष्यलोकेशःकृतकृत्योमुदान्वितः ॥ इदञ्जगादजगतांहितम्पथ्यञ्चधूर्जटे ॥ ३६ ॥ ब्रह्मोवाच॥ यदात्थभगवञ्छम्भो
तद्विश्वार्थंसुनिश्चितम् ॥ नास्त्येवभवतःस्वार्थोममापिवृषभध्वज॥३७ ॥ सुताञ्चतुभ्यन्दक्षस्यस्वयमेवप्रदास्यति ॥ अह

ञ्चापिवदिष्यामित्वद्वाक्यन्तत्समक्षतः ॥ ३८ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इत्युदीर्य्यमहादेवम्ब्रह्मालोकपितामहः ॥ जगामदक्षनिलयंस्यन्दनेनातिवेगिना ॥ ३९ ॥ अथदक्षोपिवृत्तान्तंसर्व्वंश्रुत्वासतीमुखात्॥ चिन्तयामासदेयेयंमत्सुताशम्भवेकथम् ॥ ४० ॥ आगतोपिमहादेवःप्रसन्नःसञ्जगामह ॥ पुनरेवकथंसोपिसुतार्थेऽत्यर्थमीप्सितः ॥ ४१ ॥ प्रस्थाप्योवामयातस्यदूतोनिकटमञ्जसा ॥ नैतद्योग्यन्नगृह्णीयाद्यद्येनाव्विंभुरात्मने ॥ ४२॥ अथवापूजयिष्यामितमेवव्रृषभध्वजम् ॥ मदीयतनयाभर्त्तास्वयमेवयथाभवेत्॥४३॥तथैवपूजितःसोपिवाञ्छत्यतिप्रयत्नतः॥शम्भुर्भवतुमद्भर्त्तेत्येवन्दत्तञ्चतेनतत्॥४४ इतिचिन्तयतस्तस्यदक्षस्यपुरतोविधिः ॥ उपस्थितोहंसरथःसावित्रीसहितस्तदा ॥ ४५ ॥ तन्दृष्ट्वावेधसन्दक्षःप्रणम्यावनतःस्थितः ॥ आसनञ्चददौतस्मैसमाभाष्ययथोचितम् ॥ ४६ ॥ ततस्तंसर्व्वलोकेशन्तत्रागमनकारणम्॥ दक्षःपप्रच्छविप्रेन्द्राश्चिन्ताविष्टोपिहर्षितः ॥ ४७ ॥ ॥ दक्षउवाच ॥ ॥ तवात्रागमनेहेतुङ्कथयस्वजगद्गुरो ॥ पुत्रस्नेहात्कार्य्यवशादथवाश्रममागतः ॥ ४८ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इतिपृष्टःसुरश्रेष्ठोदक्षेणसुमहात्मना ॥ प्रहसन्नब्रवीद्वाक्यम्मोदयँस्तम्प्रजापतिम् ॥ ४९ ॥ ॥ ब्रह्मोवाच ॥ ॥ शृणुदक्षयदर्थन्तेसमीपमहमागतः ॥ तल्लोकस्यहितम्पथ्यम्भवतोपितदीप्सितम् ॥ ५० ॥ तवपुत्र्यासमाराध्यमहादेवञ्जगत्पतिम् ॥ योवरःप्रार्थितःसोद्यस्वयमेवागतोगृहम् ॥ ५१ ॥ शम्भुना

१ कथमित्यस्यआगमिष्यतीतिशेषः।

तवपुत्र्यर्थैत्वत्सकाशमहम्पुनः ॥ प्रस्थापितोस्मियत्कृत्यंश्रेयस्तदवधारय ॥ ५२ ॥ वरन्दातुँय्यदायातस्तावत्प्रभृतिश
ङ्करः॥त्वत्सुताविप्रयोगेननशर्म्मलभतेंजसा ॥ ५३ ॥ लब्धछिद्रोपिमदनोनिचखानतदाभृशम् ॥ सर्व्वैःपुष्पकरैर्ब्बाणैरे
कदैवजगत्प्रभुम् ॥ ५४ ॥ सबाणविद्धःकामेनपरित्यज्यात्मचिन्तनम् ॥ सतींविचिन्तयन्नास्तेव्याकुलः प्राकृतोयथा
॥ ५५ ॥ विस्मृत्यप्रस्तुताम्वाणीङ्गणाग्रेविप्रयोगतः ॥ क्वसतीत्येवगिरिशोभाषतेन्यकृतावपि ॥ ५६ ॥ मयामद्वा
ञ्छितम्पूर्व्वन्त्वयाचमदनेनच ॥ मरीच्याद्यैर्म्मुनिवरैस्तत्सिद्धमधुनासुत ॥ ५७ ॥ त्वत्पुत्र्याराधितःशम्भुःसोपित
स्याविचिन्तनात् ॥ अनुमोदयितुम्प्रेप्सुर्व्वर्त्ततेहिमवद्गिरौ॥५८॥ यथानानाविधैर्ब्भावैःसत्यानन्दाव्रतेनच ॥ शम्भुराराधि
तस्तेनतथैवाराध्यतेसती॥ ५९ ॥ तस्मात्त्वन्दक्षतनयांशम्भ्वर्थेपरिकल्पिताम् ॥ तस्मैदेह्यविलंबेनतेनतेकृतकृत्यता ॥ ६०
अहन्तमानयिष्यामिनारदेनत्वदालयम् ॥ तस्मैत्वमेनांसर्य्यंच्छतदर्थेपरिकल्पिताम् ॥६१ ॥ मार्क्कण्डेयउवाच ॥ एवमेवे
तिदक्षस्तमुवाचपरमेष्ठिनम् ॥ विधिश्चगतवाँस्तत्रगिरिशोयत्रसंस्थितः ॥ ६२ ॥ गतेब्रह्मणिदक्षोपिसदारतनयोमुदा ॥ अ
भवत्पूर्णदेहस्तुपीयूषैरिवपूरितः॥६३॥अथब्रह्मापिमोदेनप्रसन्नःकमलासनः॥आससादमहादेवंहिमवद्गिरिसंस्थितम्॥६४॥
तर्व्वीक्ष्यलोकस्रष्टारमायान्तर्व्वृषभध्वजः ॥ मनसासंशयश्चक्रेसतीप्राप्तौमुहुर्म्मुहुः ॥ ६५ ॥ अथदूरान्महादेवोलोके

शंसामसय्यँुतम् ॥ उवाचमदनोन्माथीविधिंसस्मरमानसः ॥ ६६ ॥ ॥ ईश्वरउवाच ॥ ॥ किमवोचन्सु
रश्रेष्ठसत्यर्थैत्वत्सुतःस्वयम् ॥ कथयस्वयथास्वान्तंमन्मथेननदीर्य्यते ॥ ६६ ॥ बाधमानोविप्रयोगोमामेवचसतीमृते ॥
अभिहन्तिसुरश्रेष्ठत्यक्त्वान्यान्प्राणधारिणः ॥ ६७ ॥ सतीतिसततव्वँद्मिब्रह्मन्कार्य्यान्तरेप्यहम् ॥ सायथाहिम
याप्राप्यातद्विधत्स्वतथाद्रुतम् ॥ ६८ ॥ ॥ ब्रह्मोवाच ॥ ॥ सत्यर्थैयन्ममसुतोवदतिस्मवृषध्वज ॥ तच्छृणु
ष्वनिजंसाध्यंसिद्धमित्यवधारय॥ ६९ ॥ देयातस्मैमयापुत्रीतदर्थैपरिकल्पिता ॥ ममापीष्टमिदङ्कर्म्मत्वद्वाक्यादधिकम्पु
नः ॥ ७० ॥ मत्पुत्र्याराधितःशम्भुरेतदर्थैस्वयम्पुनः ॥ सोप्यन्विच्छतितांय्यँस्मात्तस्माद्देयामयाहरे॥ ७१ ॥ शुभे
लग्नेमुहूर्त्तेचसमागच्छतुमेन्तिकम् ॥ तदादास्यामितनयाम्भिक्षार्थैशम्भवेविधे ॥ ७२ ॥ इत्यवोचन्मुदादक्षस्तस्मात्त्वं
वृषभध्वज ॥ शुभेमुहूर्त्तेतद्वेश्मगच्छतामनुयाचतु॥ ७३ ॥ ॥ ईश्वरउवाच ॥ गमिष्येभवतासार्द्धन्नारदेनमहात्मना॥ द्रुत
मेवजगत्स्रष्टस्तस्मात्वन्नारदंस्मर ॥ ७४ ॥ मरीच्यादीन्दशतथामानसानपिसंस्मर ॥ तैःसार्द्धन्दक्षनिलयङ्गमिष्येहङ्गणैः
सह ॥ ७५ ॥ ततःस्मृतास्तेकमलासनेनसनारदाब्रम्हसुतामनोजवाः ॥ समागतायत्रहरोविधिश्चतत्रागताःकाममवेत्यचि
न्ताम् ॥ ७६ ॥ ॥ इतिश्रीकालिकापुराणेदशमोध्यायः॥ ॥ १०॥ ॥ मार्कण्डेयउवाच ॥ ततःसमागताःसर्व्वे

मानसाश्चसनारदाः ॥ विधेःस्मरणमात्रेणवातेनैवविनोदिताः ॥ १ ॥ तैःसार्द्धम्ब्रम्हणाशम्भुःसगणोदक्षमन्दिरम्॥ जगा
ममोदयुक्तोथकालेतत्कर्म्मयोगिनि ॥ २ ॥ गणाःशङ्खाँश्चपटहाण्डिण्डिमाँस्तूर्य्यवंशकान् ॥ वादयन्तोमुदायुक्ताअनुगच्छन्ति
शङ्करम् ॥ ३ ॥ केचित्तालङ्करतलैःकुर्व्वन्तोङ्कितलस्वनम् ॥ विमानैरतिवेगैःस्वैरनुयान्तिवृषध्वजम् ॥ ४ ॥ कोलाहलम्प्र
कुर्व्वन्तस्तथानानाविधात्रवान् ॥ गणाअनेकाकृतयःशब्दयोगेननिर्य्ययुः ॥ ५ ॥ ततोदेवामुदायुक्तागन्धर्व्वाप्सरसोगणाः
॥ वाद्यैर्मोदैस्तथानृत्यैरन्वीयुर्व्वृषभध्वजम् ॥ ६ ॥ तेषांशब्देनविप्रेन्द्रागन्धर्व्वाणाङ्गरीयसाम् ॥ गणानाञ्चदिशःसर्व्वाःपू
रिताचवसुन्धरा ॥ ७ ॥ कामोपिसगणःशम्भुंसशृङ्गाररसादिभिः ॥ मोदयन्मोहयन्काममन्वियात्ससमक्षतः ॥ ८ ॥ हरेगच्छ
तिभार्य्यार्थेतदानींसकलाःसुराः ॥ ब्रह्माद्याःस्वयमेवाशुवाद्यञ्चक्रुर्म्मनोहरम् ॥ ९ ॥ दिशःसर्व्वाःसुप्रसन्नाबभूवुर्द्विजसत्त
माः ॥ जज्वलुश्चाग्नयःशान्ताःपुष्पवृष्टिरजायत ॥ १० ॥ ववुर्व्वाताःसुरभयोवृक्षाश्चापिसुपुष्पिताः ॥ बभूवुःप्राणिनः
स्वस्थाअश्वस्थायेपिकेचन ॥ ११ ॥ हंससारसकादम्बानीलकण्ठाश्चचातकाः ॥ चुक्रुशुर्मधुराञ्छब्दान्प्रेरयन्तइवेश्वरम् ॥
॥ १२ ॥ भुजङ्गोव्याघ्रकृत्तिश्चजटाचन्द्रकलातथा ॥ जगामभूषणत्वञ्चतेनापिपरिदीपितः ॥ १३ ॥ ततःक्षणेनबलि
नाबलीवर्द्देनवेगिना ॥ सब्रह्मनारदाद्यैश्चप्रापदक्षालयंहरः ॥ १४ ॥ ततोदक्षोमहातेजाअभ्युत्थायस्वयंहरम् ॥

ब्रह्मादींश्चददौतेषामासनानियथोचितम् ॥ १५ ॥ कृत्वायथोचितन्तेषांपूजाम्पाद्यादिभिस्तथा ॥ चकारसर्व्वंदन्दक्षोमु
निभिर्म्मानसैःपुनः ॥ १६ ॥ ततःशुभेमुहूर्त्तेतुलग्नेचद्विजसत्तमाः ॥ सतीन्निजसुतान्दक्षोददौहर्षेणशम्भवे ॥ १७ ॥ उद्वा
हविधिनासोपिपाणिञ्जग्राहहर्षितः ॥ दाक्षायण्यावरतनोस्तदानीव्वृँषभध्वजः ॥ १८ ॥ ब्रह्माथनारदाद्याश्चमुनयःसाम
गीतिभिः ॥ ऋचायजुर्भिःसुश्रव्यैस्तोषयामासुरीश्वरम् ॥ १९ ॥ वाद्यञ्चक्रुर्ग्गणाःसर्व्वेननृतुश्चाप्सरोगणाः ॥ पुष्पवृ
ष्टिञ्चससृजुर्म्मेघागगनसङ्गताः ॥ २० ॥ अथशम्भुमुपागत्यगरुडेनातिवेगिना ॥ सार्द्धङ्कमलयाचेदमुवाचगरुडध्वजः ॥ २१
॥ ॥ श्रीभगवानुवाच ॥ ॥ स्निग्धनीलाञ्जनश्यामशोभयाशोभसेहर ॥ दाक्षायण्यायथाचाहम्प्रतिलोमेनपद्मया ॥ २२
कुरुत्वमनयासार्द्धंरक्षान्देवस्यवानृणाम् ॥ अनयासहसंसारसारिणाम्मङ्गलंसदा ॥ २३ ॥ कुरुदस्यून्यथायोग्यंहनिष्य
सिचशङ्कर ॥ यएवैनांसाभिलाषोदृष्ट्वाश्रुत्वाथवाभवेत् ॥ २४ ॥ तंहनिष्यसिभूतेशनात्रकार्य्याविचारणा ॥ ॥ मार्कण्डेय
उवाच ॥ ॥ एवमस्त्वितिसर्व्वज्ञःप्रोवाचपरमेश्वरम् ॥ २५ ॥ प्रहृष्टमानसम्प्रीत्याप्रसन्नवदनोद्विजाः ॥ अथब्रह्मात
दादृष्ट्वादक्षजाञ्चारुहासिनीम् ॥ २६ ॥ स्मरानिष्टमनावक्त्रव्वीक्षाञ्चक्रेतदीयकम् ॥ मुहुर्म्मुहुस्तदाब्रह्मापश्यतिस्मसतीमुखम्
॥ २७ ॥ तदेन्द्रियविकारञ्चप्राप्तवानवशःपुनः ॥ अथतस्यपपाताशुतेजोभूमौद्विजोत्तमाः ॥ २७ ॥ तज्ज्वलद्दहनाभासम्मु

नीनाम्पुरतस्तदा ॥ ततस्तस्मात्समभवँस्तोयदाःशब्दसँय्युताः ॥२९॥ सव्वँर्त्तश्चतथावर्त्तःपुष्करोद्रोणएवच॥गर्ज्जन्तश्चाथ
मुञ्चन्तस्तोयानिद्विजसत्तमाः॥३०॥तैस्तुसञ्छादितेव्व्योम्नितेषुगर्ज्जत्सुशङ्करः ॥ पश्यन्दाक्षायणीन्देवीम्भृशङ्कामेनमोहितः
॥ ३१ ॥ मोहितोप्यथकामेनतदाविष्णुवचःस्मरन् ॥ इयेषहन्तुम्ब्रह्माणंशूलमुद्यम्यशङ्करः ॥ ३२ ॥ शम्भुनोद्यमितेशूले
विधिंहन्तुन्द्विजोत्तमाः ॥ मरीचिनारदाद्यास्तेचक्रुर्हाहाकृतिन्तदा ॥ ३३ ॥ दक्षोमैवम्मैवमितिपाणिमुद्यम्यशङ्कितः ॥
वारयामासभूतेशङ्क्षिप्रमेवपुरोगतः ॥ ३४ ॥ अथाग्रेमिलितव्वीक्ष्यतदादक्षम्महेश्वरः ॥ प्रत्युवाचाप्रियमिदंस्मारयन्वै
ष्णवीङ्गिरम् ॥ ३५॥ ईश्वरउवाच ॥ ॥ नारायणेनविप्रेन्द्रयदिदानीमुदीरितम्॥ मयाप्यङ्गीकृतङ्कर्तुंन्तदिहैवप्रजापते ॥
॥ ३६ ॥ एनाँय्यः सालाभिषःसन्वीक्षतेतंहनिष्यसि॥इतिवाचन्तुसफलामेनांहत्वाकरोम्यहम् ॥ ३७ ॥ साभिलाषःकथ
म्ब्रह्मासतींसमवलोकयत् ॥ अभवच्यक्ततेजास्तुततोहन्मिकृतागसम् ॥ ३८ ॥ मार्कण्डेयउवाच ॥ ॥ तमेवव्वादिन
व्विँष्णुःक्षिप्रम्भूत्वापुरःसरः ॥ इदमूचेवारयँस्तंहन्तुंसर्वजगत्प्रभुः ॥ ३९ ॥ ॥ श्रीभगवानुउवाच ॥ ॥ नहनिष्यसि
भूतेशस्त्रष्टारञ्जगताव्वँरम् ॥ अनेनैवसतीभार्य्याभवदर्थेप्रकल्पिता ॥ ४० ॥ प्रजाःस्त्रष्टुमयंशम्भोप्रादुर्भूतश्चतुर्म्मुख॥
अस्मिन्हतेजगत्स्त्रष्टानास्त्यन्यःप्राकृतोधुना ॥ ४१ ॥ सृष्टिस्थित्यन्तकर्माणिकरिष्यामः कथम्पुनः ॥ अनेनापिमयाचै

वभवताचसमञ्जसम् ॥४२॥ एकस्मिन्निहतेमीषुकस्तत्कर्म्मकरिष्यति ॥ तस्मान्नवध्योभवताविधातावृषभध्वज ॥ ४३ ॥
ईश्वरउवाच ॥ ॥ प्रतिज्ञाम्पूरयिष्यामिहत्वैनञ्चतुराननम् ॥ अहमेवप्रजाःस्त्रक्ष्येस्थावराणिचराणिच ॥ ४४ ॥ अन्यंस्त्र
क्ष्येविधातारमथवाहंस्वतेजसा ॥ सएवसृष्टिकर्तास्यात्सर्व्वदामदनुज्ञया ॥ ४५ ॥ हत्वैनव्विँधिमेवाहम्प्रतिज्ञाम्पालयान्वि
भो ॥ स्त्रष्टारमेकंस्त्रक्ष्यामिनवारयचतुर्भ्भुज ॥ ४६ ॥ ॥ मार्क्कण्डेय उवाच ॥ ॥ इतितस्यवचःश्रुत्वागिरिशस्यचतुर्भ्भुजः ॥
स्मितप्रसन्नवदनःपुनर्म्मैवमितीरयन् ॥ ४७॥ प्रतिज्ञापूरणङ्कर्त्तुँय्योँग्यमात्मनिनोभवेत् ॥इत्युवाचाभिवदनमीश्वरस्यद्विजो
त्तमाः ॥ ४८ ॥ ततःपुनःशम्भुरूचेकथामात्माविधिर्म्मम ॥ लक्षतेभिन्नएवायम्प्रत्यक्षेणाग्रतःस्थितः ॥ ४९ ॥ अथप्रहस्य
भगवान्मुनीनाम्पुरतस्तदा ॥इदमूचेमहादेवन्तोषयन्गरुडध्वजः ॥ ५० ॥ श्रीभगवानुवाच ॥ नब्रह्माभवतोभिन्नोनशम्भु
र्ब्रह्मणस्तथा ॥ नचायय्युँवयोर्भिन्नोऽभिन्नत्वंसर्व्वदातनम् ॥ ५१ ॥ प्रधानस्याप्रधानस्यभागाभागस्वरूपिणः ॥ ज्योति
र्मयस्यभागोमेयुवामेकोहमंशकः ॥५२ ॥ कस्त्वङ्कोहञ्चकोब्रह्माममैवपरमात्मनः ॥ अंशत्रयमिदम्भिन्नंसृष्टिस्थित्यन्तकार
णम् ॥ ५३॥ चिन्तयस्वात्मनात्मानंसंस्तवङ्कुरुचात्मनि ॥ एकत्वम्ब्रह्मवैकुण्ठशम्भूनांह्यद्गतङ्कुरु ॥५४ ॥ शिरोग्रीवादिभेदेन
यथैकस्यैवधर्म्मिणः ॥ अङ्गानिमेतथैकस्यभागत्रयमिदंहर ॥ ५५ ॥ यज्ज्योतिरद्वयंस्वपरप्रकाशङ्कूटस्थमव्यक्तमनन्तरूप

१ पारि चयम् ।

म् ॥ नित्यञ्चदीर्घादिविशेषणाद्यैर्हीनम्परन्तच्चवयन्नभिन्ना॥५६॥ ॥ मार्कण्डेय उवाच ॥ ॥एतच्छ्रुत्वावचस्तस्यमहादेवोवि
मोहितः॥ जानन्सचाप्यभिन्नत्वन्सद्भिस्मृत्यान्यचिन्तनात् ॥५७॥ पुनःपप्रच्छगोविन्दमनन्यत्वन्त्रिभेदिनाम् ॥ ब्रह्मविष्णु
त्र्यम्बकानामेकस्यचविशेषकम् ॥ ५८॥ ततोनारायणःपृष्टःकथयामासशम्भवे ॥ अनन्यत्वन्त्रिदेवानामेकत्वञ्चव्यदर्शयत्
॥ ५९ ॥ श्रुत्वाततोविष्णुमुखाब्जकोशादनन्यताविष्णुविधीशतत्त्वे ॥ दृष्ट्वास्वरूपञ्चजघाननैनव्विँधिम्मृडःपुष्पमधूकराभ
म् ॥ ६० ॥ ॥इतिकालिकापुराणेएकादशोध्यायः ॥ ११ ॥ ॥छ॥ ॥छ॥ ऋषयऊचुः ॥ अनन्यत्वन्त्रिदेवाना
य्यँज्जगादजनार्दनः ॥ शम्भवेतद्वयंश्रोतुमिच्छामोद्विजसत्तम ॥१॥ एकत्वन्दर्शयामासकथँव्वागरुडध्वजः ॥ तत्समाचक्ष्व
विप्रेन्द्रपरङ्कौतूहलंहिनः ॥ २ ॥ ॥ मार्कण्डेय उवाच ॥ ॥शृणुध्वम्मुनयोगुह्यम्परमप्रयतम्परम् ॥ त्रिदेवानामनन्यत्वन्तथै
वैकत्वदर्शनम् ॥ ३ ॥ हरेणपृष्टोगोविन्दस्तंसमाभाष्यसादरम् ॥ इदमाहमुनिश्रेष्ठाअभिन्नप्रतिपादकम् ॥ ४ ॥ ॥श्रीभगवा
नुवाच ॥ ॥इदन्तमोमयंसर्व्वमासीद्भुवनवर्ज्जितम् ॥ अप्रज्ञातमलक्ष्यञ्चप्रसुप्तमिवसर्व्वतः ॥ ५ ॥ नदिवारात्रिभागोत्र
नाकाशन्नचकाश्यपी ॥ नज्योतिर्नजलंवायुर्न्नान्यत्किञ्चनसंस्थितम् ॥ ६ ॥ एकमासीत्परम्ब्रह्मसूक्ष्मन्नित्यमतीन्द्रियम् ॥अ
व्यक्तञ्ज्ञानरूपेणद्वैतहीनाविशेषणम् ॥ ७ ॥ प्रकृतिःपुरुषश्चैवनित्यौद्वौसर्व्वसंहितौ ॥ स्थितःकालोपिभूतेशजगत्कारणमे

ककम्॥८॥यदेकम्परत्पम्ब्रह्मतत्स्वरूपापरंहरः।रूपत्रयमिदन्नित्यन्तस्यैवजगतःपतेः॥९॥कालोनामापरंरूपमनाद्यन्तन्तुका
रणम् ॥ सर्व्वेषामेवभूतानामवच्छेदेनसङ्गतः॥१०॥ततस्तत्स्वप्रकाशेनभास्वद्रूपम्प्रकाशते॥पुरासृष्ट्यर्थमतुलंक्षोभयन्प्रकृ
तिंस्वयम्॥११॥सङ्क्षुब्धायान्तुप्रकृतौमहत्तत्त्वमजायत॥महत्तत्त्वात्ततःपश्चादहङ्कारस्त्रिधाभवत् १२॥अहङ्कारेतुसञ्जातेशब्द
तन्मात्रतस्ततः॥आकाशमसृजद्विष्णुरनन्तम्मूर्त्तिवर्ज्जितम्॥१३ ततस्तुरसतन्मात्रादपःसृष्ट्वामहेश्वरः॥निराधारःस्वयन्दध्रे
तास्तदानिजमायया॥१४॥ततस्त्रिगुणसाम्येनसंस्थिताम्प्रकृतिंप्रभुः॥पुनःसङ्क्षोभयामाससृष्ट्यर्थम्परमेश्वरः ॥ १५ ॥ततः
साप्रकृतिस्तासुबीजन्त्रिगुणभागवत् ॥अप्सुसंसर्ज्जयामासजगद्बीजन्निराकुलम्॥ १६ ॥ तद्बीजबृङ्क्रमेणैवहैममण्डमभून्म
हत् ॥ जग्राहापःसमस्तास्तागर्भएवतदण्डकम् ॥ १७ ॥ अप्सुस्थितासुहैमाण्डगर्भेविष्णुस्तदण्डकम्॥तथैवमाययादध्रे
ब्रह्माण्डमतुलम्पुनः ॥ १८ ॥ वारिणावह्निभिश्चैववायुभिर्न्नभसातथा॥बहिस्तदण्डकञ्छन्नंसर्व्वपार्श्वेसमन्ततः॥१९ ॥ सप्त
सागरमानेनतथानद्यादिमानतः ॥ ब्रह्माण्डाभ्यन्तरेतोयन्तदन्यत्तुबहिर्ग्गतम्॥२० ॥ तदन्तःस्वयमेवासौविष्णुर्ब्रह्मस्वरूप
धृक् ॥ दैवव्वर्षमुषित्वैवप्रविभेदतदण्डकम् ॥ २१॥ तस्मात्समभवन्मेरुरुत्पन्नोऽस्मिन्महेश्वरः॥जरायुःपर्व्वताजातासमुद्राः
सप्ततज्जलात् ॥ २२ ॥ तन्मध्येगन्धतन्मात्रात्पृथिवीसमजायत ॥ ईश्वरेणप्रकृत्याचयोजितात्रिगुणात्मिका ॥ २३ ॥ प्रागे

वपर्व्वतादिभ्यःसमुत्पन्नावसुन्धरा॥ ब्रह्माण्डखण्डसय्योंगाद्दृढाभूतातुसाभृशम्॥२४॥तस्यामेवस्थितोब्रह्मासर्व्वलोकगुरुः
स्वयम् ॥ यदाब्रह्माण्डमध्यस्थोब्रह्माव्यक्तोनचाभवत् ॥२५॥ तदैवरूपतन्मात्रात्तेजः सम्यगजायत ॥ वायुस्तुस्पर्शतन्मा
त्रात्प्रकृत्याविनियोजितात्॥२६॥बभूवसर्व्वभूतानाम्प्राणभूतःसमन्ततः॥अद्भिस्तेजोभिरतुलैर्व्वायुभिर्न्नभसातथा॥२७॥
अंतर्व्बहिस्तदण्डस्यव्याप्तमन्यत्तुगर्भगम्॥ततोब्रह्माशरीरन्तुत्रिधाचक्रेमहेश्वरः ॥ २८ ॥ प्रधानेच्छवशाच्छम्भोत्रिगुणन्त्रि
गुणीकृतम् ॥ तदूर्द्ध्वभागःसञ्जातश्चतुर्व्वक्त्रश्चतुर्भुजः॥२९॥पद्मकेशरगौराङ्गकायोब्राह्म्योमहेश्वरः॥तन्मध्यभागोनीलाङ्ग
एकवक्त्रश्चतुर्भुजः ॥ ३० ॥ शंखचक्रगदापद्मपाणिःकायःसवैष्णवः ॥ अभवत्तदधोभागःपञ्चवक्त्रश्चतुर्भुजः॥ ३१ ॥
स्फटिकाभ्रसमःशुक्लःसकायश्चन्द्रशेखरः ॥ इतस्ततोब्रह्मकायेसृष्टिशक्तिन्न्ययोजयत् ॥ ३२ ॥ स्वयमेवाभवत्स्रष्टाब्रह्म
रूपेणलोकभृत् ॥ स्थितिशक्तिन्निजाम्मायाम्प्रकृत्याख्यांन्ययोजयत् ॥ ३३ ॥ महेशोवैष्णवेकायेज्ञानशक्तिन्निजान्त
था ॥ स्थितिकर्त्ताभवद्विष्णुरहमेवमहेश्वरः ॥ ३४ ॥ शर्व्वशक्तिनियोगेनसदातद्रूपताामम ॥ अन्तशक्तिन्तथाकायेशा
म्भवेसन्ययोजयत् ॥ ३५ ॥ अन्तकर्त्ताभवच्छम्भुःसएवपरमेश्वरः॥ततस्त्रिषुशरीरेषुस्वयमेवप्रकाशते ॥३६॥ ज्ञानरूप
म्परज्ज्योतिरनादिर्भगवान्प्रभुः ॥ सृष्टिस्थित्यन्तकरणादेकएवमहेश्वरः ॥ ३७॥ ब्रह्माविष्णुःशिवश्चेतिसञ्ज्ञामापप्

क्पृथक् ॥ अतस्त्वञ्चविधाताचतथाहमपिनपृथक् ॥ ३८ ॥ एवंशरीरंरूपञ्चज्ञानमस्माकमन्तरम् ॥ मार्कण्डेयउवाच ॥
एतच्छ्रुत्वावचस्तस्यविष्णोरमिततेजसः ॥ ३९ ॥ हर्षोत्फुल्लमुखःप्रोचेपुनरेवजनार्दनम् ॥ ॥ईश्वरउवाच ॥ ॥ एक
एवमहेशश्चज्योतीरूपोनिरञ्जनः ॥ ४० ॥ कावामायाथकःकालःकावाप्रकृतिरुच्यते ॥ केपुमांसस्ततोभिन्नाभिन्नाश्चे
त्कथमेकता ॥ ४१ ॥ तन्मेवदस्वगोविन्दतत्प्रभावय्यथातथम् ॥ श्रीभगवानुवाच ॥ त्वमेवपश्यसिसदाध्यानस्थःपर
मेश्वरम् ॥ ४२ ॥ आत्मन्यात्मस्वरूपन्तज्ज्योतीरूपंसदक्षरम् ॥ मायाञ्चप्रकृतिङ्कालम्पुरुषञ्चस्वयंविभो ॥ ४३ ॥
ज्ञातात्वन्ध्यानयोगेनतस्माद्ध्यानपरोभव ॥ माययामोहितोयस्मादधुनात्वस्मदीयया ॥ ४४ ॥ ततोविस्मृत्यपरमञ्ज्यो
तिर्हिवनितारतः ॥ अधुनाकोपयुक्तस्त्वंविस्मृत्यात्मानमात्मनि ॥ ४५ ॥ माम्पृच्छसिप्रकृत्यादिरूपाणिप्रमथाधिप ॥
मार्कण्डेयउवाच ॥ ततस्तत्रमहादेवःश्रुत्वावाक्यंसुनिश्चितम् ॥ ४६ ॥ मुनीनाम्पश्यतांय्योगयुक्तोध्यानपरोभवत् ॥ आ
साद्यबन्धम्पर्य्यङ्कन्निमीलोचनः ॥ ४७ ॥ आत्मानञ्चिन्तयामासतदात्मनिमहेश्वरः ॥ परञ्चिन्तयतस्तस्यशरीरंविब
भौशुभम् ॥ ४८ ॥ तेजोभिरुज्ज्वलन्द्रष्टुन्नशेकुर्म्मुनयस्तदा ॥ तत्क्षणाद्ध्यानयुक्तश्चशम्भुःसविष्णुमायया ॥ ४९ ॥
परित्यक्तोतिविबभौतपस्तेजोभिरुज्ज्वलः ॥ येयेगणास्तदातस्थुःसेवयाशङ्करान्तिके ॥ ५० ॥ नतेपिवीक्षितुंशेकुःशङ्करंवा

१ लुङन्तम्।

दिवाकरम् ॥ स्वयमेवतदाविष्णुःसमाधिमनसोभृशम् ॥ ५१ ॥ प्रविवेशशरीरांतज्ज्योतीरूपेणधूर्ज्जटेः ॥ प्रविश्यतस्यज
ठरेयथासृष्टिक्रमःपुरा ॥ ५२ ॥ तथैवदर्शयामासस्वयन्नारायणोऽव्ययः ॥ नस्थूलन्नचसूक्ष्मञ्चनविशेषणगोचरम् ॥ ५३ ॥
नित्यानन्दन्निरातङ्कमेकंशुद्धमतीन्द्रियम् ॥ अदृश्यंसर्व्वद्रष्टारन्निर्ग्गुणम्परमम्पदम् ॥ ५४ ॥ परमात्मानमानन्दञ्जगत्का
रणकारणम् ॥ प्रथमन्ददृशेशम्भुरात्मानन्तत्स्वरूपिणम् ॥ ५५ ॥ तत्रप्रविष्टमनसाबहिर्ज्ञानविवर्ज्जितः ॥ तस्यैवरूप
म्प्रकृतिंसृष्ट्यर्थेभिन्नताङ्गताम् ॥ ५६ ॥ ददर्शतस्यैवाभ्यासेपृथग्भूतामिवैकिकाम् ॥ पुरुषाँश्चददर्शासौयथैववसतस्ततः ॥
॥ ५७ ॥ अग्नेरिवकणास्थूलादजस्रन्द्विजसत्तमाः ॥ तदेवकालरूपेणाभासतेचमुहुर्म्मुहुः ॥ ५८ ॥ सृष्टिस्थित्यन्तयोगा
नामवच्छेदनकारणम् ॥ प्रकृतिःपुरुषश्चैवकालोपिचमुहुर्म्मुहुः ॥ ५८ ॥ अभिन्नम्भाषमाणाँश्चसर्ग्गार्थेभिन्नताङ्गतान् ॥
पृथग्भूतामभिन्नाँश्चददृशेचेन्दुशेखरः ॥ ६० ॥ एकमेवाद्वयम्ब्रह्मनेहनानास्तिकिञ्चन ॥ सप्रधानस्वरूपेणकालरूपे
णभासते ॥ ६१ ॥ तथापुरुषरूपेणसंसारार्थम्प्रवर्त्तते ॥ भोगार्थम्प्राणिनांशश्वच्छरीरेचप्रवर्त्तते ॥ ६२ ॥ सैवमाया
याप्रकृतिःसामोहयतिशङ्करम् ॥ हरिन्तथाविरिञ्चिञ्चतथैवान्यजनुर्भवान् ॥ ६३ ॥ मायाख्याप्रकृतिर्ज्ज्ञाताजन्तून्समोह
यत्यति ॥ सास्त्रीरूपेणचसदालक्ष्मीभूताहरेःप्रिया ॥ ६४ ॥ सासावित्रीरतीसन्ध्यासासतीसैववीरिणी ॥ बुद्धिरूपास्व

यन्देवीचण्डिकेतिचगीयते ॥ ६५ ॥ इतिस्वयन्ददर्शाशुध्यानमार्ग्गंगतोहरः ॥ महदादिप्रभेदेनतथासृष्टिक्रमंस्वयम् ॥
॥ ६६ ॥ दर्शयित्वाहरिःकालम्प्रकृतिम्पुरुषाँस्तथा ॥ तथान्यद्दर्शयामासतच्छरावन्तुद्विजोत्तमाः ॥ ६७ ॥ ॥ इतिश्रीका०
द्वादशोध्यायः ॥ १२ ॥ ७॥ मार्कण्डेयउवाच॥ततोब्रह्माण्डसंस्थानन्दर्शयामासशम्भवे ॥ वद्र्धेतोयराशिस्थम्ब्रह्माण्डञ्चय
थापुरा॥ १ ॥तन्मध्येपद्मगर्भाभम्ब्रह्माणञ्चजगत्पतिम्॥ज्योतीरूपम्प्रकाशार्थंसृष्ट्यर्थञ्चपृथग्गतम् ॥२॥शरीरिणञ्चददर्श
ब्रह्माण्डान्तर्ग्गतम्मुहुः ॥ चतुर्भुजम्प्रकाशन्तज्ज्योतिर्भिः कमलासनम् ॥ ३ ॥ तत्रैवचत्रिधाभूतव्वँपुर्ब्राह्मयन्ददर्शसः ॥
ऊर्ध्वमध्यान्तभागैश्चब्रह्मविष्णुशिवात्मकम् ॥ ४ ॥ यथोर्द्ध्वभागोवपुषोब्रह्मत्वमगमत्तदा ॥ मध्यँय्यथाविष्णुभूतन्ददर्शान्त
स्यशम्भुताम् ॥५॥ एकमेवशरीरन्तुत्रिधाभूतम्मुहुर्म्मुहुः ॥ हरोददर्शस्वेगर्भेतथासर्व्वमिदञ्जगत्॥६॥ कदाचिद्वैष्णवङ्काय
म्ब्राह्मेकायेलयव्व्रँजेत् ॥ब्राह्मन्तथावैष्णवेचशाम्भवेवैष्णवन्तथा॥७॥शाम्भवंवैष्णवेकायेब्राह्मयव्वाँद्याप्यथशाम्भवे॥गच्छ
न्तल्लीनतांशम्भुरेकताञ्चमुहुर्म्मुहुः ॥ ८ ॥ ददर्शवामदेवोपिभिन्नञ्चाप्यपृथग्गतम् ॥ परमात्मनिगच्छन्तल्लीनतान्तद्वपुः
स्वयम् ॥ ९ ॥ तन्मध्येपृथिवींशम्भुर्द्ददर्शविततांजले ॥ महापर्व्वतसङ्घातैर्व्विरलंस्थगितान्नतः ॥१०॥ पुनर्द्ददर्शब्रह्माणङ्कुर्व्व
न्तंसर्ग्गमादितः ॥ आत्मानञ्चपृथग्भूतव्विँष्णुञ्चगरुडासनम् ॥ ११ ॥ दक्षम्प्रजापतिन्तत्रतथैवचनिजान्गणान् ॥

मरीच्यादीन्दशतथावीरिणीञ्चतथासतीम् ॥ १२ ॥ सध्यांरतीञ्चकन्दर्प्पंशृंगारंसवसन्तकम् ॥ हावान्भावाँस्तथामारान्नृषीन्दे
वान्मद्गरुद्गणान्॥ १३॥मेघाँश्चचन्द्रंसूर्य्यञ्चवृक्षान्वल्लीस्तृणानिच ॥ सिद्धान्विद्याधरान्यँक्षान्राक्षसान्किन्नराँस्तथा॥ १४॥मा
नुषाँश्चभुजङ्गाँश्चग्राहान्मत्स्याँश्चकच्छपान् ॥ उल्कानिर्घातकेतूँश्चकृमिकीटपतङ्गकान् ॥ १५ ॥ काश्चिद्ददर्शवनितान्द्वन्द्वभा
वम्प्रकुर्व्वतीं ॥ उत्पन्नमुत्पद्यन्तञ्चविपद्यन्तञ्चकञ्चन॥ १६॥हसतोरमतःकाँश्चित्काँश्चिद्विलपतस्तथा॥धावतश्चापराश्छम्भुर्द्द
दर्शपरमेश्वरः ॥१७॥ दिव्यालङ्कारसञ्छन्नामालाचन्दनचर्च्चिताः ॥ वीक्षाञ्चचक्रिरेकेचिछम्भुनाक्रीडितामुहुः ॥ १८ ॥ स्तुव
न्तःप्रस्तुवन्तश्चशम्भुर्व्विष्णुन्तथाविधिम् ॥ केचिद्ददृशिरेतेनमुनयश्चतपोधनाः ॥ १९ ॥ तपांसिचेरतः केचिन्नदीतीरेतपोव
ने॥ स्वाध्यायवेदनिरताः पाठयन्तश्चकेचन॥२०॥तथैवसागराःसप्तनद्योदेवसरांसिच ॥ तथैवपर्व्वतस्थोसौददृशेशम्भुना
स्वयम्॥२१॥मायालक्ष्मीस्वरूपेणहरिंसम्मोहयत्परम्॥सतीरूपातथात्मानम्मोहयन्तीतिशङ्करः॥२२ ॥सत्यासार्द्धंस्वयंरे
मेकैलासेमेरुपर्व्वते ॥मन्दरेदेवविपिनेशृङ्गाररससेविते ॥२३॥ सतीदेहन्तथात्यक्त्वाजाताहिमवतःसुता॥यथाप्रापपुनस्तान्तु
यथाचैवान्धकोहतः ॥ २४ ॥ कार्त्तिकेयःसमुत्पन्नोयथाहँस्तारकाद्वयम् ॥ तत्सर्व्वव्विँस्तरात्सम्यग्ददर्शवृषभध्वजः ॥
॥ २५ ॥ हिरण्यकशिपुर्ज्जघ्नेनरसिंहस्वरूपिणा ॥ यथाहतःकालनेमिर्हिरण्याक्षोयथाहतः ॥ २६ ॥ विष्णुनायाद्दशय्यँु

१ वीक्षणं वीक्षा गुराश्चहलइत्यप्रत्ययः ॥ २ आगमशास्त्रीनित्यत्वान्नुम् ॥

द्दन्दानवौघैः पुराकृतम् ॥ यथायेयेचनिहतास्तत्सर्व्वन्दृष्टवान्हरः ॥ २८ ॥ जगत्प्रपञ्चान्ब्रह्मादीन्नक्षत्रग्रहमानुषान् ॥ सि
द्धविद्याधरादींश्चदृष्ट्वादृष्ट्वापृथक्पृथक् ॥ २९ ॥ आत्मानन्तान्संहरन्तन्ददर्शशम्भुरीश्वरः ॥ संहारान्तेददर्शासौब्रह्मविष्णु
महेश्वरान् ॥ ३० ॥ शून्यंसमभवत्सर्व्वञ्जगदेतच्चराचरम् ॥ शून्येजगतिसर्व्वस्मिन्ब्रह्माविष्णुशरीरगः ॥ ३१ ॥ ली
नःशम्भुश्चतस्यैवशरीरम्प्रविवेशह ॥ एकमेवददर्शासौविष्णुमव्यक्तरूपिणम् ॥ ३२ ॥ नान्यत्किञ्चिद्ददर्शासौतदावि
ष्णुमृतेहरः ॥ अथविष्णुञ्चददर्शलयन्तम्परमात्मनि ॥ ३३ ॥ भासमानम्परन्तत्त्वेज्योतीरूपेसनातने ॥ ततोज्ञान
मयन्नित्यमानन्दम्ब्रह्मणःपरम् ॥ ३४ ॥ केवलञ्ज्ञानगम्यञ्चददर्शान्यन्नकिञ्चन ॥ एकत्वञ्चपृथक्त्वञ्चजगतःपरमात्मने ॥
ददर्शस्वशरीरान्तःसर्गस्थित्यन्तसंयमान् ॥ ३५ ॥ प्रकाशम्परमात्मानंशान्तन्नित्यमतीन्द्रियम् ॥ एकमेवाद्वयम्ब्रह्म
ददर्शान्यन्नकिञ्चन ॥ ३६ ॥ कोवाविष्णुर्हरःकोवाकोब्रह्माकिमिदञ्जगत् ॥ इतिभेदोनजगृहेशम्भुनापरमात्मना ॥ ३७ ॥
एवंसम्पश्यतस्तस्यशरीराभ्यन्तराद्बहिः ॥ निःससाराथमायापिप्रविवेशवृषध्वजम् ॥ ३८ ॥ अनन्यत्वम्पृथक्त्वञ्चदर्श
यित्वाजनार्द्दनः ॥ शम्भवेतच्छरीरात्तुबहिर्भूतस्ततोद्रुतम् ॥ ३९ ॥ अथत्यक्तसमाधेस्तुहरस्यचलितात्मनः ॥ सतीम्मनोज
गामाशुमोहितस्यचमायया ॥ ४० ॥ ततोमुहुर्हरोवक्रन्दाक्षायण्यामनोहरम् ॥ प्रबुद्धकमलाकारव्वीक्षाञ्चक्रेद्विजोत्तमाः ॥ ४१ ॥

ततोदक्षमरीच्यादीन्स्वगणान्कमलासनम्॥विष्णुञ्चतत्रसर्व्वाँक्ष्यशङ्करोविस्मितोभवत्॥४२॥अथतव्विँस्मयाविष्टम्महा
देवव्वृँषध्वजम् ॥ स्मितम्प्रफुल्लवदनंहरमाहजनार्द्दनः॥ ४३ ॥ श्रीभगवानुवाच ॥ ॥यद्यत्पृष्टन्त्वयैकत्वेभिन्नतायाञ्च
शङ्कर ॥ त्रयाणामथदेवानान्तज्ज्ञातमधुनात्वया ॥ ४४ ॥ प्रकृतिःपुरुषश्चैवकालोमायानिजान्तरे ॥ त्वयाज्ञातामहादे
वकीदृशास्तेचकेपुनः ॥ ४५ ॥ एकम्ब्रह्मसदाशान्तन्नित्यञ्चपरमम्महत् ॥ तत्कथम्भिन्नतांजातन्दृष्टन्तत्कीदृशन्त्वया
॥ ४६ ॥ मार्क्कण्डेयउवाच ॥ इतिपृष्टोभगवताभगवान्वृषभध्वजः ॥ जगादहरयेतथ्यमेतद्वाक्यन्द्विजोत्तमाः ॥ ४७ ॥
॥ईश्वरउवाच ॥ एकंशिवंशान्तमनन्तमच्युतम्ब्रह्मास्तितस्मान्नहिकिञ्चिदीदृशम्॥ तस्मादभिन्नंसकलञ्जगद्धरेःकालादिरू
पाणिचसृष्टिहेतुः ॥ ४८ ॥ समस्तभूतप्रभवन्निरञ्जनव्व्ँयञ्चतस्यैवसदांशरूपिणः ॥ सृष्टिंस्थितिंसय्यँमनन्तदीरितंरूप
त्रयन्तस्यविभातिभेदतः ॥ ४९ ॥नाहन्नचत्वन्नहिरण्यगर्भोनकालरूपम्प्रकृतिन्नचान्यम् ॥ तत्प्रेरणाङ्कर्त्तुमलञ्चकिञ्चिद्वि
नापिरूपंसदपीहतस्य ॥ ५० ॥ श्रीभगवानुवाच ॥ ॥ इतितत्त्वन्त्वयाप्रोक्तञ्ज्ञानञ्चवृषभध्वज ॥ तदंशभूतास्तुवय
म्ब्रह्माविष्णुपिनाकिनः ॥ ५१ ॥ तस्मात्त्वयानवध्योयव्विँरिञ्चिस्तवचेद्भवेत् ॥ एकताविदिताशम्भोब्रह्मविष्णुपिनाकिना
म् ॥ ५२ ॥ मार्क्कण्डेयउवाच ॥ ॥ इतितस्यवचःश्रुत्वाविष्णोरमिततेजसः ॥ नजघानमहादेवोविधिन्दृष्ट्वाथचैकता

म् ॥ ५३ ॥ इतिवःकथितव्विँष्णुर्य्यथानन्यत्वमादिशत् ॥ शम्भवेप्रस्तुतन्तद्वःकथयामिपुनर्द्विजाः ॥ ५४ ॥ इतिकालिकापुराणेत्रयोदशोध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ मार्कण्डेयउवाच ॥ जलदेष्वथगर्जत्सुमहादेवःसतोपतिः ॥ विसृज्य विष्णुप्रभृतीञ्जगामहिमवद्गिरिम् ॥ १ ॥ आरोप्यवृषभेतुङ्गेसतीमामोदशालिनीम् ॥ जगामहिमवत्प्रस्थंरम्यकुञ्जसमन्वितम् ॥ २ ॥ अथसाशङ्करांभ्यासेसुदतीचारुहासिनी ॥ विरेजेवृषभस्थातिचन्द्रान्तेकालिकोपमा ॥ ३ ॥ ब्रह्मादयश्चतेसर्व्वेमरीच्याद्याश्चमानसाः ॥ दक्षोपिसर्व्वेमुदिताअभवन्त्ससुरासुराः ॥ ४ ॥ केचिच्छङ्खान्वादयन्तःकेचित्तालस्वनङ्गणाः ॥ केचिद्धास्यम्प्रकुर्व्वन्तोअनुजग्मुर्व्वृषध्वजम् ॥ ५ ॥ विसृष्टाअपिब्रह्माद्याःशम्भुनापुनरेवते ॥ अनुजग्मुःकियद्दूरम्मुदापरमयायुताः ॥ ६ ॥ ततःशम्भुंसमाभाष्यब्रह्माद्यामानसाश्चते ॥ स्वंस्वंस्थानन्तदाजग्मुःस्यन्दनैराशुगामिभिः ॥ ७ ॥ देवाश्चसर्व्वेसिद्धाश्चतथैवाप्सरसाङ्गणाः ॥ यक्षाविद्याधराद्याश्चयेयेतत्रसमागताः ॥ ८ ॥ तेहरेणविसृष्टास्तुगतवन्तोनिजास्पदम् ॥ बभूवुरामोदयुताःकृतदारेवृषध्वजे ॥ ९ ॥ ततोहरःसस्वगणःस्वंस्थानम्प्राप्यमोदनम् ॥ कैलासन्तत्रवृषभादवतारयतिप्रियम् ॥ १० ॥ ततोविरूपाक्षइमाम्प्राप्यदाक्षायणीङ्गणान् ॥ स्वीयान्विसर्ज्जयामासनन्द्यादीन्गिरिकन्दरात् ॥ ११ ॥ उवाच शम्भुस्तान्सर्व्वान्नन्द्यादीनतिसूनृतम् ॥ यदाहव्वःस्मराम्यत्रस्मरणाच्चलमानसाः ॥ १२ ॥ समागमिष्यथतदामत्पा

र्वम्भोस्तदातदा ॥ इत्युक्तेवामदेवेनतेनन्दिभैरवादयः ॥ १३ ॥ महाकोषीप्रपातायजग्मुस्तुहिमवद्गिरौ ॥ ईश्वरोपितया
सार्द्धन्तेषुयातेषुमोहितः ॥ १४ ॥ दाक्षायण्याचिररेमेरहस्यनुदिनम्भृशम् ॥ कदाचिद्वन्यपुष्याणिसमाहृत्यमनोहराम् ॥
१५ ॥ मालांव्विधायसत्यास्तुशिरःस्थानेन्ययोजयत् ॥ कदाचिद्दर्प्पणेवक्त्रंव्वीक्षन्तीमात्मनःसतीम् ॥ १६ ॥ अनुगम्यहरो
वक्त्रंस्वीयमप्यवलोकयत् ॥ कदाचित्कुन्तलानस्याउल्लास्योल्लासमागतः ॥ १७॥ बध्नातिमोचयत्येवंशश्वत्संमार्ज्जयत्य
पि ॥ सरागौचरणावस्यायावकेनोज्ज्वलेनच ॥ १८ ॥ निसर्ग्गरक्तौकुरुतेपुरारागाद्वृषध्वजः ॥ उच्चैरपियदाख्येयमन्येषा
म्पुरतोमुहुः ॥ १९ ॥ तत्कर्ण्णेकथयत्यस्याहरोद्रष्टुन्तदाननम् ॥ नदूरमपिगत्वासौसमागम्यप्रयत्नतः ॥ २० ॥ अनुबध्ना
तितामक्ष्णिपृष्ठदेशेऽन्यमानसाम् ॥ अन्तर्हितस्तुतत्रैवमाययावृषभध्वजः ॥ २१ ॥ तामालिलिङ्गभीत्यासाचकिताव्याकु
लाभवत् ॥ सौवर्ण्णपद्मकलिकातुल्येतस्याःकुचद्वये ॥ २२ ॥ चकारभ्रमराकारम्मृगनाभिविशेषकम् ॥ हरमस्याःकुचयुगा
द्वियोज्यसहसाहरः ॥ २३ ॥ नियोजयतितत्रैवसकरस्पर्शनम्मुहुः ॥ अङ्गदान्वलयान्वंर्म्मोर्व्विश्लेष्यचपुनःपुनः ॥ २४ ॥ त
त्स्थानात्पुनरेवासौतस्थानेप्रयुयोजच ॥ कालिकेयंसमायातिसवर्ण्णातेसखीतिताम् ॥ २५॥पश्येत्यस्यास्तथेच्छन्त्याःप्रोक्ता
जग्राहतत्कुचौ॥कदाचिन्मदनोन्मादचेतनःप्रमथाधिपः ॥ २६ ॥ चकारनर्म्मकर्म्माणितयाहृत्प्रियया मुदा ॥ आहृत्यपद्मपुष्पा

१ कञ्चुकी॥

णिवन्यपुष्पाणिशङ्करः ॥ २७ ॥ पुष्पाभरणसर्व्वाङ्गीकुरुतेस्मकदाचन ॥ गिरिकुञ्जेषुरम्येषुतयासहसतीपतिः ॥ २८ ॥ विजहारसमस्तेषुवनेषुमुदितोहरः ॥ नयानेनोपवेशेचनास्थितौनापिचेष्टिते ॥ २९ ॥ तयाविनाक्षणमपिशर्म्मलेभेवृषध्वजः ॥ विहृत्यसुचिरङ्कालङ्कैलासगिरिकन्दरे ॥ ३० ॥ महाकोषोप्रपातायजगामहिमवद्गिरौ ॥ तस्मिन्प्रविष्टेहिमवत्पर्व्वतेवृषभध्वजे ॥ ३१ ॥ कामोपिसहामित्रेणरत्याचप्रजगामह ॥ तस्मिन्प्रविष्टेकामेतुवसन्तः शङ्करान्तिके ॥ ३२ ॥ विततानिजाःश्रीश्चवृक्षेतोयेतथाभुवि ॥ सर्व्वेसुपुष्पितावृक्षालताश्चान्याःसुपुष्पिताः ॥ ३३ ॥ अम्भांसिफुल्लपद्मानिपद्मेषुभ्रमरास्तथा ॥ प्रविष्टेतत्रसुरभौप्रववुर्म्मलयानिलाः ॥ ३४ ॥ सुगन्धिपुष्पगन्धेनमोहिताश्चसुरन्ध्रयः ॥ मुनीनामपिचेतांसिप्रमथ्यसुरभिस्तदा ॥ ३५ ॥ स्मरःसारंसमुद्धृतक्रौंचादाज्यवल्कती ॥ सन्ध्यार्द्धचन्द्रसङ्काशाः पलाशाश्चविरेजिरे ॥ ३६ ॥ कामास्त्रवत्सुमनसःप्रमोदायाभवत्सदा ॥ बभुःपङ्कजपुष्पाणिसरःसुसकलाञ्जनान् ॥ ३७ ॥ सम्मोहयितुमुद्युक्तासुमुखीदाम्बुदेवता ॥ नागकेशरवृक्षाश्चस्वर्णवर्णप्रसूनकैः ॥ ३८ ॥ बभुर्म्मदनकेत्वाभामनोज्ञाःशङ्करान्तिके ॥ चम्पकास्तरवोहैमपुष्पत्वम्प्रकटम्मुहुः ॥ ३९ ॥ कुर्व्वन्तःप्रचुरैःपुष्पैःसम्यग्रेजुस्तथास्फुटैः ॥ प्रफुल्लपाटलापुष्पैर्दिशःस्युःपाटलांशवः ॥ ४० ॥ यथातथापुष्पितास्तेपाटलाख्यामहीरुहाः ॥ लवङ्गवल्लीसुरभिर्गन्धेनोद्वास्यमारुतम् ॥ ४१ ॥ सम्मोहयतिचेतांसिभृशङ्का

१ देवस्य।

मिजनेपुरा ॥ वासन्तीवासितास्तत्रबल्वजाःकिलरेजिरे ॥ ४२ ॥ तद्गन्धलुब्धभ्रमरारातिमिश्रामनोहराः ॥ चारुपाव
कवर्च्चस्विशिखराश्चूतशाखिनः ॥ ४४ ॥ बभुर्म्मदनबाणौघपर्य्यङ्कवदनावृताः ॥अम्भांसिमलहीनानिरेजुःफुल्लकुशेशयैः॥
४५ ॥ मुनीनामिवचेतांसिप्रव्यक्तज्योतिरुद्गमात् ॥ तुषाराःसूर्य्यरश्मीनांसङ्गमादगमन्क्षयम् ॥ ४६ ॥ ममत्वानीवविज्ञान
शालीनांहृदयात्तदा ॥ निःशङ्काःकोकिलाः शब्दन्तन्वतेस्मतदान्वहम् ॥ ४७ ॥ प्राणिव्यधनपुष्पेषुपुष्पज्याशब्दवद्भृशम्॥
चुकूजुर्भ्रमरास्तत्रवनान्तर्गतपुष्पगाः ॥ ४८ ॥ कान्तालोलाबुभुक्षोस्तुस्मरव्याघ्रस्यशब्दवत् ॥ चन्द्रस्तुषारवद्भानुर्न्नचैताः
सकलाकलाः ॥ ४९ ॥ क्रमाद्बभारमोहायजनानाङ्कुशलम्भुवि ॥ प्रसन्नाःसहचन्द्रेणनिस्तुषारास्तदाभवत् ॥ ५० ॥ विभा
वर्य्यः प्रियेणेवकामिन्यःसुमनोहराः ॥ तस्मिन्कालेमहादेवःसहसत्याधरोत्तमे ॥५१ ॥ रेमेससुचिरञ्छन्नोनिकुञ्जेसनदीषुच
॥ सापितेनसमंरेमेतथादाक्षायणीशुभा ॥ ५३ ॥ यथाहरःक्षणमपिशान्तिन्नापतयाविना ॥ सम्भोगविषयेदेवीसतीतस्य
मनःप्रिया ॥ ५४ ॥ विशतीवहरस्याङ्गेपाययन्तीवतद्रसम् ॥ तस्याःकुसुममालाभिर्भूषयन्त्सकलातनुम् ॥ ५४ ॥ स्वहस्त
रचिताभिश्श्ववरन्नर्म्मचकारसः ॥ आलापैर्व्वीक्षणैर्हासैस्तथासम्भाषणैर्हरः ॥ ५५ ॥ तस्याव्विंवेशगिरिशःसर्य्यमीवात्म
सव्विंदिम् ॥ तद्वक्त्रचन्द्रपीयूषपानस्थिरतनुर्हरः ॥ ५६ ॥ नावापशैर्षिकीन्तन्वीमवस्थांसकदाचन ॥ तद्वक्त्राम्बुजवासेतन

१ तुषारवद्भानुः तुषारयुक्त किरणश्चन्द्रः एताः सकलाः कलाः क्रमेण नबभार किंतु एकदैव बभारेत्यर्थः अर्थात्सर्वासुतिथिषु पूर्ण एव चन्द्र उदितवानितियावत् ।

त्सौन्दर्य्यैश्चनर्म्मभिः ॥ ५७ ॥ गुणैरिवमहादन्तीबद्धोनान्यद्विचेष्टते ॥ इतिहिमगिरिकुञ्जेप्रस्थभागेदरीषुप्रतिदिनम
भिरेमेदक्षपुत्र्यामहेशः॥ क्रतुभुजपरिमाणैःक्रीडतस्तस्यजातानवदशचमुनीन्द्रावत्सराः पञ्चचान्ये ॥५८॥ इतिकालिकपुरा
णे चतुर्द्दशोध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ कदाचिदथदक्षस्यतनयाजलदागमे॥ जगादार्द्रैः शि
खरिणःप्रस्थस्थंवृषभध्वजम् ॥ १ ॥ ॥ सत्युवाच ॥ ॥ घनागमोयंसम्प्राप्तः कालःपरमदुःसहः॥ अनेकवर्णमेघौघस्थ
गिताम्बरदिक्क्रयः ॥ २ ॥ विवातिवाताहृदयन्दारयन्तोतिवेगिनः॥ कदम्बरजसाधौतपाथोलेशविकार्षिणः॥ ३ ॥ मेघानाङ्ग
र्ज्जितैरुच्चैर्द्धारासारव्विमुञ्चताम् ॥ विद्युत्पताकिनान्तीव्रैः क्षुब्धङ्कस्यनमानसम् ॥ ४ ॥ नसूर्य्योदृश्यतेनापिमेघच्छन्नो
निशापतिः ॥ दिवापिरात्रिवद्भातिविरहिव्यत्ययाकरम् ॥ मेघानैकत्रतिष्ठन्तोध्वनन्तःपवनेरिताः ॥ पतन्तइवलोकानान्दृ
श्यन्तेमूर्द्ध्निशङ्कर ॥ ६ ॥ वाताहतामहावृक्षानृत्यन्तइवचाम्बरे ॥ दृश्यन्तेहरभीरूणान्त्रासकाःकामुकेप्सिताः ॥ ७ ॥
स्निग्धनीलाञ्जनश्याममुदिरौघस्यपृष्ठतः ॥ बलाकराजीभात्युच्चैर्य्यमुनाघुष्टफेनवत् ॥ ८ ॥ क्षणङ्क्षणञ्चञ्चलेयन्दृश्यते
कालिकागता ॥ अम्बुधाविवसन्दीप्तःपावकोवडवामुखः॥९॥ प्ररोहन्तिहिशस्यानिमन्दिरप्राङ्गणेष्वपि॥ किमन्यत्रविरूपा
क्षशस्योद्गतिव्वँदाम्यहम् ॥ १० ॥ श्यामलैराजतैःकक्षैर्व्विशदोयंहिमाचलः॥ मन्दराश्रयवृक्षौघपत्रैर्दुग्धाम्बुधिर्य्यथा ॥ ११ ॥

कुसुमश्रीश्चकुटजंम्भेजेसास्याथकिंशुकान् ॥ उच्चावचान्कलौलक्ष्मीर्य्यथासन्त्यज्यसज्जनान् ॥ १२ ॥ मयूराःस्तनयि
त्नूनांशब्देनहर्षितामुहुः ॥ केकायन्तेप्रतिवनेसततंवृष्टिसूचकाः ॥ १३॥ मेघोन्मुखानाम्मधुरश्चातकानांस्वनोहर ॥ श्रूयतां
मतिमत्तानांवृष्टिसन्निधिसूचकः ॥ १४॥ गगनेशक्रचापेनकृतंसाम्प्रतमास्पदम् ॥ धारासारशरैस्तापम्भेत्तुम्प्रातियथोद्गतः
॥ १५॥ मेघानाम्पश्यभर्ग्गौहृद्दुन्नयङ्करकोत्करैः ॥ यत्ताडयन्त्यनुगतम्मयूरञ्चातकन्तथा ॥१६॥ शिखिसारङ्गयोर्दृष्ट्वामित्राद
पिपराभवम् ॥हंसागच्छन्तिगिरिशविदूरमपिमानसम्॥ १७॥एतस्मिन्विषमेकालेनीडङ्काकाश्चकोरकाः॥कुर्व्वन्तित्वव्विंना
गेहात्कथंशान्तिमवाप्स्यसि॥ १८॥ महतीबाधतेभीतिर्म्मांम्मेघोत्थापिनाकधृक् ॥ यतस्वतस्माद्वासायमाचिरव्वँचनान्मम
॥१९॥ कैलाशेवाहिमाद्रौवामहाकोष्यामथक्षितौ ॥ तवोपयोग्यन्त्वंव्वाँसङ्कुरुष्ववृषभध्वज॥२०॥एवमुक्तस्तदाशम्भुर्दाक्षा
यण्यातयासकृत् ॥ ईषज्जहासशीर्षस्थचन्द्ररश्मिसितानन: ॥ २१ ॥ अथोवाचसतीन्देवींस्मितभिन्नोष्ठसम्पुटः ॥ महात्मास
र्व्वतत्त्वज्ञस्तोषयन्परमेश्वरीम्॥२२॥ ईश्वरउवाच ॥यत्रप्रित्यैमयाकार्य्योवासस्तवमनोहरे॥ मेघास्तत्रनगन्तारःकदाचि
दपिमत्प्रिये ॥२३॥ मेघानितम्बपर्य्यन्तंसञ्चरन्तिमहीभृतः॥सदाप्रालेयधाम्नस्तुवर्षास्वपिमनोहरे ॥२३॥ कैलाशस्यतथा
देवीयावदामेखलङ्गनाः॥ सञ्चरन्तिनगच्छन्तितस्मादूर्द्ध्वङ्कदाचन ॥२४॥ सुमेरोर्य्यारुधेरूर्द्ध्वन्नगच्छन्तिबलाहकाः ॥ जम्बूमूलं

समासाद्यपुष्करावर्त्तकादयः ॥२५॥ एतेषुचगिरीन्द्रेषुयस्योपरितवेहते ॥ मनःप्रियेनिवासायतमाचक्ष्वद्रुतम्मयि ॥ २६ ॥
स्वेच्छाविहारैस्तवकौतुकानिसुवर्ण्णपक्षानिलवृन्दवृन्दैः॥सकुन्तवर्गैर्म्मधुरस्वनैस्तेसदोपदेयानिगिरौहिमोत्थे॥२७॥ सि
द्धाङ्गनास्तेसखितासनातनीमिच्छन्त्यएवोपकृतिंसकौतुकाम् ॥स्वेच्छाविहारैर्म्मणिकुट्टिमेगिरौकुर्व्वन्त्यएष्यन्तिफलादिदान
कैः॥ २८॥यादेवकन्यागिरिकन्यकाश्चयानागकन्याश्चतुरङ्गमुख्यः ॥ सर्व्वास्तुतास्तेसततंसहायतांसमाचरिष्यन्त्यनुमोद
विभ्रमैः ॥२९ ॥ रूपन्तवेदमतुलव्वँदनंसुचारुदृष्ट्वाङ्गनानिजवपुर्न्निजकान्तिसङ्गम् ॥ हेलान्निजवपुषिरूपगणेषुनित्यङ्कर्त्तारिङ्
त्यनिमिषेक्षणचारुरूपाः॥ ३०॥ यामेनकापर्व्वतराजजायारूपैर्ग्गणैः ख्यातवतीत्रिलोके ॥ साचापितेतत्रमनोनुमोदान्नित्य
ङ्करिष्यत्यथसूचनाद्यैः ॥३१ ॥पुरन्ध्रवर्ग्गैर्ग्गिरिराजवन्द्यैः प्रीतिव्वितन्वद्भिरुदाररूपाम् ॥ शिक्षासदातेस्वकुलोचितापिका
र्य्यान्वहम्प्रीतियुतागुणौघैः॥३२॥विचित्रकोकिलालापमोदकुञ्जगणावृतम्॥सदावसन्तप्रभवङ्गन्तुमिच्छसिकिम्प्रिये॥३३
नानास्वच्छजलापूर्ण्णसरःशतसमावृतम्॥ पद्मिनीशतसय्युँक्तमचलेन्द्रंहिमालयम्॥३४॥ सर्व्वकामप्रदैर्व्वृक्षैशाद्वलैःकल्प
सञ्ज्ञकैः॥सञ्छन्नय्यँस्यकुसुमान्युपयोक्ष्यसितत्रवै॥३५॥ प्रशान्तश्वापदगणम्मुनिभिर्य्यतिभिर्व्वृतम् ॥ देवालयम्महा
भागेनानामृगगणैर्व्वृतम्॥३६॥स्फटिकस्वर्ण्णवप्राद्यैराजतैश्चविराजितम्॥ मानसादिसरोवर्ग्गैरभितःपरिशोभितम् ॥३७



१ वृन्तैरितिवापाठः।

हिरण्मयैरत्ननालैःपङ्कजैर्म्मुकुलैर्व्वृतम्॥शिशुमारैस्तथाशङ्खैःकच्छपैर्म्मकरैर्झषैः॥ ३८ निषेवितैर्म्मञ्जुलैश्चतथानीलोत्पला
दिभिः॥देवीशतस्नानशक्तसर्व्वगन्धैश्चकुङ्कुमैः॥ ३९ ॥विचित्रस्त्रग्गन्धजलैरापूर्णैःस्वच्छकान्तिभिः॥ शाद्वलैस्तरुभिस्तुङ्गै
स्तीरस्थैरुपशोभितैः॥ ४० ॥नृत्यद्भिरिवशाखौघैर्व्यञ्जयन्तंस्वसम्भवम्॥कादम्बैःसारसैर्म्मत्तचक्राङ्गग्रामशोभितैः॥ ४१ ॥
मधुराराविभिर्म्मोदकारिभिर्भ्रमरादिभिः॥वासवस्यकुबेरस्ययमस्यवरुणस्यच ॥ ४२ ॥ अग्नेःकौणपराजस्यमारुतस्यहर
स्यच॥ पुरीभिःशोभिशिखरम्मेरुमुच्चैःसुरालयम्॥ ४३ ॥रम्भाशचीमेनकादिरम्भोरुगणसेवितम्॥ किन्त्वमिच्छसिसर्व्वेषां
सारभूतम्महागिरिम् ॥ ४४ ॥ तवदेवीशतयुतासाप्सरोगणसेविता॥ नित्यञ्चरिष्यतिशचीतवयोग्यांसहायताम्॥ ४५॥
अथवाममकैलासमचलेन्द्रंसदाश्रयम्॥ स्थानमिच्छसिवित्तेशपुरीपरिविराजितम्॥ ४६ ॥ गङ्गाजलौघत्रयतम्पूर्णचन्द्रस
मप्रभम् ॥ दरीषुसानुषुसदायक्षकन्याभिरीहितम् ॥ ४७ ॥ नानामृगगणैर्ज्जुष्टम्पद्माकरशतावृतम्॥ सर्व्वैर्ग्गुणैश्चसह
शंसुमेरोरिवसुन्दरि ॥ ४८ ॥ स्थानेष्वेतेषुयत्रास्तितवान्तःकरणास्पृहा॥ तद्द्रुतम्मेसमाचक्ष्ववासङ्कर्त्तास्मितत्रते॥ ४९ ॥
॥ मार्क्कण्डेयउवाच ॥ इतीरितेशङ्करेणतदादाक्षायणीशनैः॥ इदमाहमहादेवंश्लक्ष्णंस्वेच्छाप्रकाशनम्॥ ५० ॥ सत्युवा
च ॥ हिमाद्रावेववसतिमहमिच्छेत्वयासह॥ नचिरात्कुरुवासन्त्वन्तस्मिन्नेवमहागिरौ॥ ५१ ॥ मार्क्कण्डेयउवाच ॥ अ

थतद्वाक्यमाकर्ण्यंहरःपरममोदितः ॥ हिमाद्रिशिखरन्तुङ्गन्दाक्षायण्यासमर्य्ययौ ॥ ५२ ॥ सिद्धाङ्गनागणायुक्तमगम्यम्मेघ
पक्षिभिः ॥ जगामशिखरन्तुङ्गम्मरीचवनराजितम् ॥ ५३ ॥ इतिकालिकापुराणेपञ्चदशोध्यायः ॥ १५ ॥ छ ॥
॥ मार्कण्डेयउवाच ॥ विचित्रकनकैरूप्यैःशिखरंरत्नकर्बुरम् । बालार्कसदृशन्तुङ्गमाससादसतीसखः ॥ १ ॥ स्फटिका
ब्भ्रमयेतस्मिञ्छाद्वलद्रुमराजिते ॥ विचित्रपुष्पवल्लोभिःसरसीभिश्चसर्य्युते ॥ २ ॥ प्रफुल्लतरुशाखाग्रगुञ्जद्भ्रमरभूषिते
पङ्केरुहैःप्रफुल्लैश्चनीलोत्पलचयैस्तथा ॥ ३ ॥ शोभितेचक्रवाकौघैःकादम्बैर्हंसमद्गुभिः ॥ प्रमत्तसारसैःक्रौञ्चैर्नीलकण्ठैश्चश
ब्दिते ॥४॥ पुंस्कोकिलकलस्वानैर्म्मधुरैर्म्मृगसेविते॥तुरङ्गवदनैःसिद्धैरप्सरोभिःसगुह्यकैः॥५॥विद्याधरीभिर्देवीभिःकिन्नरी
भिर्व्विहारिते॥ पुरन्ध्रीभिःपार्व्वतीभिकन्याभिश्चसमन्विते॥६॥विपञ्चीतन्त्रिकामन्द्रमृदङ्गपटहस्वनैः ॥ नृत्यद्भिरप्सरोभि
श्चकौतुकोत्थैःसुशोभिते ॥ ७॥ दैवीलताभिर्द्दिव्याभिर्ग्गन्धिनीभिःसमावृते ॥ ऊर्ध्वप्रफुल्लकुसुमैर्न्निकुञ्जैरुपशोभिते ॥८॥
शैलराजपुराभ्यासेशिखरेवृषभध्वजः । सहसत्याचिरंरेमेएवम्भूतेसुशोभने ॥ ९ ॥ तस्मिन्स्वर्ग्गसमेस्थानेदिव्यमानेन
शङ्करः । दशवर्षसहस्राणिरेमेसत्यासमम्मुदा ॥ १० ॥ सकदाचित्तुतत्स्थानात्कैलासय्यँातिशङ्करः । कदाचिन्मेरुशिखर
न्देवदेवीवृतम्पुरा ॥ ११ ॥ दिक्पालानान्तथोद्यानव्वँनानिवसुधातलम् ॥ गत्वागत्वापुनस्तत्ररेमेतेभ्यःसतीसखः ॥

१ वृद्धिद्धिमित्तस्येतिपुंव्वद्भावनिषेधः।

॥१२॥ नजज्ञेसदिवारात्रन्नब्रह्मनतपःसमम् ॥ सत्याहितमनाःशम्भुःप्रीतिमेवचकारह ॥ १३ ॥एकम्महादेवमुखंस
तीपश्यतिसर्व्वशः॥महादेवोऽपिसर्व्वत्रसदाद्राक्षीत्सतीमुखम् ॥१४॥ एवमन्योन्यसंसर्ग्गादनुरागमहीरुहम् ॥ वर्द्धयामा
सतुःशम्भुसत्यौभावाम्बुसेचनैः ॥ १५ ॥ एतस्मिन्नन्तरेदक्षोजगतांहितकारकः ॥ महायज्ञंसमारेभेयष्टुंसर्व्वजनान्वितम्
॥ १६ ॥ अष्टाशीतिसहस्त्राणियत्रजुहुतिऋत्विजः ॥ उद्गातारश्चतुःषष्टिसहस्त्राणिमहर्षयः ॥ १७ ॥ अध्वर्य्यवोऽथहो
तारस्तावन्तोनारदादयः ॥अधिष्ठातास्वयंविष्णुःसहसर्व्वमरुद्गणैः ॥ १८ ॥ स्वयन्तत्राभवद्ब्रह्मात्रयीविधिनिदर्शकः ॥
तथैवसर्व्वदिक्पालाद्वारपालाश्चरक्षकाः ॥ १९ ॥ उपतस्थेस्वयंयज्ञःस्वयंवेदीधराभवत् ॥ तनूनपादपिनिजश्चक्रेरू
पंसहस्त्रशः ॥ २० ॥ हविषाङ्ग्रहणायाशुतस्मिन्यज्ञमहोत्सवे । आमन्त्याशुमरीच्याद्याःपवित्रैकैकधारिणः ॥ २१ ॥
सर्व्वत्रसामिधेन्यातेज्वालयामासुरर्च्चिषम् ॥सप्तर्षयःसामगाथाङ्कुर्व्वन्तिस्मपृथक्पृथक् ॥ २२ ॥ गान्दिशोविदिशःख
ञ्चपूयरन्तःश्रुतिस्वरैः॥नवृतास्तत्रयागेषुदक्षेणसुमहात्मना ॥ २३ ॥ नकेचिदृषयोदेवानमनुष्यानपक्षिणः ॥ नोद्भिदोन
तृणंवाऽपिपशवोनमृगास्तथा ॥ २४ ॥ गन्धर्व्वविद्याधरसिद्धसङ्घान्नादित्यसाध्यर्षिगणान्सयक्षान् ॥ सस्थावरान्नाग
वरान्समस्तान्वव्रेसदक्षःसुमहाध्वरेषु ॥ २५ ॥ कल्पमन्वन्तरयुगवर्षमासदिवानिशाः ॥ कलाकाष्ठानिमेषाद्यावृताःसर्व्वे

समागताः ॥ २६ ॥ महर्षिराजर्षिसुरर्षिसङ्घान्नृपाः सपुत्राः सचिवैः ससैन्यैः ॥ वसुप्रमुख्यागणदेवतायाःसर्व्वावृतास्ते
नगतामखन्तम् ॥ २७ ॥ कीटापतङ्गाजलजाश्चसर्व्वेसवानराःश्वापदविघ्नघोराः ॥ मेघाः सशैलाः सनदीसमुद्राःसरां
सिवाप्यश्चगतावृतास्ते ॥ २८ ॥ सर्व्वेस्वभागंहविषाञ्जिघृक्षवः क्रतुम्प्रजग्मुर्दृढयज्विनस्ते ॥ पातालवासाअसुरा
समागतानागस्त्रियोदेवसमाः समस्ताः ॥ २९ ॥ जगद्वर्त्यास्तियत्किञ्चिच्चेतनाचेतनम्पुनः ॥ सर्व्वंवृत्वासमारेभेय
ज्ञंसर्व्वस्वदक्षिणम् ॥ ३० ॥ तस्मिन्यज्ञेवृतः शम्भुर्न्नदक्षेणमहात्मना ॥ कपालीतिविनिश्चित्यतस्ययज्ञार्हतानहि ॥ ३१ ॥
कपालिभार्य्येतिसतीदयितापिसुतानिजा ॥ नाहूतायज्ञविषयेदक्षेणदोषदर्शिना ॥ ३२ ॥ श्रुत्वासतीतथायज्ञन्तातेनारब्धमु
त्तमम् ॥ कपालिभार्य्येतिवृतानाहमित्यपितत्त्वतः ॥ ३३ ॥ उच्चैश्चुकोपदक्षायरक्तनेत्राऽननात्तदा ॥ शापेनदक्षन्दग्धुञ्चमनश्च
क्रेतदासती ॥ ३४ ॥ कोपाविष्टाऽपिसापूर्व्वसमयंस्मृतवत्यमुम् ॥ मनसेतिविनिश्चित्यनशशापतदासती ॥ ३५ ॥ अलंशा
पेनमेपूर्व्वंसुदृढः समयः कृतः ॥ अस्तीतिमय्यवज्ञायाम्प्राणान्मोक्ष्येध्रुवम्पुनः ॥ ३६ ॥ यदास्तुताहन्दक्षेणसुचिरन्तनयार्थिना ॥
तदैवसमयोमेयंशापेनालङ्करोमितम् ॥ ३७ ॥ इतिसञ्चिन्त्यसादेवीनित्यरूपमथात्मनः ॥ सस्मारातुलमत्युग्रन्निष्कलन्तज्जग
न्मयम् ॥ ३८ ॥ पूर्व्वरूपंस्मरन्तीसायोगनिद्राह्वयंहरेः ॥ एवंसञ्चिन्तयामासमनसादक्षजातदा ॥ ३९ ॥ ब्रह्मणोदितदक्षेण

यदर्थमहमीडिता॥तत्किञ्चिदपिनोजातंशङ्करोऽपिनपुत्रवान्॥४०॥ इदानीमेकमेवाऽभूत्कार्य्यन्देवगणस्यच॥यच्छङ्करःसानु
रागोमत्कृतेभून्त्रयोषिति ॥ ४१ ॥ मत्तोनान्यापुनःशम्भोरागवर्द्धयितुम्पुनः॥ शक्तानकाऽपिभवितासनान्यांसङ्ग्रहीष्यति ॥
॥४२॥ तथाप्यहन्तनुन्त्यक्ष्येसमयात्पूर्व्वयोजितात् ॥ हितायजगताङ्कुर्य्याम्प्रादुर्भावम्पुनर्गिरौ ॥ ४३॥ पुराहिमवतःप्र
स्थेरम्येदेवगृहोपमे ॥ शम्भुः सार्द्धम्मयारन्तुंसुचिरम्प्रीतिसंयुतः ॥ ४४ ॥ तत्रयामेनकादेवीचार्व्वङ्गीचरितव्रता ॥ सुशी
लासापुरन्ध्रीणामुत्तमापार्व्वतीगणे ॥ ४५ ॥ सामाम्मातृवदाचष्टसर्व्वकर्म्मसुनर्म्मकम् ॥ तस्याम्मेत्यनुरागोऽभूत्सामेमाता
भविष्यति ॥ ४६ ॥ कन्याभिःपार्व्वतीभिश्चबाल्यक्रीडामहश्चिरम् ॥ कृत्वाकृत्वामेनकायाः करिष्येमोदमुत्तमम् ॥ ४७॥ पु
नश्चाहम्भविष्यामिशम्भोर्जायाऽतिवल्लभाः ॥ करिष्येदेवकार्य्याणितदुपायादसंशयम् ॥४८ ॥ इतिसञ्चिन्तयन्तीसापुनः
कोपसमावृता ॥ जज्वालदक्षतनयादक्षदारुणकर्म्मणा ॥ ४९ ॥ क्रोधरक्तेक्षणातत्रतनुयष्टेस्तदासती ॥ स्फोटश्चकारद्वारा
णिसर्व्वाण्यावृत्ययोगतः ॥ ५० ॥ तेनस्फोटेनमहतातस्यास्तुप्राणवायवः ॥ निर्भिद्यदशमद्वारमात्मनस्तेबहिर्य्ययुः॥ ५१
त्यक्तप्राणान्तुतान्दृष्ट्वादेवाःसर्व्वेन्तरिक्षगाः ॥ हाहाकारन्तदाचक्रुःशोकव्याकुलितेक्षणाः ॥ ५२ ॥ ततस्तुसत्याभगिनीसु
ताताान्द्रष्टुमागता ॥ चुक्रोशशोकाद्विजयामृतान्दृष्ट्वासतीम्मुहुः ॥ ५३ ॥ हासतिक्कगतासीतिहासतीतवकिन्त्विदम् ॥ हामा

तृष्वसरित्युच्चैस्तदाशब्दोमहानभूत् ॥ ५४ ॥ विप्रियश्रवणादेवप्राणास्त्यक्तात्वयासति ॥ अहङ्कथन्तुजीवामिदृष्ट्वादृग्विप्रिय
न्दृढम् ॥ ५५ ॥ पाणिनावदनंसत्यामार्जयन्तीमुहुर्म्मुहुः ॥ करुणंव्विलपन्तीस्ममुखञ्जिघ्रतिसातदा ॥ ५६ ॥ सिञ्चन्तीने
त्रजैस्तोयैः सत्याःसाहृदयम्मुखम् ॥ केशानुल्लास्यपाणिभ्यांव्वीक्ष्यन्तीवदनम्मुहुः ॥ ५७ ॥ ऊर्द्ध्वाधःकम्पितशिराः शोक
व्याकुलितेन्द्रियाः ॥ हृदयम्पञ्चशाखाभ्यांव्विनिहन्तीतथाशिरः ॥ ५८ ॥ इदञ्चवचनंसाश्रुकण्ठासाविजयाब्रवीत् ॥ श्रुत्वा
तेमरणम्मातावीरिणीशोककर्षिता ॥ ५९ ॥ धारयन्तीकथम्प्राणान्सद्यस्त्यक्षतिजीवितम् ॥ सतथानिरनुक्रोशःक्रूरकर्म्मापिता
तव ॥ ६० ॥ प्रमीताम्भवतींश्रुत्वाकथन्धास्यतिजीवितम् ॥ विचिन्त्यनूनङ्कर्म्माणिस्वीयानिभवतीम्प्रति ॥ ६१ ॥ कृतानिसन्न
शंसानिदक्षःशोकाकुलस्तदा ॥ यज्वासचज्ञानशीलःकथय्यँज्ञेप्रवर्त्तते ॥ ६२ ॥ निःश्रद्धस्त्यक्तबुद्धिश्चकथंव्वानभवेत्कृती ॥ हामा
तर्देहिवचनंरुदन्त्याबालवन्मम ॥ ६३ ॥ अवत्यानिर्ग्गमेशोकाद्भियेशल्यसमानसून् ॥ त्वांङ्किंस्मरसिमेशम्भोर्व्विहितस्यकदाच
न ॥ ६४ ॥ तेनामर्षवशम्प्राप्तामातम्र्माङ्किन्नभाषसे ॥ तदेववदनञ्चक्षुर्म्मुखंसानासिकातव ॥ ६५ ॥ एतेषाङ्गताःसर्व्वेविभ्रमाह
सितञ्च ॥ ननुतेविभ्रमैर्हीनन्नेत्रयुग्मंसनासिकम् ॥ ६६ ॥ स्मितहीनञ्चवदनन्दृष्ट्वासोढाकथंहरः ॥ कासुधासम्मितंव्वाक्यंहराश्र
मसमागताम् ॥ ६७ ॥ सूनृतन्त्वामृतेमातर्व्वदिष्यतिमुहुर्म्मुहुः ॥ श्रद्धावतीबान्धवेषुपत्युर्भाववशानुगा ॥ ६८ ॥ सर्व्वलक्षण

१ मेइतिविहितस्यशेषेनष्टी मयाविहितं शम्भोरपराधांकिं स्मरसीत्यर्थः ।

सम्पूर्णात्वत्समायाभविष्यति ॥ त्वद्दतेदेवदेवेशःशोकोपहतचेतनः ॥६९॥ दुःखितात्मानिरुत्साहोनिश्चेष्टश्चभविष्यति ॥ ए
वङ्कम्पन्तीभृशदुःखितासतीम्मृतांसमीक्ष्यातिशयंशुचाहता ॥ पपातभूमौविजयाविरावङ्कितन्वतीचोर्द्ध्वभुजाप्रवेपती॥७०॥
इतिकालिकापुराणेसतीदेहत्यागोनामषोडशोऽध्यायः॥ १६ ॥ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ एतस्मिन्नन्तरेशम्भुःशोभनेमा
नसेहृदे ॥ समाप्यसन्ध्यामायातःस्वमाश्रमपदम्प्रति॥ १॥ आगच्छन्नेवसंरावङ्विजयायावृषध्वजः ॥ शुश्रावदारुणन्तीव्र
श्चकितश्चततोभवत्॥२॥ ततउक्ष्णाबलवतामनोमारुतरंहसा॥स्वमाश्रमपदंशर्व्वआससादत्वरान्वितः॥३॥आसाद्यदेवीन्द
यितान्तदादाक्षायणींहरः ॥मृतान्दृष्ट्वापिनजहौमृतेतिप्रियभावतः॥४॥ ततोनिरीक्ष्यवदनमामृज्यचपुनःपुनः ॥पप्रच्छकस्मा
त्सुप्तासीत्येवन्दाक्षायणीम्मुहुः ॥५॥ततोभर्गवचःश्रुत्वातदातद्भगिनीसुता॥विजयाप्राहनिधनन्दाक्षायण्यायथातथा ॥६॥
॥विजयोवाच॥ दक्षःकर्त्तुङ्क्रतुंशम्भोदेवान्सर्व्वान्सवासवान्॥आजुहावतयादैत्यान्राक्षसान्सिद्धगुह्यकान् ॥७॥ब्रह्माणमथ
गोविन्दमिन्द्रादीनपिदिक्पतीन्॥देवयोनीस्तथासर्व्वान्साध्यविद्याधरादिकान्॥८ ॥नाहूतानिक्रतौतेनयानिसत्वानिशङ्क
र॥तानिदक्षेणनोसन्तिसमस्तभुवनेष्वपि॥९॥एवम्प्रविततयज्ञंश्रुत्वैषावचनान्मम ॥ विमृष्यवत्यनाह्वानेहेतुंशम्भोरथात्म
नः ॥ १० ॥ चिन्तयानान्तथाहन्तांसतीञ्ज्ञात्वायथाश्रुतम् ॥ उक्तवत्यस्मिभूतेशयज्ञानाह्वानकारणम् ॥ ११ ॥ शम्भुः

कपालीतज्जायातत्संसर्ग्गाद्विगर्हिता । अतःशम्भुःसतीचापिनाध्वरेमेमिलिष्यतः ॥ १२ ॥ इत्यनाह्वानहेतुर्म्मैश्रुतपूर्व्वः
पुरामुखात् । दक्षस्यवीरिणींश्लक्ष्णाङ्गदतस्तस्यमन्दिरे ॥ १३ ॥ एतच्छ्रुत्वाममवचःसाविवर्णमुखीक्षितौ ॥ उपविष्टान
माङ्किञ्चिदुक्त्वाकोपपरायणा ॥ १४॥ बभूववदनन्तस्यास्तत्क्षणात्परुषंहर ॥ भ्रुकुटीकुटिलंश्याममय्यँथाखन्धूमकेतुना ॥
१५ ॥ सामुहूर्त्तमिवध्यात्वास्फोटेनमहताततः । प्राणानुदसृजच्चैषाभित्त्वामूर्द्धानमात्मनः ॥ १६ ॥ मार्कण्डेयउवाच ॥
इतिश्रुत्वावचस्तस्याविजयायावृषध्वजः ॥ अतीवकोपाद्दुत्तस्थौदिधक्षुरिवपावकः ॥ १७ ॥ तस्यकोपपरीतस्यकर्णनासा
क्षिवक्त्रतः॥घोराज्वलन्त्यःकणिकासृजन्त्योऽग्नेर्म्महारवम्॥१८॥ उल्काविनिःसृताबह्व्यःकल्पान्तादित्यवर्च्चसः॥ अथतत्र
जगामाशुदक्षोयत्रमहातपाः॥१९॥यज्ञाङ्के हरोगत्वायज्ञवाटाद्बहिःस्थितः ॥ तय्यँज्ञन्ददृशेभर्ग्गःकोपेनमहतावृतः॥२०॥
महाधनसमापन्नम्पात्रीजुह्वादिभिर्व्वृतम् ॥ हुताज्याहुतिसव्वृँद्धदीप्तवह्निविराजितम्॥ २१ ॥ यथास्थानस्थितान्सर्व्वा
न्दिक्पालान्सायुधध्वजान् । विधातारन्तथाविष्णुय्यँज्ञमध्येव्यवस्थितम्॥ २२ ॥ ददर्शकुपितःशम्भुस्तान्दृष्ट्वातीवकोपि
तः । भगंसूर्य्यन्तथासोमम्भार्य्याभिःसहसव्वृँतम्॥ २३ ॥ सहस्राक्षङ्गौतमञ्चपूर्वेभागेव्यवस्थितम् ॥ सनत्कुमारमात्रेय
म्भार्गवव्विँनतासुतम् ॥२४॥मरुद्गणाँस्तथासाध्यानाग्नेय्यञ्जातवेदसम् ॥ कालंसचित्रगुप्तञ्चकुम्भयोनिंसगालवम्॥२५॥

विश्वदेवांस्तथासर्व्वान्कव्यवाहादिकान्पितॄन्॥अग्निष्वात्तादिकान्सर्व्वान्भूतग्रामश्चतुर्व्विधम्॥२६॥सौमम्प्रेतगणान्सि
द्धान्दक्षिणाशांव्यवस्थितान्॥रक्षाँसिचपिशाचाँश्चभूतानिमृगपक्षिणः २७॥क्रव्यादान्क्षुद्रजन्तूंश्चतथापुण्यजनेश्वरम् ॥मह
र्षिम्मौद्गलंराहुन्नैर्ऋत्याङ्किन्नरास्तथा॥२८॥महोरगास्तथानक्रान्मत्स्यान्ग्राहाँश्चकच्छपान्॥ समुद्रान्सप्तसिन्धूँश्चनदास्ती
र्थानिगुह्यकान्॥२९॥मानसादिह्रदान्सर्व्वान्गङ्गाजम्बूनदास्तथा॥कामम्मधुर्व्वसन्तश्चवरुणश्चसहानुगम् ३० ॥शनैश्चर
ङ्गिरीन्सर्व्वान्पश्चिमाशाव्यवस्थितान् ॥प्राणादिपञ्चवायूँश्चसगणँश्चसमीरणम् ॥३१ ॥ कल्पद्रुमान्हिमद्रिश्चतश्यपञ्चमहा
मुनिम् ॥वायव्याङ्कमलाव्रातम्फलानिचकलानिधिम्॥३२॥नानारत्नानिहैमानिमनुष्यान्पर्व्वताँस्तथा॥हिमाद्रिमुख्यायक्षा
श्चस्थूणाकर्ण्णादयोबुधाः॥ ३३ ॥ नलकूबरेणसहितोयक्षराणनरवाहनः॥ ध्रुवोधरश्चसोमश्चविष्णुश्चैवाऽनिलोनलः ॥३४॥
प्रत्यूषश्चप्रभासश्चकौबेर्य्यांसंस्थितानिमान् ॥वृषध्वजर्व्विनासर्व्वान्रुद्राञ्जीवम्मनूँस्तथा ॥३५॥ विविधान्बाहुजान्वैश्याञ्छू
द्रानपिसमन्ततः ॥ ऐशान्याव्विँविधान्नानिव्रीहीनपिलताअपि ॥ ३६ ॥ ऐशानीपूर्व्वयोर्म्मध्येब्रह्मर्षीन्संशितव्रतान् ॥ मह
र्षींश्चतुरोवेदान्वेदाङ्गानितथैवषट् ॥३७॥नैर्ऋत्यपश्चिमान्तस्थमनन्तंश्वेपतर्व्वतम् ॥काद्रवेयसहस्त्रेणसहितान्सप्तभोगिनः
॥३८॥ केतुन्तत्रैवकूष्माण्डंडाकिनीगणसंय्युतम् ॥ तथाजलधरानन्यान्नानावर्णान्सविद्युतान् ॥३९॥दिग्गजानपितत्रस्था

नैरावतमुखान्हरः॥ यथास्थानस्थितान्सर्व्वान्दिक्करिण्याचसय्युँतान् ॥४०॥तमेवन्दूरतोदृष्ट्वायज्ञवाटम्महाधनम्॥वीरभद्रा
हूयन्तूर्णम्प्रेषयामासतम्प्रति॥४१॥वीरभद्रोपिबहुभिःसव्वृँतोविविधैर्ग्गणैः॥व्यध्वंसयत्ततोयज्ञन्दक्षस्यसुमहात्मनः ४२॥
विकुर्व्वन्तंमहायज्ञव्वीरभद्रंसमीक्ष्यवै॥वारयामासवैकुण्ठःसर्व्वदेवगणावृतः॥४३॥तव्वार्य्यमाणन्दृष्ट्वैवक्रोधसंरक्तलोचनः
स्वयव्विवेशतय्यँज्ञंध्वंसयामासचेश्वरः ॥ ४४ ॥ विशन्तमेवतय्यँज्ञेप्रथमम्पुरतोभग ॥ बाहूवितत्यभूतेशमाससादत्वरान्वि
तः॥ ४५॥तमागतमभिप्रेक्ष्यभर्ग्गोपिभृशरोषितः ॥ अङ्गुल्यग्रप्रहारेणतस्यनेत्रेजघानह ॥४६॥ हीननेत्रम्भगन्दृष्ट्वाविरूपा
क्षन्दिवाकरः॥ स्पर्द्धमानस्ततःशर्व्वमाससादत्वरान्वितः॥४७॥ ततःसूर्य्यम्महादेवःपाणौधृत्वाकरेणच ॥ दूरीकृत्यातिकुपि
तोयज्ञमेवाभ्यधावत ॥ ४८ ॥ मार्त्तण्डश्चहसन्वेगाद्वितत्यविपुलौभुजौ ॥ एहियोत्स्यत्वयेत्युक्त्वातमग्रेप्रत्यवारयत् ॥
४९ ॥ हसतस्तस्यसूर्य्यस्यक्रोधेनवृषभध्वजः ॥ दन्तान्करप्रहारेणशातयामासवक्त्रतः ॥ ५० ॥ विदन्तम्मिहिरन्दृष्ट्वा
हीननेत्रम्भगन्तथा ॥ सर्वेदेवाश्चऋषयोयेचान्येतत्रदुद्रुवुः ॥५१ ॥ विद्राव्यसर्व्वान्देवादीन्हरःपरमकोपनः॥ मृगरूपे
णापयान्तय्यँज्ञमेवान्वपद्यत ॥ यज्ञोप्याकाशमार्ग्गेणब्रह्मस्थानव्विवेशह ॥ ५२ ॥ वृषध्वजोपिकुपितोब्रह्मस्थानञ्ज
गामह ॥ ब्रह्मणःसदनाद्यज्ञोभीतोभर्ग्गादवातरत् ॥ ५३ ॥ अवतीर्य्यसतीदेहम्प्रविवेशस्वमायया ॥ भर्ग्गोपिदक्षदु

हितुम्मृतायानिकटङ्गतः ॥ ५४ ॥ अन्वगच्छत्तदायज्ञन्ददर्शचसतीशवम् ॥ मृतान्दृष्ट्वातदादेवींहरोदाक्षायणींसतीम् ॥
॥५५विस्मृत्ययज्ञन्तत्प्रान्तेस्थितोबाढंशुशोचताम्॥ बहुविधगुणवृन्दञ्चिन्तयञ्छूलपाणिर्ललितदशनपङ्क्तिँवक्त्रमब्जप्रका
शम् ॥ ५६ ॥ अरुणदशनवस्त्रम्भ्रूयुगव्वीक्ष्यतस्याःखरतरपृथुशोकव्याकुलोसौरुरोद ॥ ५७ ॥ इतिकालिकापुराणेसप्त
दशोध्यायः ॥ १७ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ दाक्षायणीगुणगणान्गणयन्गोरथस्तदा॥ विललापातिदुःखार्तोमनु
जःप्राकृतोयथा ॥ १ ॥ विलपन्तन्तदाभर्गव्विज्ञायमकरध्वजः ॥ रतीवसन्तसहितआससादमहेश्वरम्॥ २ ॥ तंशु
चातिपरिभ्रष्टय्युगपत्सरतीपतीः ॥ जघानपञ्चभिर्ब्बाणैरुदन्तम्भ्रष्टचेतनम् ॥ ३ ॥ शोकाभिहतचित्तोपिस्मरबाणसमा
कुलः ॥ सङ्कीर्णभावमापन्नःशुशोचचमुमोहच ॥ ४ ॥ क्षणम्भूमौनिपततिक्षणमुत्थायधावति ॥ क्षणम्भ्रमतितत्रैवनि
मीलतिविभुःपुनः ॥ ५ ॥ध्यायन्दाक्षायणीन्देवींहसमानःकदाचन ॥ परिष्वजतिभूमिष्ठांरसभावैरिवस्थिताम् ॥ ६ ॥ स
तीसतीतिसततन्नामव्याहृत्यशङ्करः ॥ मानन्त्यजवृथेत्येवमुक्त्वास्पृशतिपाणिना ॥ ७ ॥ पाणिनापरिमार्ज्यैनामलङ्कारा
न्यथास्थितान्॥तस्याविश्लिष्यचपुनस्तत्रैवानुयुयोजच ॥८॥ एवङ्कुर्वतिभूतेशेमृतानोवाचकिञ्चन ॥ यदासतीतदाभर्गः
शोकाद्गाढंरुरोदह ॥ ९ ॥ रुदतस्तस्यपततोवाष्पान्वीक्ष्यतदासुराः ॥ ब्रह्मादयःपराश्चिताञ्जग्मुश्चिन्तापरायणाः ॥

१ पंक्ति मित्यार्षम्। २ दशनाच्छादनमोष्ठमित्यर्थः। ३ विचारपरायणा इत्यर्थः।

॥ १० ॥ वाष्पाःपतन्तोभूमौचेद्दहेयुःपृथिवीमिमाम् ॥ उपायस्तत्रकःकार्य्यइतिहाहेतिचुक्रुशुः ॥ ११ ॥ ततोविमृश्यतेदे
वाब्रह्माद्यास्तुशनैश्चरम् ॥ तुष्टुवुर्म्मूढभर्ग्गस्यवाष्पधारणकारणात् ॥ १२ ॥ ॥ देवाऊचुः ॥ ॥ शनैश्चरमहा
भागलोकानुग्रहकारक ॥ मूलशक्तिसमुद्भूतनमस्तेसूर्य्यसम्भव ॥ १३ ॥ नमस्तेशूलहस्तायपाशहस्तायधन्विने ॥
तथावरदहस्तायनमश्छायात्मजायते ॥ १४ ॥ नीलमेघप्रतीकाशभिन्नाञ्जनचयोपम ॥ नमस्तेसर्व्वलोकानाम्प्राणधारणहे
तवे ॥ १५ ॥ गृध्रध्वजनमस्तेस्तुप्रसीदभवगन्दृढम् ॥ वाष्पेभ्यःशोकजेभ्यश्चपाहिमर्ग्गस्यनःक्षितिम् ॥ १६ ॥ यथापुराशतव्वँ
र्षानवजग्राहवर्षणम् ॥ भवानेवतुमेघेभ्यस्तथाकुरुहराम्बुनि ॥ १७ ॥ तवचापांग्रहन्दृष्ट्वामेघास्तेपुष्करादयः ॥ मुमुचुः
सततव्वँर्षम्महेन्द्रस्यकिलाज्ञया ॥ १८ ॥ आकाशएववर्षाम्भस्तत्सर्व्वम्भवतापुरा ॥ विनाशितय्यँथावाष्पन्तथानाशयशू
लिनः ॥ १९ ॥ नत्वामृतेन्यःशक्तोस्तिहरबाष्पनिवारणे ॥ दहेत्सदेवगन्धर्व्वब्रह्मलोकान्सपर्व्वतान् ॥ २० ॥ पृथिवीम्पाति
तोवाष्पस्तस्माद्धारयमायया ॥ ॥ मार्क्कण्डेय उवाच ॥ ॥ इत्येवम्भाषमाणेषुदेवेषुमिहिरात्मजः ॥ २१ ॥ प्रत्युवाचसता
न्देवान्नातिहृष्टमनाइव ॥ ॥ शनैश्चरउवाच ॥ ॥ करिष्येभवताङ्कर्म्मयथाशक्तिसुरोत्तमाः ॥ २२ ॥ तथाकिन्तुविदध्यांहिनमाव्वँे
त्तियथाहरः ॥ दुःखशोकाकुलस्यास्यसमीपेबाष्पधारिणः ॥ २३ ॥ कोपान्नश्येच्छरीरम्मेनियतन्नात्रसंशयः ॥ तस्माद्यथामा

म्भूतेशोनजानातिसतीपतिः॥ तथाकुरुध्वन्नेत्रेभ्योहरलोतकधारिणम् ॥ ॥ मार्कण्डेय उवाच ॥ ॥ ततोब्रह्मादयोदेवास्तेस
र्व्वेशङ्करान्तिकम् ॥ २५ ॥ गत्वाहरंसम्मुमुहुःसांसार्य्यायोगमायया ॥ शनैश्चरोपिभूतेशमासाद्यान्तर्हितस्तदा ॥ २६ ॥ बाष्प
वृष्टिन्दुराधर्षामवजग्राहमायया ॥ यदासनाशकद्बाष्पान्त्सन्धारयितुमर्क्कजः ॥ २७ ॥ तदामहागिरौक्षिप्ताबाष्पास्तेजलधार
के॥ लोकालोकस्यनिकटेजलधाराह्वयोगिरिः॥ २८ ॥ पुष्करद्वीपपृष्ठस्थस्तोयसागरपश्चिमे॥ सतुसर्व्वप्रमाणेनमेरुपर्व्वतसन्नि
भः॥ २९ ॥ तस्मिन्विन्यस्तवान्वाष्पाँस्तदाशक्तःशनैश्चरः॥ सपर्व्वतोपितान्वाष्पान्नधर्तुंक्षमईशितुः ॥ ३० ॥ विदीर्णस्तैस्तुबा
ष्पौघैर्भन्नमध्योभवद्द्रुतम्॥ तेबाष्पाः पर्व्वतम्भित्वाविविशुस्तोयसागरम्॥ ३१ ॥ सागरोपिग्रहीतुन्तान्नशशाकखरानति॥ तत
स्तुसागरम्मध्येभित्त्वाबाष्पाः समागताः॥ ३२॥ तोयधेःप्रागभवाँव्वेलांस्पर्शमात्राद्विभेदताम्॥ विभिद्यवेलान्तेबाष्पाःपुष्क
रद्वीपमध्यगाः॥ ३३॥ नदीभूत्वावैतरणीपूर्व्वसागरगाभवत् ॥ जलधारस्यभेदेनसंसर्ग्गात्सागरस्यच॥ ३४ ॥ अवाप्यसौ
म्यताङ्किञ्चिद्बाष्पास्तेनाभिदेन्निर्शितम्॥ वैवस्वतपुरद्वारेयोजनद्वयविस्तृता॥ ३५॥ अद्यापितिष्ठत्यपगाहरलोतकसम्भवा ॥
अथशोकविमूढात्माविलपन्वृषभध्वजः॥ ३६॥ जगामप्राच्यदेशाँस्तुस्कन्धेकृत्वासतीशवम् ॥ उन्मत्तवद्गच्छतोस्यदृष्ट्वाभाव
न्दिवौकसः ॥ ३७ ॥ ब्रह्माद्याश्चिन्तयामासुःशवभ्रंशनकर्म्माणि ॥ हरगात्रस्यसंस्पर्शाच्छवोनायव्विशीर्णताम् ॥ ३८ ॥ ग

१ आगमशास्त्रस्यानित्यत्वात्क्षमभावः ।

मिष्यतिकथन्तस्मादस्यभ्रंशोभविष्यति॥इतिसाश्चिन्तयन्तस्तेब्रह्माविष्णुशनैश्चराः॥३९॥सतीशवान्तर्व्विविशुरदृश्यायोग
मायया॥ प्रविश्याथशवन्देवाःखण्डशस्तेसतीशवम्॥४०॥भूतलेपातयामासुःस्थानेस्थानेविशेषतः॥ देवीकूटेपादयुग्म
म्प्रथमन्न्यपतत्क्षितौ ॥ ४१ ॥ उड्डियानेचोरुयुग्मंहितायजगतान्ततः ॥ कामरूपेकामगिरौन्यपतद्योनिमण्डलम् ॥
॥ ४२ ॥ तत्रैवन्यपतद्भूमौपूर्व्वतोनाभिमण्डलम् ॥ जालन्धरेस्तनयुगस्वर्णहारविभूषितम् ॥ ४३ ॥ अंशग्रीवम्पूर्णगि
रौकामरूपात्ततशिवः ॥ यावद्भ्रुवङ्गतोभर्गःसमादायसतीशवम् ॥ ४४ ॥ प्राच्येषुयाज्ञिकोदेशस्तावदेवप्रकीर्त्तितः ॥ अ
न्येशरीरावयवालवशःखण्डिताःसुरैः ॥ ४५ ॥ आकाशगङ्गामगमन्पवनेनसमीरिताः ॥ यत्रयत्रापतन्सत्यास्तदापादाद
योद्विजाः ॥ ४६ ॥ तत्रतत्रमहादेवःस्वयंलिङ्गस्वरूपधृक् ॥ तस्थौमोहसमायुक्तःसतीस्नेहवशानुगः ॥ ४७ ॥ ब्रह्मावि
ष्णुःशनिश्चापिसर्व्वेदेवगणास्तथा ॥ पुजयाञ्चक्रुरीशस्यप्रीत्यासत्याःपदादिकम् ॥ ४८ ॥ देवीकूटेमहादेवीमहाभागेति
गीयते ॥ सतीपादयुगेलीनायोगनिद्राजगत्प्रसूः ॥ ४९ ॥ कात्यायनीचोड्डियानेकामाख्याकामरूपिणी ॥ पूर्णेश्वरीपू
र्णगिरौचण्डीजालन्धरेगिरौ ॥ ५० ॥ पूर्व्वान्तेकामरूपस्यदेवीदिक्करवासिनि ॥ तथाललितकान्तेतियोगनिद्राप्रगीयते
॥ ५१ ॥ यत्रैवपतितंसत्याःशिरस्तत्रवृषध्वजः ॥ उपविष्टःशिरोवीक्ष्यश्वसञ्छोकपरायणः ॥ ५२ ॥ उपविष्टेहरेतत्रब्रह्माद्या

स्तेदिवौकसः॥समीपमगमस्तँस्यदूरतःसान्त्वयन्हरम् ॥ ५३ ॥ देवानागच्छतोदृष्ट्वाशोकलज्जासमन्वितः ॥ गत्वाशिलात्व
न्तत्रैवलिङ्गत्वङ्गतवान्हरः ॥ ५४॥ हरेलिङ्गत्वमापन्नेब्रह्माद्यास्तुदिवौकसः ॥ तुष्टुवुस्त्र्यम्बकन्तत्रलिङ्गरूपञ्जगद्गुरुम् ॥५५॥
देवाऊचुः ॥ ॥ महादेवंशिवंस्थाणुमुग्रंरुद्रव्वृँषध्वजम् ॥ श्मशानवासिनम्भर्गंसर्व्वान्तकरणम्परम् ॥ ५६ ॥ त्वान्नमा
मोवयम्भक्त्याशङ्करन्नीललोहितम् ॥ गिरीशव्वँरदन्देवम्भूतभावनमव्ययम् ॥ ५७ ॥ अनादिमध्यसंसारयोगविद्या
यशम्भवे ॥ नमःशिवायशान्तायब्रह्मणेलिङ्गमूर्त्तये॥५८॥ज्ञानामृतान्तसम्पूर्णशुद्धदेहान्तरायच ॥नमःशिवायशान्तायब्रह्म
णेलिङ्गमूर्त्तये ॥ ५९ ॥ आदिमध्यान्तभूतायस्वभावानलदीप्तये ॥ नमःशिवायशान्तायब्रह्मणेलिङ्गमूर्त्तये ॥ ६० ॥
जटिलायगिरीशायविद्याशक्तिधरायते ॥ नमःशिवायशान्तायब्रह्मणेलिङ्गमूर्त्तये ॥ ६१ ॥ प्रलयार्णवसंस्थायप्रलय
स्थितिहेतवे ॥ नमःशिवायशान्तायब्रह्मणेलिङ्गमूर्त्तये ॥ ६२ ॥ यःपरेभ्यःपरस्तस्मात्परायपरमात्मने ॥ नमःशि
वायशान्तायब्रह्मणेलिङ्गमूर्त्तये ॥ ६३ ॥ ज्वालामालावृताङ्गायनमस्तेविश्वरूपिणे ॥ नमः शिवायशान्तायब्रह्मणेलिङ्ग
मूर्त्तये ॥ ६४ ॥ ॥ ओन्नमःपरमार्थायज्ञानदीपायवेधसे ॥ नमःशिवायशान्तायब्रह्मणेलिङ्गमूर्त्तये ॥ ६५ ॥ नमोदाक्षा
यणीकान्तमृडभर्ग्गमहेश्वर ॥ नमस्तेसर्व्वभूतेशप्रसीदभगवञ्छिव ॥ ६६ ॥ सशोकेत्वयिलोकेशेचेष्टमानेमहेश्वर ॥ सु

राःसमाकुलाःसर्व्वेतस्माच्छोकम्परित्यज ॥ ६७॥ नमोनमस्तेभूतेशसर्व्वकारणकारण॥ प्रसीदरक्षनःसर्व्वास्त्त्यँजशोकन्न
मोस्तुते ॥ ६८॥ ॥मार्क्कण्डेयउवाच॥ ॥इतिसंस्तूयमानस्तुमहादेवोजगत्पतिः॥निजंरूपंसमास्थायप्रादुर्भूतःशुचा
हतः॥ ६९ ॥ तंशुचाविह्वलंदृष्ट्वाप्रादुर्भूतव्विँचेतसम् ॥ शोकापहव्विँधिःसाम्नातुष्टावदृषभध्वजम् ॥ ७० ॥ ॥ब्रह्मो
वाच॥ ॥हिरण्यबाहोब्रह्मात्वव्विँष्णुस्त्वञ्जगतःपतिः॥ सृष्टिस्थितिविनाशानांहेतुस्त्वङ्केवलंहर ॥ ७१ ॥त्वमष्टमूर्त्तिभिः
सर्व्वञ्जगद्व्याप्यचराचरम्॥उत्पादकस्थापकश्चनाशकश्चापिविश्वकृत्॥ ७२॥ त्वामाराध्यमहादेवमुक्तिय्याँताममुक्षवः॥
रागद्वेषादिभिस्त्यक्तासंसारविमुखाबुधाः॥तृतीयय्यँद्भवन्नेत्रललाटस्थम्महेश्वर॥७३॥ सततम्भ्राजमानश्चचिन्त्यतेयन्मुमु
क्षुभिः॥ विभिन्नवाय्वग्निजलौघवर्जितन्नदूरसंस्थंरविचन्द्रसय्युँतम्॥ ७४॥ त्रिमार्ग्गमध्वस्थमनुप्रकाशकन्तत्त्वम्परंशुद्धम
यम्महेश्वर॥ यदष्टशाखस्यतरोःप्रसूनञ्चिदम्बुवृक्षस्यसमीपजस्य॥ ७५ ॥ तपश्छदःसंस्थगितस्यपीनंसूक्ष्मोपगन्तेवश
गंसदैव ॥ अधस्समाधायसमीरणस्वनंनिरुद्धयचोर्ध्वन्निशिहंसमध्यतः ॥ ७६ ॥ हृत्पद्ममध्येसुमुखीकृतंरजःपरन्तुते
जस्तवसर्व्वदेश्यताम् ॥ प्राणायामैःपूरकैस्तम्भकैर्व्वारिक्तैश्चित्रैश्चोदनय्यँत्परारव्यम् ॥ ७७ ॥ दृश्यादृश्यंयोगिभिस्ते
प्रपञ्चाःशुद्धव्वृँद्धन्तत्त्ववतस्तेस्तिलव्ध्यम् ॥ ७८ ॥ सूक्ष्मञ्जगद्व्यापिगुणौघपीनम्मृग्यम्बुधैःसाधनसाध्यरूपम्॥ चौ

१ चोदयद्यत्परारव्यमिति पाठान्तरम्।

रैरक्षैर्नाप्नुतंन्नैवनीतव्विँत्तन्तवास्त्यर्थहीनम्महेश ॥ ७९ ॥ नकोपेननशोकेननमानेननदम्भतः ॥ उपयोज्यतुतद्वित्तमन्यथैव
विवर्द्धते ॥ ८० ॥ माययामोहितःशम्भोविस्मृतन्तेहृदिस्थितम् ॥ मायाम्भिन्नाम्परिज्ञायधारयात्मानमात्मना ॥ ८१ ॥
मायास्माभिस्तुतापूर्व्वञ्जगदर्थेमहेश्वर ॥ तयाध्यानगतञ्चित्तम्बहुयत्नैःप्रसाधितम् ॥ ८२ ॥ शोकःक्रोधश्चलोभश्चका
मोमोहःपरात्मता ॥ ईर्ष्यामानौविचिकित्साकृपासूयाजुगुप्सुता ॥ ८३ ॥ द्वादशैतेबुद्धिनाशहेतवोमनसोमलाः ॥ नत्वाद
शैर्निषेव्यन्तेशोकम्त्यजततोहर ॥ ८४ ॥ ॥ मार्कण्डेयउवाच ॥ इतिशाम्यंस्ततःशम्भुःसंस्मृत्यापिस्ववाञ्छितम् ॥ नावदधे
तदात्मानंशोकात्सत्याविनाकृतः ॥ ८५ ॥ अधोमुखस्थितोवीक्ष्यब्रह्माणंसशनैरिदम् ॥ प्राहब्रह्मन्नोयतिगर्व्वँदकिङ्क
रवाण्यहम् ॥ ८६ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इत्युक्तोवामदेवेनविधातासर्व्वदैवतैः ॥ इदमाहतदेशस्यशोकविध्वं
सकर्व्वँचः ॥ ८७ ॥ ॥ ब्रह्मोवाच ॥ ॥ त्यजशोकम्महादेवसंस्मृत्यात्मानमात्मना ॥ नत्वंशोकस्यसदनम्प
रंशोकात्तवान्तरम् ॥ ८८ ॥ सशोकेत्वयिभूतेशदेवाभूताःससाध्वसाः ॥ भ्रंशयेज्जगतीङ्कोपःशोकःसर्व्वांश्चशोषयेत् ॥
॥ ८९ ॥ त्वद्बाष्पव्याकुलापृथ्वीविदीर्णास्यान्नचेच्छनिः ॥ अवजग्राहतेबाष्पंसोपिकृष्णोभवद्धठात् ॥ ९० ॥ यत्रदेवासग
न्धर्व्वाःसदाक्रीडन्तिसोत्सुकाः ॥ सुमेरुसदृशोयोसौमानतः पर्व्वतोत्तमः ॥ ९१ ॥ यस्मिन्प्रविश्यसुगिरौपद्मनालनिभे

१पा०-श्चै। २ आबतिरुत्तरकाळः।

घनाः ॥ उत्पिबन्तिस्मतोयानिपुष्करावर्त्तकादयः ॥ ९२ ॥ मन्दरात्ससततर्थ्यँत्रकुम्भयोनिर्महामुनिः ॥ गत्वागत्वातपस्तेपे
हितायजगतोहर ॥९३॥ यस्मिन्निस्थित्वागिरौपूर्व्वमगस्त्यस्तोयसागरम् ॥ ययौतपोबलात्कृत्वाकरमध्यगताङ्किल ॥ ९४॥
शनैश्चरेणतेवोढुमसमर्थेनलोतकैः ॥ क्षिप्तैर्व्विदारितस्तेसौजलधाराह्वयोगिरिः ॥ ९५ ॥ विभिद्यपर्व्वतंशम्भोबाष्पास्ते
सागरय्यँयुः ॥ भित्त्वातुसागरंशीघ्रन्त्रमीताण्डजसङ्कुलम् ॥ ९६ ॥ जग्मुस्तेपूर्व्वपुलिनन्तस्यताह्विभिदुश्चते ॥ भित्त्वावे
लान्ततः पृथ्वीव्विँभिद्याशुतरङ्गिणीम्॥९७॥ चक्रुर्व्वैतरणीन्नाम्नापूर्व्वसागरगामिनीम् ॥ननावानाविमानेननद्रोण्यास्यन्द
नेनच ॥९८॥ ततुंशक्यासातुनदीतप्ततोयातिभीषणा॥दुःखेनतान्तुपृथिवीबिभर्त्तिमहताधुना ॥ ९९ ॥ सदाचोर्द्ध्वगतैर्व्वा
ष्पैर्व्विक्षिपन्तीनभश्चरान् ॥ तस्यास्तूपरिनोयान्तिदेवाअपिभयातुराः ॥१००॥ यमद्वारम्परावृत्यकयोजनद्वयविस्तृता ॥ नि
म्नावहतिसम्पूर्णाभीपयन्तीजगत्त्रयम् ॥ १ ॥ त्वन्निःश्वासमरुज्जातैर्व्यस्ताः पर्व्वतकाननाः ॥ समाकुलद्वीपिनागानाद्या
पिप्रतिशेरते॥२॥तवनिःश्वासजोवायुःपीडयञ्जगतःसुखम् ॥ नाद्यापिप्रशमय्यँातिबाधाहीनःसनातन ॥ ३ ॥ सतीशवन्ते
वहतःशीर्य्यमाणापदेपदे ॥ नाद्यापिव्याकुलापृथ्वीव्याकुलत्वव्विँमुञ्चति॥ ४॥ नस्वर्ग्गेनचपातालेतत्सत्त्वव्विँद्यतेऽधुना ॥
यत्तेक्रोधेनशोकेननाकुलव्वृँषभध्वज ॥ ५॥ तस्माच्छोकममर्षञ्चत्यक्त्वाशान्तिम्प्रयच्छनः ॥ आत्मानञ्चात्मनावेत्थधार

१ मरुत्समूहैरित्यर्थः ।

यात्मानमात्मना ॥ ६ ॥ सतीचदिव्यमानेनव्यतीतेशरदांशते ॥ साचत्रेतायुगस्यादौभार्य्यातवभविष्यति ॥ ७ ॥
॥ मार्क्कण्डेयउवाच ॥ ॥ इत्युक्तोवेधसाशम्भुस्तूष्णीन्ध्यानपरायणः ॥ अधोमुखस्तदाप्राहब्रह्माणममितौजसम् ॥
॥८ ॥ ॥ ईश्वरउवाच ॥ ॥ यावद्ब्रह्मन्नहंशोकादुत्तरामिसतीकृतात् ॥ तावन्ममसखाभूत्वाकुरुशोकापनोदनम् ॥
॥ ९ ॥ तस्मिन्नवसरेयत्रयत्रगच्छाम्यहाविधे ॥ तत्रतत्रभवान्गत्वाशोकहानिङ्करोतुमे ॥ ११० ॥ ॥ मार्क्कण्डेयउवाच
॥ ॥ एवमस्त्वितिलोकेशःप्रोक्तावृषभवाहनम् ॥ हरेणसार्द्धङ्कैलासङ्गन्तुञ्चक्रेमनस्ततः ॥ ११ ॥ ब्रह्मणासहितंशम्भुङ्कै
लासगमनोत्सुकम् ॥ समासेदुर्ग्गणादृष्ट्वानन्दिभृङ्गिमुखाश्चये ॥ १२ ॥ ततःपर्व्वतसङ्काशोवृषभःपुरतोविधेः ॥ उपतस्थ
सिताब्भ्रस्यसदृशोगैरिकोयथा ॥ १३ ॥ वासुक्याद्याष्टयेसर्प्पायथास्थानञ्चतेहरम् ॥ भूषयाञ्चक्रुरुद्रस्यशिरोबाह्वा
दिषुद्रुतम् ॥ १४ ॥ ततोब्रह्माचविष्णुश्चमहादेवःसतीपतिः ॥ सर्व्वैःसुरगणैःसार्द्धञ्जग्मुःप्रालेयपर्व्वतम् ॥ १५ ॥
ततस्तानौषधिप्रस्थान्निःसृत्यनगराद्गिरिः ॥ सर्व्वैरमात्यैःसहितउपतस्थेसुरोत्तमान् ॥ १६ ॥ ततःसम्पूजितास्तेनसुरौघा
गिरिणासह ॥ सचिवैःपौरवर्ग्गैश्चमुमुदुस्तेसुरर्षभाः ॥ १७ ॥ ततोददर्शतत्रैवगिरीन्द्रस्यपुरेहरः ॥ विजयामौषधिप्र
स्थेसखीभिर्ग्गौतमात्मजाम् ॥ १८ ॥ सापिसर्व्वान्सुरवरान्प्रणम्यहरमुख्यकान् ॥ चुक्रोशमातृभगिनीम्पृच्छन्तीगि

रिशेसतीम् ॥ ११ ॥ क्वसतीतेमहादेवशोभसेनतयाविना ॥ विस्मृतापित्वयाताततमद्दोनापसर्प्पति ॥ १२० ॥ ममा
ग्रेसापुराप्राणान्यदात्यजतिकोपतः ॥ तदैवाहंशोकशल्यविद्धानाप्नोमिवैसुखम् ॥ २१ ॥ इत्युक्त्वावदनव्वँस्त्रप्रान्तेना
च्छाद्यसाभृशम्॥ रुदन्तीप्रापतद्भूमौकश्मलञ्चाविशत्तदा ॥ १२२ ॥ ॥ इतिकालिकापुराणेअष्टादशोध्यायः॥ १८ ॥
॥ १८ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ ततस्ताम्पतितान्दृष्ट्वातदादाक्षायणींस्मरन् ॥ नशशाकहरःसोढुंशोकमुद्वेगसम्भवम्
॥ १ ॥ भ्रष्टधैर्य्यस्ततःशम्भुर्ब्बाष्पव्याकुललोचनः ॥ पश्यतांसर्व्वदेवानाञ्चिन्ताध्यानपरोभवत् ॥ अथाश्वास्यत्त
दाधाताविजयांशोककर्षिताम् ॥ २॥ हरमाश्वासयन्सात्वपूर्वमेतदुवाचह ॥ ॥ ब्रह्मोवाच ॥ ॥ पुराणयोगिन्भगवन्नशो
कस्तवयुज्यते ॥ परधाम्नितवध्यानमासीत्कस्मात्स्त्रियामिह ॥ ३ ॥ प्रभविष्णुःपरःशान्तःसूक्ष्मस्थूलतरःसदा ॥ तवस्वभाव
श्चकथंशोकेनबहुधाकृतः ॥ ४ ॥ निरञ्जनन्ध्यानगम्यय्यँतीनान्परात्परन्निर्म्मलंसर्व्वगामि ॥ मलैर्हीनंरागलोभादि
भिर्य्यंत्तत्तेरूपन्त्वद्भुतङ्कृत्बुद्ध्या ॥ ५ ॥ शोकोलोभःक्रोधमोहौचहिंसामानोदम्भोमदमोहप्रमोदाः ॥ ईर्ष्यासूयाऽक्षान्तिरस
त्यताचचतुर्दशज्ञाननाशोहिदोषाः॥६॥ध्यानेनत्वांयोगिनश्चिन्तयन्तित्वंविष्णुरूपीजगतांविधाता ॥ यातेमहामोहकरी
सतीतितवैवसालोकमोहायमाया॥७॥यासर्व्वंलोकाञ्जननेथगर्भेविमोहयन्तीपूर्व्वदेहस्यबुद्धिम्॥विनाश्यबाल्यङ्कुरुतेहिज

न्तोविमोहयत्यद्यसात्वांसशोकम्॥ ८॥ सतीसहस्राणिपुरोज्झितानित्वयामृतानिप्रतिकल्पमेवम् ॥ हितायलोकस्यचराचर
स्यपुनर्ग्गृहीताचतथात्वयास्वम् ॥९॥अवान्तरेध्यानयोगेनपश्यसतीसहस्राणिमृतानियानि॥यथातयात्वम्परिवर्ज्जितश्चय
थास्तिसावावृषराजकेतोः॥१०॥यतःसमुत्पद्यमुहुर्भवन्तंसाप्राप्स्यतीशंत्रिदशैर्दुरापम्॥ पुनश्चजायायादृशीतेभवित्रीतत्त
त्सर्व्वन्ध्यानयोगेनपश्य ११ ॥ ॥मार्कण्डेय उवाच ॥ ॥ एवम्बहुविधम्ब्रह्माव्याहरत्सामशङ्करम्॥गिरिराजपुरात्तस्मा
द्गमयामासनिर्ज्जनम् ॥ १२ ॥ ततोहिमवतःप्रस्थेप्रतीच्यान्तत्पुरस्यच॥सिप्रन्नामसरःपुर्णन्ददृशुर्द्रुहिणादयः ॥ १३॥तद्ध्रदः
स्थानमासाद्यब्रह्मशक्रादयःसुराः॥ उपविष्टायथान्यायम्पुरस्कृत्यमहेश्वरम्॥१४॥तंसिप्रसञ्ज्ञंकासारम्मनोज्ञंसर्वदेहिना
म्॥ शीतामलजलंसर्व्वैर्ग्गुणैर्म्मानससम्मितम् ॥ १५ ॥ दृष्ट्वाक्षणंहरस्तस्मिन्त्सोत्सुकोभूदवेक्षणे ॥ सिप्रान्नामनदीन्तस्मा
न्निःसृतान्दक्षिणोदधिम् ॥ १६ ॥ गच्छन्तीश्चददर्शासौपावयन्तीञ्जगज्जनान् ॥ तत्सरःपूर्ण्णमासाद्यचरतःशकुनान्बहून् ॥
॥१७॥नानादेशागताञ्छम्भुर्व्वीक्षाञ्चक्रेमनोरमान्॥ गम्भीरपवनोद्भूतिसम्पन्नेषुविराजतः ॥१८॥ कोकद्वन्द्वाँस्तरङ्गेषु ददर्श
नृत्यतोयथा ॥ मद्गुचञ्चुपुसम्पृक्ताँस्तरङ्गान्त्सपृथक्पृथक् ॥ १९ ॥ वीक्षाञ्चक्रेयथातोयादुत्पतन्पतगान्मुहुः॥ कादम्बैःसार
सैर्हंसैःश्रेणीभूतैस्तटेतटे ॥२०॥ भङ्गीकृतैर्य्यथाशङ्खैःसागरस्तादृशंसरः ॥ महामीनाहतिक्षुब्धैस्तोयशब्दोत्थसाध्वसैः ॥

॥ २१ ॥ पक्षिभिर्विहितैःशब्दैस्तत्रतत्रमनोहरम् ॥ प्रफुल्लैःपङ्कजैश्चैवक्वचिज्जालैर्म्मनोहरैः ॥ २२ ॥ सरोरेजेयथास्वर्ग्गो
नक्षत्रैस्स्थूलसूक्ष्मकैः ॥ महोत्पलानाम्मध्येषुविरलन्नीलमुत्पलम् ॥२३॥ रेजेनक्षत्रमध्येषुनीलनीरदखण्डवत् ॥ पद्मसङ्घात
मध्यस्थाहंसाःकैश्चिन्नसंस्तुताः ॥ २४ ॥ प्रफुल्लपङ्कजभ्रान्त्यानिश्चलाःस्वर्ग्गवासिभिः ॥ द्विधादृष्ट्वाशोणशुक्लपद्मेफुल्लेवि
धिःस्वके ॥ २५॥ कायेरुणत्वम्फुल्लस्वंस्वासनाब्जेनिनिन्दच ॥ फुल्लम्महोत्पलव्वीक्ष्यसरसस्तस्यशङ्करः ॥ २६ ॥ मौ
लीन्दुकान्तिमलिनंहस्तस्थन्नोत्पलम्ममे ॥ हरिः स्वचक्रसूर्य्यांशुफुल्लंहस्तगताम्बुजम् ॥ २७॥ सरःपद्मञ्चसदृशम्मेनेवी
क्ष्यसमन्ततः॥तत्सरोवीक्ष्यसम्पूर्णन्नानापक्षिसमाकुलम् ॥ २८॥ पद्मिनीशतसञ्छन्नन्नीलोत्पलचयैर्व्वृतम् ॥ देवदारुतरू
णाञ्चतटस्थानाम्प्रसूनजैः ॥२९॥ परागैर्व्वासितजलंहृदयानन्दकारकम् ॥ तीरेतीरेमहावृक्षैः शाद्वलैःपरिवारितम् ॥३० ॥
दृष्ट्वाशम्भुः क्षणन्तत्रसोत्सुकः शोकवर्ज्जितः ॥ सिप्रामालोकयामासनिःसृतांसरसस्ततः ॥ ३१ ॥ यथेन्दुमण्डलाद्गङ्गामे
रोर्ज्जाम्बूनदीयथा॥ तथादृष्टामहेशेनसिप्रासिप्राद्विनिःसृता ॥३२॥ ऋषयऊचुः ॥ सिप्राह्वयःकः कासारःकथंसिप्रातत:सृ
ता॥कीदृशोस्यप्रभावश्चतत्समाचक्ष्वविस्तरात्॥३३॥ ॥ मार्क्कण्डेय उवाच ॥ ॥ शृण्वन्तुमुनयःसर्व्वेयथासिप्रानदीसृता॥ ४४
सिप्रस्यचमहाभागाप्रभावङ्गदतोमम ॥ ३४ ॥ वसिष्ठेनयथादेवीपरिणीतात्वरुन्धती ॥ तदावैवाहिकैस्तोयैः सिप्रासिन्धु

१ पक्षिविशेषैः ।

रभूद्दिजाः ॥ ३५ ॥ सासमागत्यपतितासिप्रेसरसिशासनात् ॥ यथामन्दाकिनीविष्णुपादाद्दब्धौशिवोद्का ॥ ब्रह्म
विष्णुमहादेवैस्तोयंसिक्तंतयोःपुरा ॥ विवाहेशान्तिर्विहितङ्गायत्रीद्रुपदादिभिः ॥ ३७ ॥ एकीभूतन्तुतत्तोयम्मानसाचलक
न्दरात् ॥ तत्सर्व्वम्पतितंसिप्रेकासारेसागरोपमे ॥ ३८॥ देवानामुपभोगार्थम्पुराधात्राविनिर्म्मितम् ॥ सरःसिप्राह्वयंसानौ
प्रालेयस्यगिरेर्म्महत् ॥३९ ॥ तत्राद्यापिसुनासीरः सहितश्चाप्सरोगणैः ॥ शचीसहायोरमतेप्रसन्नेसलिलेशुभे ॥ ४० ॥ त
द्दैवैःसर्व्वदायत्नाद्रक्ष्यतेद्यापिरत्नवत् ॥ नतत्रमानुषंकश्चिद्यातुंशक्नोतियोऽमुनिः ॥४१॥ तपःप्रभावान्मुनयः प्रयान्तिसरसीं
शुभाम् ॥ सिप्राख्यान्तुमहायत्नात्स्नातुम्पातुञ्चतज्जलम् ॥४२॥तत्रस्नात्वाचपीत्वाचमनुष्यादैवयोगतः॥अवश्यँममरत्वाय
गच्छन्त्यविकलेन्द्रियाः ॥ ४३ ॥ वृद्धिङ्गच्छतिवर्षासुसरोनैतद्दिजोत्तमाः ॥ नग्रीष्मेशोषताय्याँतिसर्व्वदातद्यथातथा ॥४४॥
तत्रतत्पतितन्तोयव्वँसिष्टोद्वाहसम्भवम् ॥ ब्रह्मविष्णुमहादेवकरपद्मैरुदीरितम् ॥ ४५ ॥ वव्रधेसिप्रगर्ब्भस्थमन्वहन्द्विज
सत्तमाः ॥ तत्रवृद्धन्तुतत्तोयञ्चक्रेणचहरिःपुरा ॥४६ ॥ गिरेःशृङ्गव्विँनिर्ब्भिद्यलोकानांहितकाम्यया ॥ पृथिवीम्प्रेरयामासकृ
त्वापुण्यतमान्नदीम् ॥ ४७ ॥ परिवृत्यमहेन्द्रंसापुनानास्नानकारिणः ॥ दक्षिणंसागरय्याँतताफलदाजाह्नवीसमा ॥ ४८ ॥
सिप्राख्यात्सरसोयस्मान्निःसृतासामहानदी ॥ अतःसिप्रेतितन्नामपुरैवब्रह्मणाकृतम् ॥ ४९ ॥ कार्तिक्याम्पौर्णमास्यान्तु

तस्यार्घ्यं:स्नातिमानवः ॥ सयातिविष्णुसदनव्विँमानेनातिदीप्यता ॥ ५२ ॥ कार्त्तिकंसकलम्मासंस्नात्वासिप्राजलेनरः ॥
प्रयातिब्रह्मसदनम्पश्चान्मोक्षमवाप्नुयात् ॥ ५२ ॥ ऋषयऊचुः ॥ वसिष्ठेनकथन्देवोपरिणीतात्वरुन्धती ॥ कस्यसात
नयाब्रह्मन्नुत्पन्नावावदस्वनः ॥ ५३ ॥ पतिव्रतासुप्रथितात्रिपुतोकेषुयावरा ॥ भर्तृपादौविनान्यत्रयानचक्षुःप्रवासति ॥
॥ ५४ ॥ यस्याःस्मृत्वाकथामात्रम्माहात्म्यसहितंस्त्रियः ॥ प्रेत्येहचसतीभूयःप्राप्नुवन्त्यन्यजन्मनि ॥ ५५ ॥ असन्न
कालधर्मौयान्नपश्यत्तितथाऽशुचिः ॥ पुरुषःपापकारीचतस्याजन्मवदस्वनः ॥ ५६ ॥ ॥ मार्कण्डेय उवाच ॥ शृ
णुध्वंसायथाजातायस्यवातनयाशुभा ॥ यथावापर्वसिष्ठंसायथाभूतापतिव्रता ॥ ५७ ॥ यासासन्ध्याब्रह्मसुतामनोजाता
पुराभवत् ॥ तपस्तप्त्वातनुन्त्यक्त्वासैवभूतात्वरुन्धती ॥ ५८ ॥ मेधातिथेःसुताभूत्वामुनिश्रेष्ठस्यसासती ॥ ब्रह्मविष्णु
महेशानांवचनाच्चरितव्रता ॥ ५९ ॥ वव्रेपतिम्महात्मानव्वँसिष्ठंसंशितव्रतम् ॥ ॥ ऋषयऊचुः ॥ ॥ कथन्तयातपस्तप्तङ्कि
मर्थङ्कुत्रसन्ध्यया ॥ ६० ॥ कथंशरीरंसात्यक्त्वाभूतामेधातिथेःसुता ॥ कथव्वाँगदितन्देवैर्ब्रह्मविष्णुशिवैःपतिम् ॥ ६१ ॥ 
वसिष्ठंसुमहात्मानंसावव्रेसंशितव्रतम् ॥तन्नःसर्व्वंसमाचक्ष्वविस्तरेणद्विजोत्तम ॥ ६२ ॥ एतन्नःश्रोष्यमाणानाञ्चरितन्द्वि
जसत्तम ॥ अरुन्धत्यामहासत्याःपरङ्कौतुहलम्महत् ॥ ६३ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ब्रह्मापितनयां

सन्ध्यान्दृष्ट्वापूर्व्वमथात्मनः ॥ कामायमानसञ्चक्रेत्यक्तासाचसुतेतिवै ॥ ६४ ॥ तस्याञ्चचलितश्चित्तङ्कामबाणविलो
ड़ितम् ॥ ऋषीणाम्प्रेक्षतान्तेषाम्मानसानाम्महात्मनाम् ॥ ६५ ॥ भर्ग्गस्यवचनंश्रुत्वासोपहासव्विँधिम्प्रति ॥ आ
त्मनश्चलचित्तत्वममर्य्यादमृषीन्प्रति ॥ कामस्यतादृशम्भावम्मुनिमोहकरम्मुहुः ॥ ६६ ॥ दृष्ट्वासन्ध्यास्वयन्तत्रत्रपा
मायातिदुःखिता ॥ ततस्तुब्रह्मणाशप्तेमदनेतदनन्तरम् ॥ ६७ ॥ अन्तर्भूतेविधौशम्भौगतेचापिनिजास्पदे॥अमर्ष
वशमापन्नासन्ध्याध्यानपराभवत् ॥ ६८ ॥ ध्यायन्तीक्षणमेवाशुपूर्व्ववृत्तम्मनस्विनी ॥ इदव्विँममृषेसन्ध्यात
स्मिन्कालेयथोचितम् ॥ ६९ ॥ उत्पन्नमात्राम्मान्दृष्ट्वायुवतीम्मदनेरितः ॥ अकार्षीत्सानुरागोयमभिलाषम्पितामहः
॥ ७० ॥ सर्व्वेषाम्मानसानाञ्चमुनीनाम्भावितात्मनाम् ॥ दृष्ट्वैवमाममर्य्यादंसकाममभवन्मनः ॥ ७१ ॥ ममा
पिमथितश्चित्तम्मदनेनदुरात्मना ॥ येनदृष्ट्वामुनीन्सर्व्वांश्चलितम्मेमनोभृशम् ॥ ७२ ॥ फलमेतस्यपापस्यमदनःस्व
यमाप्तवान् ॥ स्वयंशशापकुपितःशम्भोरग्रेपितामहः ॥ ७३ ॥ ममोचितम्फलंसर्व्वम्प्राप्तुमिच्छामिसाम्प्रतम् ॥ यन्माम्पि
ताभ्रातरश्चसकामामपरोक्षतः ॥ ७४ ॥ दृष्ट्वाचक्रुःस्पृहान्तस्मान्नमतःकोपिपापकृत् ॥ ममापिकामभावोभूदमर्य्यादंस
मीक्ष्यतान् ॥ ७५ ॥ पत्याविवस्वेकेतातेसर्व्वेषुसहजेष्वपि ॥ करिष्याम्यस्यपापस्यप्रायश्चित्तमहंस्वयम् ॥ ७६ ॥ आत्मा

नमग्नौहोष्यामिवेदमार्ग्गानुसारतः॥ किन्त्वेकांस्थापयिष्यामिमर्य्यादामिहभूतले ॥ ७७ ॥ उत्पन्नमात्रानयथासकामाःस्युः
शरीरिणः ॥ एतदर्थमहङ्कृत्वातपःपरमदारुणम् ॥ ७८ ॥ मर्य्यादांस्थापयित्वैवपश्चात्त्यक्ष्यामिजीवितम् ॥ यस्मिञ्छ
रीरेपित्रामेत्यभिलाषःस्वयन्ततः॥ ७९ ॥भ्रातृभिस्तेनकायेनकिञ्चिन्नास्तिप्रयोजनम् ॥ येनस्वेनशरीरेणतातेचसहजेस्वके ॥
॥ ८२ ॥उद्भावितःकामभावोनतत्सुकृतसाधकम् ॥ इतिसञ्चिन्त्यमनसासन्ध्याशैलवरन्ततः ॥ ८३ ॥ जगामचन्द्रभागाख्य
ञ्चन्द्रभागायतःसृता॥तयासशैलःसमधिष्ठितःसदासुवर्णगौर्य्यासुसमप्रभाभृता ॥ ८४ ॥ सोमेनसन्ध्यासमयोदितेनयथो
दयाद्रिर्व्विरराजशश्वत्॥ ८५ ॥इतिकालिकापुराणेऊनविंशतितमोध्यायः ॥ १९ ॥ मार्क्कण्डेयउवाच ॥ ॥अथतत्रगतान्दृष्ट्वा
सन्ध्याङ्गिरिवरम्प्रति ॥ तपसेनियतात्मानम्ब्रह्माप्राहस्वकंसुतम् ॥ १ ॥वसिष्ठंसंशितात्मानंसर्व्वज्ञञ्ज्ञानयोगिनम् ॥ समीपे
सुसमासीनव्वेँदवेदाङ्गपारगम्॥ २ ॥ ब्रह्मोवाच ॥ वसिष्ठगच्छयत्रैषासन्ध्यायातामनस्विनी ॥ तपसेधृतकामासादीक्षस्वै
नाय्यँथाविधि॥ ३ ॥मन्दाक्षमभवत्तस्याःपुरादृष्ट्वेहकामुकान् ॥ युष्मान्माञ्चतथात्मानंसकामान्मुनिसत्तम ॥ ४ ॥ अयुक्तरूपन्त
त्कर्म्मपूर्व्ववृत्तव्विँसृष्यसा॥अस्माकमात्मनश्चापिप्राणान्सन्त्यक्तुमिच्छति ॥ ५ ॥ अमर्य्यादेषुमर्य्यादान्तपसास्थापयिष्य
ति ॥ तपःकर्त्तुङ्गतासाध्वीचन्द्रभागायसाम्प्रतम् ॥ ६ ॥ नभावन्तपसस्तातसातुजानातिकश्चन ॥ तस्माद्यथोपदेशंसाप्राप्नो

१ मन्दाक्षंलज्जा ।

तित्वन्तथाकुरु ॥७॥ इदंरूपम्परित्यज्यरूपान्तरपरम्भवान्॥परिगृह्यान्तिकेतस्यास्तपश्चर्य्यान्निदेशंतु ॥८॥ इदंस्वरूपम्भ
वतोदृष्ट्वापूर्व्वय्यँथात्रपाम्॥ तथाप्राप्यनकिञ्चित्सात्वदग्रेव्याहरिष्यति॥९॥परित्यज्यस्वकंरूपंरूपान्तरधरोभवान् ॥तस्मा
त्सन्ध्याम्महाभागामुपदेष्टुम्प्रगच्छतु ॥ १० ॥ ॥मार्कण्डेयउवाच ॥ तथेत्युक्त्वावसिष्ठोपिवर्णीभूत्वाजटाधरः ॥ तरुणश्च
न्द्रभागाययौसन्ध्यान्तिकम्मुनिः ॥ ११॥ तत्रदेवसरःपूर्णङ्गुणैर्म्मानससम्मितम् ॥ ददर्शसवशिष्ठोथसन्ध्यान्तत्तीरगामि
नीम्॥१२ ॥ तीरस्थयातयारेजेतत्सरःकमलोज्ज्वलम् ॥ उद्यदिन्दुसनक्षत्रम्प्रदोषेगगनय्यँथा॥ १३ ॥तान्तत्रदृष्ट्वाऽथमु
निःसमाभाष्यसकौतुकः ॥ वीक्षाञ्चक्रेसरस्तत्रबृहल्लोहितसञ्ज्ञकम् ॥ १४ ॥ चन्द्रभागानदीतस्मात्कासाराद्दक्षिणाम्बु
धिम् ॥ यान्तीन्निर्भिद्यददृशेतेनसानुगिरेर्म्महत् ॥ १५ ॥ निर्भिद्यपश्चिमंसानुश्चन्द्रभागस्यसानदी ॥ यथाहिमवतो
गङ्गातथागच्छतिसागरम् ॥ १६ ॥ ऋषयऊचुः ॥ चन्द्रभागाकथंसिन्धुस्तत्रोत्पन्नामहागिरौ ॥ कीदृक्सरस्तद्विप्रेन्द्रबृह
ल्लोहितसञ्ज्ञकम् ॥ १७ ॥ कथंसपर्व्वतश्रेष्ठश्चन्द्रभागाह्वयोभवत् ॥ चन्द्रभागाह्वयाकस्मान्नदीजाताद्वृषोदका ॥ १८ ॥
एतन्नःश्रोष्यमाणानाञ्जायतेकौतुकम्महत् ॥ माहात्म्यञ्चन्द्रभागायाःकासारस्यगिरेस्तथा ॥ १९ ॥ ॥ मार्कण्डेयउवाच ॥
श्रूयताञ्चन्द्रभागायाउत्पत्तिर्म्मुनिसत्तमाः ॥ युष्माभिश्चन्द्रभागस्यमाहात्म्यन्नामकारणम् ॥ २० ॥ हिमवद्गिरिसंसक्तःश

१ छान्दसोगुणः।

तयोजनविस्मृतः ॥ योजनत्रिंशदायामकुन्देन्दुधवलोगिरिः ॥ २१ ॥ तस्मिन्गिरौपुरावेधाश्चन्द्रंशुद्धंसुधानिधिम् ॥ वि
भज्यकल्पयामासदेवान्नंसपितामहः ॥ २२ ॥ पित्रर्थञ्चतथातस्यतिथिवृद्धिक्षयात्मकम् ॥ कल्पयामासजगतांहिताय
कमलासनः ॥ २३ ॥ विभक्तश्चन्द्रमास्तस्मिञ्जीमूतेद्विजसत्तमः ॥ अतोदेवाश्चन्द्रभागन्नाम्नाचक्रुःपुरागिरिम् ॥ २४ ॥
॥ ऋषयऊचुः ॥ ॥ यज्ञभागेषुतिष्ठत्सुतथाक्षीरोदजेमृते ॥ किमर्थमकरोच्चन्द्रन्देवार्थङ्कमलासनः ॥ २५ ॥ त
थाकव्येस्थितेकस्मात्पित्रर्थंसमकल्पयत् ॥ तिथिक्षयेतथावृद्धौकथमिन्दुरभूद्गुरो ॥ २६ ॥ एतन्नःसंशयम्ब्रह्मञ्छिन्धिसू
र्य्योयथातमः ॥ नान्योस्तिसंशयस्यास्यछेत्तात्वत्तोद्विजोत्तम ॥ २७ ॥ ॥ मार्कण्डेयउवाच ॥ पुरादक्षःस्वतनयाअश्विन्या
द्यामनोरमाः ॥ षड्विंशतिन्तथैकाञ्चसोमायादात्प्रजापतिः ॥ २८ ॥ समस्तास्तास्ततःसोमउपयेमेयथाविधि ॥ निनायचस्वकं
स्थानन्दक्षस्यानुमतेतदा ॥ २९ ॥ अथचन्द्रःसमस्तासुतासुकन्यासुरागतः ॥ रोहिण्यासार्द्धमवसद्रतोत्सवकलादिभिः ॥
॥ ३० ॥ रोहिणीमेवभजतेरोहिण्यासहमोदते ॥ विनेन्दूरोहिणींशान्तिन्नकाञ्चिल्लभतेपुरा ॥ ३१ ॥ रोहिणीतत्परञ्चन्द्रंव्वीक्ष्य
ताःसर्व्वकन्यकाः ॥ उपचारैर्ब्बहुविधैर्भेजुश्चन्द्रमसम्प्रति ॥ ३२ ॥ निषेव्यमानोनुदिनय्यँदानैदाकरोद्विधुः ॥ तासुभावन्तदा
सर्व्वाअमर्षवशमागताः ॥ ३३ ॥ अथोत्तराफाल्गुनीतिनाम्नायाभरणीतथा ॥ कृत्तिकार्द्रामघाचैवविशाखोत्तरभाद्रपत् ॥ ३४ ॥

तथाज्येष्ठोत्तराषाढेनवैताःकुपिताभृशम्॥ हिमाँशुमुपसङ्गम्यपरिवव्रुःसमन्ततः॥३५॥परिवार्य्यनिशानाथन्ददृशूरोहिणीन्त
तः॥वामाङ्कस्थान्तस्यतेनरममाणांस्वमण्डले॥३६॥ताव्वींक्ष्यतादृशींसर्व्वारोहिणीव्वँरवर्णिनीम्॥जज्वलुश्चातिकोपेनहवि
षेवहुताशनः॥३७॥ततोमघात्रिपूर्व्वाश्चभरणीकृत्तिकातथा॥चन्द्राङ्कस्थाम्महाभागांरोहिणीञ्जगृहुर्हठात् ॥३८॥ऊचुश्चाती
वकुपिताःपरुषंरोहिणीम्प्रति॥जीवन्त्यान्त्वयिदुःप्राज्ञेनास्मान्निन्दुस्तुभावभाक् ॥३९॥ समुपैष्यतिकस्मिँश्चित्समयेसुरतो
त्सुकः॥बव्हीनाङ्क्षेमवृद्ध्यर्थन्त्वांहनिष्यामिदुर्म्मतिम्॥४०॥नत्वांहत्वाभवेत्पापमस्माकमपिकिञ्चन॥प्रजनघ्नीम्बहुस्त्रीणा
मनृतांपापकारिणीम् ॥ ४१ ॥ यस्मिन्नर्थेपुराब्रह्माव्याजहारसुतम्प्रति ॥ ४२ ॥ नीतिशास्त्रोपदेशायतन्नःसंश्रुतमस्तिवै ॥
एकस्ययत्रनिधनेप्रवृत्तेदुष्टकारिणः ॥ ४३ ॥ बहुनाम्भवतिक्षेमन्तस्यपुण्यप्रदोवधः ॥ ॥मार्कण्डेयउवाच ॥ ॥तासान्तादृ
गभिप्रायम्बुध्वादृष्ट्वाचकर्म्मच॥भीताञ्चरोहिणीन्दृष्ट्वाप्रियामतिमनोरमाम्॥आत्मानञ्चापराधश्चतदसम्भोगजम्मुहुः ४४॥
विचिन्त्यरोहिणीम्भीरुन्तासांहस्तादमोचयत्॥मोचयित्वाचबाहुभ्यांसम्परिष्वज्यरोहिणीम्॥४५॥वारयामासताःसर्व्वाः
कृत्तिकाद्याःसभामिनीः॥तदेन्दुव्वाँरयन्तन्ताःकृत्तिकाद्यामघान्तकाः॥साम्यमूचुर्म्मनस्विन्यस्ताव्वींक्ष्यन्त्योऽथरोहिणीम्॥
॥ ४६ ॥ नतेत्रपावाभीतिर्व्वापापत्तोस्मान्निरंस्यतः॥ सञ्जायतेनिशानाथप्राकृतस्येववर्त्ततः ॥ ४७॥ कथमस्मान्निराकृत्य

चारित्रव्रतधारिणीः ॥ सदाभक्तिमतीरेकाम्मूढवत्त्वन्निषेवसे ॥ ४८ ॥ किन्तेनावगतन्धर्म्मव्वेदमूलंश्रुतम्पुरा ॥यद्धर्म्महीन
ङ्कुरुषेकर्म्मसद्भिर्व्विगर्हितम् ॥ ४९॥ धर्म्मशास्त्रार्थगङ्कर्म्मचरन्तीनाय्यथोचितम् ॥ कथमुद्वाहितानान्त्वम्मुखमात्रन्नवीक्षसे
॥५०॥ गदतोयच्छ्रुतम्पूर्व्वन्नारदायपितुर्म्मुखात् ॥ दक्षस्यधर्म्मशास्त्रार्थन्तच्छ्रुणुष्वनिशापते ॥ ५१ ॥ बहुदारःपुमान्यस्तु
रागादेकाम्भजेत्स्त्रियम् ॥ सपापभाक्स्त्रीजितश्चतस्याशौचंसनातनम् ॥ ५२ ॥ यद्दुःखञ्जायतेस्त्रीणांस्वाम्यसम्भोगजव्वि
धो ॥ नतस्यसदृशन्दुःखङ्किञ्चिदन्यत्रविद्यते ॥ ५३ ॥ सतीमृतुमतीञ्जायाय्योनेयात्पुरुषाधमः ॥ ऋतुघस्त्रेषुशुद्धेषुभ्रूण
हासचजायते ॥ ५४ ॥ भार्य्यास्याद्यावदात्रेयीतावत्कालव्विबोधनम् ॥ तस्यास्तुसङ्गमेकिञ्चिद्विहितञ्चापिनाचरेत् ॥
॥ ५५ ॥ बहुभार्य्यस्यभार्य्याणाम्मृतुमैथुननाशनम् ॥ नकिञ्चिद्विद्यतेकर्म्मशास्त्रेणापियदीरितम् ॥ ५६ ॥ तोषयेत्सत
तम्भार्य्याविधिवत्पाणिपीडिताः ॥ तासान्तुष्टयातुकल्याणमकल्याणमतोन्यथा ॥ ५७ ॥ सन्तुष्टोभार्य्ययाभर्त्ताभर्त्राभा
र्य्यातथैवच ॥ यस्मिन्नेतत्कुलेनित्यङ्कल्याणन्तत्रवैध्रुवम् ॥ ५८ ॥ ययाविरुध्यतेस्वामीसौभाग्यमदद्दृप्तया ॥ सपत्नीसङ्गमङ्क
र्त्तुंसास्याद्वेश्याभवान्तरे ५९ ॥ इहापिलोकेवाच्यत्वमधर्म्मञ्चापिविन्दति॥ नपितुश्चकुलंस्वामिकुलन्तस्याःप्रमोदते ॥ ६०॥
विरुद्धयमानेपत्यौयत्सपत्न्यावाप्रवर्त्तते ॥ अतीवदुःखम्भवतितदकल्याणकृत्तयोः ॥ ६१ ॥ ॥ मार्कण्डेयउवाच ॥ ॥इत्थे

१ रजस्वला ।

वम्भाषमाणासुतासुचातीवनिष्ठुरम् ॥ चुकोपचन्द्रमादृष्ट्वामलिनंरोहिणीमुखम् ॥ ६२ ॥ रोहिणीचतदातासामवलोक्या
ग्रताम्मुहुः ॥ नकिञ्चित्सापिप्रोवाचभयशोकत्रपाकुला ॥ ६३ ॥ अथापिकुपितश्चन्द्रस्ताः शशापतदास्त्रियः ॥ यस्मान्म
मपुरञ्चोग्रास्तीक्ष्णावाचःसमीरिताः ॥६४॥भवतीभिश्चातिसृभिर्ल्लोकेस्मिन्कृत्तिकादिभिः ॥ उग्रातीक्ष्णाइतिख्यातिः प्राप्त
व्यात्रिदशेष्वपि॥ ६५ ॥ तस्मादेवव्विधानेननवैताः कृत्तिकादयः ॥ यात्रायान्नोपयुक्ताहिभविष्यध्वन्दिनेदिने ॥ ६६ ॥
युष्मान्पश्यन्तिदेवाद्यामनुष्याद्याश्चयेक्षितौ ॥ यात्रायान्तेनदोषेणतेषाय्यात्रानचेष्टदा ॥ ६७ ॥ अथसर्व्वास्तदाशापन्त
स्यश्रुत्वातिदारुणम् ॥ चद्रस्यहृदयञ्ज्ञात्वाशापाच्चातीवनिष्ठुरम्॥ ६८ ॥ जग्मुःसर्व्वास्तदादक्षभवनम्प्रत्यमर्षिताः ॥ ऊचु
श्चदक्षम्पितरमश्विन्याद्याःसगद्गदम्॥ ६९॥ सोमोवसतिनास्मासुरोहिणीम्भजतेसदा ॥ सेवमानानभजतेसोस्मान्परवधू
रिव ॥७०॥ नावस्थानेनावसानेभोजनेश्रवणेतथा ॥ विनेन्दूरोहिणींशान्तिंल्लभतेनहिकाञ्चन॥७१॥ रोहिण्यावसतस्तस्यस
मीपव्वीक्ष्यतेसुताः॥यान्तीःसोन्यत्रनयनमाधायनहिवीक्षते॥७२॥मास्त्वन्यःस्वामिसद्भावोमुखमात्रंनवीक्षते ॥अस्मिन्व
स्तुनियत्कार्य्यन्तदस्माभिर्न्निगद्यताम् ॥ अस्माभिरेतत्समयेप्यनिरुद्धश्चचन्द्रमाः ॥ ७३ ॥ सतत्कृतेततश्चास्मच्छापन्तीव्र
न्तदाकरोत् ॥ दारुणाश्चातितीक्ष्णाश्चलोकेवाच्यत्वमाप्यच ॥ ७४ ॥ अयात्रिकाभविष्यध्वय्यूयमित्युक्त्वान्विधुः ॥ मार्क्क

ण्डेय उवाच ॥ ॥ श्रुत्वावाक्यंसपुत्रीणान्ताभिः सार्द्धम्प्रजापतिः ॥ ७५ ॥ जगामयत्रसोमोभूद्रोहिण्यासहितस्तदा ॥दूरादे
वविधुर्दृष्ट्वादक्षमायान्तमासनात् ॥ ७६ ॥ उत्तस्थावान्तिकेप्राप्यववन्देचमहामुनिम् ॥ अथदक्षस्तदोवाचकृतासनपरिग्रहः
॥ ७७ सामपूर्वञ्चन्द्रमसङ्कृतसंवन्दनन्तथा ॥ ॥ दक्ष उवाच ॥ ॥ समंवर्तस्वभार्य्यासुवैषम्यत्वम्परित्यज ॥ ७८ ॥ वै
षम्येबहवोदोषाब्रह्मणापरिकीर्त्तिताः ॥ रतिपुत्रफलादारास्तासुकामानुबन्धनात् ॥ ७९ ॥ कामानुबन्धःससर्गात्संसर्गः स
ङ्गमाद्भवेत् ॥ सङ्गमश्चाप्यभिध्यानाद्वीक्षणादभिजायते ॥ ८० ॥ तस्माद्भार्य्यास्वभिध्यानङ्कुरुत्वंवीक्षणादिकम् ॥ यद्ये
वन्नैवकुरुषेमद्वचोधर्मयन्त्रितम् ॥ ८१ ॥ तदालोकवचोदुष्टः पापवांस्त्वम्भविष्यसि ॥ मार्कण्डेय उवाच ॥ ॥ एतच्छ्रु
त्वावचस्तस्यदक्षस्यसुमहात्मनः ॥८२॥एवमस्त्वितिचन्द्रोपिन्यगदद्दक्षशङ्कया॥अथानुमन्त्र्यतनयाश्चन्द्रञ्जामातरन्तथा ॥
॥ ८३ ॥ ययौदक्षोनिजंस्थानङ्कृतकृत्यस्तदामुनिः ॥ गतेदक्षेततश्चन्द्रस्तांसमासाद्यरोहिणीम् ॥ ८४ ॥ जग्राहपूर्ववद्भाव
न्तासुतस्यांचरागतः ॥ तत्रैवरोहिणीम्प्राप्यनकाश्चिदपिवीक्षते ॥ ८५ ॥ रोहिण्यामेववसतेततस्ताःकुपिताःपुनः ॥ गत्वा
ताःपितरम्प्राहुर्दौर्भाग्योद्विग्नमानसाः ॥ ८६ ॥ सोमोवसतिनास्मासुरोहिणीम्भजतेसदा ॥ तवापिनाकरोद्वाक्यन्तस्मा
न्नःशरणम्भव ॥ ८७ ॥ उद्वेगकोपसंयुक्तउत्तस्थौतत्क्षणान्मुनिः ॥ जगाममनसाध्यायन्कर्त्तव्यन्निकटंविधेः ॥ ८८ ॥

१ लोकवचसादुष्टइत्यर्थः ।

उपगम्यतदाप्राहवचश्चन्द्रम्प्रजापतिः ॥ समव्वँर्त्तस्वभार्य्यासुवैषम्यन्त्वम्परित्यज ॥ ८९ ॥ नचेदिदव्वँचोस्माकम्मौ
र्ख्यात्त्वन्नावबुध्यसे ॥ धर्म्मशास्त्रातिगायाहंशप्स्येतुभ्यन्निशापते ॥ ९० ॥ मार्क्कण्डेयउवाच ॥ ॥ ततोदक्षभयाच्चन्द्रस्तत्क
र्त्तुम्प्रतितत्पुरः ॥ अङ्गीचकारातिशयात्कार्य्यमेवम्मुहुस्त्ववि ॥९१ ॥ समम्प्रवर्तनङ्कर्त्तुम्भार्य्यास्वङ्गीकृतेततः ॥ विधु
नाप्रययौदक्षःस्वस्थानञ्चन्द्रसम्मतः ॥ ९२॥ गतेदक्षेनिशानाथोरोहिण्यासहितोभृशम् ॥ रममाणोविसस्मारदक्षस्यवचन
न्तुसः ॥ ९३ ॥ सेवमानाश्चताःसर्व्वाअश्विन्याद्यामनोरमाः ॥ नाभजच्चन्द्रमास्तासुअवज्ञामेवचाकरोत् ॥ ९४ ॥ अ
वज्ञातास्तुताःसर्व्वाश्चन्द्रेणपितुरन्तिकम् ॥ गत्वैवार्तस्वराश्चार्तारुदन्त्यश्चेदमब्रुवन् ॥ ९५ ॥ नाकरोद्वचनंसोमस्तवा
पिमुनिसत्तम॥अवज्ञाङ्कुरुतेस्मासुपूर्व्वतोप्यधिकंसच॥ ९६ ॥ तस्मात्सोमेननःकार्यन्नकिञ्चिदपिविद्यते ॥ तपस्विन्यो
भविष्यामस्तपश्चर्य्यान्निदेशय ॥ ९७ ॥ तपसाशोधितात्मानःपरित्यक्ष्यामजीवितम् ॥ किमस्माकञ्जीवितेनदुर्भगा
नान्द्विजोत्तम॥ ९८ ॥ ॥ मार्क्कण्डेयउवाच ॥ इत्युक्तातास्ततःसर्व्वादक्षजाःकृत्तिकादयः ॥ कपोलमालम्ब्यकरैरुपोप
विविशुःक्षितौ ॥ ९९ ॥ तास्तुदृष्टातथाभूतादुःखव्याकुलितेन्द्रियाः ॥ अतिदीनमुखोदक्षःकोपाज्जज्वालवह्निवत् ॥
॥ १०० ॥ अथकोपपरीतस्यदक्षस्यसुमहात्मनः ॥ निश्चक्रामतदायक्ष्मानासिकाग्राद्विभीषणः ॥ १०१ ॥ दंष्ट्राकराल

वदनःकृष्णाङ्गारसमप्रभः ॥ अतिदीर्घःस्वल्पकेशःकृशोधमनिसन्ततः॥ १०२ ॥ अधोमुखोदण्डहस्तःकाशंविश्रम्यस
न्ततम् ॥ कुर्व्वाणोनिम्ननेत्रश्चयोषासम्भोगलोलुपः॥ १०३ ॥ सचोवाचतदादक्षङ्कस्मिँस्थास्याम्यहम्मुने ॥ किंव्वाचा
हङ्करिष्यामितन्मेवदमहामते॥ १०४ ॥ ततोदक्षस्तुतम्प्राहसोमय्याँतुद्रुतम्भवान् ॥ सोममत्तुभवान्नित्यंसोमेत्वन्तिष्ठस्वे
च्छया ॥१०५॥ ॥ मार्कण्डेय उवाच ॥ ॥ इतिश्रुत्वावचस्तस्यदक्षस्याऽथमहामुने ॥ शनैःशनैस्ततःसोममाससादग
दःसच॥ १०६ ॥आसाद्यसतदासोमव्वँल्मीकम्पन्नगोयथा ॥ प्रविवेशेन्दुहृदयञ्छिद्रम्प्राप्यमहागदः॥ १०७ ॥ तस्मि
न्प्रविष्टेहृदयेदारुणेराजयक्ष्मणि॥मुमोहचन्द्रस्तन्द्राञ्चविषमाम्प्राप्तवाँश्चसः ॥ १०८ ॥ उत्पद्यप्रथमय्यँस्माल्लीनोराजन्य
सौगदः॥ राजयक्ष्मेतिलोकेस्मिन्नस्यख्यातिरभूद्द्विजाः ॥ १०९ ॥ ततस्तेनाभिभूतःसयक्ष्मणारोहिणीपतिः ॥ क्षयञ्जगा
मानुदिनङ्ग्रीष्मेक्षुद्रनदीयथा॥ ११० ॥ अथचन्द्रेक्षीयमाणेसर्व्वौषध्योगताक्षयम् ॥ क्षयय्याँतास्वौषधीषुनयज्ञःसमवर्त्त
त ॥ १११ ॥ यज्ञाभावात्तुदेवानामन्नंसर्व्वङ्क्षयङ्गतम् ॥ पर्ज्जन्याश्चततोनष्टास्ततोवृष्टिर्न्नचाभवत्॥ ११२ ॥ वृष्ट्यभावे
तुलोकानामाहाराःक्षीणताङ्गताः ॥ दुर्भिक्षव्यसनोपेतेसर्व्वलोकेद्विजोत्तमाः ॥ ११३ ॥ दानधर्म्मादिकङ्किञ्चिन्नलोकस्य
प्रवर्तते ॥ सत्त्वहीनाःप्रजाःसर्व्वालोभेनोपहतेन्द्रियाः॥ ११४॥ पापमेवतदाचक्रुःकुकर्म्मरतयश्चताः ॥ एतान्दृष्ट्वातदाभावा

१ विश्रम्य विश्रामं कृत्वा सन्ततं काशं कुर्वाण इत्यन्वयः।

न्दिक्पालाःसपुरन्दराः ॥ ११५ ॥ जग्मुःक्षोभम्परन्देवाः सागराश्चग्रहास्तथा ॥ ततोदृष्ट्वाजगत्सर्व्वंव्याकुलन्दस्युपीडि
तम् ॥ ११६ ॥ ब्रह्माणमगमन्देवाःसर्व्वेशक्रपुरोगमाः ॥उपसङ्गम्यदेवेशंस्रष्टारञ्जगताम्पतिम् ॥ ११७॥ प्रणम्याथय
थायोग्यमुपविष्टास्तदासुराः ॥ तान्म्लानवदनान्सर्व्वान्वीक्ष्यलोकपितामहः ॥ ११८ ॥ अभिभूताम्परेणवहतस्वविष
यानिव ॥ पप्रच्छसम्मुखीकृत्यगुरुमिन्द्रंहुताशनम् ॥ ११९ ॥ ॥ ब्रह्मोवाच ॥ ॥ स्वागतम्भोसुरगणाःकिमर्थय्यूयमाग
ताः॥ दुःखोपहतदेहाँश्चयुष्मान्म्लानाँश्चलक्षये॥ १२० निराबाधान्निरातङ्कान्युष्मान्सर्व्वांश्चकामगान् ॥ कृत्वास्वविषयेन्य
स्तान्कथम्पश्यामिदुःखितान् ॥१२१॥ यद्वोभवद्दुःखबीजय्युष्मान्वायस्तुबाधते ॥ तत्कथ्यतामशेषेणसिद्धञ्चाप्यवधार्य्यता
म् ॥ १२२ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ ततोवृद्धश्रवाजीवःकृष्णवर्त्मोचलोकभृत् ॥ उवाचात्मभुवेतस्मैसुराणान्दुःख
कारणम् ॥१२३॥ शृणुसर्व्वजगत्कर्त्तस्त्वांय्येनवयमागताः॥ यद्वास्माकन्दुःखबीजय्यतोम्लानश्रियोवयम् ॥ १२४ ॥ नक
चित्सम्प्रवर्त्तन्तेयज्ञालोकेपितामह॥निराधारानिरातङ्काःप्रजाःसर्व्वाःक्षयङ्गताः॥१२५॥नचदानादिधर्म्मश्चनतपांसिक्षितौ
क्वचित् ॥ नैववर्षतिपर्ज्जन्यः क्षीणतोयाभवत्क्षितिः ॥ १२६ ॥ क्षीणाः सर्व्वास्तथोषध्यः सस्यालोकाः समाकुलाः ॥ दस्यु
भिः पिडिताविप्रावेदवादन्नकुर्व्वते ॥ १२७॥ अन्नवैकल्यमासाद्यम्रियन्तेबहवः प्रजाः॥ क्षीणेषुयज्ञभागेषुभोग्यहीनास्त

थावयम् ॥ १२८ ॥ दुर्ब्बलास्तुश्रियाहीनानैवशान्तिल्लँभामहे ॥ रोहिण्यामन्दिरेचन्द्रोवक्रगत्याचिरंस्थितः ॥१२९॥ वृष
राशौसचक्षीणोज्योत्स्नाहीनश्चवर्त्तते ॥ यदैवान्विष्यतेदेवैश्चन्द्रोनैषाम्पुरःसरः ॥ १३० ॥ कदाचिदपिदेवानांसमाजेवा
भवद्विधे ॥ कदाचिद्रोहिणीन्त्यक्त्वानैचक्कचनगच्छति ॥ १३१ ॥ यद्यन्यःकोपिनभवेत्तदाचन्द्रोबहिर्भवेत् ॥ दृश्यतेसकलाही
नः कलामात्रावशेषकः ॥ १३२ ॥ इतिसर्व्वत्रलोकेशवृत्तःकर्म्मविपर्य्ययः ॥ तन्दृष्ट्वाकान्दिशीकास्तुवयन्त्वांशरणङ्गताः ॥
१३३ ॥ पातालाद्यावदुत्थायकालकञ्जादयोऽसुराः ॥ नास्माँल्लोकेशबाधन्तेतावन्नस्त्राहिसाध्वसात् ॥१३४॥ अयम्प्रवर्त्ततेक
स्माज्जगताँव्वाँव्यतिक्रमः ॥ नजानीमस्तुतत्सर्व्वंव्विँप्लवेवापिकारणम् ॥१३५॥ ॥ मार्कण्डेय उवाच ॥ ॥ एतत्सुराणा
व्वँचनन्दिव्यदर्शीपितामहः ॥ श्रुत्वाक्षणमभिध्यायत्रिजगादसुरोत्तमान् ॥ १३६ ॥ ब्रह्मोवाच ॥ शृण्वन्तुदेवताः सर्व्वायद
र्थल्लँोकविप्लवः ॥ प्रवर्त्ततेऽधुनायेनशान्तिस्तस्यभविष्यति ॥ १३७॥ सोमोदाक्षायणीः कन्याः सप्तविंशतिसङ्ख्य ॥ अ
श्विन्याद्यावरवधूर्भार्य्यार्थेपरिणीतवान् ॥ १३८ ॥ परिणीयसताः सर्व्वारोहिण्यांसततंव्वृ्यु॒ः ॥ प्रावर्त्ततानुरागेणनस
मस्तासुवर्त्तते ॥ १३९ ॥ अश्विन्याद्यास्तुताःसर्व्वादौर्भाग्यज्वरपीडिताः ॥ षड्विंशतिर्व्वरारोहाःपितरम्प्रास्थिताःस्वकम्
॥ १४० ॥ प्रवर्त्ततेनिशानाथोरोहिण्यांरागतोयथा ॥तथानतासुभजतेतद्दक्षायन्यवेदयन् ॥१४१ ॥ ततोदक्षोमहाबुद्धिःसाम्ना

सँस्तूयविट्पतिम्॥बहुसूनृतमाभाष्यपुत्र्यर्थँचान्वशोधत॥१४२॥अनुरुद्धोयथाकामन्दक्षेणसुमहात्मना॥ समम्प्रवर्त्तितुंता
सुसमयञ्चतत्रान्विधुः॥ १४३॥ सममङ्गीकृतेभावन्तासुकर्त्तुंहिमांशुना॥स्वञ्जगामततस्थानन्दक्षोपिमुनिसत्तमः॥१४४॥
गतेदक्षेमुनिश्रेष्ठेवैषम्यन्तासुचन्द्रमाः ॥ जहौनभावन्ताःशश्वत्कुपिताःपितरङ्गताः ॥ १४५॥ ततोदक्षःपुनश्चन्द्रमवरु
द्ध्यसुतान्तरे ॥ समांव्वृत्तिम्प्रतिश्राव्यवचनञ्चेदमब्रवीत् ॥ १४६ ॥ नसमव्वँर्त्ततेचन्द्रसर्व्वास्वासुभवान्यदि ॥ तदा
शप्स्येत्वहन्तुभ्यन्तस्मात्कुरुसमञ्जसम् ॥ १४७॥ततोगतेपुनर्दक्षेनसमव्वँर्त्ततेयदा॥ तासुचन्द्रस्तदादक्षम्पुनर्ग्गत्वाब्रुव
न्नृषा ॥ १४८ ॥ नतेवचःसत्कुरुतेनैवास्मासुप्रवर्त्तते ॥ वयन्तपश्चरिष्यामःस्थास्यामश्चतवान्तिके ॥ १४९ ॥ ता
सामितिवचःश्रुत्वाकुपितःसमहामुनिः ॥ क्षयायचन्द्रस्यपुनःशापायोत्सुकताङ्गतः ॥ १५० ॥ शापायोद्युक्तमनसः
कुपितस्यमहामुनेः ॥ क्षयोनाममहारोगोनासिकाग्राद्विनिर्गतः ॥ १५१ ॥ प्रेषितःसचचन्द्रायदक्षेणमुनिनाततः॥प्रवि
ष्टवाँस्तस्यदेहेक्षयितस्तेनचन्द्रमाः ॥ १५२ ॥ क्षीणेचन्द्रेक्षयय्याँताज्योत्स्नास्तस्यमहात्मनः ॥ क्षीणासुसर्व्वज्यो
त्स्नासुसर्व्वौषध्यःक्षयङ्गताः॥ १५३ ॥ औषध्यभावाल्लोकेस्मिन्नयज्ञःसम्प्रवर्त्तते ॥ यज्ञाभावादनावृष्टिस्ततःसर्व्वप्रजा
क्षयः॥ १५४॥यज्ञभागोपभोगेनहीनानाम्भवतान्तथा॥दुर्ब्बलत्वंसमुत्पन्नव्विँकारश्चस्वगोचरे॥ १५५॥इतिवःकथितंसर्व्व

र्य्यथाभूल्लोकविप्लवः ॥ येनोपायेनतच्छान्तिस्तच्छृण्वन्तुसुरोत्तमाः ॥१५६॥ इतिकालिकापुराणेविंशतितमोध्यायः॥२०॥
॥ ब्रह्मोवाच ॥ गच्छन्तुभोःसुरगणादक्षस्यसदनम्प्रति ॥ तम्प्रसादायचन्द्रार्थैसचपूर्णोभवेद्यथा ॥ १ ॥ पूर्णेचन्द्रेज
गत्सर्व्वम्प्रकृतिस्थम्भविष्यति ॥ युष्माकञ्चभवेच्छान्तिरोषधीनाञ्चसम्भवः ॥ २ ॥ ॥मार्कण्डेयउवाच॥ ॥ इतिब्रह्म
वचःश्रुत्वादेवाःशक्रपुरोगमाः ॥ प्रययुर्हृष्टमनसस्तदादक्षनिवेशनम् ॥ ३ ॥ यथान्यायमुपस्थायसर्व्वेमुनिवरंसुराः॥
प्रोचुःप्रजापतिन्दक्षम्प्रणम्यश्लक्ष्णयागिरा ॥ ४ ॥ देवाऊचुः ॥प्रसीदसीदताम्ब्रह्मन्नस्माकम्बहुदुःखिनाम्॥ उद्धरस्व
महाबुद्धेत्राहिनःशोकसागरात् ॥ ५ ॥ यद्रूपम्ब्रह्मसंज्ञन्तुसृष्टिकृत्परमात्मनः ॥ तदंशस्त्वम्परञ्ज्योतिर्व्विप्ररूपनमोस्तु
ते ॥ ६ ॥ रक्षणात्सर्वजगताम्प्रजापालनकारणात् ॥ दक्षःप्रजापतिश्चेतियोगेयस्तन्नुमोवयम् ॥ ७॥ दक्षायसर्व्वजग
तान्दक्षायकुशलात्मनाम् ॥ दक्षायात्महितायाशुनमस्तुभ्यम्महात्मने ॥ ८ ॥ सततञ्चिन्त्यमानस्ययोगिभिर्न्नियतेन्द्रि
यैः ॥ सारस्यसारभूतस्त्वन्दक्षायपरमात्मने ॥ ९ ॥ योगिवृत्तिरनाधृष्यःपारगाणाम्परायणः ॥ आद्यन्तमुक्तःसहसा
तस्मैतुभ्यन्नमोनमः॥ १० ॥ इतितेषाव्वँचःश्रुत्वादक्षोयज्ञभुजान्तथा ॥ प्राहप्रसन्नवदनःशक्रमाभाष्यमुख्यतः ॥ ११ ॥
दक्षउवाच ॥ कुतःशक्रमहाबाहोभवतान्दुःखमागतम् ॥ दुःखहेतुव्वँदविभोश्रोतुमिच्छाम्यहन्तुतम्॥ १२ ॥ ममास्ति

वाकिङ्कर्त्तव्यम्भवतान्दुःखहानये ॥ तदहर्व्यंदिशक्कोमिकरिष्यामिहितंसमम् ॥ १३ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ त
च्छ्रुत्वावचनन्तस्यब्रह्मसूनोर्म्महात्मनः ॥ जगादवाक्पतिःशक्रोत्रीतिहोत्रोऽथतम्मुनिम् ॥ १४ ॥ तऊचुः ॥ क्षयञ्जातो
निशानाथस्तस्मिन्क्षीणेक्षयङ्गताः ॥ सर्व्वौषध्योद्विजश्रेष्ठतद्वानिर्य्यज्ञहानिकृत् ॥ १५ ॥ यज्ञेविनष्टेसकलाःप्रजाःक्षुद्भय
कातराः ॥ वृष्ट्यभावान्महद्दुःखम्प्राप्यनष्टाश्चकाश्चन ॥ १६ ॥ क्षयोयंरात्रिनाथस्ययस्तेकोपात्प्रवर्त्तते ॥ ससर्व्वंज
गतोब्रह्मन्नभावार्थमुपस्थितः ॥ १७ ॥ नाधुनातत्त्रिभुवनेयन्नक्षुब्धन्नुकिञ्चन ॥ विप्लुतर्व्वास्तिविप्रेन्द्रस्थावराःपतगाश्च
वा ॥ १८ ॥ नयज्ञाःसम्प्रवर्त्तन्तेनतपस्यन्तितापसाः ॥ आहारदुःखान्निश्रीकाःप्रजाक्षीणाभयातुराः ॥ १९ ॥ एवम्प्र
वृत्तेविप्रेन्द्रविप्लवेस्माद्रसातलात् ॥ दैत्यानयावदुत्थायबाधन्तेतावदुद्धर ॥ २० ॥ प्रसीददक्षचन्द्रस्यतम्पूरयतपोबलात्
॥ २१ ॥ पूर्णेचन्द्रेजगत्सर्व्वम्प्रकृतिस्थम्भविष्यति ॥ ॥ मार्कण्डेय उवाच ॥ ॥ इतितेषाँव्वचःश्रुत्वाप्रजापतिसु
तस्तदा ॥ २२ ॥ उवाचतान्सुरगणान्हृदयाच्छल्यमुद्धरन् ॥ ॥ दक्ष उवाच ॥ ॥ यन्मेवचोनिशानाथेप्रवृत्तंशापकारणम्
॥ २३ ॥ नकेनापिनिदानेनमिथ्याकर्तुन्तदुत्सहे ॥ किन्तुमद्वचनंय्यस्मान्नैकान्तेनमृषाभवेत् ॥ २४ ॥ चन्द्रोपिवर्द्धतेयस्मा
त्तदुपायमुदैक्षत ॥ तत्राप्ययमुपायोस्तिमासार्द्धर्य्यातुचन्द्रमाः ॥ २५ ॥ क्षयर्व्वृद्धिश्चमासार्द्धंसमम्भार्य्यासुवर्ततताम् ॥

तस्यतद्वचनंश्रुत्वातम्प्रसाद्यप्रजापतिम् ॥ २६ ॥ सर्व्वैसुरगणास्तत्रगतायत्रास्तिचन्द्रमाः ॥ एवमुक्तेतुवचनेदक्षेणमु
निनाद्विजाः॥ २७ ॥ अथचन्द्रंसमादायभार्य्याभिः सहितन्तदा ॥ जग्मुस्तेब्रह्मभवनम्मुदिताः सुरसत्तमाःतत्रगत्वा
महाभागायथादक्षेणभाषितम् ॥ २८ ॥ तत्सर्व्वङ्कथयामासुर्ब्रह्मणेपरमात्मने ॥ ब्रह्मादक्षवचःश्रुत्वादेवानाँव्वदनात्त
दा ॥ चन्द्रमागम्महाशैलञ्जगामसहितःसुरैः ॥ २९ ॥ तत्रगत्वासुरश्रेष्ठःप्रजानांहितकाम्यया ॥ स्नापयामासश्रुभ्रा
शुम्बृहल्लोहितपुष्करे ॥ भूतभव्यभवज्ज्ञानःपूर्व्वमेवपितामहः ॥ ३० ॥ एतदर्थञ्चकारात्रसरःपूर्णञ्जगद्गुरुः ॥ तत्र
स्नातस्यजन्तोस्तुनीरोगत्वम्प्रजायते॥ चिरायुष्ट्वञ्चसततम्बृहल्लोहितसञ्ज्ञके ॥ ३१ ॥ तत्रस्नातस्यचन्द्रस्यशरीरात्तत्क्ष
णङ्गदः ॥ राजयक्ष्मानिःससारपूर्व्वरूपोयथोदितः ॥ ३२ ॥ निःसृत्यराजयक्ष्मापिब्रह्माणञ्चजगत्पतिम् ॥ प्रणम्याहङ्किङ्क
रिष्येक्कगच्छामीत्युवाचतम् ॥ ३३ ॥ स्थानम्पत्नीञ्चलोकेशकृत्यम्ममसनातनम् ॥ निर्देशयानुरूपम्मेस्रष्टात्त्वञ्जगताँय्यतः
॥ ३४ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ ततोब्रह्मापितम्पृष्टन्निरीक्ष्येन्दुशरीरगैः ॥ अमृतैस्तेनातिभुक्तैःक्षीणञ्चापिनिशापति
म् ॥ ३५ ॥ दोर्भिःस्वयन्तङ्गृहीत्वागिरौनिष्पिष्यवैमुहुः॥अमृतङ्गालयामासशरीराद्राजयक्ष्मणः ॥ ३६ ॥ अमृतानिचया
न्याशुगालितानितदाजले॥ क्षीरोदस्यसचिक्षेपमध्येरहासिलोकभृत्॥ ३७ ॥ तस्मादस्यामृतादिन्दोःकलाक्षीणास्तुयाः

पुरा ॥ तासाञ्जग्राहलवशश्चूर्णान्क्षीरोदसागरात्॥ ३८ ॥ कलामात्रावशेषस्यसंसर्गाद्राजक्ष्मणः ॥ क्षीणाःकलाःपञ्चदश
याःपूर्व्वममृतात्मिकाः ॥ ३९ ॥ ताराजयक्ष्मगर्भस्थाश्चूर्णीभूतास्तुपीडया॥ तेजोज्योत्स्नासुधाभिस्तुनिबद्धय्यँत्कलापतेः
॥ ४० ॥ शरीरन्तत्त्रिधाभूतङ्गर्भस्थंराजयक्ष्मणः ॥ ज्योतिश्चूर्णमभूज्ज्योत्स्नालीनाराजादियक्ष्मणि ॥ ४१ ॥ द्रवीभूताःसु
धासर्व्वाःगर्भेरोगस्यचस्थिताः ॥ यदानिर्ग्गालयामाससुधाम्ब्रह्मागलान्तरात् ॥४२ ॥तदाज्योत्स्नासुधाज्योतिःसर्व्वन्त
स्माद्बहिर्ग्गतम् ॥ क्षीरोदसागरेक्षिप्तन्तत्सर्व्वंर्व्वेधिनातदा॥ ४४ ॥देवान्गिरौपरित्यज्यस्वयङ्गत्वाद्रुतन्ततः॥ ततोमृतानि
प्रक्षाल्यकलाचूर्णानिवारिभिः॥४५॥ज्योत्स्नाञ्चाप्याजगामाशुगृहीत्वातत्रयद्गिरिम्॥ क्षीरोदाद्गिरिमासाद्यचन्द्रभागन्तदा
विधिः॥४६॥देवमध्येकलाचूर्णसुधाज्योत्स्नान्यवीविशत्॥संस्थाप्यतत्रयम्ब्रह्मादेवानाम्मध्यतस्थितः ॥ ४७॥ जगादराजय
क्ष्माणन्तस्थानादिनिदेशयत्॥ ॥ब्रह्मोवाच॥ ॥सर्व्वदायोदिवारात्रौसन्ध्यायव्वँनितारतः॥४८॥सेवतेसुरतन्तस्मिन्राजयक्ष्म
न्वसिष्यसि ॥ प्रतिश्यायश्वासकाससंयुक्तोमैथुनञ्चरेत् ॥ ४९ ॥ सतेप्रवेश्यः सततंश्लेष्मणश्चतथाविधः ॥ कृष्णाख्यामृ
त्युपुत्रीयाभवतःसदृशीगुणैः ॥ ५० ॥ सातेस्तुभार्य्यासततम्भवन्तमनुयास्यति ॥ क्षीणत्वम्भवतः कृत्यन्ततस्त्व
व्विँषयङ्कुरु ॥ ५१ ॥ द्रुतङ्गच्छयथाकामञ्चन्द्रात्त्वव्विँमुखोभव ॥ ॥ मार्कण्डेय उवाच ॥ ॥ एवव्विँसृष्टोविधिनाराज

यक्ष्मामहागदः ॥ ५२ ॥ पश्यतांसर्व्वदेवानामन्तर्द्धानञ्जगामह ॥ अन्तर्हितेमहारोगेब्रह्मालोकपितामहः॥ ५३ ॥ चन्द्रंस
मग्रदामासकलापञ्चदशौधिनम् ॥ तेनक्षीरोदधौतेनसुधापूर्णेनचाप्लुतः ॥ ५४ ॥ सज्योत्स्नैस्तुकलाचूर्णैः पूर्व्ववच्चाकरो
द्विधुम् ॥ सपोडशकलापूर्णः पूर्व्ववद्विबभौयदा ॥ ५५ ॥ चन्द्रस्तदासर्व्वदेवामुमुदुस्तस्यदर्शनात् ॥ अथचन्द्र
स्तदापूर्णः प्रणिपत्यपितामहम् ॥ ५६ ॥ उवाचेदंसुरसदोमध्यगोनातिहर्षितः॥ ॥ सोमउवाच ॥ ॥ नस्थामपूर्व्व
वद्ब्रह्मञ्छरीरेममवर्त्तते ॥ ५८ ॥ नवीर्य्यञ्चतथोत्साहोनिपीदन्त्यङ्गसन्धयः ॥ नोत्सहेत्पूर्व्ववच्चेष्टांविधातुंसुतरामहम् ॥
५९ ॥ चेष्टाहीनस्त्वनुदिनञ्चैवयङ्गनलोककृत् ॥ ॥ ब्रह्मोवाच ॥ ॥ ग्रस्तस्ययक्ष्मणासोमयदभूदङ्गसन्धयः ॥ ६० ॥ पू
र्व्वंविशीर्णाभवतस्तत्पूर्णमभवन्नहो ॥ अधुनाभवतोदेहचूर्णन्निःसारितम्मया ॥ ६१ ॥ शरीरात्साम्प्रतज्योत्स्नामञ्जसाराज
यक्ष्मणः ॥ तेपाम्प्रक्षालनविधौलवशोयत्स्थितञ्जले ॥ ६३ ॥ ज्योत्स्नायाश्चसुधायाश्चतेनहीनोभवान्यतः ॥ ततोङ्गस
न्धयोराजँस्तवसीदन्तिसाम्प्रतम् ॥ ६३ ॥ तस्योपायंविधास्यामियथानातिल्लभेद्भवान् ॥ प्राजापत्यःपुरोडाशोहवनीयः
पुरोध्वरे ॥ ६४ ॥ ऐन्द्रस्ततोनुचाग्नेयःप्रदेयःसर्व्वतः क्रतौ ॥ ततोनुभवतोभागः पुरोडाशोमयाकृतः ॥ ६५ ॥ तेनभागेनभुक्तेन
नित्यय्यँज्ञकृतेनहि ॥ पूर्व्ववत्तेसमुत्साहः स्यामवीर्य्यम्भविष्यति ॥ ६६ ॥ याश्चामृतकणास्तोयेक्षीरोदस्यस्थितास्तव ॥ श

१ स्याम बलम्। २ ग्रस्तस्योति हे सोमयक्ष्मणाग्रस्तस्य भवतः अंगसन्धयः पूर्व्वंयं विशीर्णा अभवन् तत्पूर्णत्वाभूदित्यर्थः।

रीरचूर्णंव्वाँयत्तेज्योत्स्नानाम्नापियेलवाः ॥ ६७ ॥ तत्सर्व्वम्भवतोज्योत्स्नायोगादनुदिनव्विँधो ॥ वृद्धिय्याँस्यतिसततङ्
क्षीरसागरगर्ब्भगम् ॥ ६८ ॥ स्वारोचिषेन्तरेप्राप्तेद्वितीयेशङ्करांशजः ॥ दुर्व्वासाभविताविप्रः प्रचण्डश्चण्डभानुवत् ॥ ६९ ॥
सदेवेन्द्रस्याविनयाच्छापन्दत्वासुदारुणम् ॥ करिष्यतित्रिभुवनन्निःश्रीकंससुराऽसुरम् ॥ ७० ॥ श्रियाहीनेततोलोकेभवि
तालोकविप्लवः ॥ यथातवक्षयात्सोमप्रवृत्तःसर्व्वविप्लवः ॥ ७१ ॥ तन्मानुषप्रमाणेनतृतीयेतुकृतेयुगे ॥ भविष्यतिस्थास्य
तिचयावद्युगचतुष्टयम् ॥ ७२ ॥ ततश्चतुर्थेसम्प्राप्तेसहदेवैः कृतेयुगे ॥ क्षीरोदन्निर्म्मथिष्यामः शम्भुर्व्विष्णुरहन्तथा ॥ ७३ ॥
मन्थानम्मन्दरङ्कृत्वावेत्रङ्कृत्वातुवासुकिम् ॥ यज्ञभागेषुहीनेषुदेवानामर्थव्वैयन्ततः ॥ ७४ ॥ मथिष्यामःसमन्देवैःक्षीरोदंस
हदानवैः ॥ त्वच्छरीरामृतमिदं[illegible]यतङ्क्षीरसागरे ॥ ७५ ॥ तत्प्रमथ्यग्रहीष्यामोराशीभूतन्तथाक्षयम् ॥ सर्व्वौषध्यन्त
रेकृत्वातच्छरीरन्तदावयम् ॥ क्षेप्स्यामः सागरजलेशरीरार्थव्विँधोतव ॥ निर्म्मथ्यसागरम्पश्चात्समुद्धार्य्ययदामृतम् ॥
७७ ॥ तदातववपुस्तस्मिन्पूर्व्वंवत्सम्भविष्यति ॥ ओजोवीर्य्याद्भुतङ्कान्तमक्षयञ्चसुधात्मकम् ॥ ७८ ॥ दृढङ्गसन्धिकञ्चा
रुभविष्यतिवपुस्तव ॥ ॥ मार्कण्डेय उवाच ॥ ॥ सुधांशुमेवमाभाष्यब्रह्मालोकपितामहः ॥ ७९ ॥ विधोःक्षयप्रमासा
र्द्धंव्वृँद्धयेयत्नवानभूत् ॥ यथादक्षेणगदितम्मासार्द्धय्याँतुचन्द्रमाः ॥ ८० ॥ क्षयव्वृँद्धिञ्चमासार्द्धय्यँत्नन्तत्राकरोद्विधिः ॥ततः

षोडशधाचन्द्रंसुरज्येष्ठोविभक्तवान् ॥ ८१ ॥ विभज्यचसुरान्सर्व्वान्समुवाचदमुत्तमम् ॥ कलाःषोडशचन्द्रस्यतत्रैका
शम्भुमूर्द्धनि ॥ ८२ ॥ तिष्ठत्ववद्यावधिपराक्षयर्य्यांन्तुक्षयव्विना ॥ क्षयेणयदिरोगेणमासार्द्धन्दक्षवाक्यतः ॥ ८३ ॥
क्षयायपीड्यतेचन्द्रोनोपशान्तिस्तदाभवेत् ॥ किन्त्वस्ययाकलाशम्भोज्योत्स्नागच्छन्तुताम्प्रति ॥ ८४ ॥ चतुर्द्दशकलासं
स्थाःप्रतिमासंसुरोत्तमाः ॥ चतुर्द्दशकलासंस्थान्यमृतानिपिबन्तुवै ॥ ८५ ॥ प्रतिपत्तिथिमारभ्यभवन्तस्ताश्चतुर्द्दशीम् ॥
तेजोभागाःसूर्य्यबिम्बञ्चतुर्द्दशतिथौक्रमात् ॥ ८६ ॥ प्रविशन्तुक्षयन्त्वेवकृष्णपक्षेविधोर्भवेत् ॥ यातुशेषाकलादर्शेहरित्प
त्रेपलायिता ॥ ८७ ॥ तिष्ठतुप्रथमेभागेतिथौतस्यान्निशापतेः ॥ द्वितीयेदर्शभागेतुरोहिण्यायातुमन्दिरम् ॥ ८८ ॥
तृतीयेतुसरस्वत्यांस्नात्वासमुत्थितोविधुः ॥ चतुर्थेबलसम्पूर्णस्तिथिभागोविभावसोः ॥ ८९ ॥ मण्डलय्यांतुचन्द्रोयंस
बिम्बरथघोटकः ॥ यावत्कालेनहिकलाप्रथमाक्षयमाप्नुयात् ॥ ९० ॥ एवमेवकृष्णपक्षेतावत्साप्रतिपद्भवेत् ॥ द्वितीया
दौकृष्णपक्षेवृद्धिह्रासस्तथाविधः ॥ ९१ ॥ तिथीनाव्वृद्धिहेतुश्चशुक्लकृष्णेतथाभवेत्॥ततःपुनःशुक्लपक्षेयावत्पूर्व्वकलोदिता
॥ ९२ ॥ वृद्धिर्न्नेतिभुवेतावत्प्रतिपत्तिथिरादितः ॥ ततोद्वितीयभागस्ययाज्योत्स्नाहरमूर्द्धनि ॥ ९३ ॥ स्थितायाव्वैकला
यान्तुगतासापुनरेष्यति ॥ युष्माभिस्तुभवेत्पेयममृतय्यंदिनेदिने ॥ ९४ ॥ तद्द्वितीयादितिथिभिःपूर्णान्ताभिःसदैवहि॥

स्वयमुत्पत्स्यतेचन्द्रोज्योत्स्नायोगात्सुरोत्तमाः ॥ ९५ ॥ यथादिनेदिनेभागाःक्षयय्याँन्तितथाविधोः ॥ वृद्धिङ्गच्छन्त्यनु
दिनंशुक्लपक्षेन्वहंसुराः ॥ ९६ ॥ तेजोभागःसूर्य्यबिम्बात्पुनरेवसमेष्यति ॥ प्रयास्यतिकृष्णपक्षेयथाभागक्रमन्तथा ॥
॥ ९७ ॥ ज्योत्स्नाहरशिरश्चन्द्रात्प्रत्यहम्पुनरेष्यति ॥ तेजोभागःसूर्य्यबिम्बादमृतम्वर्षतिस्वयम् ॥ ९८ ॥ एवँव्वृद्धिःशु
क्लपक्षे सुधांशोसम्भविष्यति ॥ पक्षयोःशुक्लकृष्णत्वञ्चन्द्रवृद्धिक्षयाद्भवेत् ॥ ९९ ॥ यावत्कालेनयोभागःक्षयँव्वृद्धिञ्च
यास्यति ॥ तावत्कालमभिव्याप्यतिथिःस्थास्यतिसापुनः ॥ १०० ॥ चिरेणवृद्धिर्य्यदिवाक्षयोवाद्रुतेनवृद्धिर्य्यदिवाक्षयो
वा ॥ द्रुतात्तिथीनान्तुसदाक्षयःस्याच्चिरस्तुवृद्धिस्तिथिषुप्रवेशे ॥ १०१ ॥ हव्यङ्कव्यञ्चचन्द्रेणविनानसम्भविष्यति ॥ त
स्मात्तयोःप्रवृध्यर्थञ्चन्द्रंरक्षन्तुदेवताः ॥ १०२ ॥ आश्वासनीयःशुभ्रांशुःकलाशेषोनुमासतः ॥ अमावास्यापराह्णेतुपि
तृभीरोहिणीगृहे ॥ १०३ ॥ तस्यैवास्वादनात्कव्यँव्वृद्धय्याँस्यतिचान्वहम् ॥ तेनकव्येनपितरस्तृप्तिय्याँस्यन्तिवैपराम्
॥ १०४ ॥ ॥ मार्क्कण्डेयउवाच ॥ ततःसुरगणाःसर्व्वेयथोक्तव्विँधिनातथा ॥ चक्रुर्ल्लोकहितार्थायचन्द्रस्यक्षयवृद्धये ॥
॥ १०५ ॥ महादेवोपिचन्द्रार्द्धंस्वरूपम्परमात्मनः ॥ जग्राहदैवोव्विधिनाशिरसाक्षुधितोभृशम् ॥ १०६ ॥ यत्तेजःपरम
न्नित्यमजमव्ययमक्षयम् ॥ तत्स्वरूपाचन्द्रकलाशापतस्तुक्षयङ्गता ॥ १०७ ॥ प्रविशन्तियदाज्योतिरानन्दमजरम्परम् ॥

योगिनस्तुतदातेषाञ्चिन्तनल्लीनमेष्यति॥ १०८॥महादेवशिरःसंस्थेलीनोवित्तेसुधानिधौ॥ चन्द्रद्वाराभवेन्मुक्तिरित्येवव्वैदि
कीश्रुतिः ॥ १०९ ॥ एतज्ज्ञात्वामहादेवःक्षयवृद्ध्याविनाकृतम् ॥ हितायसर्व्वलोकानाञ्जग्राहशिरसाविधुम् ॥ ११० ॥
चन्द्रज्योत्स्नासमायोगादोषध्योयान्तिवृद्धये ॥ सर्व्वौषधीसुवृद्धासुप्रवर्त्तन्तेततोध्वराः ॥ १११ ॥ अध्वरेषुप्रवृत्तेषुस्वान्स्वा
न्भागाँस्तुदेवताः ॥ परिगृह्णन्तिपितरस्तथाकव्यानिभूरिशः ॥ ११२ ॥ अमृतम्ब्रह्मणासृष्टय्यँद्देवेभ्यःपुरातनम् ॥ ते
नतृप्यन्तिहीनायेहव्यभागेनदेवताः ॥ ११३ ॥ यज्ञेनाप्यायितन्तच्चज्योत्स्नाभिर्व्वृद्धिमेतिवै॥ यज्ञजोत्स्नाविनाभूतन्त
च्चस्यात्क्षीणमन्यथा ॥ ११४ ॥ अतोमृतस्ययज्ञस्यचन्द्रमाःकारणंस्वयम् ॥ अतोदक्षस्यशापात्तुरक्षायैतच्चिकीर्षितम्
॥ ११५ ॥ अद्यापिकृष्णपक्षेतुसुधांशुंपीयतेसुरैः ॥ तेजःसूर्य्यय्याँतिशम्भुश्चन्द्राद्वर्ज्योत्स्निकातथा ॥ ११६ ॥ पुनश्च
शुक्लपक्षेतुशेषोदेतिकलाततः ॥ ज्योत्स्नाद्वितीयोभागस्तुतजोभागोद्वितीयकः ॥ ११७ ॥ अन्येत्युग्रशिरश्चन्द्रात्सूर्य्यवि
म्बाद्यथाक्रमम्॥कलाःषोडशचन्द्रस्यतत्रैकाशम्भुशेखरे ॥ ११८ ॥ सिताऽसितावुभौपक्षौशेषाणामुदयक्षयौ ॥ इतिवः
सर्व्वमाख्यातव्विँभक्तश्चन्द्रमायथा ॥ ११९ ॥ ब्रह्मणापर्व्वतश्रेष्ठेयथातच्चन्द्रमागतः ॥ यज्ञभागेस्थितेयस्माद्देवान्नम
करोद्विधुम् ॥ १२० ॥ कव्येस्थितेपिपित्रन्नन्तिथिवृद्धिक्षयोयथा ॥इदम्पुण्यतमाख्यानय्यँःशृणोतिसकृन्नरः ॥ १२१॥

राजयक्ष्मातस्यकुलेनकदाचिद्भविष्यति ॥ यक्ष्मणापरिभूतोयःशृणोतिवचनव्विधेः ॥ १२२ ॥ नचिराद्यक्ष्मणायुक्तः
सभवेन्नरसत्तमः ॥ इदंस्वस्त्ययनम्पुण्यङ्कुर्य्याद्दुर्य्यतमंशुभम् ॥ १२३ ॥ यःशृणोत्येकचित्तःसन्त्समहापुण्यभाग्भवेत् ॥
॥ इतिकालिकापुराणेएकविंशोध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ यत्रदेवसभाभूतासानां
तस्यमहागिरेः ॥ तत्रजातादेवनदीसोताख्यावचनाद्विधेः ॥ १ ॥ स्नापयित्वायदाचन्द्रंसीतातोयैर्म्मनोहरैः ॥ चन्द्रम्प
पुर्ब्रह्मवाक्यात्सर्व्वेतेत्रिदिवौकसः ॥ २ ॥ तदासीताजलश्चन्द्रस्नानयोगाच्चसाऽमृतम् ॥ भूत्वानिपतितन्तस्मिन्बृहल्लो
हितसञ्ज्ञके ॥ ३ ॥ तद्विवृद्धन्तदातोयन्तस्मिन्त्सरसिनोममौ ॥ तद्ददर्शस्वयम्ब्रह्माविवृद्धंसाऽमृतञ्जलम् ॥ ४ ॥ तद्द
र्शनाज्जलात्तस्मादुत्थिताकन्यकोत्तमा ॥ चन्द्रभागेतितन्नामविधिश्चक्रेस्वयन्ततः ॥ ५ ॥ भार्य्यार्थेसागरस्तान्तुजग्राहब्रह्म
सम्मते ॥ तयैवाधिष्ठितन्तोयङ्गदाग्रेणनिशापतिः ॥ ६ ॥ निर्भिद्यपश्चिमेपार्श्वेगिरिन्तअवाहयत् ॥ तस्याऽमृतजलम्भित्वा
बृहल्लोहितनामकम् ॥ ७ ॥ कासारंसागरय्यौँतश्चन्द्रभागानदीतुसा ॥ सागरोपितदाभार्य्याश्चन्द्रभागाम्महानदीम् ॥ ८ ॥
तेनतोयप्रवाहेणनिनायभवनंस्वकम् ॥ एवन्तस्मिन्त्समुत्पन्नाचन्द्रभागाह्वयानदी ॥ ९ ॥ चन्द्रभागेमहाशैलेगुणैर्ग्गङ्गासमा
सदा ॥ नद्यश्चपर्व्वताःसर्व्वेद्विरूपाश्चस्वभावतः ॥ १० ॥ तोयन्नदीनांरूपन्तुशरीरमपरन्तथा ॥ स्थावरःपर्व्वतानान्तुरूप

ङ्कायन्तथापरम् ॥ ११ ॥ शुक्तीनामथकम्बूनाय्यँथैवान्तर्ग्गतातनुः ॥ बहिरस्थिस्वरूपन्तुसर्व्वदैवप्रवर्त्तते ॥ १२ ॥ एवञ्ज
लंस्थावरन्तुनदीपर्व्वतयोस्तदा ॥ अन्तर्व्वसतिकायस्तुसततन्नोपपद्यते ॥ १३ ॥ आप्याय्यतेस्थावरेणशरीरम्पर्व्वतस्यतु ॥
तथानदीनाङ्कायस्तुतोयेनाप्याय्यतेसदा ॥ १४ ॥ नदीनाङ्कामरूपित्वम्पर्व्वतानान्तथैवच ॥ जगत्स्थित्यैपुराविष्णुःकल्प
यामासयत्नतः ॥ १५ ॥ तोयहानौनदीदुःखञ्जायतेसततंसुराः ॥ विशीर्णेस्थावरेदुःखञ्जायतेगिरिकायजम् ॥ १६ ॥ तस्मि
न्गिरौचन्द्रभागेबृहल्लोहिततीरगाम् ॥ सन्ध्यान्दृष्ट्वाथपप्रच्छवसिष्ठंसादरन्तदा ॥ १७ ॥ ॥ वसिष्ठउवाच ॥ ॥ किमर्थंनाग
ताभद्रेनिर्ज्जनन्त्वम्महीधरम् ॥ कस्यवातनयागौरिकिव्वाँतवचिकीर्षितम् ॥ १८ ॥ एतदिच्छाम्यहंश्रोतुय्यँदिगुह्यन्नतेभ
वेत् ॥ वदनम्पूर्णचन्द्राभन्निःश्रीकव्वाकथन्तव ॥ १९ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ एतच्छ्रुत्वावचस्तस्यवसिष्ठस्यमहात्मनः ॥
दृष्ट्वाचतम्महात्मानञ्ज्वलन्तमिवपावकम् ॥ २० ॥ शरीरधृग्ब्रह्मचर्य्यंसदृशन्तज्जटाधरम् ॥ सादरम्प्रणिपत्याथसन्ध्यावाच
तपोधनम् ॥ २१ ॥ यदर्थमागताशैलंसिद्धन्तन्मेद्विजोत्तम ॥ तवदर्शनमात्रेणतन्मेसेत्स्यतिवाविभो ॥ २२ ॥ तपःकर्तुमहम्ब्रह्म
न्निर्ज्जनंशैलमागता ॥ ब्रह्मणोहम्मनोजातासन्ध्यानाम्नाचविश्रुता ॥ २३ ॥ नोपदेशमहञ्जानेतपसोमुनिसत्तम ॥ यदितेयुज्य
तेगुह्यम्मात्वंसमुपदेशय ॥ २४ ॥ एतच्चिकीर्षितङ्गुह्यन्नान्यत्किञ्चनविद्यते ॥ अज्ञात्वातपसोभावन्तपोवनमुपाश्रिता ॥ २५ ॥

चिन्तयापरिशुष्येहव्वेपतेचमनः सदा ॥ ॥ मार्कण्डेयउवाच ॥ ॥ आकर्ण्यतस्यावचनम्वसिष्ठोब्रह्मणः सुतः ॥२६॥ स्वयं
ससर्व्वतत्त्वज्ञोनान्यत्किञ्चनपृष्टवान्॥ अथतान्नियतात्मानन्तपसेऽतिधृतोद्यमाम्॥२७॥वसिष्ठोमन्त्रयाञ्चक्रेगुरुवच्छिष्यव
त्तदा॥२८॥वसिष्ठउवाच॥ परमय्योंमहत्तेजः परमय्योंमहत्तपः॥परमोयःसमाराध्योविष्णुर्म्मनसिधीयताम् ॥ २९॥ धर्म्मा
र्थकाममोक्षाणाय्यँएकस्त्वादिकारणम् ॥ तमेकञ्जगतामाद्यम्भजस्वपुरुषोत्तमम् ॥ ३० ॥ शङ्खचक्रगदापद्मधरङ्कमललो
चनम् ॥ शुद्धस्फटिकसङ्काशंकंचिन्नीलाम्बुदछविम् ॥ ३१ ॥ गरुडोपरिशुक्लाब्जेपद्मासनगतंहरिम्॥ श्रीवत्सवक्षसंशा
न्तव्वँनमालाधरम्परम्॥ ३२ ॥ केयूरकुण्डलधरङ्किरीटमुकुटोज्ज्वलम् ॥निराकारञ्ज्ञानगम्यंसाकारन्देहधारिणम् ॥३३॥
नित्यानन्दन्निरालम्बंसूर्य्यमण्डलमध्यगम् ॥ मन्त्रेणानेनदेवेशव्विँष्णुम्भजशुभानने॥ ३४ ॥ॐनमोवासुदेवायओमित्य
न्तेनसन्ततम् ॥ मौनीतपस्यामारभ्यतान्मेनिगदतःशृणु ॥ ३५॥ स्नानम्मौनेनकर्त्तव्यम्मौनेनैवतुपूजनम् ॥ द्वयोःपर्णजला
हारम्प्रथमंषष्ठकालयोः ॥३६ ॥ तृतीयेषष्ठकालेतुउपवासपरोभवेत् ॥ एवन्तपःसमाप्तौतुषष्ठेकालेक्रियाभवेत् ॥ ३७ ॥
वृक्षवल्कलवासाश्चकालेभूमिशयस्तथा॥ एवम्मौनीतपस्यारव्याव्रतचर्य्याफलप्रदा॥ ३८ ॥ एवन्तपःसमुद्दिश्यकामश्चिन्त
यमाधवम् ॥ सतेप्रसन्नइष्टार्थन्नचिरादेवदास्यति ॥ ३९ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ उपदिश्यवसिष्ठोऽथसन्ध्यायैतपसः

क्रियाम् ॥ तामाभाष्ययथान्यायन्तत्रैवान्तर्दधेमुनिः ॥४०॥ सन्ध्यापितपसोभावञ्ज्ञात्वामोदमवाप्यच ॥ तपःकर्त्तुंसमारे
भेबृहल्लोहिततीरगा ॥ ४१ ॥ यथोक्तन्तुवसिष्ठेनमन्त्रन्तपसिसाधनम् ॥ व्रतेनतेनगोविन्दम्पूजयामासभक्तितः ॥ ४२ ॥
एकान्तमनसस्तस्याःकुर्व्वन्त्याःसुमहत्तपः ॥ विष्णौविन्यस्तमनसोगतमेकञ्चतुर्य्युगम् ॥ ४३ ॥ नकोपिविस्मयन्नापत
स्यादृष्ट्वातपोद्भुतम् ॥ नतादृशीतपश्चर्य्याभविष्यतिचकस्यचित् ॥ ४४ ॥ मानुषेणाऽथमानेनगतेत्वेकचतुर्य्युगे ॥ अन्त
र्ब्बहिस्तथाकाशेदर्शयित्वानिजव्वँपुः ॥ ४५ ॥ प्रसन्नस्तेनरूपेणयद्रूपञ्चिन्तितन्तया ॥ पुरःप्रत्यक्षताय्याँतस्तस्याविष्णु
र्ज्जगत्पतिः ॥ ४६ ॥ अथसापुरतोदृष्ट्वामनसाचिन्तितंहरिम् ॥ शङ्खचक्रगदापद्मधारिणम्पद्मलोचनम् ॥ ४७ ॥ केयूरकुण्ड
लधरङ्किरीटमुकुटोज्ज्वलम् ॥ तार्क्ष्यस्थम्पुण्डरीकाक्षन्नीलोत्पलदलच्छविम् ॥ ४८ ॥ ससाध्वसमहव्वँक्ष्येकिङ्कथंस्तौमिवाहरि
म् ॥ इतिचिन्तापराभूत्वान्यमीलयतचक्षुषी ॥ ४९ ॥ निमीलिताक्ष्यास्तस्यास्तुप्रविश्यहृदयंहरिः ॥ दिव्यज्ञ्जानन्ददौतस्यैवाच
न्दिव्येचचक्षुषो ॥ ५० ॥ दिव्यज्ञ्जानन्दिव्यचक्षुर्द्दिव्याव्वाँचमवाप्यच ॥ प्रत्यक्षव्वीँक्ष्यगोविन्दन्तुष्टावजगताम्पतिम्
॥५१॥ ॥ सन्ध्योवाच ॥ ॥ निराकारञ्ज्ञानगम्यम्परय्यँन्नैवस्थूलन्नापिसूक्ष्मन्नचोच्चैः ॥ अन्तश्चिन्त्यय्यँोगिभिर्य्यस्यरूप
न्तस्मैतुभ्यंहरयेमेनमोस्तु ॥ ५२ ॥ शिवंशान्तन्निर्म्मलन्निर्व्विकारञ्ज्ञानात्परंसुप्रकाशव्विँसारि ॥ रविप्रख्यन्ध्वान्तभागा

त्परस्ताद्रूपय्यँस्यत्वान्नमामिप्रसन्नम् ॥ ५३ ॥ एकंशुद्धन्दीप्यमानव्विँनोदश्चितानन्दंसत्वजम्पापहारि ॥ नित्यानन्दंसत्य
भूरिप्रसन्नय्यँस्यश्रीदंरूपमस्मैनमोस्तु ॥५४॥ विद्याकारोद्भावनीयम्प्रभिन्नंसत्वच्छन्नन्ध्येयमात्मस्वरूपम् ॥ सारम्पा
रम्पावनानाम्पवित्रन्तस्मैरूपय्यँस्यचैवन्नमस्ते ॥ ५५ ॥ नित्याज्जर्वव्य्यँयहीनङ्गुणौघैरष्टाङ्गैर्य्याश्चिन्त्यतेयोगयुक्तैः ॥
॥ तत्त्वव्यापिप्राप्ययज्ज्ञानयोगेपरय्यँधातायोगिनस्तन्नमस्ते ॥ ५६ ॥ यत्साकारंशुद्धरूपम्मनोज्ञङ्गरुत्मस्थन्नीलमेघप्र
काशम् ॥ शङ्खञ्चक्रम्पद्मगदेदधानन्तस्मैनमोयोगयुक्तायतुभ्यम् ॥ ५७ ॥ गगनम्भूर्द्दिशश्चैवसलिलञ्ज्योतिरेवच ॥ वा
युःकालश्चरूपाणियस्यतस्मैनमोस्तुते ॥ ५८ ॥ प्रधानपुरुषौयस्यकार्य्याङ्गत्वेनिवत्स्यतः ॥ तस्मादव्यक्तरूपायगोविन्दा
यनमोस्तुते ॥ यःस्वयंयश्चभूतानियःस्वयन्तद्गुणःपरः॥यस्वयञ्जगदाधारस्तस्मैतुभ्यन्नमोनमः ॥ ५९ ॥ परःपुराणःपुरु
षःपरमात्माजगन्मयः ॥ अक्षयोयोव्ययोदेवस्तस्मैतुभ्यन्नमोनमः ॥ ६० ॥ योब्रह्माकुरुतेसृष्टिय्यँोविष्णुःकुरुतेस्थितिम्॥
संहरिष्यतियोरुद्रस्तस्मैतुभ्यन्नमोनमः ॥ ६१ ॥ नमोनमःकारणकारणायदिव्याऽमृतज्ञानविभूतिदाय ॥ समस्तलोका
न्तरमोहदायप्रकाशरूपायपरात्पराय ॥ ६२ ॥ यस्यप्रपञ्चोजगदुच्यतेमहान्क्षितिर्द्दिशःसूर्य्यइन्दुर्म्मनोजवः ॥ वह्निर्म्मु
खान्नाभितश्चान्तरिक्षन्तस्मैतुभ्यंहरयेतेनमोस्तु ॥ ६३ ॥ त्वम्परःपरमात्माचत्वव्विँद्याविविधाहरे ॥ शब्दब्रह्मपर

म्ब्रह्मविचारणपरात्परः ॥ ६४ ॥ यस्यनादिर्नमध्यञ्चनान्तमस्तिजगत्पतेः॥ कथंस्तोष्यामितन्देवव्वाँङ्मनोगोचराद्बहिः
॥ ६५ ॥ यस्यब्रह्मादयोदेवामुनयश्चतपोधनाः ॥ नविवृण्वन्तिरूपाणिवर्णनीयःकथंसमे ॥ ६६ ॥ स्त्रियामयातेकिञ्ज्ञे
यानिर्गुणस्यगुणाःप्रभो ॥ नैवजानन्तियद्रूपंसेन्द्राअपिसुराऽसुराः ॥ ६७ ॥ नमस्तुभ्यञ्जगन्नाथनमस्तुभ्यन्तपोमय ॥ प्र
सीदभगवँस्तुभ्यम्भूयोभूयोनमोनमः ॥ ६८ ॥ ॥ मार्कण्डेयउवाच ॥ अथतस्याःशरीरन्तुवल्कलाजिनसव्वृँतम् ॥
परिक्षीणञ्जटाव्रातैःपवित्रैर्म्मूर्द्धिराजितम् ॥ ६९ ॥ हिमानीतर्ज्जिताम्भोजसदृशव्वँदनन्तथा ॥ निरीक्ष्यकृपयाविष्णुह
रिःप्रोवाचतामिदम् ॥ ७० ॥ ॥ श्रीभगवानुवाच ॥ ॥ प्रीतोस्मितपसाभद्रेभवत्यापरमेणवै ॥ स्तवेनचशुभप्रज्ञेवर
व्वँरयसाम्प्रतम् ॥ ७१ ॥ येनतेविद्यतेकार्य्यव्वँरेणास्तिमनोगतम्॥तत्करिष्येचभद्रन्तेप्रसन्नोहन्तवव्रतैः॥ ७२ ॥ सन्ध्योवा
च ॥ यदिदेवप्रसन्नोसितपसाममसाम्प्रतम् ॥ वृतस्तदाऽयम्प्रथमोवरोममविधीयताम् ॥ ७३ ॥ उत्पन्नमात्रादेवेशप्रा
णिनोस्मिन्नभस्तले ॥ नभवन्तुक्रमेणैवसकामाःसम्भवन्तुवै ॥ ७४ ॥पतिव्रताहल्लँलोकेषुत्रिष्वपिप्रथितायथा॥ भविष्यामि
तथानान्यावरएकोवृतोमम ॥ ७५ ॥ सकामाममदृष्टिस्तुकुत्रचिन्नपतिष्यति ॥ ऋतेपतिञ्जगन्नाथसोऽपिमेऽतिसुहृत्तरः ॥
॥ ७६ ॥ योद्रक्ष्यतिसकामोमाम्पुरुषस्तस्यपौरुषम् ॥ नाशङ्गमिष्यतितदासतुक्लीबोभविष्यति ॥ ७७ ॥ श्रीभगवानुवाच ॥

प्रथमःशैशवोभावःकौमाराख्योद्वितीयकः ॥ तृतीयोयौवनोभावश्चतुर्थोवार्द्धकस्तथा ॥ ७८ ॥ तृतीयेत्वथसम्प्राप्तेवयोभा
गेशरीरिणः ॥ सकामाःस्युर्द्वितीयान्तेभविष्यन्तिक्कचित्क्कचित् ॥ ७९ ॥ तपसातवमर्य्यादाजगतिस्थापितामया ॥ उत्प
न्नमात्रानयथासकामाःस्युःशरीरिणः ॥ ८० ॥ त्वञ्चलोकेसतीभावन्तादृशंसमवाप्स्यसि ॥ त्रिषुलोकेषुनान्यस्यायादृशं
सम्भविष्यति ॥ ८१ ॥ यःपश्यतिसकामस्त्वाम्पाणिग्रहमृतेतव ॥ ससद्यःक्लीबताम्प्राप्यदुर्ब्बलत्वङ्गमिष्यति ॥ ८२ ॥
पतिस्तवमहाभागस्तपोरूपसमन्वितः ॥ सप्तकल्पान्तजीवीचभविष्यतिसहत्वया ॥ ८३ ॥ इतियेतेवरामत्तःप्रार्थितास्तेकृ
तामया॥ अन्यच्चतेवदिष्यामिपूर्व्वय्यँन्मनसिस्थितम् ॥८४॥ अग्नौशरीरस्त्यागस्तेपूर्व्वमेवप्रतिश्रुतः ॥ सचमेधातिथेर्य्यज्ञे
मुनेर्द्वादशवार्षिके ॥ ८५ ॥ हुतप्रज्वलितेवह्नौनचिरात्क्रियतान्त्वया ॥ एतच्छैलोपत्यकायाश्चान्द्रभागानदीतटे ॥ ८६ ॥ मे
धातिथिर्म्महायज्ञङ्कुरुतेतापसाश्रमे ॥ तत्रगत्वास्वयञ्छन्नामुनिभिर्न्नोपलक्षिता ॥ ८७ ॥ मत्प्रसादाद्वह्निजातातस्यपुत्रीभ
विष्यसि ॥ यस्त्वयावाञ्छनीयोस्तिस्वामीमनसिकश्चन ॥ ८८ ॥ तन्निधायनिजस्वान्तेत्यजवह्नौवपुःस्वकम् ॥ यदात्व
न्दारुणसन्ध्येतपश्चरसिपर्व्वते ॥८९ ॥ यावच्चतुर्य्युगन्तस्यव्यतीतेतुकृतेयुगे ॥ त्रेतायाःप्रथमेभागेजातादक्षस्यकन्यका
॥ ९० ॥ सददौकन्यकाःसप्तविंशतिश्चसुधांशवे ॥ तासांहितोर्य्यदासप्तश्चन्द्रोदक्षेणाकोपिना ॥ ९१ ॥ तदाभवत्यानिकटेस

र्व्वेदेवाःसमागताः ॥ नदृष्टाश्चत्वयासन्ध्येदेवाश्चब्रह्मणासह ॥ ९२ ॥ मयिविन्यस्तमनसात्वञ्चदृष्टानतेपुनः ॥ चन्द्रस्यशाप
मोक्षार्थञ्चन्द्रभागानदीयथा ॥ ९३ ॥ सृष्टाधात्रात्तँदैवात्रमेधातिथिरुपस्थितः ॥ तपसातत्समोनास्तिनभूतोनभविष्यति
॥ ९४ ॥ तेनयज्ञःसमारब्धोज्योतिष्टोमोमहाविधिः ॥ तत्रप्रज्वलितोवह्निस्तस्मिँस्त्यजवपुःस्वकम् ॥९५ ॥ एतन्मयास्था
पितन्तेकार्य्यार्धर्म्मोस्तपस्विनि ॥ तत्कुरुष्वमहाभागेयाहियज्ञम्महामुनेः ॥ ९६ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ नारायणः
स्वयंसन्ध्यांपस्पर्शाऽथाग्रपाणिना ॥ ततःपुरोडाशमयन्तच्छरीरमभूत्क्षणात् ॥ ९७ ॥ महामुनेर्म्मेयायज्ञेतस्मिन्विश्वोपका
रिणि॥नाग्निःक्रव्यादताज्ञातुस्त्वेतदर्थन्तथाकृतम् ॥ ९८ ॥ एवमुक्त्वाजगन्नाथस्तत्रैवान्तरधीयत ॥ सन्ध्याप्यगच्छत्तत्सत्रेय
त्रमेधातिथिर्म्मुनिः ॥९९॥ अथविष्णोःप्रसादेनकेनाप्यनुपलक्षिता ॥ प्रविवेशतदायज्ञंसन्ध्यामेधातिथेर्म्मुनेः ॥ १०० ॥
वसिष्ठेनपुरासातुवर्णीभूत्वातपस्विनी ॥ उपदिष्टातपश्चर्त्तुंवचनात्परमेष्ठिनः ॥ १ ॥ तमेवकृत्वामनसितपश्चर्य्योपदेशक
म् ॥ पतित्वेनतदासन्ध्याब्राह्मणम्ब्रह्मचारिणम् ॥ २ ॥ समिद्धेग्नौमहायज्ञेमुनिभिन्नोपलक्षिता ॥ तदाविष्णोःप्रसादेन
सव्विँवेशविधेःसुता ॥ ३ ॥ तस्याःपुरोडाशमयंशरीरन्तत्क्षणात्ततः ॥ दग्धम्पुरोडाशगन्धंव्यस्तारयदलक्षितम् ॥ ४ ॥ व
ह्निस्तस्याशरीरन्तुदग्ध्वासूर्य्यस्यमण्डले ॥ शुद्धम्प्रवेशयामासविष्णोरेवाज्ञयापुनः॥ ५ ॥ सूर्य्योद्विधाविभज्याऽथतच्छरी

रन्तदारथे ॥ स्वकेसँस्थापयामासप्रीतयेपितृदेवयोः ॥ ६॥यदूर्द्ध्वभागास्तस्यास्तुशरीरस्यद्विजोत्तमाः ॥ प्रातःसन्ध्याभव
त्सातुअहोरात्रादिमध्यगाः ॥ ७ ॥ यच्छेषभागस्तस्यास्तुअहोरात्रान्तमध्यगा ॥ सासायमभवत्सन्ध्यापितृप्रीतिप्रदा
सदा ॥ ८ ॥ सूर्य्योदयात्तुप्रथमय्यँदास्यादरुणोदयः ॥ प्रातःसन्ध्यातदोदेतिदेवानाम्प्रीतिकारिणी ॥ ९॥ अस्तङ्गतेततः
सूर्य्येशोणपद्मनिभासदा ॥ उदेतिसायंसन्ध्यापिपितॄणाम्मोदकारिणी ॥ ११० ॥ तस्याःप्राणाँस्तुमनसाविष्णुनाप्रभ
विष्णुना ॥ दिव्येनतुशरीरेणचक्रिरेऽथशरीरिणः ॥ ११ ॥ मुनेर्य्यज्ञाऽवसानेतुसम्प्राप्तेमुनिनातुसा ॥ प्राप्तापुत्रीवह्निमध्ये
तप्तकाञ्चनसप्रभा॥१२॥ताञ्चग्राहतदापुत्रीम्मुनिरामोदसय्युँतः ॥यज्ञार्थतोयैःसंस्नाप्यनिजक्रोडेकृपायुतः ॥१३॥अरुन्ध
तीतियस्यास्तुनामचक्रेमहामुनिः ॥ शिष्यैःपरिवृतस्तत्रमहामोदमवापच॥१४॥नरुणद्धियतोधर्म्मंसाकेनापिचकारणात् ॥
अतस्त्रिलोकविदितन्नामसाप्रापसान्वयम् ॥१५॥ यज्ञंसमाप्यसमुनिःकृतकृत्यभावमासाद्यसम्मदयुतस्तनयाप्रलम्भात् ॥
तस्मिन्निजाश्रमपदेसहशिष्यवर्ग्गैस्तामेवसन्ततमसौदयतेमहर्षिः ॥ ११६ ॥ ॥इतिकालिकापुराणेद्वाविंशतितमोध्यायः
॥ २२ ॥ ॥ ७॥ ॥ मार्क्कण्डेय उवाच ॥ ॥अथसाववृधेदेवीतस्मिन्मुनिवराश्रमे॥चन्द्रभागानदीतीरेतापसारण्य
सञ्ज्ञके ॥ १ ॥ यथाचन्द्रकलाशुक्लपक्षेनित्यंव्विवर्द्धते ॥ यथाज्योत्स्नातथासापिप्रापवृद्धिमरुन्धती ॥ २ ॥ साप्राप्तेपञ्च

मेवर्षैचन्द्रभागान्तदागुणैः॥ तापसारण्यमपिसापवित्रमकरोत्सती ॥ ३ ॥ तत्रतीर्थम्महापुण्यम्मेधातिथिनिषेवितम् ॥
क्रीडास्थानमरुन्धत्याःपूतम्बाल्योचितङ्कृतम् ॥ ४ ॥ अद्यापितापसारण्येचन्द्रभागानदीजले ॥ अरुन्धतीतीर्थतोयेस्ना
त्वायातिहरिन्नरः ॥ ५ ॥ कार्त्तिकंसकलम्मासञ्चन्द्रभागनदीजले ॥ स्नात्वाविष्णुगृहङ्गत्वात्यन्तेमोक्षमवाप्नुयात् ॥ ६ ॥
माघेमासिपौर्ण्णमास्याममावास्यान्तथैवच ॥ चन्द्रभागाजलेस्नानय्यँस्तुकुर्य्यात्सकृत्सकृत् ॥ ७ ॥ तस्यवंशेराजयक्ष्मा
नकदाचिद्भविष्यति ॥ देहान्तेचन्द्रभवनङ्गत्वायातिहरेर्ग्गृहम् ॥ ८ ॥ पुण्यक्षयादिहागत्यवेदज्ञोब्राह्मणोभवेत् ॥ चन्द्रभा
गाजलम्पीत्वाचन्द्रलोकमवाप्नुयात्॥ ९ ॥सकृत्स्नात्वातुविधिवद्वाजिमेधफलँल्लभेत् ॥ चन्द्रभागाजलेस्नात्वाक्रीडन्तीम्बा
ललीलया॥१०॥ पितुःसमीपेतत्तीरेकदाचित्तामरुन्धतीम्॥ गच्छन्नाकाशमार्ग्गेणददर्शकमलासनः॥ ११ ॥ अथावतीर्य्यभ
गवान्ब्रह्मालोकपितामहः ॥ अरुन्धत्यास्तदाकालमुपदेशेददर्शह ॥ १२ ॥ अथोवाचतदाब्रह्मामुनिभिःपरिपूजितः ॥
मेधातिथिप्रभृतिभिरुचितन्तम्महामुनिम् ॥ १३ ॥ ब्रह्मोवाच ॥ उपदेशस्यकालोयमरुन्धत्यामहामुने ॥ तस्मादेनांसती
नान्तुस्त्रीणान्त्वङ्कुरुसन्निधौ ॥ १४ ॥ स्त्रीभिस्त्रियश्चोपदेश्याःकाचिदन्यत्रविद्यते ॥ बहुलायाश्चसावित्र्याःपुत्रीन्त्वँस्था
पयान्तिके ॥ १५ ॥ तयोःसंसर्ग्गमासाद्यपुत्रीतवमहामुने ॥ महागुणैश्वर्य्ययुतानचिरात्तुभविष्यति ॥ १६ ॥ मेधाति

थिर्व्वचःश्रुत्वाब्रह्मणःपरमात्मनः ॥ एवमेवेतिप्रोवाचतन्तदामुनिसत्तमः ॥ १७ ॥ ततागेतेसुरश्रेष्ठेपुत्रीम्मेधातिथिर्म्मुनिः ॥
समादाययर्यौसूर्य्यभवनम्प्रतितत्क्षणात् ॥ १८ ॥ ददर्शतत्रसावित्रींसूर्य्यमण्डलमध्यगाम् ॥ पद्मासनगतान्देवीमक्ष
मालाधरांसिताम् ॥ १९ ॥ दृष्टासातेनमुनिनानिःसृत्यरविमण्डलात् ॥ बहुलासागतातूर्णम्प्रस्थम्मानसभूतः॥२०॥
प्रत्यहन्तत्रसावित्रीगायत्रीबहुलातथा ॥ सरस्वतीचद्रुपदापञ्चैतामानसाचले ॥ २१ ॥ धर्म्माख्यानैस्तथासाध्वीकथाः
कृत्वापरस्परम् ॥ स्वंस्वंस्थानम्पुनर्य्यातिलोकानांहितकाम्यया ॥ २२॥ मेधातिथिस्तुताःसर्व्वादृष्ट्वैकत्रतपोधनः ॥ मा
तृःसर्व्वस्यलोकस्यप्रणनामपृथक्पृथक् ॥ २३ ॥ उवाचचसताःसर्व्वाऋषिःश्लक्ष्णन्तपोधनः ॥ ससाध्वसोविस्मितश्चतासा
मेकत्रदर्शनात् ॥२४ ॥ मेधातिथिरुवाच ॥ मातःसावित्रिबहुलेमत्पुत्रीयम्महायशाः॥कालोयमुपदेशस्यास्तदर्थमहमागतः
॥ २५ ॥ जगत्स्त्रष्टासमादिष्टाप्रयातुतवशिष्यताम् ॥ एषातेनभवत्पार्श्वमानीतापुत्रिकामम ॥२६॥ सौचारित्र्यर्य्यथाऽस्या
स्यान्तथैनाम्बालिकाम्मम ॥ युवाव्विनयतन्देव्यौमातम्मार्तन्नमोस्तुवाम्॥२७॥ अथोवाचतदादेवीसावित्रीमुनिसत्तमम्॥
स्मितपूर्व्वम्बहुलयासहितातांश्चबालिकाम् ॥ २८॥ ॥ तेऊचतुः ॥ ॥ ब्रह्मन्विष्णोःप्रसादेनसुचरित्राभवत्सुता ॥ पूर्व्वमे
वमुनेभूतातदुद्देशेनकिम्पुनः ॥२९॥ किन्त्वहम्ब्रह्मवाक्येनबहुलाचमहासती ॥ विनेष्यावस्तवसुतान्धीरास्यान्नचिराद्यथा

॥ ३० ॥ ब्रह्मणः पूर्व्वं दुहिताभवतस्तुतपोबलात् ॥ तथाविष्णोः प्रसादेनसुताते भूदरुन्धती ॥ ३१ ॥ कुलम्पुनातिभवतः सत्य
सौवर्द्धयिष्यति ॥ लोकानामथदेवानांशिवमेषाकरिष्यति ॥ ३२ ॥ ॥ मार्कण्डेयउवाच ॥ अथताभिर्विसृष्टः समुनिर्मेधाति
थिः सुताम् ॥ आश्वास्यारुन्धतीन्नत्वाताः स्वस्थानञ्जगामह ॥ ३३ ॥ गतेतस्मिन्मुनिवरेसहताभ्यामरुन्धती ॥ मातृभ्या
मिवनिर्भीतापालितामोदमापसा ॥ ३४ ॥ कदाचित्सहसाविन्ध्याराात्रौयातिरवेर्ग्गृहम् ॥ तथाबहुलयायातिशक्रगेहङ्कदाच
न ॥ ३५ ॥ एवन्ताभ्यांसमन्देवीविहरन्तीसुरालये ॥ निनायदिव्यमानेनसासप्तपरिवत्सरान् ॥ ३६ ॥ ताभ्यान्तथोपदिष्टासा
स्त्रीधर्म्ममचिरात्सती ॥ सर्व्वञ्ज्ञातवतीभूतासावित्रीबहुलाधिका ॥ ३७ ॥ अथतस्यास्तदाकालेसम्प्राप्तेउचितेभवत् ॥ शो
भनोयौवनोद्भेदः पद्मिनीनांरुचिर्य्यथा ॥ ३८ ॥ उद्भूतयौवनासातुवसिष्ठम्मानसाचले ॥ विहरन्तीददर्शैकाचारुतेजस्विनम्मु
निम् ॥ ३९ ॥ दृष्ट्वातमिच्छयाञ्चक्रेकामभावेनसासती ॥ बालसूर्य्यप्रभञ्चारुरूपम्ब्राह्मश्रियायुतम् ॥ ४० ॥ अथसो
पिमहातेजावसिष्ठोवरवर्णिनीम् ॥ दृष्ट्वैवोद्भूतमदनोवीक्षाञ्चक्रेत्वरुन्धतीम् ॥ ४१ ॥ तयोःपरस्परन्दृष्ट्वावव्टधेहृच्छयोम
हान् ॥ अमर्य्यादन्द्विजश्रेष्ठाः प्राकृतेमदनोयथा ॥ ४२ ॥ अथधैर्य्यं समालम्ब्य तथामेधातिथेः सुता ॥ आत्मानन्धा
रयामासमनश्चमदनेरितम् ॥ ४३ ॥ वसिष्ठोपिमहातेजाधैर्य्यमालम्ब्यचात्मनः ॥ मनःसंस्तम्भयामासमदनोन्मथि

तन्ततः ॥ ४४ ॥ अरुन्धतीततोदेवीविहायमुनिसन्निधिम् ॥ जगामयत्रसावित्रिनिन्दन्तीस्वम्मनोवपुः ॥ ४५ ॥ बाध्य
मानातिदुःखेनमानसेनमहासती ॥ सतीभावःपरित्यक्तश्चियन्तन्तोमयेतिवै ॥ ४६ ॥ तस्यामनोजदुःखेनविवर्णमभव
न्मुखम् ॥ शरीरंसकलंम्लानङ्गतिश्चवलिताभवत् ॥ ४७ ॥ इदंविमम्रषेसाचगर्हयन्तीस्वकम्मनः ॥ मृडालतन्तुवत्सू
क्ष्माछिन्नाचतत्क्षणादपि ॥ ४८ ॥ स्थितिःसतीनामल्पेनचापल्येनैवनश्यति ॥ इतिस्त्रीधर्म्ममध्याप्यमामाहचरितव्रता॥
॥ ४९ ॥ सावित्रीसारमेतद्धिसतीधर्म्मस्यचोद्धृतम् ॥ तदद्यनाशितम्पुंसिपरकीयेमनोरथम् ॥ ५० ॥ वर्द्धयन्त्यातदा
किम्मेपरत्रेहभविष्यति ॥ इतिसञ्चिन्तयन्तीसापुत्रीमेधातिथेस्तदा ॥ ५१ ॥ दुःखार्त्ताबहुलन्देवींसावित्रीश्वाससादह
तथाविधान्तुतान्दृष्ट्वाविवर्णवदनाँसतीम् ॥ ५२ ॥ ध्यानचिन्तापराभूतासावित्रीविममर्षह॥विमृष्यदिव्यज्ञानेनसर्व्वंज्ञा
तवतीसती ॥ ५३ ॥ वसिष्ठेनह्यरुन्धत्यायथाभूद्दर्शनन्तथा ॥ यथातयोःसम्प्रवृद्धोमनोजश्चातिदुःसहः ॥ ५४ ॥ मु
खवैवर्ण्यहेतुश्चसावित्रीदिव्यदर्शिनी ॥ अथमेधातिथेःपुत्र्यामूर्ध्निहस्तंनिवेश्यसा ॥ ५५ ॥ इदमाहमहादेवीसावित्रीच
रितव्रता ॥ वत्सेतवमुखङ्कस्माद्भिन्नवर्णमभूदिदम् ॥ ५६ ॥ छिन्ननालंयथापद्मंसूर्य्यांशुपरीतापितम् ॥ कथंशरीरम
भवन्म्लानन्तेगुणवत्तमे ॥ ५७ ॥ यथानिशापतेर्बिम्बन्तनुकृष्णाभ्रसंवृतम् ॥ अन्तर्म्मनश्चतेभद्रेसचिन्तमिवलक्ष्यते ॥

तन्मेकथयतेगुह्यन्नैतच्चेद्दुःखकारणम् ॥ ५८ ॥ मार्क्कण्डेयउवाच ॥ अथसाधोमुखीभूत्वाकिञ्चिन्नोवाचलज्जया ॥ सावित्री
म्मातरङ्कुर्व्वीन्तथापृष्टाप्यरुन्धती॥यदानोक्तवतीकिञ्चित्तदामेधातिथेःसुता ॥५९ ॥स्वयम्प्रकाश्यसावित्रीतामुवाचतपस्वि
नी॥वत्सेयोसौत्वयादृष्टोमुनिर्भास्करसन्निभः॥६०॥सवसिष्ठोब्रह्मसुतस्तवस्वामीभविष्यति॥तवतस्यचदाम्पत्यम्पुराधात्रै
वनिर्म्मितम्॥६१॥अतस्तवसतीभावोनहीनस्तस्यदर्शनात्॥यद्यातवाभूद्धृदयंसकामन्तस्यदर्शनात्॥६२॥नतद्दोषकरम्पुत्रि
मनोदुःखन्ततस्त्यज॥त्वयापरन्तपःकृत्वापूर्व्वंजन्मनिशोभने॥६३॥वृतःसएवदयितःसकामस्तेनसत्वयि॥शृणुपूर्व्वन्त्वयाव
त्सेवसिष्ठोयव्वृतःपतिः ॥ ६४ ॥ यथातपःकृतन्तत्रयेनभावेनसन्ततम् ॥ ॥मार्क्कण्डेयउवाच॥ ॥ इत्युक्त्वासाचसावित्रीय
थासन्ध्याभवत्पुरा॥६५॥कृतन्तपोयदर्थन्तुचन्द्रभागाह्वयेगिरौ॥वसिष्ठेनयथापूर्व्वंव्वर्ण्णिरूपेणवेधसः॥६६॥ वचनादुपदि
ष्टासातपश्चर्य्यान्दुरत्ययाम् ॥ यथाप्रसन्नोभगवान्विष्णुःप्रत्यक्षताङ्गतः ॥ ६७ ॥ वरय्यँथाददौतस्यैमर्य्यादास्थापिताय
था ॥ यथावाञ्छितःस्वामीवसिष्ठःसतयामुनिः ॥ ६८ ॥ मेधातिथेर्य्यथायज्ञेवह्नौत्यक्तन्तयावपुः ॥ यथातत्तनयाजातात
स्यैतद्विस्तरात्तदा ॥ ६९ ॥ सावित्रीकथयामासक्रमाद्बहुलयासह ॥ अथतस्यावचःश्रुत्वायदभूत्पूर्व्वजन्मनि ॥ ७० ॥ त
च्छ्रुत्वावैतदाज्ञातम्ममसर्व्वम्मनोगतम् ॥ इत्यतीवत्रपाम्प्राप्यसातीवाभूदधोमुखी ॥ ७१ ॥ सावित्रीवचनाद्भूतापूर्व्वजन्म

स्मराचसा ॥ तथैवाधोमुखीभूत्वायद्वृत्तम्पूर्व्वजन्मनि ॥ ७२ ॥ तस्यसर्व्वस्यसस्मारदिव्यज्ञारुन्धतीतदा ॥ पूर्व्वंविष्णुप्र
सादेनसाभूत्वादिव्यदर्शिनी ॥ ७३ ॥ अधुनाबाल्यभावेनप्रच्छन्नादिव्यदर्शिता ॥ सावित्रीवचनाच्छ्रुत्वावृत्तान्तम्पूर्व्वज
न्मनः ॥ ७४ ॥ प्रत्यक्षमिवतत्सर्व्वम्पूर्व्वज्ञानमवापसा ॥ अवाप्यपूर्व्वज्ञानन्तद्यद्दत्तंविष्णुनापुरा ॥ ७५ ॥ वशिष्ठोयंव्वृ
तःस्वामीमयावैपूर्व्वजन्मनि ॥ इतिज्ञातवतीदेवीसामोदारुन्धतीस्वयम् ॥ ७६ ॥ वसिष्ठदर्शनोद्भूतेपूर्व्वन्तस्यास्तुहृच्छये॥
यथातङ्कःसमुत्पन्नःसतीत्वस्यनिवारणे ॥ ७७ ॥ तञ्चस्वयंसातत्याजतदामेधातिथेःसुता ॥ त्यक्त्वाचन्तान्ततस्तान्तुविज्ञाया
रुन्धतींसतीम् ॥ ७८ ॥ सावित्रीसूर्यभवनन्तयासार्द्धञ्जगामह ॥ अरुन्धतीन्निवेश्याथसावित्रीसूर्य्यमन्दिरे ॥ ७९ ॥ जगाम
ब्रह्मभवनंसर्व्वज्ञासासतीवरा ॥ अथप्रणम्यब्रह्माणम्पृष्टातेनैवतत्क्षणात् ॥ ८० ॥ इदञ्जगादसावित्रीब्रह्माणममितौ
जसम् ॥ भगवञ्जगतान्नाथवसिष्ठम्भवतःसुतम् ॥ ८१ ॥ मानसस्यगिरेःसानौददर्शारुन्धतीसती ॥ तयोर्द्दर्शनमात्रेणवव्रृ
धेहृच्छयोमहान् ॥ ८२ ॥ परस्परन्तौस्पृहयाञ्चक्रतुश्चप्रजापते ॥ ततोधैर्य्यात्तुसंस्तभ्यमनोजन्तौसुदुःखितौ ॥ ८३ ॥
विमनस्कौगतौस्थानंलज्जितौतौस्वकंस्वकम् ॥ एवम्प्रवृत्तेयद्योग्यन्तदात्वेतद्विधीयताम् ॥ ८४ ॥ आयत्याञ्चसुरश्रेष्ठ
लोकानांहितकाम्यया ॥ इतिश्रुत्वावचस्तस्याब्रह्मासर्व्वजगद्गुरुः ॥ ८५ ॥ ददर्शदिव्यज्ञानेनप्रवृत्तिम्भाविकर्म्मणः ॥ इ

दक्षस्वागतम्प्रोचेतदालोकपितामहः ॥८६ ॥ तयोर्दाम्पत्यभावस्यकालोयंसमुपस्थितः ॥ अतोलोकहितार्थाययास्येहन्त
त्प्रवृत्तये ॥ ८७ ॥इतिनिश्चित्यमनसासावित्रीसहितोविधिः ॥ जगाममानसप्रस्थय्यत्राभूद्दर्शनन्तयोः ॥ ८८ ॥ पिताम
हेतत्रयातेशर्व्वःसुरगणैर्य्युतः ॥ नन्दिभृङ्गिप्रभृतिभिःसमायातोवृषध्वजः ॥ ८९ ॥ भगवान्वासुदेवोपिब्रह्मणापरिचि
न्तितः ॥ भक्त्यासोऽपिजगन्नाथः शङ्खचक्रगदाधरः ॥ ९० ॥ स्थितौब्रह्महरौयत्रतत्रैवस्वयमागतः ॥ अथतेजगतान्ना
थाब्रह्मविष्णुमहेश्वराः ॥ ९१ ॥ नारदम्प्रेषयामासुर्द्दूतम्मेधातिथिम्प्रति ॥ याहिद्रुतन्नारदत्वञ्चन्द्रभागाह्वयङ्गिरिम् ॥ ९२ ॥
मुनिस्तस्योपत्यकायामास्तेमेधातिथिःपरः ॥ तमानययथाकाममस्माकव्वँचनात्त्वयम् ॥ ९३ ॥ मेधातिथिंसमादायभ
वानागच्छतुद्रुतम् ॥ ब्रह्मादीनाव्वँचःश्रुत्वानारदोपिद्रुतय्ययौ ॥ ९४ ॥ मेधातिथिंसमानेतुम्महाकार्य्यस्यसिद्धये ॥ मे
धातिथिंसमाभाष्यदेवानाव्वँचनैस्ततः ॥ ९५ ॥ मेधातिथिंसमादायययौमानसपर्व्वतम् ॥ सेन्द्रादेवगणाःसर्व्वेमुनय
श्चतपोधनाः ॥ ९६ ॥ साध्याविद्याधरायक्षागन्धर्व्वाश्चसमागताः ॥ देवाश्चसर्व्वेदेव्यश्चयेदेवानुचरास्तथा ॥ ९७ ॥
तेसर्व्वेमानसप्रस्थय्याताश्चान्येचजन्तवः ॥ अथभूतेसमाजेतुदेवानाङ्कमलासनः ॥ ९८ ॥ मेधातिथिम्मुनिव्वाक्यमिदमा
हातिदेशयन् ॥ ९९ ॥ ब्रह्मोवाच ॥ ॥ मेधातिथेवसिष्ठायपुत्रीन्तेचरितव्रताम् ॥ देहिब्राह्मेणविधिनासमाजेत्रिदिवौकसाम्

न्यस्तववतीसती ॥ ततोब्रह्माचविष्णुश्चरुद्रश्चान्येतथामराः॥ १४ ॥ विवाहविधिनातौतुमोदयाञ्चक्रुरुत्सवैः ॥ सावित्रीप्र
मुखादेव्योदेवाश्चेन्द्रादयस्तथा ॥ १५ ॥ दक्षाद्याःकश्यपाद्यास्तुमुनयोऽतितपोधनाः ॥ उन्मुच्यब्रह्मवचनाद्वल्कलञ्चाऽ
जिनञ्जटाः॥ १६ ॥ मन्दाकिनीजलेनाऽशुस्नापयित्वासुतव्विधैः ॥ जाम्बूनदैस्तथादिव्यैर्भूषणैश्चमनोहरैः॥ १७ ॥ वसि
ष्ठम्भूषयाञ्चक्रुस्तथैवारुन्धतींसतीम् ॥ भूषयित्वाऽथतौतत्रसमाप्यमुनिभिर्व्विधिम् ॥ १८ ॥ विवाहावभृथञ्चक्रुस्तयोर्व्वि
धिहरीश्वराः॥ निधायसर्व्वतीर्थानान्तोयञ्जाम्बूनदेघटे ॥ १९ ॥ आशीर्व्वादकरैर्म्मन्त्रैर्ग्गायत्र्याद्रुपदादिभिः ॥ स्वयन्तौ
स्नापयाञ्चक्रुर्ब्रह्मविष्णुमहेश्वराः ॥ १२० ॥ ततोमहर्षयश्चान्येतथादेवर्षयश्चये ॥ तेसर्व्वेऋग्यजुःसामवेदभागैर्म्महास्व
रैः॥ २१ ॥ गङ्गादिसरितान्तोयैश्चक्रुःशान्तिन्तयोर्म्मुहुः॥ भुवनत्रयसञ्चारिविमानंसूर्य्यवर्च्चसम् ॥ २२॥ अव्याहतगतिम्ब्र
ह्मासतोयञ्चकमण्डलुम् ॥ ताभ्यान्दायन्ददौविष्णुर्दुष्प्रापंस्थानमुत्तमम् ॥ २३॥ यदूर्ध्वंसर्व्वदेवानाम्मरीच्यादेःसमीपतः ॥
सप्तकल्पान्तजीवित्वंरुद्रःप्रादात्तयोर्व्वरम् ॥ २४ ॥ अदितिःकुण्डलयुगंम्ब्रह्मणानिर्म्मितंस्वकम् ॥ ददौस्वकर्णादाकृष्यपु
त्र्यैमेधातिथेस्तदा ॥ २५ ॥ पतिव्रतात्वंसावित्रीबहुलाबहुपुत्रताम् ॥ देवेन्द्रोबहुरत्नानिधनेशोनसमन्ददौ ॥ २६ ॥
एवन्देवाश्चमुनयोदेव्यश्चान्येचयेस्थिताः। ददुस्तत्रयथायोग्यन्दायन्ताभ्याम्पृथक्पृथक् ॥ २७ ॥ एवव्विवाह्यविधिवत्सौ

वर्णेमानसाचले ॥ अरुन्धत्यावसिष्ठस्तुमोदमापतयासह ॥ २८ ॥ तत्रयत्पतितन्तोयम्मानसाऽचलकन्दरे ॥ विवाहावभृथार्थायशान्त्यर्थेचसुराहृतम् ॥ २९ ॥ ब्रह्मविष्णुमहादेवपाणिभिः समुदीरितम् ॥ तत्तोयंसप्तधाभूत्वापतितम्मानसाऽचलात् ॥ १३० ॥ हिमाद्रेः कन्दरेसानौसरस्याश्चपृथक्पृथक् ॥ ततोयम्पतितंसिप्रेदेवभोग्येसरोवरे ॥ ३१ ॥ तेनसिप्रानदीजाताविष्णुनाप्रेरिताक्षितौ॥ महाकोषीप्रयातेतुयद्वारिपतितन्तुवै ॥३२ ॥कौशिकीनामसाजाताविश्वामित्राऽवतारिता ॥ उमाक्षेत्रेयत्पतितन्तोयन्तेनमहानदी ॥ ३३ ॥ कावेरीनामसाजाताकावेरसरसस्सृता ॥ महाकालेसरःश्रेष्ठेपतितन्तज्जलङ्गिरेः ॥ ३४ ॥ हिमाद्रेः पार्श्वभागेतुदक्षिणेशम्भुसन्निधौ ॥ गोमतीनामतैर्ज्जातानदीगोमद्रुदीरिता ॥ ३५ ॥ मैनाकोनामयः पुत्रः शैलराजस्यतत्समः[1] ॥ तस्मिन्त्सानौसमुत्पन्नोमेनकोदरतः पुरा ॥ ३६ ॥ यत्तत्रपतितन्तोयन्तेनजातामहानदी ॥ देविकाख्यामहादेवप्रेरितासागरम्प्रति ॥ ३७ ॥ यत्तोयंसङ्गतन्दय्यांहंसावतरसन्निधौ ॥ तेनाभूत्सरयूर्न्नाम्नानदीपुण्यतमास्मृता ॥ ३८ ॥ यान्यम्भांसिमहातोयेखाण्डवारण्यसन्निधौ ॥ हिमवत्कन्दरेयाम्येइरायाहृदमध्यतः ॥ ३९ ॥ इरावतीनामनदीतैर्ज्जाताचसरिद्वरा ॥ एताः सर्व्वाःस्नानपानसेवनैर्ज्जाह्नवीयथा ॥१४०॥ फलन्ददातिमर्त्यानान्दक्षिणोदधिगाः सदा ॥ धर्म्मार्थकाममोक्षाणाम्बीजभूताः सनातनाः ॥ ४१ ॥ महानद्यस्तुसप्तैवसर्व्वदादेवभोगदाः ॥ एवन्नद्यः सप्त

१ शैलराजसमः।

जाताः सदापुण्यतमोदकाः ॥ ४२ ॥ अरुन्धत्यावसिष्ठस्यविवाहेदेवसन्निधौ ॥ एवव्विँवाह्यसतदावसिष्ठस्तामरुन्धतीम् ॥ ४३ ॥ देवैर्द्दत्तन्तदास्थानव्विँमानेनजगामह ॥ ब्रह्मविष्णुमहेशानाव्वँचनान्मुनिसत्तमः ॥ ४४ ॥ हितायसर्व्वजगतान्त्रिषुलोकेषुसर्व्वदा ॥ यस्मिन्यस्मिन्युगेयादृक्स्त्रीणाम्भवतितादृशम् ॥ ४५ ॥ वेषम्भावंशरीरञ्चकृत्वाधर्म्मेनियोजयन् ॥ विचरत्येषलोकाँस्त्रीनप्रमत्तः प्रसन्नधीः ॥ ४६ ॥ एवम्पुरावसिष्ठेनपरिणीतात्वरुन्धती ॥ साहितार्थायजगतान्देवानाव्वँचनात्पुरा ॥ ४७ ॥ यइदंशृणुयान्नित्यमाख्यानन्धर्म्मसाधनम् ॥ सर्व्वकल्याणसय्युँक्तश्चिरायुर्व्वित्तवान्भवेत् ॥ ४८ ॥ यास्त्रीशृणोतिसततमरुन्धत्याःकथामिमाम् ॥ पतिव्रतासाभूत्वेहपरत्रस्वर्ग्गमाप्नुयात् ॥ ४९ ॥ इदम्परंस्वस्त्ययनमिदन्धर्म्मप्रदम्परम् ॥ आख्यानंसर्व्वदाकीर्त्तिर्य्यशः पुण्यविवर्द्धनम् ॥ १५० ॥ विवाहेपुंसियात्रायांयःश्राद्धेश्रावयेत्तथा ॥ स्थैर्य्यम्पुंसवनंसिद्धिः पितृप्रीतिश्चजायते ॥ ५१ ॥ इतिवःकथितंसर्व्वव्वँशिष्ठस्यमहात्मनः ॥ अरुन्धतीयथाभूताभार्य्यावापिपतिव्रता ॥ ५२ ॥ यस्यवातनयाजातायथोत्पन्नाचयत्रच ॥ यथाब्रह्महरीशानाव्वँचनात्सव्रतः पतिः ॥ ५३ ॥ एतद्वःसर्व्वमाख्यातङ्कुल्याद्कुल्यतरम्परम् ॥ पुण्यदम्पापहरणमायुरारोग्यवर्द्धनम् ॥ ५४ ॥ इतिविपुलदृष्टौघक्षेमकारीतिहासंसदसिसकृदपीहश्रावयेद्योद्विजानाम् ॥ सभवतिकलुषौघैर्हीनदेहःसमेतोमुनिवरसहचर्य्याम्प्रेत्यगीर्व्वाणएव ॥ ५५ ॥

इतिकालिकापुराणेत्रयोविंशतितमोध्यायः ॥ २३ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ ततोहिमवतःप्रस्थेगिरेःसिप्रसरस्तटे ॥ उप
विष्टोमहादेवस्तत्सरोऽपश्यदन्तिके ॥ १ ॥ पुनःपुनःप्रेष्यमाणोब्रह्मणाहरिणाचसः ॥ ध्यानङ्कर्त्तुन्तत्रमनःस्थिरङ्कृत्वादृढात्म
वान् ॥ २ ॥ आत्मानमात्मनाद्रष्टुमात्मन्येवविशेषतः ॥ परमर्थ्यँतमकरोद्ध्यानेनस्मरशासनः ॥३॥ ध्यानेप्रविष्टचित्तन्तुतन्द
ष्ट्वाद्रुहिणादयः ॥ हरेप्रविष्टाम्मायाख्यान्तुष्टुवुर्य्यतमानसाः ॥ ४ ॥ माययामोहितोभर्ग्गःसतीशोकाकुलोभृशम् ॥ विलप
त्येवतान्तस्मिन्मोहहेतुञ्जगत्प्रसूम् ॥ ५ ॥ स्तुत्वाशम्भुशरीरात्तुनिःसार्य्यैनान्निराकुलाम् ॥ शम्भुचित्तंकरिष्यामोध्या
नासक्तन्निरञ्जनम् ॥६॥ यावत्सतीपुनर्देहङ्गृहीत्वाहरभाविनी ॥ भवित्रीतावदेवेषविशोकोध्यातुनिष्कलम् ॥७॥ इतिसञ्चि
न्त्यमनसाब्रह्माद्यास्त्रिदिवौकसः ॥ योगनिद्राम्महामायांस्तोतुमेवंसमारभन् ॥ देवाऊचुः ॥ श्रीशक्तिम्पावनीन्ताम्पुष्टि
म्परमनिष्कलाम् ॥ वयंस्तुमोमहाभक्त्यामहदव्यक्तरूपिणीम् ॥ ९ ॥ शिवांशिवकरींशुद्धांस्थूलांसूक्ष्माम्परावराम् ॥ अ
न्तर्व्विद्यामविद्याख्याम्प्रीतिमेकाग्रयोगिनीम् ॥ १० ॥ त्वम्मेधात्वन्धृतिस्त्वंहिस्त्वमेकासर्व्वगोचरा ॥ त्वन्दीधितिसूर्य्यग
तासुप्रपञ्चप्रकाशिनी ॥ ११ ॥ यातुब्रह्माण्डसंस्थानञ्जगद्बीजेषुयाजगत् ॥ आप्याययतिब्रह्मादींस्तम्बान्तायात्वमापगा
॥१२॥ यएकःसर्व्वंजगताम्प्राणभूतःसदागतिः ॥ देवानाञ्चयआधारःसनभस्वाँस्तवांशकः ॥ १३ ॥ एकव्विंसारियत्तेजः

१ तस्मिन् शिवेइत्यर्थः ।

२ ब्रह्मादिस्तम्बान्तान्याआप्यायतिसाआपगआपेनजलसमूहेनयागच्छतिसाआपगा १ ।

सर्व्वत्रैवसमिध्यते ॥ तत्तेरूपञ्जगद्बीजम्बहुधायश्चदृश्यते ॥१४॥ याब्रह्मलोकपातालसान्तरालगतासदा ॥ सात्वव्व्यिँन्म
ध्यबहिर्ब्रह्माण्डस्यचसर्व्वतः ॥ १५॥ अचलाचलचक्रेणयन्त्रितायाप्रपञ्चसूः ॥ जगद्धात्रिलोकमातासाचत्वम्माधवीक्षितिः
॥ १६ ॥ त्वम्बुद्धिस्त्वन्तद्विषयास्त्वम्माताछन्दसाङ्कृतिः ॥ गायत्रीत्वव्वेँदमातात्वंसावित्रीसरस्वती ॥१७॥ त्वव्वाँर्तासर्व्वज
गतान्त्वन्त्रयीकामरूपिणी ॥ त्वंहिनिद्रास्वरूपेणप्राणिनोनिर्ज्जरादयः ॥ १८ ॥ येस्वर्ग्गाद्योकसःसर्व्वान्त्सुस्वपन्तीप्रमोह
सी ॥ त्वल्लँक्ष्मीःपुण्यकर्त्त्रीणाम्पापिनान्त्वंहियातना ॥१९ ॥ तथानोतिभृतांश्रीश्चसुखदानैशिकोधृतिः ॥ त्वंशान्तिःसर्व्वज
गतान्त्वङ्कान्तिश्चन्द्रगोचरा ॥ २० ॥ त्वन्धात्रीसर्व्वभूतानाल्लँक्ष्मीस्त्वव्विँष्णुमोहिनी ॥ त्वन्तत्त्वरूपाभूतानाम्पञ्चानामपि
सारकृत् ॥२१॥ त्वन्त्रिलोकीमहामायात्वन्नीतिम्मोँहकारिणी ॥ संसारचक्रेष्वारोप्यसर्व्वभूतम्महेश्वरः॥२२॥ भ्रामयन्नास्ति
चयथासात्वम्मायामहेश्वरि ॥ जयन्तीजययुक्तानांह्रीर्व्विद्यानीतिरुत्तमा ॥ गीतिस्त्वंसामवेदस्यग्रन्थिस्त्वय्यँजुषांहुतिः
॥ २३ ॥ समस्तगीर्व्वाणगणस्यशक्तिस्तमोमयीसत्वगुणैकदृश्या ॥ रजःप्रपञ्चानुभवैककारिणीयानस्तुताअव्यकरीह
सास्तु ॥२४॥ संसारसागरकरालतरङ्गदुःखनिस्तारकारितरणिश्चितिरीतिहोना ॥ याष्टाङ्गरूपपरपावनकेनिपातविक्षेपकाँ
रिणिगिरौप्रणनामताम्वै ॥ २५ ॥ नासाक्षिवक्त्रभुजवक्षसिमानसेचधृत्वासुखानिविदधातिसदैवजन्तोः ॥ निद्रेतियातिसु

१ अचलचक्रेणपर्व्वतसमूहेनेत्यर्थः। २ अस्यतानित्यादिः। ३ तरणिनौका। ४ वेगिनिद्र०पा०।

भगाजगतीभवानांसानःप्रसीदतुधृतिस्मृतिवृत्तिरूपा॥२६॥सृष्टिस्थित्यन्तरूपायासृष्टिस्थित्यन्तकारिणी॥सृष्टिस्थित्यन्त
शक्तिर्य्यासामायानःप्रसीदतु॥२७॥मार्कण्डेयउवाच॥योगनिद्रामहामायासंस्तुतेयन्तदासुरैः॥हरस्यहृदयाल्क्षिप्रन्निःससार
तदाञ्जसा॥२८॥विनिःसृतायान्तस्यान्तुविवेशमधुसूदनः॥शम्भोरन्तःस्वयन्तस्यशान्त्यर्थव्विश्वरूपधृक्२९प्रविश्यहृदयन्तं
स्यकल्पेकल्पेयथाभवत्॥ सृष्टिस्थितिस्तथैवान्तस्तथादर्शयदच्युतः॥३०॥ यथासतीतस्यजायाभूतासायाचयत्सुता॥
तत्सर्व्वन्दर्शयामासमुक्तदेहाचसायथा॥३१॥बहिर्व्यक्तन्तुनिःस्सारम्प्रपञ्चंराजसम्बहु॥ दर्शयित्वापरञ्ज्योतिर्गतचित्तन्त
दाकरोत्॥३२॥ततोहरोपितान्त्सर्व्वान्प्रपञ्चान्वीक्ष्यचासकृत्॥निःसाराञ्चतदामत्वासारेचित्तन्न्यवेशयत्॥ ३३॥ ब्रह्मादीना
न्तदामायादेवानान्तैः परिष्टुता ॥ प्रतिश्रुत्यचकर्तव्यन्तत्रैवान्तर्दधेद्रुतम् ॥ ३४ ॥ भगवानपिवैकुण्ठः शम्भोश्चित्तम्पदे
पदे ॥ सर्व्वम्यनिःसृतः कायाद्राजेवरविमण्डलात् ॥ ३५ ॥ कृतकृत्यास्तदादेवाब्रह्मनारायणादयः ॥ स्वंस्वंस्थानर्व्यं
युः प्रीतियुतास्त्यक्त्वाहरङ्गिरौ ॥ ३६ ॥ ध्यानाशक्तम्महादेवम्प्रणम्येन्द्रादयः सुराः ॥ विज्ञाप्यमौनिनन्देवञ्जग्मुः स्था
नंस्वकंस्वकम् ॥ ३७ ॥ यातेषुतेषुदेवेषुकपर्द्दीवृषवाहनः ॥ सहस्रन्दिव्यमानेनदध्यौज्योतिःपरंसमाः ॥ ३८ ॥ ऋषय
ऊचुः ॥ कथम्मधुरिपुः शम्भोः प्रविश्यहृदयेञ्जसा ॥ कल्पेकल्पेस्थितिंसृष्टिंसर्व्वमञ्जाप्यदर्शयत् ॥ ३९ ॥ यथाजगत्प्रप

श्चायराजसाजगतीङ्कृताः ॥ निःसारताकथन्तेषान्दर्शिताकैटभारिणा ॥ ४० ॥ किन्तुसारतरङ्कुल्यम्परञ्ज्योतिः सनातनम् ॥ दर्शितन्तेनतत्सर्व्वमाचक्ष्वद्विजसत्तम॥४१॥ श्रोतुमिच्छामइतितेमुनीन्द्राद्भुतमुत्तमम्॥ विस्तरादिदमाख्याहिधर्म्म्यन्निश्रेयसम्परम् ॥ ४२ ॥ इतिकालिकापुराणेचतुर्व्विंशतितमोध्यायः ॥ २४॥ ॥ ७॥ मार्क्कण्डेयउवाच ॥ ॥ आदिसर्ग्गमहव्वँक्ष्येवाराहन्द्विजसत्तमाः ॥ कल्पेकल्पेयथासृष्टिर्व्वाराहेयादृशीभवेत् ॥ १ ॥ आदिसृष्टिन्दर्शयित्वाप्रतिसर्ग्गन्तथाहरिः ॥ शम्भवेदर्शयामासप्रलयादीन्यबोधत ॥ २ ॥ प्रलयम्प्रथमव्वँक्ष्येसर्ग्गमादिन्ततः परम् ॥ प्रतिसर्ग्गन्ततोविप्रावाराहव्विँनिबोधत ॥ ३ ॥ निमेषोनामकालांशोनेत्रोन्मेषविलक्षितः ॥ तैरष्टादशभिः काष्ठाकाष्ठानान्त्रिंशताकला ॥ ४ ॥ कलाभिस्तावतीभिस्तुक्षणाख्यः परिकीर्त्तितः ॥ क्षणैर्द्वादशभिः प्रोक्तोमुहूर्तस्तैस्तुत्रिंशता ॥ ५ ॥ मानुषः स्यादहोरात्रः पक्षस्तेदशपञ्च च ॥ पक्षाभ्याम्मानुषोमासःपितृणान्तदहर्न्निशम् ॥ ६ ॥ मासैर्द्वादशभिर्व्वर्षैर्देवानान्तदहर्न्निशम् ॥ कृष्णपक्षःपितृणान्तुकर्म्मार्थन्दिवसोमतः ॥ ७ ॥ स्वप्नार्थंशुक्लपक्षस्तुरजनीपरिकीर्त्तिता ॥ देवनान्तुदिनम्प्रोक्तंषण्मासाउत्तरायणम् ॥ ८ ॥ रात्रिःस्वप्नायदेवानांषण्मासादक्षिणायनम् ॥ द्वाभ्यान्द्वाभ्यान्तुमासाभ्यामर्क्कजाभ्यामृतुःस्मृतः ॥ ९ ॥ ऋतुभिश्चायनम्प्रोक्तन्त्रिभिस्तन्मानुषम्मतम् ॥ ऋतुभिर्व्वत्सरःषड्भिस्ताँश्चशृणुपृथक्पृथक् ॥ १० ॥ चैत्रादिमासयुगलैः

संज्ञाभेदाद्द्विजोत्तमाः ॥ वसन्तश्चैत्रवैशाखौग्रीष्मोज्येष्ठःशुचिस्तथा ॥ ११ ॥ प्रावृण्नभोनभस्यौतुशरत्स्यादिषकार्तिकौ ॥
सहःपौषौचहेमन्तःशिशिरोमाघफाल्गुनौ ॥ १२ ॥ षडिमेऋतवःप्रोक्तायज्ञादौविवृताःपृथक् ॥ नृणाम्मानेनदशभिर्ल्लक्षैः
सप्तभिरुत्तरैः ॥ १३ ॥ अष्टाविंशतिसाहस्रैर्म्मानङ्कृतयुगस्यतु ॥ सन्ध्याचतुःशतानीहवर्षाणामन्तरालतः ॥ १४ ॥ सन्ध्यां
शस्तावताप्रोक्तस्तदन्तर्ग्गतईप्सितः ॥ त्रेताद्वादशभिर्ल्लक्षैर्म्मानुषैर्व्वत्सरैर्ब्भवेत् ॥ १५ ॥ षण्नवत्यासहस्रैश्चवसन्ध्याचास्य
शतत्रयम् ॥ शतत्रयन्तुसन्ध्यांशस्तदन्तःपरिकीर्तितः ॥ १६ ॥ चतुःषष्टिसहस्राणिलक्षाण्यष्टौप्रमाणतः ॥ भवेद्युगन्द्वाप
राख्यन्तेषुसन्ध्याशतद्वयम् ॥ १७ ॥ शतद्वयन्तुसन्ध्यांशस्तदन्तर्ग्गतइष्यते ॥ द्वात्रिंशत्तुसहस्राणिचतुर्ल्लक्षाणिवैकलेः ॥
॥ १८ ॥ सव्वँत्सरैर्ब्भवेन्मानंसन्ध्यैकम्प्रोच्यतेशतम् ॥ वत्सराणामेकशतंसन्ध्यांशश्चतदन्तरे ॥ १९ ॥ एवङ्कृतश्चत्रेताचद्वा
परश्चतथाकलिः ॥ मानुषेणप्रमाणेनभवेद्युगचतुष्टयम् ॥ २० ॥ त्रिचत्वारिंशतालक्षैर्म्मानश्चातुर्य्युगम्भवेत् ॥ सहस्रैरपिविं
शत्यासन्ध्यासन्ध्यांशसय्युँतम् ॥ २१ ॥ दैवन्दिनव्वँत्सरेणमानुषेणसरात्रकम् ॥ एवङ्गमङ्गणित्वातुमानुषीयैश्चतुर्य्युगैः ॥
॥ २२ ॥ दैवन्द्वादशसाहस्रव्वँत्सराणाम्प्रकीर्तितम् ॥ दैवैर्द्वादशसाहस्रैर्व्वत्सरैर्दैविकय्युँगम् ॥ २३ ॥ तद्वैचतुर्य्युगन्नृणांस
न्ध्यासन्ध्यांशसय्युँतम् ॥ देवानान्तुकृतन्त्रेताद्वापरादिव्यवस्थया ॥ २४ ॥ नयुगव्यवहारोस्तिनचधर्म्मादिभिन्नता ॥

किन्तुचातुर्य्युगन्नारम्भवेद्दैवयुगंसदा ॥ २५ ॥ दैविकैरेकसप्तत्यायुगैर्म्मन्वन्तरम्भवेत् ॥ दैवेयुगसहस्त्रेद्वेब्रह्मणःस्यादहर्न्नि
शम् ॥२६॥ चतुर्य्युगसहस्त्रेद्वेनृणाम्मानेनतद्भवेत् ॥ एकस्मिन्ब्राह्मदिवसेमनवःस्युश्चतुर्द्दश ॥२७॥ एवंब्राह्मेणमानेनदिवसै
स्तुत्रिभिःशतैः ॥ सषष्टिभिर्व्वत्सरः स्याद्ब्राह्मोवर्यौर्नृणाय्यँथा ॥ २८ ॥ ब्राह्मैःपञ्चाशतावर्षैःपरार्द्धंपरिकीर्त्तितः ॥ तदीश्व
रस्यदिवसस्तावतीरात्रिरीर्य्यते ॥ २९ ॥ शतेनब्रह्मणोवर्षोकालंस्याद्द्विपरार्द्धकः ॥ परार्द्धद्वितयेतीतेब्रह्मणःप्रलयोभवेत्
॥ ३० ॥ प्रलीनेब्रह्मणिपरेजगताम्प्राकृतोलयः ॥ समस्तजगदाधारमव्ययय्यँत्परात्परम् ॥ ३१ ॥ तस्यब्रह्मस्वरूपस्य
दिवारात्रञ्चयद्भवेत् ॥ तत्परन्नामतस्यार्द्धम्परार्द्धमभिधीयते ॥३२॥ जगत्स्वरूपीभगवान्परमात्माक्षयोव्ययः ॥ स्थूलात्स्थू
लतमः सूक्ष्माद्यस्तुसूक्ष्मतमोमतः ॥ ३३ ॥ नतस्यास्तिदिवारात्रिव्यवहारोनवत्सरः ॥ किन्तुपौराणिकैःपूर्व्वैरस्माभिर
पिताद्दशैः॥३४॥ सृष्टिप्रलयबोधार्थङ्कल्प्यतेतदहर्न्निशम् ॥ सएवरात्रिःसदिवासवर्षःसर्वैक्षितिःसृष्टिकरोहरश्च॥सविष्णुरू
पीपुरुषःपुराणस्तस्मिन्त्समस्तञ्चविभातितद्वत् ॥ ३५ ॥ ततोब्रह्मणिलीनेतुपरमात्मनिशाश्वते ॥ जगत्सर्व्वङ्क्रमेणैवतद्रू
पत्वायगच्छति ॥ ३६ ॥ ब्रह्मणःशतवर्षान्तेरुद्ररूपीजनार्द्दनः ॥ जगदन्तंस्वयङ्कृत्वापरमेलीनमेतिवै ॥ ३७ ॥ प्रथमंस
वितासर्व्वंस्थावरजङ्गमन्तथा ॥ तीव्रैः करैःशोषयित्वाजलंसर्व्वंगृहीष्यति ॥ ३८ ॥ शुष्कावृक्षास्तृणगणाःप्राणिनःप

र्व्वतास्तथा ॥ चूर्णीकृताविशीर्णास्युर्द्दिव्यवर्षशतेनतु ॥ ३९॥ ततोद्वादशसूर्य्यस्यरश्मयः प्रबलाभृशम् ॥ अभवन्द्वाद
शादित्याजगद्भोग्योपबृंहिताः ॥ ४० ॥ रश्मिद्वारेणसकलंसूर्य्यास्तेभुवनानिच ॥ अदहन्पृथिवीद्यौश्चस्वेदिनीचोष्णता
ङ्गता ॥ ४१ ॥ ततोविनष्टेसकलेस्थावरेजङ्गमेतथा ॥ आदित्यरश्मितोदेवोरुद्ररूपीजनार्द्दनः ॥ ४२ ॥ निःसृत्यप्रथमय्यातः
पातालतलमुन्नतः ॥ सप्तपातालसंस्थांस्तुनागगन्धर्व्वराक्षसान् ॥ ४३ ॥ देवान्नृषींश्चशेषांश्चजघानवरशूलधृक् ॥ एवं
स्वर्गेचपातालेपृथिव्यांसागरेषुच ॥ ४४ ॥ येप्राणिनस्तान्समस्ताञ्जघानसजनार्द्दनः ॥ ततोमुखान्महावायुंरुद्रश्चसृ
ष्टवान्स्वयम् ॥ ४५ ॥ सोव्याहतगतिर्ग्गाढंससारभुवनत्रये ॥ यावद्वर्षशतव्वायुर्भ्रमन्भुवनगर्भगः ॥ ४६ ॥ सर्व्वमु
त्सारयामासयत्किञ्चित्तूलराशिवत् ॥ समस्तन्तत्समुत्सार्य्यजगद्वर्त्तिसमन्ततः ॥ ४७ ॥ विवेशद्वादशादित्यान्सवायुर्ज्ज
वनाधिकः ॥ प्रविश्यमण्डलन्तेषान्तेजोभिः सहमारुतः ॥ ४८ ॥ महामेघान्समारेभेरुद्रेणप्रतियोजितः ॥ ततस्तेप्रेरिता
मेघास्तेनवातेनवेगिना ॥ ४९ ॥ रुद्रेणाप्यतिरौद्रेणपर्य्यावव्रुर्नभः समम् ॥ सर्व्वर्ताख्यामहामेघाभिन्नाञ्जनचयोपमाः ॥
५० ॥ केचिद्धूम्राः शोणवर्णाशुक्लाश्चित्राश्चभीषणाः ॥ केचिच्चपर्व्वताकाराः केचिन्नागसमप्रभाः ॥ ५१ ॥ प्रासादसदृ
शाः केचित्क्रौञ्चवर्णाविभीषणाः ॥ गर्ज्जन्तस्तेमहामेघावर्षाणामधिकंशतम् ॥ ५२ ॥ ववृषुस्त्रीनथोलोकान्प्लावयन्तो

१ रुद्ररूपी ।

महास्वनाः ॥ रथचक्रप्रमाणेनधारापातेनवैदृढम् ॥ ५३ ॥ धारासारेणमहतापूरितम्भुवनत्रयम् ॥ आध्रुव
स्थानमासाद्यतोयराशौस्थितेततः ॥ ५४ ॥ समुखादसृजद्वायुंरुद्ररूपीजनार्द्दनः ॥ तेनौघवायुनाक्षिप्तामेघाःसर्व्वँत्सरा
श्छतम्॥ ५५ ॥ अव्याहतगतेनाशुविध्वंस्ताअभवँस्ततः॥ नष्टेषुतेषुमेघेषुजनोलोकादिकम्पुनः ॥ ५६ ॥ रुद्रस्त्वाब्रह्मभुव
नन्ध्वंसयामासनिर्द्दयः ॥ विध्वस्तेषुसमस्तेषुभुवनेषुविशेषतः ॥ ५७॥ विनष्टेब्रह्मलोकेचरुद्रोगाद्वादशारुणान् ॥ सगत्वाद्वा
दशादित्यान्वेगेनमहताहरिः॥५८॥अग्रसच्चातिजज्वालतैर्ग्गर्ब्भस्थैर्द्दिवाकरैः ॥ ततोब्रह्माण्डमासाद्यरुद्रःकालान्तकोपमः॥
॥५९॥चूर्ण्णीचकारसकलम्मुष्टिपेयम्महाबलः॥ चुर्णीकुर्व्वँस्तुब्रह्माण्डम्पृथिव्यापिविचूर्णिता॥ ६०॥ तोयानिचसमस्तानि
सदध्रेयोगतोहरिः ॥ यद्ब्रह्मांडाद्बहिस्तोयस्थितम्पूर्व्वंसमन्ततः॥६१॥ यद्वाभ्यन्तर्ग्गतन्तोयन्तत्सर्व्वंश्चैकताङ्गतम् ॥ एकीभू
तेषुतोयेषुसर्व्वव्यापिषुसर्व्वतः ॥ ६२॥ ब्रह्माण्डखण्डपूर्ण्णौघःप्लवन्नासीत्सनौरिव ॥ ततःपृथिव्यासारन्तुगन्धन्तन्मात्रकङ्क
मात् ॥ ६३ ॥ अम्भोजग्राहसकलव्विँनष्टापृथिवीततः ॥ पुनः सरुद्रस्तेजांसिगर्ब्भस्थानिस्वकायतः॥ ६४ ॥ निःसारया
मासपुनःपुञ्जीभूतानिभीषणः ॥ तानितेजांसिसकलञ्जगृहुः सर्व्वतःस्थितम् ॥ ६५ ॥ अन्तर्ब्बहिश्चब्रह्माण्डात्तेजोयच्चा
न्यतोगतम् ॥ जगद्गतंसर्व्वंतेजोगृहीत्वाचैकतोज्ज्वलन् ॥ ६६ ॥ रौद्रब्रह्माण्डखण्डानितेजोथन्यदहज्जले ॥ दग्धाब्रह्मा

ण्डचूर्णानितेजाँस्युज्वलितानिच ॥ ६७ ॥ जलेभ्योरसतन्मात्रंसारभूतन्ततोग्रहीत् ॥ गृहीतसारास्ताआपः प्रणष्टास्ते
जसाततः ॥ ६८ ॥ अप्सुनष्टासुतत्तेजःप्रविश्याऽथसदागतिः ॥ एकीभूतोमहाभागोरूपन्तन्मात्रमग्रहीत् ॥ ६९ ॥ गृहीते
रूपतन्मात्रेतेजांसिसकलान्यथ॥विनष्टानिततोवायुःप्रबलोभूदवारितः॥ ७०॥ महास्वनन्ततोवायुमासाद्याग्निरिवज्वलन् ॥
रुद्रःसङ्क्षोभयामासतदाकाशंस्वयन्ततः ॥ ७१ ॥ तेनमङ्क्षूर्ध्वमाकाशमग्रहीन्मरुतस्ततः ॥ तद्गतंस्पर्शतन्मात्रंततोनष्टः
प्रभञ्जनः ॥ ७२ ॥ नष्टेवायौततोरुद्रआकाशात्सारमग्रहीत् ॥ शब्दतन्मात्रकन्तस्मिन्गृहीतेविगतंव्वियत् ॥ ७३ ॥ नष्टेन
भसिरुद्रोसौकायेब्राह्मेतदाविशत् ॥ ब्राह्मन्तदाकुलङ्कायन्निराधारन्निराकुलम् ॥ ७४ ॥ विवेशवैष्णवेकायेशङ्खचक्रग
दाधरे॥ततःशौरिर्म्महातेजाःकायन्तत्पाञ्चभौतिकम् ॥ ७५ ॥ शङ्खचक्रगदाशार्ङ्गवरासिधरमच्युतम् ॥ स्वशक्त्यासञ्जहारा
शुसारमादायसर्व्वतः ॥ ७६ ॥ निराधारन्निराकारन्निःसत्वन्निरवग्रहम् ॥ आनन्दमयमद्वैतन्द्वैतहीनाविशेषणम् ॥ ७७ ॥
नस्थूलन्नचसूक्ष्मय्यँज्ज्ञानन्नित्यनिरञ्जनम्॥एकमासीत्परम्ब्रह्मस्वप्रकाशंसमन्ततः॥७८॥नाहोनरात्रिर्न्नवियन्नपृथ्वीनासी
त्तमोज्योतिरभून्नचान्यत् ॥ श्रोत्रादिबुद्ध्याद्युपलभ्यमेकम्प्राधानिकम्ब्रह्मपुमाँस्तदासीत् ॥ ७९ ॥ एवय्याँवस्थितासृष्टि
स्तावत्कालमसृष्टिकम् ॥ आसीदेकम्परन्तत्वन्ततःसृष्टिःप्रवर्त्तते ॥ ८० ॥ प्रकृतौसंस्थितोयस्मात्सर्व्वतन्मात्रसञ्चयः ॥

का० अहङ्कारमहत्ताव्यङ्क्तायेव्राक्तोलयः ॥ ८१ ॥ प्रकृतौसंस्थितंव्यक्तमतीतप्रलयन्तुतत् ॥ तस्मात्प्राकृतसंज्ञोयमुच्य पु०
७१ तेप्रतिसञ्चरः ॥ ८२ ॥ अयंऽवैः कथितोविप्राःप्राकृताख्योमहालयः ॥ आदिसृष्टिंशृणुध्वेमाङ्कथ्यमाना अ.२६
म्मयापुनः ॥ ८३ ॥ इतिकालिकापुराणेपञ्चविंशतितमोध्यायः ॥ २५ ॥ छ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ कालो
नामस्वयन्देवःसृष्टिस्थित्यन्तकारकः ॥ अविच्छिन्नःसप्रलयस्तेनभागेनकेनचित् ॥ १ ॥ लयभागेऽव्यतीतेतुसिसृक्षास
मजायत ॥ ज्ञानस्वरूपस्यतदापरमब्रह्मणोविभोः ॥ २ ॥ ततोऽस्यप्रकृतिस्तेनसम्यक्संक्षोभिताभिया ॥ संक्षुब्धास
र्व्वकार्य्यार्थमभूत्सात्रिगुणात्मिका ॥ ३ ॥ यथासन्निधिमात्रेणगन्धःक्षोभायजायते ॥ मनसोलोककर्तृत्वात्तथासौ
परमेश्वरः ॥ ४ ॥ सएवक्षोभकोब्रह्मन्क्षोभ्यश्चपरमेश्वरः ॥ ससंङ्कोचविकाशाभ्याम्प्रधानत्वेपिचस्थितः ॥ ५ ॥ इच्छा
मात्रेणपुरुषःसृष्ट्यर्थेपरमेश्वरः ॥ ततः संक्षोभयामासपुनरेवजगत्पतिः ॥ ६ ॥ गुणसाम्यात्ततस्तस्मात्क्षेत्रज्ञाधिष्ठि
तात्ततः ॥ गुणव्यञ्जनसम्भूतिः सर्ग्गकालेबभूवह ॥ ७ ॥ प्रधानतत्वादुद्भूतमीश्वरेच्छासमीरितात् ॥ महत्तत्वम्प्रथमत ७१
स्तत्प्रधानंसमावृणोत् ॥ ८ ॥ प्रधानेनावृतात्तस्मादहङ्कारोऽव्यजायत ॥ वैकारिकस्तैजसश्चभूतादिश्चैवतामसः ॥ ९ ॥
त्रिविधोयमहङ्कारोयोजातोमहतोग्रतः ॥ भूतानामिन्द्रियाणाञ्चसवैहेतुःसनातनः ॥ १० ॥ समहाँस्तमहङ्कारञ्जातमात्रं

१ ब्रह्मणा । २ सिसृक्षया ।

समावृणोत् ॥ तन्मात्राणिततः पञ्चजज्ञिरेस्मात्समावृतात् ॥ ११ ॥ प्रथमंशब्दतन्मात्रंस्पर्शतन्मात्रमन्तरम् ॥ तृतीयं
रूपतन्मात्रंरसतन्मात्रमेवच ॥ १२ ॥ पञ्चमङ्गन्धतन्मात्रमेतानिक्रमशोभवन् ॥ प्रत्येकंसर्व्वतन्मात्रमहङ्कारः समावृणोत्
॥ १३ ॥ससर्ज्जशब्दतन्मात्रादाकाशंशब्दलक्षणम् ॥ शब्दमात्रन्तथाकाशम्भूतादिःससमावृणोत्॥ १४ ॥शब्दतन्मात्रसहिता
त्स्पर्शतन्मात्रतस्ततः ॥ वायुःसमभवत्स्पर्शगुणशब्दसमन्वितः ॥ १५ ॥ आकाशवायुसंयुक्ताद्रूपतन्मात्रतस्ततः ॥
तेजःसमभवद्दीप्तंसर्व्वतस्तदवर्द्धत ॥ १६ ॥ तच्छब्दवत्स्पर्शवच्चरूपवच्चव्यजायत ॥ ततोवियद्वायुतेजोयुक्तातोयंससर्ज्जह
॥ १७ ॥ रसतन्मात्रतः सम्यक्तेनव्याप्तंसमन्ततः ॥ तोयान्याधारशक्तिर्य्याविष्णोरमिततेजसः ॥ १८ ॥ सादध्रेऽथनिराधा
राण्यनिलान्दोलितानिवै ॥ तेषुबीजम्प्रथमतःससर्ज्जपरमेश्वरः ॥ १९ ॥ तदण्डमभवद्धैमंसहस्रांशुसमप्रभम् ॥ महदादिवि
शेषान्तैरारब्धंसर्वतोवृतम् ॥ २० ॥ वारिवह्न्यनिलाकाशैस्तमोभूतादिनाबहिः ॥ वृतन्दशगुणैरण्डम्भूतादिर्म्महतातथा ॥
॥ २१ ॥ बीजय्यँथावात्यदलैर्व्याप्तमण्डन्तथापुनः ॥ तोयादिभिस्तथाव्याप्तम्ब्रह्माण्डमतुलन्द्विजाः ॥ २२ ॥ तदण्डमध्ये
स्वयमेवविष्णुर्ब्रह्मस्वरूपम्विनिधायकायम् ॥ दिव्येनमानेनसवर्षमेकंस्थितोग्रहीद्बीजगणंस्वबुद्ध्या ॥ २३ ॥ ध्यानेन
चाण्डंस्वयमेवकृत्वाद्विधासतस्थौक्षणमात्रमस्मिन् ॥ तदैवतन्मात्रगणैःसमस्तैर्ग्गन्धोत्तरैर्भूरमुनैवसृष्टा ॥ २४ ॥ स्पर्श

स्यशब्दस्यसमस्तरूपगन्धस्यगन्धस्यरसस्यचैषा ॥ आधारभूतासकलैःकृतायत्तन्मात्रवर्ग्गैरखिलाधरित्री ॥ २५ ॥ जात
स्तदुत्थेःकनकाचलोसौजरायुभिःपर्व्वतसञ्चयोभूत् ॥ गर्भोदिकैःसप्तपयोधयस्तुस्कन्धद्वयेनत्रिदशालयोभूत् ॥२६॥ स्क
न्धद्वयेनापरदेशजेनसप्ताभवन्नागगृहाणितानि ॥ पातालसंज्ञानिमहासुखानियत्रस्वयंस्यात्परतोमहेशः ॥ २७ ॥ तेजोग
णात्तस्यबभूवलोकोयोसौमहर्ल्लोकइतिश्रुतोभूत् ॥जनाह्वयोभून्मरुतोऽथगर्भाद्व्यानात्तपोलोकवरोबभूव ॥२८॥ अण्डोर्द्ध
गत्यामभवत्तुसत्यम्ब्रह्माण्डखण्डोपरिविष्णुरच्युतः॥परम्पदय्यन्निगदन्तिधीरायज्ज्ञानगम्यम्परिनिष्ठरूपम्॥२९॥एवंविं
धायप्रथमम्बभूवविष्णुस्वरूपीस्थितयेसएव ॥ स्वयंसमुद्भूततनुर्य्यतोयंस्वभूरितिख्यातिमवापविष्णुः ॥ ३० ॥ ततोभव
द्यज्ञवराहरूपीविष्णुर्भुवःप्रोद्धरणायपीनः ॥ निमज्जमानाम्पृथिवींसमध्येभित्वागतोधर्तुमधोतिवेगात् ॥ दंष्ट्राग्रदेशेविनि
धायपृथ्वींसउद्धतःसर्व्वमतीत्यतोयम् ॥ ३१ ॥ ततोऽभवत्सप्तफणान्वितोयमनन्तमूर्तिःपृथिवींविधर्त्तुम् ॥ प्रसार्य्यशे
षोपिफणाःसवैषमध्येनिधायैकफणान्धरित्रीम् ॥ ३२ ॥ दधारतोयोपरितोयसंस्थितस्ततोत्यजद्यज्ञवराहउर्व्वीम् ॥ प्र
सारिताःफणाःसर्व्वास्तासामेकातुपूर्व्वतः ॥ ३३ ॥ अपरापार्श्वमायान्तुदक्षिणोत्तरयोःपरे ॥ एकागताफणैशान्यामाग्ने
य्यामपरादिशि ॥ ३४ ॥ पृथ्वीमध्येस्थिताचैकानैर्ऋत्यान्तस्यवैतनुः ॥ शान्यादिग्वायवीतत्रततोनम्रास्थितक्षितिः ॥३५॥

सतुदीर्घतनुस्तोयेयदानन्तोनचाशकत् ॥ कूर्म्मरूपीतदाभूत्वाऽनन्तकायमधाद्धरिः ॥ ३६ ॥ अधोब्रह्माण्डखण्डंस
पद्भिराक्रम्यकच्छपः ॥ ग्रीवाम्वितत्यवायव्यां पृष्ठेऽनन्तमधारयत् ॥ ३७ ॥ अनन्तःकूर्म्मपृष्ठेतुनवभिर्व्वेष्टनैस्तनुम् ॥ नि
धायपृथिवीन्दध्रेसुखेनैवमहातनुः ॥ ३८ ॥ ततःफणास्वनन्तस्यचलन्तीपृथिवीस्थिता ॥ वराहःकर्त्तुमचलामचलामकरो
द्दृढाम् ॥ ३९ ॥ मेरुंखुरप्रहारेणप्रकृत्यपृथिवीतलम् ॥ न्यखनत्सविवेशाथपृथ्वीम्भित्वान्तरन्ततः ॥ ४० ॥ योजनानांसहस्रा
णिषोडशैवरसातलम् ॥ प्रविवेशमहाशैलोवराहाङ्घ्रिप्रहारतः ॥ ४१ ॥ द्वात्रिंशत्तुसहस्राणियोजनानान्तुविस्तृतम् ॥ मेरोः
शिरोभवत्तेनप्रहारेणद्विजोत्तमाः ॥ ४२ ॥ मर्य्यादापर्व्वतानस्यपार्श्वेपोत्रीतदाकरोत् ॥ यथाचलतिनैवैषपर्व्वतःपृथिवी
धरः ॥ ४३ ॥ हिमवत्प्रभृतीनाञ्चभागम्भागंसपञ्चमम् ॥ पदाक्षित्यन्तरञ्चक्रेतदुच्छ्रायप्रमाणतः ॥ ४४ ॥ ततोब्रह्मावरा
हायनमस्कृत्यमहौजसे ॥ अर्द्धनारीश्वरङ्कायाद्देवदेवं व्यजायत ॥ ४५ ॥ प्रथमञ्जातमात्रःसप्ररुरोदमहास्वनः ॥ किंरोदिषी
तितम्ब्रह्मारुदन्तम्प्रत्युवाचह ॥ ४६ ॥ नामदेहीतितंसोथप्रत्युवाचमहेश्वरः ॥ रुद्रनामारोदनात्त्वम्मारोदीस्त्वम्महाशय ॥
४७ ॥ एवमुक्तः पुनःसोऽथसप्तवारान्नुरोदसः ॥ ततोऽपराणिनामानिसप्तब्रह्माकरोत्पुनः ॥ ४८ ॥ शर्व्वम्भवञ्चभीमञ्च
महादेवञ्चतुर्थकम् ॥ पञ्चमञ्चोग्रमीशानंषष्ठम्पशुपतिंपरम् ॥ ४९ ॥ मयायथाविभक्तस्त्वन्तथात्मास्वोविभज्यताम् ॥

सञ्छिन्नोत्यर्थः २

त्वयापिभूरिसृष्ट्यर्थम्भवाँश्चापिप्रजापतिः ॥ ५० ॥ ततोब्रह्माद्विधाभूत्वापुरुषोर्द्धेनसोऽभवत् ॥ अर्द्धेननारीतस्यान्तुवि
राजमसृजत्प्रभुः ॥ ५१ ॥ तमाहभगवान्ब्रह्माकुरुसृष्टिम्प्रजापते ॥ तपस्तप्त्वाविराट्सोपिमनुंस्वायम्भुवन्ततः ॥ ५२ ॥
ससर्ज्जसोऽपितपसाब्रह्माणम्पर्य्यतोषयत् ॥ तोषितस्तेनमनसादक्षंसृष्ट्यैससर्ज्जसः ॥ ५३ ॥ सृष्टेदक्षेऽथदशधाप्रणतो
मनुनाविधिः ॥ पुनरेवसुतानन्यान्ससर्ज्जदशमानसान् ॥ ५४ ॥ मरीचिमत्र्यङ्गिरसौपुलस्त्यम्पुलहङ्क्रतुम् ॥ प्रचेतसम्व
सिष्ठञ्चभृगुन्नारदमेवच ॥ ५५ ॥ एतानुत्पाद्यमनसामनुंस्वायम्भुवम्पुनः ॥ यूयंसृजध्वमित्युक्त्वालोकेशोन्तर्द्दधेपुनः ॥
॥ ५६ ॥वराहोप्यथपोत्रेणखनित्वासप्तसागरान् ॥ पृथिव्याव्वँलयाकारान्ससर्ज्जपरमेश्वरः ॥ ५७ ॥ सप्तधाभ्रमणेनासौ
सृष्ट्वासप्ताऽथसागरान् ॥ सप्तद्वीपानवच्छिद्यपृथिव्यन्तन्ततोगतः ॥ ५८ ॥ लोकालोकाह्वयंशैलङ्कृत्वापृथ्व्यास्तुवेष्ट
नम् ॥ लक्षद्वयोच्छ्रितम्मानाद्योजनानांसमन्ततः ॥ ५९ ॥ सुदृढंस्थापयामासभित्तिंप्रान्तेयथागृहं ॥ आदिसृष्टिरिय
म्विप्राः कथिताभवताम्मया ॥ प्रतिसर्गमहव्वँक्ष्येतच्छृणवन्तुमहर्षयः ॥ ६० ॥ इतिकालिकापुराणेषाड्विंशोध्यायः ॥ २६ ॥
॥ मार्कण्डेयउवाच ॥ ॥ वाराहोयंश्रुतःसर्ग्गोवराहाधिष्ठितोयतः ॥ प्रतिसर्ग्गःश्रुतःसर्व्वैर्दक्षाद्यैर्य्यःकृतःपृथक् ॥ १ ॥ रु
द्रोविराण्मनुर्द्दक्षोमरीच्याद्यास्तुमानसाः ॥ यय्यँसर्गम्पृथक्कुःप्रतिसर्ग्गश्चसस्मृतः ॥ २ ॥ विराट्सुतोसृजद्दक्षंश्यान्मनून्वै

भित्तिंप्रान्तेयथागृहम् १

र्व्विततञ्जगत् ॥ मनुःसप्तमनून्सृष्ट्वाचकारबहुशःप्रजाः ॥ ३ ॥ प्रजाःसिसृक्षुःसमनुर्य्योसौस्वायम्भुवाह्वयः ॥ असृजत्प्रथ
मंषड्वैमनून्सोथपरान्सुतान् ॥ ४ ॥ स्वारोचिषश्चौत्तमिश्चतामसोरैवतस्तथा ॥ चाक्षुषश्चमहातेजाविवस्वानपरस्तथा ॥५॥
यक्षरक्षःपिशाचाँश्चनागगन्धर्व्वकिन्नरान् ॥ विद्याधरानप्सरसःसिद्धान्भूतगणान्बहून् ॥ ६ ॥ मेघान्सविद्युतोवृक्षाल्लँतागु
ल्मतृणादिकान् ॥ मत्स्यान्पशूँश्चकीटाँश्चजलजान्स्थलजाँस्तथा ॥ ७ ॥एतादृशानिसर्व्वाणिमनुःस्वायम्भुवःसुतैः ॥ सहि
तःससृजेसोन्यःप्रतिसर्ग्गःप्रकीर्त्तितः ॥ ८ ॥ अन्येषण्मनवोयेवैतेपिस्वेस्वेन्तरेन्तरे ॥ प्रतिसर्ग्गंस्वयङ्कृत्वाप्राप्नुवन्तिच
राचरम् ॥ ९ ॥ यज्ञस्यसम्भृतर्य्यँज्ञर्य्यूँपम्प्राग्वंशमेवच ॥ धर्म्माधर्म्मौगुणान्सर्व्वान्वराहइवसृष्टवान् ॥ १० ॥ सुतान्बहून्स
मुत्पाद्यदक्षोदेवर्षिसत्तमान् ॥ महर्षीन्सोमपादीँश्चबहून्पितृगणाँस्तथा ॥ ११ ॥ सृष्टिम्प्रवर्त्तयामासप्रतिसर्ग्गोस्यसस्मृतः
॥ अजायन्तमुखाद्विप्राःक्षत्रियाबाहुयुग्मतः ॥ १२ ॥ ऊर्व्वोर्व्वैश्याःपदःशूद्राश्चतुर्व्वेदाश्चतुर्म्मुखात् ॥ ब्रह्मणःप्रतिसर्ग्गो
यम्ब्राह्मःसर्ग्गःस्मृतस्ततः ॥ १३ ॥ मरीचेःकश्यपोजातःकश्यपात्सकलञ्जगत् ॥ देवादैत्यादानवाश्चतस्यसर्ग्गःप्रकीर्तितः
॥ १४ ॥ अत्रेर्नेत्रादभूच्चन्द्रश्चन्द्रवंशस्ततोभवत् ॥ तेनव्याप्तञ्जगत्सर्व्वंसोस्यसर्ग्गःप्रकीर्त्तितः ॥ १५ ॥ अथर्व्वाङ्गिरसी
कृत्यापुत्राश्चबहुशोपरे ॥ मन्त्रयन्त्रादयोयेवैतेसर्वेऽङ्गिरसःस्मृताः ॥ १६ ॥ आज्यपाख्याःपुलस्त्यस्यपुत्राश्चान्येचरा

क्षसाः ॥ प्रतिसर्ग्गः पुलस्त्यस्य बलवेगसमन्विताः ॥ १७ ॥ काद्रवेयागजाअश्वाः प्रजाबहुतरास्तथा ॥ ससृजे पुलहेनै षसर्ग्गस्तस्य प्रकीर्तितः ॥ १८ ॥ क्रतोः पुत्रावालखिल्याः सर्व्वज्ञाभूरितेजसः ॥ अष्टाशीतिसहस्राणि ज्वलद्भास्करसन्निभाः ॥ १९ ॥ प्रचेतसः सुताः सर्व्वे येवै प्राचेतसाः स्मृताः ॥ षडशीतिसहस्राणि पावकोपमतेजसः ॥ २० ॥ स्वकालिनो वसिष्ठस्य पुत्राश्चान्येचयोगिनः ॥ आरुन्धतेयाः पञ्चाशद्वासिष्ठः सर्ग्गउच्यते ॥ २१ ॥ भृगोश्च भार्ग्गवाजाता येवैदैत्यपुरोधसः ॥ कवयस्ते महाप्राज्ञास्तैर्व्याप्तमखिलञ्जगत् ॥ २२ ॥ नारदात्तारकाजाता विमानानि तथैवच ॥ प्रश्नोत्तरास्तथैवान्ये नृत्यगीतञ्च कौतुकम् ॥ २३ ॥ एते दक्षमरीच्याद्याः कृतदारान्बहून्सुतान् ॥ उत्पाद्योत्पाद्य पृथिवीन्दिवञ्च समपूरयन् ॥ २४ ॥ तेषां सुतेभ्यश्च सुतास्तत्पुत्रेभ्यः परे सुताः ॥ समुत्पन्नाः प्रवर्त्तन्ते ह्यद्यापि भुवनेषु वै ॥ २५ ॥ विष्णोस्तु चक्षुषोः सूर्य्यो मनसश्चन्द्रमाः स्मृतः ॥ श्रोत्राद्वायुः समुद्भूतो मुखादग्निरजायत ॥ २६ ॥ प्रतिसर्ग्गो ह्ययं विष्णोस्तथाचापि दिशो दश ॥ सृष्ट्यर्थं चन्द्रमाः पश्चादत्रिनेत्रादवातरत् ॥ २७ ॥ भास्करः कश्यपाज्जातो भार्य्ययाच समन्वितः ॥ रुद्राच्च बहवो जाता भूतग्रामाश्चतुर्व्विधाः ॥ २८ ॥ श्ववराहोष्ट्ररूपाश्च प्लवगो मायुगोमुखाः ॥ ऋक्षमार्जारवदनाः सिंहव्याघ्रमुखाः परे ॥ २९ ॥ नानाशस्त्रधराः सर्व्वे नानारूपा महाबलाः ॥ एष वः प्रतिसर्ग्गोऽपि कथितो द्विजसत्तमाः ॥ ३० ॥ दैनान्दनञ्च प्रलयं शृणुध्व

ङ्कल्पशेषतः ॥३१॥इतिकालिकापुराणेसप्तविंशोध्यायः॥ २७॥ ७॥ ॥ मार्कण्डेयउवाच ॥ ॥ मन्वन्तरम्मनोःका
लेयावत्पालयतेप्रजाः ॥ एकोमनुःसकालस्तुमन्वन्तरमितिश्रुतम् ॥ १ ॥ तदेकसप्ततियुगैर्दैवानामिहजायते ॥ तैश्चतुर्दश
भिःकल्पोदिनमेकन्तुवेधसः ॥ २ ॥ दिनान्तेब्रह्मणोजातेसुषुप्सातस्यजायते ॥ योगनिद्रामहामायासमायातिपितामहम्
॥ ३ ॥नाभिपद्मम्प्रविश्याथविष्णोरमिततेजसः ॥ सुखंशेतेसभगवान्ब्रह्मालोकपितामहः ॥ ४ ॥ ततोविष्णुःस्वयम्भूत्वारु
द्ररूपीजनार्द्दनः ॥ पूर्व्ववन्नाशयामाससर्व्वम्भुवनत्रयम् ॥ ५ ॥ वायुनावह्निनासार्द्धन्दाहयामासवैयथा ॥ महाप्रलय
कालेषुतथासर्व्वञ्जगत्त्रयम् ॥ ६ ॥ जनय्यान्तिप्रतापार्त्तामहर्ल्लोकनिवासिनः ॥ त्रैलोक्यदाहसमयेपीडितादारुणाग्निना
॥ ७ ॥ ततःकालान्तकैर्म्मेघैर्न्नानावर्ण्णैर्म्महास्वनैः ॥ समुत्पाद्यमहावृष्टिमापूर्य्यभुवनत्रयम् ॥ ८ ॥ चलत्तरङ्गैस्तोयौघै
राध्रुवस्थानसङ्गतैः॥निधायजठरेलोकानिमांस्त्रीन्सजनार्द्दनः॥९॥नागपर्य्यङ्कशयनेशेतेसपरमेश्वरः ॥शयानन्नाभिकमलेब्र
ह्माणंसजगद्गुरुः॥१०॥संस्थाप्यत्रीनिमाल्लोँकान्दग्ध्वाजग्ध्वाश्रियासह॥शेतेसभोगिशय्यायाम्ब्रह्मनारायणात्मकः॥११॥
योगनिद्रावशञ्जातस्त्रैलोक्यग्रासबृंहितः ॥ त्रैलोक्यमखिलन्दग्धय्यँदाकालाग्निनातदा ॥ १२ ॥ अनन्तः पृथिवीन्त्यक्त्वा
विष्णोरन्तिकमागतः ॥ तेनत्यक्तातुपृथिवीक्षणमात्रादधोगता ॥ १३ ॥ पतिताकूर्म्मपृष्ठेचविशीर्ण्णेवतदाभवत् ॥ कूर्म्मो

शेतेनारायणोऽव्ययः ॥ २८ ॥ यस्मादयन्तुप्रलयोब्रह्मणःस्याद्दिनेदिने ॥ तस्माद्दैनन्दिनमितिख्यापयन्तिपुराविदः ॥२९॥
व्यतीतायान्निशायान्तुब्रह्मालोकपितामहः ॥ त्यक्त्वानिद्रांसमुत्तस्थौसपुनःसृष्टयेहितः ॥ ३० ॥ त्रैलोक्यन्तोयसम्पूर्णंश
यानम्पुरुषोत्तमम् ॥ निरीक्ष्यवैष्णवीम्मायाम्महामायाञ्जगन्मयीम् ॥ ३१ ॥ योगनिद्रांसतुष्टावहरेरङ्गेषुसंस्थिताम् ॥
ब्रह्मोवाच ॥ चितिशक्तिन्निर्व्विकाराम्परब्रह्मस्वरूपिणीम् ॥ ३२ ॥ प्रणमामिमहामायांयोगनिद्रांसनातनीम् ॥ त्व
व्विंद्यायोगिनान्देवित्वङ्गतिस्त्वम्मतिःस्तुतिः ॥ ३३ ॥ त्वंसृष्टिस्त्वंस्थितिःस्वाहास्वधात्वमिहगीतिका ॥ त्वंसामगीतिस्त्वन्नीति
स्त्वंह्रीःश्रीस्त्वंसरस्वती ॥ ३४ ॥ योगनिद्रामहामायामोहनिद्रात्वमीश्वरी ॥ त्वङ्कान्तिःसर्व्वशक्तिस्त्वन्त्वन्तनुर्व्वैष्णवी
शिवा ॥ ३५ ॥ त्वन्धात्रीसर्व्वलोकानामविद्यात्वंशरीरिणाम् ॥ आधारशक्तिस्त्वन्देवीत्वंहिब्रह्माण्डधारिणी ॥ ३६ ॥ त्व
मेवसर्व्वजगताम्प्रकृतिस्त्रिगुणात्मिका ॥ त्वंसावित्रीचगायत्रीसौम्यासौम्यातिशोभना ॥ ३७ ॥ त्वंसिसृक्षाहरेर्नित्यासुषुप्सात्वं
सुषुप्तिका ॥ पुष्टिर्ल्लज्जाक्षमाशान्तिस्त्वन्धृतिःपरमेश्वरी ॥ ३८ ॥ त्वमेवक्षितिरूपेणध्रियसेसचराचरम् ॥ त्वमापस्त्वम
पाम्मातासर्व्वान्तर्ग्गतचारिणी ॥ ३९ ॥ स्तुतिःस्तुत्याचस्तोत्रीचस्तुतिशक्तिस्त्वमेवच ॥ त्वामहङ्किन्नुस्तोष्यामिप्रसीद
परमेश्वरि ॥ ४० ॥ नमस्तुभ्यञ्जगन्मातःप्रबोधयजनार्द्दनम् ॥ एवंस्तुतामहामायाब्रह्मणालोककारिणा ॥ ४१ ॥ नेत्रास्य

नासिकाबाहुहृदयान्निर्गताहरेः ॥ राजसीम्मूर्त्तिमाश्रित्यसातस्थौब्रह्मदर्शने ॥ ४२ ॥ ततोजनार्दनोभोगिशयनान्निद्रया
क्षणात् ॥ परित्यक्तःसमुत्तस्थौसृष्टयेचाकरोन्मतिम् ॥ ४३ ॥ ततोबराहरूपेणनिमग्नाम्पृथिवीञ्जले ॥ मग्नांसमुद्धाराशु
न्यधाच्चसलिलोपरि ॥ ४४ ॥ तस्योपरिजलौघस्यमहतीनौरिवस्थिता ॥ विततत्वाच्चदेहस्यनमहीयातिसम्प्लवम् ॥ ४५ ॥
ततोहरिःक्षितिङ्कृत्वातोयराशिंस्वमायया ॥ संहृत्यजन्तुस्थितयेप्रवृत्तस्स्वयमेवहि ॥ ४६ ॥ अनन्तोपियथापूर्व्वन्तथागत्वा
क्षितेस्तलम् ॥ पृथिवीन्धारयामासकूर्म्मस्योपरिसंस्थितः ॥ ४७ ॥ ततोब्रह्मासमुत्पाद्यसर्व्वानेवप्रजापतीन् ॥ जगदुत्पा
दयामाससर्व्वलोकपितामहः ॥ ४८ ॥ ब्रह्मावाकुरुतेसृष्टिंय्यँदान्येवापिकुर्व्वते ॥ दक्षाद्यास्तुप्रजापालाःस्वयमेवतदिच्छ
या ॥ ४९ ॥ परब्रह्मस्वरूपीयःसोनुगृह्णातिसन्ततम् ॥ प्रकृतिश्चानुगृह्णातिमहाभूतानिपञ्चवै ॥ ५० ॥ पुरुषांश्चा
नुगृह्णातितथैवमहदादयः ॥ ईश्वरेच्छान्वधिष्ठानात्पुरुषादष्टसञ्चयात् ॥ ५१ ॥ पुरुषाणामधिष्ठानान्महाभूतगणस्यच
॥ तथैवमहदादीनाङ्कालस्यचमहात्मनः ॥ ५२ ॥ अधिष्ठानात्प्रधानस्ययच्चकिञ्चनजायते ॥ स्थावरञ्जङ्गमञ्चाँपिस्थिर
ञ्चाँप्यथवाद्भुतम् ॥ ५३ ॥ सर्व्वमेषामधिष्ठानाज्जायतेद्विजसत्तमाः ॥ इतिवः कथितंसर्व्वंय्यँथैवादर्शयत्पुरा ॥ ५४ ॥
हरायसृष्टिसंहारकल्पान्तान्भगवान्हरिः ॥ यथाजगत्प्रपञ्चस्यासारतादर्शितापुरा ॥ ५५ ॥ यच्चसारन्दर्शितन्तन्मत्तः शृ

१ निषण्णाम्।

ण्वन्तुवैद्विजाः ॥५६॥ इतिकालिकापुराणेअष्टाविंशोध्यायः ॥ २८ ॥ छ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ जगत्सर्व्वन्तुनिः
सारमनित्यन्दुःखभाजनम् ॥ उत्पद्यतेक्षणादेतत्क्षणादेतद्विपद्यते ॥ १ ॥ तथैवोत्पद्यतेसारान्निःसारञ्जगदञ्जसा ॥ पुन
स्तस्मिन्विलीयन्तेमहाप्रलयसङ्गमे ॥ २ ॥ उत्पत्तिप्रलयाभ्यान्तुजगन्निःसारतांहरिः ॥ शम्भवेदर्शयामासभावेनजगता
म्पतिः ॥ ३ ॥ एकंशिवंशान्तमनन्तमच्युतम्परात्परञ्ज्ञानमयव्विँशेषम् ॥ अद्वैतमव्यक्तमचिन्त्यरूपंसारन्त्वेकन्नास्ति
सारन्तदन्यत् ॥ ४ ॥ यस्मादेतज्जायतेविश्वमग्र्यय्यँस्माल्लीनंस्यात्तुपश्चात्स्थितञ्च ॥ आकाशवन्मेघजालस्यवृत्त्याय
द्विश्वव्वैध्रियतेतत्त्वसारम् ॥ ५॥ अष्टाङ्गयोगैर्य्यदवाप्तुमिच्छन्योगीपुनात्यात्मरूपंसदैव॥निवर्त्ततेप्राप्ययन्नेहलोकेतद्वैसा
रंसारमन्यन्नचास्ति ॥ ६ ॥ सारोद्वितीयोधर्म्मस्तुयोनित्यप्राप्तयेभवेत् ॥ योवैनिवर्त्तकोनामतन्त्रासारः प्रवर्त्तकः ॥ ७॥
धर्म्मंशनैः सञ्चिनुयाद्वल्मीकोमृत्तिकाय्यँथा ॥ सहायार्थम्परेलोकेपूर्व्वपापविमुक्तये ॥ ८ ॥ एकोधर्म्मः परंश्रेयः सर्व्वसं
सारकर्म्मसु ॥ इतरेतुत्रयोधर्म्माज्जायन्तेर्थादयोपरे ॥ ९ ॥ वरम्प्राणपरित्यागःशिरसोवाथकर्त्तनम् ॥ नतुधर्म्मपरित्या
गोलोकेवेदेचगर्हितः ॥ १० ॥ धर्म्मेणध्रियतेलोकोधर्म्मेणध्रियतेजगत् ॥ धर्म्मेणैवसुराःसर्व्वेसुरत्वमगमन्पुरा ॥ ११ ॥
धर्म्मश्चतुष्पाद्भगवाञ्जगत्पालयतेनिशम् ॥ सएवमूलम्पुरुषोधर्म्मइत्यभिधीयते ॥ १२ ॥ सर्व्वङ्करतिलोकेस्मिन्धर्म्मो

नैवच्युतोभवेत् ॥ धर्म्मोंद्योनविचलतिसएवाक्षरउच्यते ॥ १३ ॥ एतद्वःकथितंसारन्निःसारंसकलञ्जगत् ॥ यथास्वय
न्ददर्शासुशम्भुर्ज्ञानेनस्वेन्तरे ॥ १४ ॥ एतद्वैदर्शयामाससविष्णुर्ज्जगताम्पतिः ॥ स्वयञ्चग्राहमनसाध्यानेनात्मनिश
ङ्करः ॥ १५ ॥ सारन्तत्वम्परमन्निष्कलय्यँन्मूर्त्याहीनम्मूर्त्तिमान्धर्म्मएषः ॥ सारोन्योसौसारहीनन्तदन्यज्ज्ञात्वैवेत्थय्याँ
तिनित्यम्महाधीः ॥ १६ ॥ ॥इतिश्रीकालिकापुराणेनवविंशोध्यायः॥ २९ ॥ ॥ छ ॥ ॥ऋषयऊचुः॥
येसृष्टाः शम्भुनापूर्व्वम्भूतग्रामाश्चतुर्व्विधाः ॥ किमर्थन्तेसमुत्पन्नाः कथव्वाँनेकरूपता ॥ १ ॥ शरीरमर्द्धव्वाँराहमर्द्ध
न्दन्तावलन्तथा ॥ सिंहव्याघ्रशरीराश्चकेचित्केचिद्गणाधिपाः ॥ २ ॥ ॥कथन्तेवागणाक्रूराःकिम्भोगास्तेमहौजसः ॥ एत
त्सर्व्वव्वँयंश्रोतुमिच्छामोद्विजसत्तम ॥ ३ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ शृण्वन्तुमुनयःसर्व्वेयथाशम्भुगणाभवन् ॥ य
दर्थन्तेसमुत्पन्नायस्मात्तेनेकरूपिणः ॥ ४ ॥ एतद्वःपरमङ्गुह्यमिदन्धर्म्मार्थकामदम् ॥ एतद्धिपरमन्तेजःसततम्परमन्तपः
॥ ५ ॥ इदंश्रुत्वामहाख्यानम्परत्रेहनसीदति ॥ यशस्यन्धर्म्म्यमायुष्यन्तुष्टिपुष्टिप्रदम्परम् ॥ ६ ॥ आदिसर्गेथवाराहेसम्पू
र्णेमुनिसत्तमाः ॥ शङ्करःप्राहसव्वैंशव्वाँराहञ्जगताम्पतिम्॥ ७॥ ॥ईश्वरउवाच॥ ॥ यदर्थम्भवतारूपव्वाँराहङ्कल्पि
तव्विँभो ॥ तत्तेपूर्णङ्कृतम्पृथ्वीयथावत्स्थापितात्वया ॥ ८ ॥ सागराणाञ्चसंस्थानन्नदीनाञ्चतथाक्षितेः ॥ सृष्टिर्ब्रह्मकृता

१ दीर्घआर्षः।

चापिसञ्जातात्वत्प्रसादतः ॥९ ॥ त्वंहिसर्व्वमयोयज्ञमयस्तेजोमयस्तथा॥ गुरूणामथसर्व्वेषान्त्वङ्गुरुस्त्वम्परात्परः ॥१०॥
त्वांव्वैढुन्नक्षमापृथ्वीविशीर्ण्णैवजगत्पते ॥ यन्त्रिताशैलसङ्घातैर्भवतास्थापितैःपुरा ॥ ११ ॥ तस्मात्वन्त्यजवाराहंशरीरञ्ज
गताम्पते ॥ जगन्मयञ्जगद्रूपञ्जगत्कारणकारणम् ॥ १२ ॥ कस्त्वाञ्चान्यःक्षमोवोढुव्वाँराहन्तेवपुर्व्विभो ॥ विशेषतस्त्वया
पृथ्वीसकामाधर्षिताजले ॥ १३ ॥ स्त्रीधर्म्मिणीत्वत्तेजोभिःसाधाद्गर्भञ्चदारुणम् ॥ रजस्वलाक्षमागर्भय्यँमाधत्तजगत्पते
॥ १४ ॥ तस्माद्यस्तनयोभावीसोप्यादास्यतिदुर्द्धराः ॥ एषप्राप्यासुरम्भावन्देवगन्धर्व्वहिंसकः ॥ १५ ॥ भविष्यतीतिलो
केशःप्राहमान्दक्षसन्निधौ ॥ मलिनीरतिसञ्जातन्दुष्टन्तेनिष्टकारकम् ॥ १६ ॥ कामुकन्त्यजलोकेशवाराहङ्कायमीदृशम् ॥
त्वमेवसृष्टिस्थित्यन्तकारकोलोकभावनः ॥ १७ ॥ कालेप्राप्तेस्थितिंसृष्टिंसंहारञ्चकरिष्यति ॥ तस्माल्लोकहितार्थायत्य
क्ताकायम्महाबल ॥ १८ ॥ कालेप्राप्तेपुनस्त्वन्यङ्कायम्पोत्रङ्करिष्यसि ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ इतितस्यवचःश्रुत्वा
शङ्करस्यमहात्मनः ॥ १९ ॥ वाराहमूर्तिर्भगवान्महादेवमुवाचह ॥ ॥ श्रीभगवानुवाच ॥ ॥ करिष्येहन्तववचस्त्वय्यँ
थात्थमहेश्वर ॥ २० ॥ इमन्तुयज्ञवाराहङ्कायन्त्यक्ष्येनसंशयः ॥कालेप्राप्तेपुनस्त्वन्यङ्कायव्वाँराहमद्भुतम् ॥२१ ॥ करिष्येह
न्दुराधर्षंल्लोकानाम्भावनायवै ॥ इत्युक्त्वासमहाकायस्तत्रैवान्तरधीयत॥२२ ॥ जगद्गुरुर्ज्जगत्स्रष्टाजगद्धाताजगत्पतिः ॥त

स्मिन्नन्तर्हितेदेवेदेवदेवोमहेश्वरः ॥ २३ ॥ निजंस्थानन्देवगणैःस्वगणैश्चजगामह ॥ वराहोपिस्वयङ्गत्वालोकालोकाह्वयङ्गि
रिम् ॥ २४ ॥ वाराह्यासहरेमेसपृथिव्याचारुरूपया ॥ सतयारममाणस्तुसुचिरम्पर्व्वतोत्तमे ॥ २५ ॥ नावापतोषँल्लोकेशः
पोत्रीपरमकामुकः ॥ पृथिव्याःपोत्रिरूपायारमयन्त्यास्ततःसुताः ॥ २६ ॥ त्रयोजाताद्विजश्रेष्ठास्तेषान्नामानिमेशृणु ॥
सुवृत्तःकनकोघोरःसर्व्वएवमहाबलाः ॥ २७ ॥ शिशवस्तेमेरुपृष्ठेकाञ्चनेवप्रसंस्तरे ॥ रेमिरेन्योन्यसंसक्तागह्वरेषुसरःसुच
॥ २८ ॥ सतैः पुत्रैःपरिवृतोवराहोभार्य्ययास्वया ॥ रममाणस्तदाकायत्यागन्नैवागणद्द्विजाः ॥ २९ ॥ कदाचिच्छिशुभिस्तै
स्तुसंश्लिष्टःकर्दमान्तरे ॥ चकारकर्दमक्रीडाम्भार्य्ययाचमहाबलः ॥ ३० ॥ सपङ्कलेपःशुशुभेवराहोमधुपिङ्गलः ॥ सन्ध्याघ
नोयथातोयङ्क्षरंस्तोयन्तथाविधः ॥ ३१ ॥ सपुत्रैःपरमप्रीतोभार्य्ययाचपृथिव्यया[1] ॥ विरुजन्धरणींरेमेमध्यनिम्नाथसाभव
त् ॥ ३२ ॥ अनन्तोपिसमाक्रम्यकूर्म्मंसपृथिवीतले ॥ हरिंवहन्भुग्नशिराःसातङ्कोभूत्प्रपीडया ॥ ३३ ॥ सुवृत्तेनस्वर्णवप्रङ्क्षो
रेणकनकेनच ॥ विदारितम्पोत्रघातैः स्वर्णभग्नात्कृतंसमम् ॥ ३४ ॥ मेरुपृष्ठेयानियानिसौवर्णानिद्विजोत्तमाः ॥ रचि
तानिसुरैर्य्यत्नात्तानिभग्नानितत्सुतैः ॥ ३५ ॥ मानसादीनिदेवानांसरांसिशिशवोथते ॥ आविलानितदाचक्रुःपोत्रघातैःसम
न्ततः ॥ ३६ ॥ पृथिवीवनितारूपारमयामासपोत्रिणम् ॥ स्थावरेणतुरूपेणदुःखमाप्नोतिवैदृढम् ॥ ३७ ॥ सागराश्चसुवृत्ता

१ पृथिव्ययेत्यार्षम् ।

र्घैरवगाह्यसमन्ततः॥विकीर्ण्णरत्नःपोत्रौघैःसर्व्वएवाकुलीकृताः॥३८॥इतस्ततश्चशिशुभिःक्रीडद्भिः पोत्रिभिस्तदा ॥ जग
न्तितत्रभग्नानिनद्यःकल्पद्रुमास्तथा॥३९॥ जानन्नपिजगद्भर्त्तावराहःस्वयमेवहि ॥ जगत्पीडांसुतस्नेहाद्वारयामासनैवतान्
॥४०॥सुवृत्तःकनकोघोरोयदागच्छतिवैदिवम्॥तदादेवगणाभीताःप्राद्रवन्तिदिशोदश॥४१॥एवंसुतैर्भार्य्ययायज्ञपोत्रीक्री
डँस्तुष्टिन्नापकाञ्चित्कदाचित्॥नित्यंनित्यव्वर्द्धतेतस्यकामःकायन्त्यक्तुन्नैच्छदेषप्रदिष्टः॥४२॥ इतिकालिकापुराणेत्रिंशोध्या
यः ॥३०॥मार्क्कण्डेयउवाच॥ततोदेवगणाः सर्व्वेसहितादेवयोनिभिः ॥शक्रेणसहितामन्त्रञ्चक्रुःसम्यग्जगद्धितम्॥१॥ततो
निश्चित्यतेसर्व्वेशक्राद्यामुनिभिःसह॥ शरण्यंशरणञ्जग्मुर्न्नारायणमजव्विभुम्॥२॥तंसमासाद्यगोविन्दव्वासुदेवञ्जगत्पति
म्॥प्रणम्यसर्व्वेत्रिदशास्तुष्टुवुर्गारुडध्वजम्॥३॥ देवाऊचुः॥नमस्तेदेवदेवेशजगत्कारणकारण ॥ कालस्वरूपिन्भगवन्प्रधा
नपुरुषात्मक॥४॥ स्थूलसूक्ष्मजगद्व्यापिन्परेशपुरुषोत्तम ॥ त्वङ्कर्त्तासर्व्वभूतानान्त्वम्पातात्वव्विनाशकृत् ॥ ५ ॥ त्वंहिमाया
स्वरूपेणसम्मोहयसिवैजगत् ॥ यद्भूतय्यँच्चवैभाव्यय्यँदिदानीम्प्रवर्त्तते ॥ ६ ॥ तत्सर्व्वम्परमेशत्वंस्थावरञ्जङ्गमन्तथा॥अर्था
र्थिनान्त्वमर्थस्तुकामःकामार्थिनान्तथा ॥ ७॥ त्वंहिधर्म्मार्थिनान्धर्म्मोमोक्षोनिर्व्वाणमिच्छताम् ॥ त्वङ्कामुकस्त्वमेवार्थोधा
र्म्मिकस्त्वंसदागतिः ॥८॥ त्वद्वक्त्राद्ब्राह्मणाजाताबाहुजाःक्षत्रियास्तव॥ऊर्व्वोर्व्वैश्यास्तथाशूद्राःपादाभ्यान्तवनिर्ग्गताः ॥९॥

सूर्य्यौनेत्रात्तवविभोमनोजश्चन्द्रमास्तव ॥ श्रवणात्पवनोजातोदशप्राणास्तथापरे ॥ १० ॥ उर्द्ध्वंस्वर्ग्गादिभुवनन्तवशीर्षा
दजायत ॥ तवनाभेस्तथाकाशङ्क्षितिःपादतलादभूत् ॥ ११ ॥ कर्ण्णाभ्यान्तेदिशोजाताजठरात्सकलञ्जगत् ॥ त्वंहिमाया
स्वरूपेणसम्मोहयसिवैजगत् ॥१२॥निर्ग्गुणोगुणवाँस्त्वंहिशुद्धएकःपरात्परः ॥उत्पत्तिस्थितिहीनस्त्वन्त्वमच्युतगुणाधिकः
॥ १३ ॥ आदित्यैर्व्वसुभिर्देवैःसाध्यैर्य्यक्षैर्म्मरुद्गणैः॥ त्वञ्चिन्त्यसेजगन्नाथमुनिभिश्चमुमुक्षुभिः ॥ १४ ॥ त्वाँव्वैचिदान
न्दमयव्विँदन्तिविशेषविज्ञामुनयोविभोगाः ॥ त्वमेवसंसारमहीरुहस्यबीजञ्जलंस्थानमथोफलञ्च ॥ १५ ॥ त्वम्पद्मयाप
द्मकरोविभासिवरासिचक्राब्जधनुर्द्धरस्त्वम्॥त्वमेवतार्क्ष्येप्रतिभासिनित्यंस्वर्णाचलेतोययुतोयथाब्दः॥१६॥ त्वमेवपीताम्ब
रशङ्कराजास्त्वंसर्व्वमेतन्नचकिञ्चिदन्यत् ॥ नतेगुणानःपरिचिन्तनीयाविधेर्हरस्यापिदिशाम्पतीनाम् ॥ १७ ॥ भीतेनभ
त्वयाशरणम्प्रपन्नागतावयन्नःपरिरक्षविष्णो ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इतिस्तुतोदेवदेवोभूतभावनभावनः ॥ १८ ॥
सेन्द्रैर्देवगणैरूचेतान्त्सर्व्वान्मेघनिस्वनः ॥ ॥ श्रीभगवानुवाच ॥ ॥ यदर्थमागतायूयय्यँद्वाभयमुपस्थितम् ॥ १९ ॥
तत्रयद्वामयाकार्य्यन्तद्देवास्तूर्णमुच्यताम् ॥ देवाऊचुः॥ शीर्य्यतेवसुधानित्यङ्क्रीडयायज्ञपोत्रिणः ॥२० ॥लोकाश्चसर्व्वे
सङ्क्षुब्धानाभवन्त्युपशान्तताम्॥शुष्कन्तुम्बीफलङ्क्वातैर्य्यथाजर्ज्जरताङ्गतम् ॥२१॥ वराहक्षुरघातेनतथाजर्ज्जरिताक्षितिः॥

तस्ययेवात्रयःपुत्राःकालाग्निसमतेजसः ॥ २२ ॥ सुवृत्तःकनकोघोरस्तैश्चाप्याघातितञ्जगत् ॥ तेषाङ्कर्द्दमलीलाभिः
सरांसिजगताम्पते ॥ २३ ॥ मानसादीनिभग्नानिप्रकृतिर्य्यान्तिनाधुना ॥ भग्नास्तैर्द्देवतरवोमन्दाराद्यामहाबलैः ॥
॥ २४ ॥ देवनद्योपिरोहन्तिफलम्पुष्पन्दलञ्चवा ॥ यदात्रिकूटमारुह्यतेसुवृत्तादयस्त्रयः ॥ २५ ॥ प्लुतङ्कुर्वामहाबा
होपतन्तिलवणार्ण्णवे ॥ तदातत्क्षुब्धतोयौघैःप्लाव्यतेसकलामही ॥ २६ ॥ उत्प्लवन्तिजनाःसर्व्वेप्रयान्तिचदिशोदश
॥ जीवितंरक्षमाणास्तेप्रयान्तिचदिशोदश ॥ २७ ॥ यदात्रिविष्टपर्य्यान्तियज्ञवाराहपुत्रकाः ॥ इतस्ततस्तदाभग्नादेवाः
शान्तिन्नलेभिरे ॥ २८ ॥ सर्व्वैतैःपर्व्वताःपुत्रैर्व्वराहस्यजगत्पते ॥ क्रीडद्भिःशिखरेनीताभूरिभागमधोगतिम् ॥ २९ ॥ एव
व्विँक्रीडतान्तेषाङ्क्रीडाभिःसकलञ्जगत् ॥ नाशमायातिवैकुण्ठतस्माद्रक्षजगत्प्रभो ॥ ३० ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥
इतितेषान्निगदतांश्रुत्वावाक्यञ्जनार्द्दनः ॥ ३१ ॥ उवाचशङ्करन्देवम्ब्रह्माणञ्चविशेषतः ॥ यत्कृतेदेवताःसर्व्वाःप्रजाश्चसक
लाइमाः ॥ ३२ ॥ प्राप्नुवन्तिमहद्दुःखंशीर्य्यतेसकलञ्जगत् ॥ वाराहन्तदहङ्कायन्त्यक्तुमिच्छामिशङ्कर ॥ ३३ ॥ निर्व्वेशश
क्तन्त्यक्तुंस्वेच्छयानहिशक्यते ॥ त्वन्त्याजयस्वतत्कायर्य्यंतान्मांशङ्कराधुना ॥ ३४ ॥ त्वमाप्यायस्वतेजोभिर्ब्रह्मन्स्म
रहरम्मुहुः ॥ आप्यायन्तुतथादेवाःशङ्करोहन्तुपोत्रिणम् ॥ ३५ ॥ रजस्वलायाःसंसर्ग्गाद्विप्राणाम्मारणात्तथा ॥ कायः

पापकरोभूतस्तन्त्यक्तुर्ययुंज्यतेधुना ॥ ३६ ॥ प्रायश्चित्तैरपैत्येनःप्रायश्चित्तमहन्ततः ॥ चरिष्यामितदर्थम्मेतनुर्य्यतेनशा
म्यताम् ॥ ३७ ॥ प्रजापाल्याममसदासाहिसीदतिनित्यशः ॥ मत्कृतेप्रत्यहन्तस्मात्त्यक्ष्येकायम्प्रजाकृते ॥ ३८ ॥
॥ ॥ मार्कण्डेयउवाच ॥ ॥ इत्युक्तोवासुदेवेनतदातौब्रह्मशङ्करौ ॥ त्वयायथोक्तन्तत्कार्य्यमितिगोविन्दमूचतुः॥३९॥
वासुदेवोपितान्सर्व्वान्विसृज्यत्रिदशाँस्तथा॥ वाराहन्तेजआहर्त्तुंस्वयन्ध्यानपरोभवत् ॥ ४० ॥ शनैःशनैर्य्यदातेजआहर
त्येषमाधवः ॥ तदादेहन्तुवाराहंसत्त्वहीनमजायत ॥ ४१ ॥ तेजोहीनय्यँदादेहञ्ज्ञातंसर्व्वैस्तदामरैः ॥ आससादतदा
देवोयज्ञवाराहमद्भुतम् ॥ ४२ ॥ ब्रह्माद्यास्त्रिदशाःसर्व्वेमहादेवमुमापतिम् ॥ अनुजग्मुस्तदातेजआधातुंस्मरशासने॥ ४३॥
ततःसर्व्वैर्देवगणैःस्वंस्वन्तेजोवृषध्वजे॥आदधेतेनबलवान्सोतीवसमजायत॥४४ ॥ततःशरभरूपीसतत्क्षणाद्गिरिशोभव
त् ॥ उर्द्ध्वाधोभागतश्चाष्टपादयुक्तःसुभैरवः ॥ ४५ ॥ द्विलक्षयोजनोच्छ्रायःसार्द्धलक्षैकविस्तृतः ॥उर्द्ध्ववाँराहकायस्तुलक्ष
योजनविस्तृतः॥४६॥लक्षार्द्धविस्तृतःपार्श्वैवर्द्धमानस्तदाभवत्॥ततःशरभरूपन्तम्महादेवमुमापतिम् ॥४७॥ददर्शयज्ञपो
त्रीसस्पृशन्तंशिरसाविधुम् ॥सुदीर्घनासानखरंकृष्णाङ्गारसमप्रभम्॥४८॥दीर्घवक्त्रम्महाकायमष्टदंष्ट्रासमन्वितम्॥बिभ्रतं
ससटंपुच्छन्दीर्घकर्णम्भयानकम्॥४९॥चतुरः पृष्ठतः पादानधरेचतुरस्तथा॥कुर्व्वन्तङ्घोरमारावमुत्पतन्तम्पुनः पुनः॥५०॥

तमायान्तन्ततोदृष्ट्वाक्रोधाद्धावन्तमञ्जसा ॥ सुवृत्तः कनकोघोरआसेदुः क्रोधमूर्छितः ॥ ५१ ॥ तमासाद्यमहाकायंशरभ
म्भ्रातरस्त्रयः ॥ उच्चिक्षिपुस्तेयुगपत्पोत्रघातैर्म्महाबलाः ॥ ५२ ॥ यावत्प्रमाणःशरभस्तत्प्रमाणास्तदाभवन् ॥ शरभो
त्क्षेपसमयेमाययापोत्रिणस्त्रयः ॥ ५३ ॥ तेषाम्पोत्रप्रहारेणप्रोत्क्षिप्तः शरभस्तदा ॥ पपातपृथिवीप्रान्तेगम्भीरेतोयसा
गरे ॥ ५४ ॥ तस्मिन्निपतितेतत्रसागरेमकरालये ॥ उत्पत्यतेत्रयः पेतुः क्रोधात्तस्मिन्महोदधौ ॥ ५५ ॥ सुवृत्तेकनके
घोरेपतितेसागराम्भसि ॥ वराहोपिसुतस्नेहात्क्रोधाच्चद्विजसत्तमाः ॥ ५६ ॥उत्पत्यसहसातस्मिँस्तोयराशौपपातह ॥ उत्प
तन्तस्तदातेवैवाराहाःशरभस्तथा ॥ ५७ ॥ बभञ्जुर्दिविदेवाँस्तुनक्षत्राणिग्रहाँस्तथा ॥ केचित्तुनिहतादेवाभूमौपेतुश्चकेच
न ॥ ५८ ॥ केचिच्चज्ञानिनोदेवामहर्ल्लोकमुपाश्रिताः ॥ नक्षत्राणिविमानात्तुपतितानिमहीतले ॥ ५९ ॥ अदृश्यन्तद्वि
जश्रेष्ठाज्वालामालाकुलानिवै॥ तेषामुत्पतनेवेगोयोभूत्परमदारुणः ॥ ६० ॥ तेनातिवेगोजनितोवायुःपरमदारुणः ॥ वा
युनातेननुन्नास्तुपर्व्वताःपृथिवीतले ॥ ६१ ॥ केचिच्छैलाःपर्व्वतेषुपतिताःपुनरेवतु ॥ विमृद्यवृक्षाञ्जन्तूँश्चनिपेतुश्चपुनः
पुनः ॥ ६२ ॥ केचित्तुपर्व्वताघातैर्न्नृत्यमानामहीतले ॥ बभञ्जुरचलाश्चापिव्रजन्तोबहुशःप्रजाः ॥ ६३ ॥ पर्व्वताः
समदृश्यन्तवातवेगेनभूतले ॥ ६४॥ सङ्घट्टमानास्तेऽन्योन्येव्रजन्तइवतेचलाः ॥ अम्भोनिधौपतद्भिस्तैर्व्वाराहैःशरभेण

च ॥ ६५॥ पर्व्वतैश्चमहातुङ्गैरुत्क्षिप्तास्तोयराशयः ॥ ६६ ॥ तेषाम्प्रपातवेगेनक्षिप्तेषुजलाराशिषु ॥ निस्तोयाइवसञ्जाताः
क्षणव्वैसर्व्वसागराः ॥ ६७ ॥ तैःसर्व्वैरुदकैःक्षिप्तैःपृथिवीतलमागतैः ॥ उत्प्लाविताःप्रजाःसर्व्वाःक्षणाज्जग्मुःक्षयन्ततः
॥ ६८ ॥ प्लवमानाःप्रजास्तोयेम्रियमाणाःसमन्ततः ॥ हापितस्त्वथहाताताहामातर्हासुतेतिच ॥ ६९ ॥ विलपन्तिस्म
करुणम्भीताश्चार्त्तामुमूर्षवः ॥ यस्मिन्देशेनिपतितोवाराहःशरभःसह ॥ ७० ॥ तत्रैवाधोगताभूमिःपादवेगेनदारिता ॥
अपरःपृथिवीप्रान्तउत्थितःपर्व्वतैसहः ॥ ७१ ॥ ससर्ज्जजनलोकेषुचलान्तेषाम्प्रभञ्जनैः ॥ जनलोकेषुसंयुक्ता
म्पृथिवींशरभस्तदा ॥ ७२ ॥ निःश्रेणीमिवसम्बद्धामचलामपिपोत्रिभिः ॥ ददर्शविस्मयाविष्टःसभीतःश्रान्तपीडितः
॥ ७३ ॥ ततस्तेयुयुधुःसर्व्वेपोत्रघातेनपोत्रिणः ॥ खुरप्रहारैर्दंष्ट्राभिर्गात्रक्षेपैश्चदारुणैः ॥ ७४ ॥ शरभोप्यथदंष्ट्राग्रैर्नखै
स्तीक्ष्णैःखुरैस्तथा॥लाङ्गूलस्यप्रहारैस्तुतुण्डघातैर्म्महास्वनैः ॥७५॥चतुर्भिःपोत्रिभिस्तैस्तुसएकःशरभोमहान् ॥ एकान्त
र्व्योधयामाससहस्रम्परिवत्सरान् ॥ ७६ ॥ तेषाम्प्रहारैर्व्वेगैश्चभ्रमणैश्चगतागतैः ॥ आस्फोटितैस्तथारावैर्देहपातैःपृथ
क्पृथक् ॥ ७७ ॥ पातालेपन्नगाःसर्व्वेविनेशुःकद्रुजैःसह ॥ ततस्तेसागरन्त्यक्त्वापृथिवीमध्यमागताः ॥ ७८ ॥ परस्परय्युँ
ध्यमानास्ततोभूत्पृथिवीसमा ॥ शेषोपिमहतायत्नाद्बलेनास्तभ्यकच्छपम् ॥७९॥ दधारपृथिवीन्दुःखैर्भग्नशीर्षःप्रतापितः ॥

१ सोपानेकाष्ठघटितेनिःश्रेणिस्त्वधिरोहिणी निःश्रेणी स्यान्निश्रयणीतथानिःश्रयिणीतिचेतिशब्दरत्नावली । २ आस्तभ्योति समन्तात्स्तम्भयित्यर्थः ।

अनन्तेवामनीभूतेसमत्वम्पृथिवीतले ॥ ८० ॥ गतेम्भोभिश्चलद्भिश्चपर्व्वतःसर्व्वजन्तुषु॥ नष्टेषुयुध्यमानेषुत्रिपोत्रिशरभेषु
च ॥ ८१ ॥ सागरैराप्लुतेसर्व्वंजगत्यापोमयेहरिम् ॥ चिन्ताविष्टःसुरज्येष्ठउवाचाथपितामहः ॥ ८२ ॥ भगवन्भुवनंस
र्व्वंससुरासुरमानुषम् ॥ विध्वस्तम्पृथिवीशोर्ण्णानष्टाः स्थावरजङ्गमाः॥ ८३ ॥ देवदानवगन्धर्व्वादैत्याश्चापिसरीसृपाः ॥
विध्वस्ताजगतान्नाथमुनयश्चतपोधनाः॥८४ ॥ त्वम्पालकोसिसर्व्वेषान्त्वमेवजगतःप्रभुः ॥ तस्मात्पालयनःसर्व्वान्पृथिवी
ञ्चजगत्पते॥८५॥त्वमेवकायंव्वाराहंस्वयमेवोपसंहर॥संस्थापयमहाबाहोपृथिवीञ्चचराचरैः॥८६॥ ॥मार्क्कण्डेयउवाच ॥
इतितस्यवचःश्रुत्वाब्रह्मणोथजनार्द्दनः ॥ यत्नञ्चक्रेतदासर्व्वंसंस्थापयितुमच्युतः ॥ ८७ ॥ ततोहरीरोहितमत्स्यरूपीभूत्वा
मुनीन्सप्ततदासवेदान् ॥ अधाच्छुतेरक्षणतत्परोजगद्धितायसर्व्वश्रुतिकोविदान्वरान् ॥८८॥ वसिष्ठमत्रिन्त्वथकाश्यपञ्च
विश्वादिमित्रञ्चसगौतमम्मुनिम् ॥ महातपस्थञ्जमदग्निमुख्यन्तथाभरद्वाजमुनिन्तपोनिधिम् ॥ ८९ ॥ निधायपृष्ठेसहितो
यमध्येस्थितोमहानौप्रवरेमुनीन्द्रान्॥ततःशिवंक्षान्त्वयितुञ्जनार्द्दनोजगामयस्मिन्युयुधेसपोत्रिभिः ॥९०॥श्रान्तव्वँराहैरति
पौत्रघट्टनैर्न्निपीडितव्व्यात्तमुखंश्वसन्तम् ॥ अथागतव्वीक्ष्यहरिव्वँराहःसस्मारपूर्व्वान्नरसिंहमूर्त्तिम् ॥९१॥स्मृतस्तदातेन
समाजगामसखावराहस्यहितेन्नृसिंहः॥तमागतव्वीक्ष्यतदान्नृसिंहन्तदीयकायान्निजतेजआदात् ॥९२॥ दष्टव्वँराहैःशरभेण

तेजोयत्सूर्य्यतुल्यम्प्रविवेशविष्णौ ॥ त्रिज्ञायतेजोरहितन्नृसिंहंससर्ज्जनिश्वासचयान्वराहः ॥ ९३ ॥ ततस्तुजाताबह
वोवराहाबहुप्रमाणाद्भुततीक्ष्णदंष्ट्राः ॥ तेवैवराहाःशरभङ्गिरीशम्मायाविनोवीतभयास्तुदन्तः ॥ ९४ ॥ समन्नृसिंहेनतदा
पियुद्धञ्चकुर्म्ममर्द्दुश्चभृशङ्गिरीशम् ॥ क्षणम्महापक्षिसमानरूपाःक्षणन्तुगावस्तुरगानराश्च ॥ ९५ ॥ क्षणन्नृसिंहाश्चव
राहरूपागोमायवोवैकृतिकाःक्षणन्ते ॥ अनेकरूपाणिभयङ्कराणिवितन्यमानानिरणेवराहैः ॥ ९६ ॥ निरीक्ष्यभर्गञ्चनि
पीडितन्तैरथासदन्माधवस्तङ्गिरीशम् ॥ पस्पर्शविष्णुर्गिरिशङ्करेणतेजोन्यधात्तत्रनिजम्पुनःसः ॥ ९७ ॥ अथसंस्पृ
ष्टमात्रःसविष्णुनाप्रभविष्णुना ॥ अतीवमुदितोहृष्टोबलवान्त्समजायत ॥ ९८ ॥ अथोच्चैःशरभोनादन्ननादबलवद्दृढ
म् ॥ आपूरितानियेनैतद्भुवनानिचतुर्द्दश ॥ ९९ ॥ नदतस्तस्यवदनाच्छीकरायेविनिःसृताः ॥ ततोगणाःसमभवन्महाका
यामहौजसः ॥ १०० ॥ यथावराहनिश्वासान्नानारूपधरागणाः ॥ वराहास्तादृशाएतेततोप्यतिबलाःपुनः ॥ १०१ ॥
श्ववराहोष्ट्ररूपाश्चप्लवगोमायुगोमुखाः ॥ ऋक्षमार्ज्जारमातङ्गशिशुमारस्वरूपिणः ॥ २ ॥ सिंहव्याघ्रमुखाःकेचित्केचित्सर्पा
खुमूर्त्तयः ॥ हयाग्रोवाहयमुखामहिषाकृतयःपरे ॥ ३ ॥ अन्येतुमनुजाकारामृगमेषमुखाःपुनः ॥ कबन्धाहीनपादाश्चविह
स्ताबहुपाणयः ॥ ४ ॥ केचित्तुशरभाकाराःकृकलासमुखाःपरे ॥ मत्स्यवक्त्राग्राहवक्त्राह्रस्वादीर्घाबलाःकृशाः ॥ ५ ॥ च

तुःपादाष्टपादाश्चत्रिपादाद्विपदाःपरे ॥ एकपादाभूरिहस्तायक्षकिम्पुरुषोपमाः ॥ ६ ॥ पश्वाकाराःपक्षयुक्तालम्बोदरम
होदराः ॥ दीर्घोदराःस्थूलकेशाबहुकर्णाविकर्णकाः ॥ ७ ॥ स्थूलाधरादीर्घदन्तादीर्घश्मश्रुधराःपरे ॥ येसन्तिप्राणि
नोविप्राभुवनेषुसमन्ततः ॥ ८ ॥ चतुर्द्दशसुतेतेषांरूपेणसमताङ्गताः ॥ नेहास्तिभुवनेजन्तुःस्थावरोवाजगत्पुनः ॥ ९ ॥
यत्तुल्यरूपेणगणोनजातःशङ्करस्यच ॥ तेभिन्दिपालैःखड्गैश्चपरिघैस्तोमरैस्तथा ॥ ११०॥ शङ्कुलासिगदाभिश्च
पाशैःशङ्कुभिरेवच ॥ खट्वाङ्गैश्चत्रिशूलैश्चकपालैःशक्तिभिस्तथा ॥ १११ ॥ दात्रैःसृणिभिरीषाग्रैर्य्यष्टिभिश्चित्र
कण्टकैः ॥ प्रासैःपरशुभिर्ब्बाणैःकोदण्डैरतिभीषणा ॥ १२ ॥ जटाचन्द्रकलायुक्ताःसर्व्वएवमहाबलाः ॥ केचिद्भर्ग
स्यरूपेणवाहनेनाथभूषणैः ॥ १३ ॥ तुल्याजटार्द्धशुभ्रांशुशुभ्रशीर्षामहाबलाः ॥ अर्द्धनारीश्वराः केचिद्यथारुद्रस्तथैव
ते ॥ १४ ॥ केचित्तुचारुरूपेणमोहनेनमनोभुवः ॥ तुल्येनवनितासङ्गैः समञ्जातारतोत्सुकाः ॥ १५ ॥ आकाशचारि
णः सर्व्वेसर्व्वेस्वच्छन्दगामिनः ॥ नीलोत्पलदलश्यामाः शुक्लाः केचनलोहिताः ॥ १६ ॥ रक्ताः पोतास्तथाचित्राहरिताः
कपिलाः परे ॥ अर्द्धपीताह्यर्द्धरक्तानीलार्द्धाधवलाः परे ॥ १७ ॥ सकृष्णपीताः शुक्लेनकृष्णेनार्द्धेनरञ्जिताः ॥ एकवर्णाद्वि
वर्णाश्चत्रिवर्णाश्चतथापरे ॥ १८ ॥ चतुः षट्पञ्चवर्णाश्चकेचिद्दशगुणाद्विजाः ॥ डिण्डिमान्पटहाञ्छङ्खान्भेर्य्यानकसका

हलान् ॥ ११ ॥ मड्डूकाञ्झर्झरांश्चैवझर्झरीश्चसमर्द्दलाः ॥ वीणास्तन्त्रीः पञ्चतन्त्रीःशकटान्दर्द्दरांस्तथा ॥ १२० ॥ गोमुखा
नानकान्कुण्डान्त्सतालकरतालिकान् ॥ वादयन्तोगणाः सर्व्वेहसन्तश्चमुहुर्म्मुहुः ॥ १२१ ॥ वराहाभिमुखाभूत्वातस्थु
स्तेहृष्टमानसाः ॥ तान्त्सर्व्वानाहशरभोभगवान्वृषभध्वजः ॥ २२ ॥ निघ्नतैतान्वराहस्यगणान्वैक्रूरकर्म्मभिः ॥ क्रूरदृष्ट्या
क्रूरयुद्धैः क्रूराभूत्वामहाबलाः ॥ २३ ॥ ततस्तेवैगणाःसर्व्वेनानाकारावरायुधाः ॥ सार्द्धंव्वँराहस्यगणैर्य्युयुधुःक्रूरदर्शनाः ॥ २४ ॥
आकाशचारिणः सर्व्वेजलपूर्णञ्जगत्त्रयम् ॥ तेपरित्यज्ययुयुधुर्व्वियत्येवोभयेगणाः ॥ २५ ॥ ततःक्षणाद्वराहस्यगणान्त्स
र्व्वान्महाबलान् ॥ हरस्यप्रमथाजघ्नुर्म्महावाताइवाम्बुदान् ॥ २६ ॥ हतेषुतेषुवीरेषुवाराहेषुगणेष्वथ ॥ दध्यौवराहः किमि
तिप्राक्पश्चाद्वृत्तमास्थितम् ॥ २७ ॥ अथचिन्तयतस्तस्यस्वान्तज्ञात्वाजनार्द्दनः ॥ तत्सर्व्वञ्ज्ञापयामासवराहवपुषोहित
म् ॥ २८ ॥ ततोदेहपरित्यागङ्कर्त्तुंसमयतस्तदा ॥ ततोदंष्ट्राग्रघातेननरसिंहम्महाबलः ॥ २९ ॥ शरभोभगवान्भर्ग्गोद्वि
धामध्येचकारह ॥ नरसिंहेद्विधाभूतेनरभागेनतस्यच ॥ ३० ॥ नरएवसमुत्पन्नोदिव्यरूपीमहानृषिः ॥ तस्यपञ्चास्यभागे
ननारायणइतिश्रुतः ॥ ३१ ॥ अभवत्सुमहातेजामुनिरूपीजनार्द्दनः ॥ नरोनारायणश्चोभौसृष्टिहेतूमहामती ॥ १३२ ॥
द्वयोः प्रभावोदुर्द्धर्षः शास्त्रेवेदेतपःसुच ॥ तौनाविविनिधायाथमत्स्यमूर्त्यवितात्मनि ॥ ३३ ॥ आससादपुनर्देवोवाराहः

शरभंहरिः॥वपुस्त्यागोमयावश्यङ्कर्त्तव्योजगतांहिते॥ ३४॥इतिपूर्व्वम्प्रतिज्ञातन्तदर्थोयंसमुद्यमः॥ क्रियतेहरिणासार्द्धंशम्भु
नाब्रह्मणापिच॥ ३५॥इतिसश्चिन्त्यसतदाशूकरःपरमेश्वरः॥जगादशरभन्देवम्महादेवम्महाबलम्॥ ३६॥जहिमान्त्वम्महादे
वत्यक्ष्येकायमसंशयम् ॥हितायसर्व्वंजगतान्देवानामपिसद्विषाम्॥ ३७॥ममदेहप्रतीकौघैर्य्यज्ञर्य्यूयम्प्रकल्प्यच ॥ पृथक्पृ
थङ्महाभागासशामित्रध्रुवादिकम् ॥ ३८ ॥ ततस्तेतान्त्रिभिःपुत्रैर्विधध्वञ्जगतांहिते ॥ कनकेनसुवृत्तेनघोरेणचजगन्मयी
म्॥ ३९॥यज्ञाद्देवाःप्रजाश्चैवयज्ञादन्नान्नियोगिनः॥सर्व्वंय्यँज्ञात्सदाभाविसर्व्वंय्यँज्ञमयञ्जगत्॥ १४०॥यामिमम्पृथिवीगर्भ
माधत्तमलिनीपुनः ॥ तमुत्पन्नंस्वयन्देवोचिरंसञ्ज्ञोपयिष्यति॥ १४१॥प्राप्तेकालेयदादेवोतदायुष्मान्सुभाषते ॥ वधस्तस्या
तिभारार्तातदैवेनंहनिष्यथ ॥ ४२ ॥आशार्त्तापृथिवीमग्नायदाधःशतयोजनम्॥शृङ्गीवराहरूपेणप्रोद्धरिष्येतदाइमाम् ॥ ४३ ॥
कृतकृत्यन्तुतङ्कायन्त्याजयिष्यतितेसुतः ॥ योभावीदेवसेनानीरुद्रात्षाण्मातुराह्वयः ॥ ४४ ॥ एवंय्यज्ञवराहेतुभाषमाणे
महाबले ॥ निःसृत्यसुमहत्तेजोज्वालामालातिदीपितम् ॥ ४५॥ सूर्य्यकोटिप्रतीकाशव्वराहवपुषस्तदा ॥ हरेर्भगवतोदेहे
विवेशमहदद्भुतम् ॥ ४६ ॥ तस्मिन्विष्णौप्रविष्टेतुवाराहेतेजसिद्विजाः ॥ सुवृत्तात्कनकाद्घोरात्तेजआदात्स्वयंहरिः॥ ४७॥ ते
षामपिशरीरेभ्यस्तेजोभागःपृथक्पृथक् ॥ विनिःसृत्यविनिःसृत्यज्वालामालातिदीपितः ॥ ४८ ॥ प्रविवेशहरेःकायेयथाते

१ प्रतीकएकदेशः अंमप्रतीकोवयवइतिकोशात्तत्समूहैरित्यर्थः ।

षाम्पितुस्तथा ॥ ततोहरिश्च ब्रह्माचमहादेवश्चतद्वचः ॥ ४९ ॥ वराहस्यप्रतिश्रुत्यओमित्युक्त्वापुनःपुनः ॥ तेषाङ्कायपरित्या
गेअकार्षुर्य्यत्नमुत्तमम् ॥१५०॥ ततस्तुण्डप्रहारेणशरभःकण्ठमध्यतः ॥ भित्त्वावपुर्व्वराहस्यपातयामासतज्जले ॥५१॥ त
म्पातयित्वाप्रथमंसुवृत्तङ्कनकन्तथा ॥ घोरञ्चकण्ठदेशेषुभित्त्वाभित्त्वाजघानह ॥ ५२ ॥ त्यक्तप्राणास्तुस्तेसर्व्वेपेतुस्तोये
महार्णवे ॥ जलेशब्दंव्वितन्वानाःकालानलसमत्विषः ॥५३॥पतितेषुवराहेषुब्रह्माविष्णुहरस्तथा ॥ सृष्ट्यर्थञ्चिन्तयामासुः
पुनरेवसमागताः॥५४॥हरस्यतुगणाःसर्व्वेतदाभर्गसमागताः ॥ उपतस्थुर्म्महाभागाश्चतुर्भागेनभाजिताः॥५५॥षट्त्रिं
शत्तुसहस्राणिप्रमथाद्विजसत्तमाः ॥ तत्रैकत्रसहस्राणिभागेषोडशसंस्थिताः॥५६॥नानारूपधरायेवैजटाचन्द्रार्द्धमण्डिताः॥
तेसर्वेसकलैश्वर्य्ययुक्ताध्यानपरायणाः॥५७॥योगिनोमदमात्सर्य्यदम्भाहङ्कारवर्जिताः॥क्षीणपापामहाभागाःशम्भोःप्रीति
कराःपराः॥५८॥नतेपरिग्रहंरागङ्काङ्क्षन्तिस्मकदाचन ॥ संसारविमुखाःसर्व्वेयतयोयोगतत्पराः ॥५९॥ ध्यानावस्थम्महादे
वम्परिवार्य्यधृतव्रताः ॥ कृत्वापरिषदंरुच्यांतिष्ठन्तिविगतक्लमाः॥१६०॥यदैवपरमञ्ज्योतिश्चिन्तयत्यम्बिकापतिः ॥ तदैव
तेपारिषदाःसर्व्वेसंव्वेष्टयन्तितम् ॥६१॥ तेषोडशसमाख्याताःकोटयोयेयतव्रताः ॥ सिंहव्याघ्रादिसारूप्याअणिमादिसमा
युताः ॥ ६२ ॥ अपरेकामिनःशम्भोःसुनर्म्मसचिवाःस्मृताः ॥ विचित्ररूपाभरणाजटाचन्द्रार्द्धमण्डिताः ॥ ६३ ॥ हरस्यतु

ल्यारूपेणविशदावृषभध्वजाः ॥ उमासदृशरूपाभिःप्रमदाभिःसमागताः ॥ ६४ ॥ विचित्रमाल्याभरणादिव्यस्रग्गन्धभू
षिताः ॥ उमासहायङ्क्रीडन्तमनुगच्छन्तिभूषिताः ॥ ६५ ॥ शृङ्गारवेषाभरणाअष्टौतेकोटयोगणाः ॥ अर्द्धनारीश्वराश्चान्ये
त्वर्द्धनारीश्वरंहरम् ॥ ६६ ॥ ध्यानस्थम्प्रविविशुस्तेतुल्यरूपाहरस्यये ॥ उमासहायोहियदारमतेसमुखंहरः ॥ ६७ ॥ अ
र्द्धनारीशरीरास्तुद्वारपालाभवन्तिते ॥ आकाशमार्ग्गेगच्छन्तमनुगच्छन्तिनित्यशः ॥ ६८ ॥ ध्यानस्थम्परिचर्य्यन्तिसलिला
दिभिरीश्वरम् ॥ नानाशस्त्रधराःशम्भोर्ग्गणास्तेप्रमथाःस्मृताः ॥ ६९ ॥ प्रमथन्तिचयुद्धेषुयुद्ध्यमानान्महाबलान् ॥ तेवैमहा
बलाःशूराःसङ्ख्ययानवकोटयः ॥ १७० ॥ अपरेगायनास्तालमृदङ्गपणवादिभिः ॥ नृत्यन्तिवाद्यङ्कुर्व्वन्तिगायन्तिमधुर
स्वरम् ॥ ७१ ॥ नानारूपधरास्तेवैसङ्ख्ययाकोटयस्त्रयः ॥ सततञ्चानुगच्छन्तिविचरन्तम्महेश्वरम् ॥ ७२ ॥ सर्व्वेमायाविनः
शूराःसर्व्वेशास्त्रार्थपारगाः ॥ सर्व्वेसर्व्वत्रसर्व्वज्ञाःसर्व्वेसर्व्वत्रगाःसदा ॥ ७३ ॥ मुहूर्त्तात्सर्व्वभुवनङ्गत्वायान्तिपुनर्भवम् ॥
अणिमाद्यष्टकैश्वर्य्ययुक्तास्तेवैमहाबलाः ॥ ७४ ॥ अपरेरुद्रनामानोजटाचन्द्रार्द्धमण्डिताः ॥ देवेन्द्रस्यनियोगेनवर्त्तन्तेत्रि
दिवेसदा ७५ ॥ तेषांसङ्ख्याचैककोटिस्तेसर्व्वेबलवत्तराः ॥ कुर्व्वन्तिहिसदासेवांहरस्यसततङ्गणाः ॥ ७६ ॥ विस्मयन्तिच
पापिष्ठान्धर्म्मिष्ठान्पालयन्तिच ॥ अनुगृह्णन्तिसततन्धृतपाशुपतव्रतान् ॥ ७७ ॥ विघ्नांश्चसततङ्कुर्न्तियोगिनाम्प्रयतात्म

नाम्॥ षट्त्रिंशत्कोटयश्चैतेहरस्यसकलागणाः ॥ ७८॥ वराहगणनाशार्थंहितायजगतान्तथा॥ शङ्करस्याथसेवायैसमुत्प
न्नाइमेगणाः ॥७९॥ वराहस्यगणान्दृष्ट्वानरसिंहन्तथाहरिम्॥ स्वयंशरभरूपःसन्ध्यायन्नादय्यँदाकरोत्॥१८०॥ तच्छोक
राद्यतोजातास्ततस्तेषाम्बहुरूपता॥ क्रूरदृष्ट्याक्रूरयुद्धैःक्रूरकृत्यैरिमान्गणान्॥८१॥ वराहस्यघ्नतेत्येवय्यँतःप्रोक्तङ्कपर्द्दिना॥
अतस्तेक्ररकर्म्माणःप्रजाताश्चभयङ्कराः ॥८२॥ नसदाक्रूरकर्म्माणितेकुर्व्वन्तिमहौजसः॥ दृष्टिमात्रस्यतेक्रूराः क्रूरास्ते
नतुकार्य्यतः॥८३॥ फलञ्जलन्तथापुष्पम्पत्रम्मूलन्तथैवच॥ निवेदितानिभुञ्जन्तिवनपर्व्वतसानुषु॥८४॥ आहत्यापिचभु
ञ्जन्तिपत्रम्पुष्पादिकञ्चयत्॥ भवेद्भर्ग्गस्ययद्भोग्यन्तद्भोग्या स्तेमहौजसः॥८५॥ आमिषाणिचनाश्नन्तिहित्वाचैत्रचतुर्द्दशी
म्॥तत्रामिषंहरोभुङ्क्तेचतुर्द्दश्याम्मधौसदा॥८६॥ ततः सर्व्वेगणास्तत्रभुञ्जन्तिपललान्यपि॥ हतेवराहस्यगणेभर्ग्गमासाद्य
तेगणाः॥८७॥ चतुर्ब्भागाः स्वयम्भूत्वाभूतकर्म्मेतिवैजगुः॥ भूतत्वमभवत्तेषाञ्चतुर्ब्भागवतान्तदा॥८८॥ वचनात्पद्मयो
नेस्तुभूतग्रामास्ततोमताः॥ योलोकविदितः पूर्व्वम्भूतग्रामश्चतुर्व्विधः॥८९॥ यतस्तेभ्योधिकोयत्तद्भूतग्रामःसउच्यते॥ इ
तिवःकथितंसर्व्वम्भूताः शम्भुगणायथा॥१९०॥यदाहारायदाकारायत्कृत्यास्तेमहौजसः॥ यइदंशृणुयान्नित्यमाख्यानमम्म
हदद्भुतम्॥सदीर्घायुः सदोत्साहीयोगयुक्तश्चजायते॥९१॥इतिश्रीकालिकापुराणेएकत्रिंशोध्यायः॥३१॥ऋषयऊचुः॥॥

कथय्यँज्ञवराहस्यदेहोयज्ञत्वमाप्तवान् ॥ त्रेतात्वमगमन्पुत्रावराहस्यकथन्त्रयः ॥ १ ॥ आकालिकोयम्प्रलयः
कस्माद्भगवताकृतः ॥ जनक्षयोमहाघोरोवराहेणमहात्मना ॥ २ ॥ कथव्वांमत्स्यरूपेणवेदाम्नाताश्चशार्ङ्गिणा ॥
कथम्पुनरभूत्सृष्टिःकेनचोर्व्वीसमुद्धृता ॥ ३ ॥ ईश्वरःशारभङ्कायन्त्यक्तवान्वाकथङ्गुरो ॥ कीदृक्प्रवृत्तन्तद्देहन्तन्नोवदम
हामते ॥ ४ ॥ एतेषान्द्विजशार्दूलभवान्प्रत्यक्षदर्शिवान् ॥ तन्नोद्यश्रोष्यमाणानाङ्कथयस्वमहामते ॥ ५ ॥ ॥ मा
र्कण्डेयउवाच ॥ ॥ शृणुध्वन्द्विजशार्दूलायत्पृष्टोहमिहाद्भुतम् ॥ शृण्वन्नवहिताःसर्व्वेसर्व्ववेदफलप्रदम् ॥ ६ ॥ यज्ञे
षुदेवास्तुष्यन्तियज्ञेसर्व्वम्प्रतिष्ठितम् ॥ यज्ञेनध्रियतेपृथ्वीयज्ञस्तारयतिप्रजाः ॥ ७ ॥ अन्नेनभूताजीवन्तिपर्ज्जन्या
दन्नसम्भवः ॥ पर्ज्जन्योजायतेयज्ञात्सर्व्वय्यँज्ञमयन्ततः ॥ ८ ॥ सयज्ञोभूद्वराहस्यकायाच्छम्भुविदारितात् ॥ यथा
हङ्कथयेतद्वःशृण्वन्त्ववहिताद्विजाः ॥ ९ ॥ विदारितेवराहस्यकायेभर्ग्गेणतत्क्षणात् ॥ ब्रह्मविष्णुशिवादेवाःसर्व्वैश्चप्र
मथैःसह ॥ १० ॥ निन्युर्ज्जलात्समुद्धृत्यतच्छरीरान्नभःप्रति ॥ तद्विभिदुःशरीरन्तेविष्णोश्चक्रेणखण्डशः ॥ ११ ॥ त
स्याङ्गसन्धयोयज्ञाजातास्तेवैपृथक्पृथक् ॥ यस्माद्दङ्गाच्चयेजातास्तच्छृण्वन्तुमहर्षयः ॥ १२ ॥ भ्रूनासासन्धितो
जातोज्योतिष्टोमोमहाध्वरः ॥ हनुश्रवणसन्ध्योस्तुवह्निष्टोमोऽव्यजायत ॥ १३ ॥ चक्षुर्भ्रुवोःसन्धिनातुव्रात्यष्टोमोऽव्य

जायत ॥ जातःपौनर्भवष्टोमस्तस्यपोत्रौष्ठसन्धितः ॥ १४ ॥ वृद्धष्टोमबृहत्स्तोमौजिह्वामूलादजायताम् ॥ अतिरात्रंस
वैराजमधोजिह्वान्तरादभूत् ॥ १५ ॥ अध्यापनम्ब्रह्मयज्ञःपितृयज्ञस्तुतर्प्पणम् ॥ होमोदैवोबलिर्भौतोनृयज्ञोतिथिपूजन
म् ॥ १६ ॥ स्नानन्तर्प्पणपर्य्यन्तन्नित्ययज्ञाश्चसर्व्वशः ॥ कण्ठसन्धेःसमुत्पन्नाजिह्वातोविधयस्तथा ॥ १७ ॥ वाजि
मेधमहामेधौनरमेधस्तथैवच ॥ प्राणिहिंसाकरायेन्येतेजाताःपादसन्धितः ॥ १८ ॥ राजसूयोर्थकारोचवाजपेयस्तथै
वच ॥ पृष्ठसन्धौसमुत्पन्नाग्रहयज्ञास्तथैवच ॥ १९ ॥ प्रतिष्ठोत्सर्गयज्ञाश्चदानश्राद्धादयस्तथा ॥ हस्तसन्धितःसमुत्प
न्नाःसावित्रीयज्ञएवच ॥ २० ॥ सर्व्वेसांस्कारिकायज्ञाप्रायश्चित्तकराश्चये ॥ तेमेढ्रसन्धितोजातायज्ञास्तस्यमहात्मनः
॥ २१ ॥ रक्षःसत्रंसर्प्पसत्रंसर्व्वञ्चैवाभिचारिकम् ॥ गोमेधोवृक्षयागश्चखुरेभ्योह्यभवन्निमे ॥ २२ ॥ मायेष्टिःपरमेष्टि
श्चगीष्पतिर्भोगसम्भवः ॥ लाङ्गूलसन्धौसञ्जाताअग्नीषोमस्तथैवच ॥ २३ ॥ नैमित्तिकाश्चयेयज्ञाःसङ्क्रान्त्यादौप्रकीर्त्ति
ताः ॥ लाङ्गूलसन्धौतेजातास्तथाद्वादशवार्षिकम् ॥ २४ ॥ तीर्थप्रयोगमाशौचयज्ञःसङ्कर्षणस्तथा ॥ अर्क्कमाथर्व्व
णश्चैवनाडीसन्धेःसमुद्गताः ॥ २५ ॥ ऋचोत्कर्षःक्षेत्रयज्ञःपञ्चमार्ग्गातियोजनः ॥ लिङ्गसंस्थानहेरम्बयज्ञाजाताश्चजा
नुनि ॥ २६ ॥ एवमष्टाधिकञ्जातंसहस्रान्द्विजसत्तमाः ॥ यज्ञानांसततल्लोकायैर्भाव्यन्तेधुनापिच ॥ २७ ॥ स्तुगस्य

पोत्रात्सञ्जातानासिकायाःस्रुवाभवत् ॥ अन्येस्रुक्स्रुवभेदायेतेजाताःपोत्रनासयोः ॥२८॥ ग्रीवाभागेनतस्याभूत्प्राग्वंशोमु
निसत्तमाः ॥ इष्टापूर्तिर्यजुर्धर्मौजाताःश्रवणरन्ध्रतः॥२९॥ दंष्ट्राभ्योह्यभवन्यूपाःकुशारोमाणिचाभवन् ॥ उद्गाताचतथाध्व
र्युर्होताशामित्रमेवच ॥३०॥ अग्रदक्षिणवामाङ्घ्रिपश्चात्पादेषुसङ्गताः ॥ पुरोडाशाःसचरवोजातामस्तिष्कसञ्चयात्॥ ३१ ॥
कर्णुर्नेत्रद्वयाज्जातायज्ञकेतुस्तथाखुरात्॥मध्यभागोभवद्वेदीमेढ्रात्कुण्डमजायत ॥ ३२ ॥ रेतोभागात्तथैवाज्यंस्वधामन्त्राः
समुद्गताः ॥यज्ञालयःपृष्ठभागाद्धृत्पद्माद्यज्ञएवच ॥३३ ॥ तदात्मायज्ञपुरुषोमुञ्जाःकक्षात्समुद्गताः ॥ एवंग्रावन्तियज्ञाना
म्भाण्डानिचहवींषिच ॥३४॥ तानियज्ञवराहस्यशरीरादेवचाभवन् ॥ एवंयज्ञवराहस्यशरीरंयज्ञतामगात्॥ ३५॥ यज्ञरू
पेणसकलमाप्यायितुमिदञ्जगत् ॥ एवंविधाययज्ञन्तुब्रह्मविष्णुमहेश्वराः॥३६॥सुवृत्तङ्कनकङ्घोरमासेदुर्यज्ञतत्पराः ॥ तत
स्तेषांशरीराणिपिण्डीकृत्यपृथक्पृथक् ॥ ३७॥ त्रिदेवास्त्रिशरीराणिव्यधमन्मुखवायुभिः ॥ सुवृत्तस्यशरीरन्तुव्यधमन्मुख
वायुना ॥३८॥ स्वयमेवजगत्स्रष्टादक्षिणाग्निस्ततोभवत् ॥ कनकस्यशरीरन्तुध्मापयामासकेशवः ॥३९॥ ततोभूद्गार्हपत्या
ग्निःपञ्चवैतानभोजनः ॥ घोरस्यतुवपुःशम्भुर्ध्मापयामासवैस्वयम् ॥ ततआहवनीयोग्निस्तत्क्षणात्समजायत ॥ ४० ॥ ए
तैस्त्रिभिर्जगद्व्याप्तन्त्रिमूलंसकलञ्जगत् ॥ एतद्यत्रत्रयन्नित्यन्तिष्ठतिद्विजसत्तमाः ॥ ४१ ॥ समस्तादेवतास्तत्रवसन्त्यनुच

१ मस्तिष्कंमस्तकभवघृताकारस्नेहः ।

रैःसह्यः॥एतद्भद्रपदन्नित्यमेतद्देवत्रयात्मकम् ॥४२॥ एतत्त्रयीविधिस्थानमेतत्पुण्यकरम्परम् ॥ यस्मिञ्जनपदेचैतैर्हूयन्तेवह्न
यस्त्रयः ॥४३॥ तस्मिञ्जनपदेनित्यञ्चतुर्व्वर्गोविवर्द्धते ॥ एतद्वःकथितंसर्व्वंयत्पृष्टोहन्द्विजोत्तमाः ॥४४॥ यथायज्ञवराहस्य
देहोयज्ञत्वमाप्तवान् ॥ यथाचतस्यपुत्राणान्देहतोवह्नयोभवन् ॥४५॥ इतिश्रीकालिकापुराणेद्वात्रिंशोध्यायः ॥३२॥ ॥ मार्क
ण्डेयउवाच॥आकालिकोयम्प्रलयोयतोभगवताकृतः॥तच्छृण्वन्तुमहाभागावाराहँल्लोकसङ्क्षयम् ॥१॥यथावामत्स्यरूपेणवे
दास्त्राताश्चशार्ङ्गिणा ॥ तदहंसम्प्रवक्ष्यामिसर्व्वपापप्रणाशनम् ॥ २ ॥ पुरामहामुनिःसिद्धः कपिलोविष्णुरीश्वरः ॥ साक्षा
त्स्वयंहरिर्य्योसौसिद्धानामुत्तमोमुनिः ॥ ३ ॥ ध्यायतःसिद्धमित्येवंसर्व्वञ्जगदिदंस्वतः ॥ यतोजातोहरेःकायात्कपिलस्ते
नसस्मृतः ॥४॥ सएकदापुराभूत्वामनोःस्वायम्भुवेन्तरे ॥ स्वायम्भुवम्मनुव्वाँक्यम्मुनिवर्य्योब्रवीदिदम् ॥ ५ ॥ कपिलउ
वाच ॥ स्वायम्भुवमुनिश्रेष्ठब्रह्मरूपमहामते ॥ ममैवमीप्सितार्थन्त्वन्देहिप्रार्थयतोधुना ॥ ६॥ जगत्सर्व्वन्त्वयैवेदन्त्वयाचप
रिपालितम् ॥ त्वयासर्व्वञ्जगत्सृष्टन्त्वमेवजगताम्पतिः ॥ ७ ॥ स्वर्गेपृथिव्याम्पातालेदेवमानुषजन्तुषु ॥ त्वम्प्रभुर्व्व
रदोगोप्तात्वमेवैकःसनातनः ॥ ८ ॥ त्वँव्वैधाताविधाताचत्वंहिसर्व्वेश्वरेश्वरः ॥ त्वयिप्रतिष्ठितंसर्व्वंसततम्भुवनत्रयम् ॥९॥
तपस्यतोयत्रसमम्प्रतिभास्यत्तिसोनुगम् ॥ कार्य्यंकारणतत्त्वौघसहितानिजगन्तिवै ॥१०॥ तन्मेदेहिरहःस्थानन्त्रिषुलोकेषु

दुर्ल्लभम् ॥ पुण्यम्पापहरंरम्यञ्ज्ञानप्रभवमुत्तमम् ॥ ११ ॥ अहंहिसर्व्वभूतानाम्भूत्वाप्रत्यक्षदर्शिवान् ॥ उद्धरिष्येजग
ज्जातन्निर्म्माय्यज्ञानदीपिकाम् ॥१२॥अज्ञानसागरेमग्नमधुनासकलञ्जगत् ॥ ज्ञानप्लवम्प्रदायाहन्तारयिष्येजगत्त्रयम् ॥१३॥
एतस्मिन्माम्भवान्सम्यगुपपन्नमिहेच्छति ॥ त्वन्नोनाथश्चपूज्यश्चपालकश्चजगत्प्रभो ॥ १४ ॥ इत्येवमुक्तःसमनुःकपिलेन
महात्मना ॥ प्रत्युवाचमहात्मानङ्कपिलंसंशितव्रतम् ॥ १५ ॥ ॥ मनुरुवाच ॥ ॥ यदित्वयाखिलजगद्धितार्थञ्ज्ञानदी
पिकाम् ॥ चिकीर्षुणायतःकार्य्यङ्किंस्थानार्थनयातव ॥१६॥ हिरण्यगर्भःसुमहत्तपस्तेपेपुराद्भुतम् ॥ समेययाचेतपसेस्था
नङ्कस्मैनचद्विज ॥ १७ ॥ शम्भुःसम्भोगरहितोदेवमानेनवत्सरान् ॥ अयुतानितपस्तेपेसोपिस्थानन्नचैक्षत ॥ १८ ॥ देवे
न्द्रोवीतिहोत्रश्चसमनोरक्षसाम्पतिः ॥ यादःपतिर्म्मातरिश्वाधनाध्यक्षस्तथैवच ॥ १९ ॥ एतेतेपुस्तपस्तीव्रन्दिक्पालत्वम
भीप्सवः ॥ स्थानन्नमार्ग्गयामासुःकिञ्चनापिमहामुने ॥२०॥ देवागाराणितीर्थानिक्षेत्राणिसरितस्तथा ॥ बहूनिपुण्यभाञ्ज्य
त्रतिष्ठन्तिकपिलक्षितौ ॥२१॥ तेषामेकतमन्त्वञ्चेदासाद्यकुरुषेतपः ॥ स्थानम्ब्रह्मँस्तपःसिद्धिर्न्नभविष्यतितत्रकिम् ॥२२॥
मत्तःस्थानार्थनातावल्केवलन्तेविकत्थनम् ॥ अथर्व्वकत्थनोधर्म्मोयुज्यतेनतपस्विनाम् ॥२३॥ ॥ मार्कण्डेयउवाच ॥
एतच्छ्रुत्वावचस्तस्यमनोःस्वायम्भुवस्यतु ॥ चुकोपकपिलःसिद्धःप्रोवाचचतदामनुम् ॥ २४ ॥ ॥ कपिलउवाच ॥ ॥ त्व

यिविश्रम्भमाधायतपसःसिद्धयेचिरात्॥स्थानम्मयाप्रार्थितन्तेतन्माक्षिपसिहेतुभिः ॥२५॥ अनेनात्युग्रवचसातवैवाहन्नच
क्षमे ॥ स्वयन्त्रिभुवनाध्यक्षइतितेगर्व्वईदृशः ॥ २६ ॥ अक्षाम्यन्तेवचोमेद्यप्रार्थनायाव्विँकत्थनम् ॥ यत्त्वँव्वदसितस्यत्व
म्फलमेतदवाप्नुहि ॥ २७ ॥ इदन्त्रिभुवनंसर्व्वँसदेवासुरमानुषम् ॥ हतप्रहतविध्वस्तमचिरेणभविष्यति ॥ २८ ॥ येनै
यमुद्धृतापृथ्वीयेनवास्थापितापुनः ॥ योवास्याअन्नकर्त्तास्याद्योवास्याःपरिरक्षकः ॥ २९ ॥ तएवसर्व्वेहिसन्तुसकलंसच
राचरम् ॥ नचिराद्द्रक्ष्यसिमनोजलपूर्णञ्जगत्त्रयम् ॥ ३० ॥ हतप्रहतविध्वस्तन्तवगर्व्वविशातनम् ॥ एवमुक्त्वामुनीन्द्रोसौ
कपिलस्तपसान्निधिः ॥ ३१ ॥अन्तर्द्धेजगामापितदाब्रह्मसदोमुनिः॥ कपिलस्यवचःश्रुत्वाविषण्णवदनोमनुः ॥ ३२ ॥
भावीतिप्रतिपद्याशुमनुर्न्नोवाचकिञ्चन ॥ ततः स्वायम्भुवोधीमांस्तपसेधृतमानसः ॥ ३३ ॥ हितायसर्व्वंजगतान्दिदृक्षु
र्ग्गरुडध्वजम् ॥ विशालाम्बदरींय्यँातोगङ्गाद्वारान्तिकङ्कलु ॥ ३४ ॥ तत्रगत्वाजगद्धर्त्तामनुः स्वायम्भुवः स्वयम् ॥ ददर्श
बदरीन्तत्रपुण्याम्पापप्रणाशिनीम् ॥ ३५ ॥ सदाफलवतीनित्यम्मृदुशाद्वलमञ्जरिम् ॥ सुच्छायाम्मसृणांशीर्ण्णशुष्कपत्र
विवर्ज्जिताम् ॥ ३६ ॥ गङ्गातोयौघसंसिक्तशिखामूलान्तराखिलाम् ॥ उपास्यमानांसततन्नानामुनितपोधनैः ॥ ३७ ॥
तत्स्थानंसर्व्वतोभद्रन्नानामृगगणान्वितम् ॥ फुल्लारविन्दसलिलंरमणीयव्वृषप्रदम् ॥ ३८ ॥ प्रविश्यतपसेयत्नमकरोल्लो

१ बहुवचनमुद्धारकादिबहुत्वात् ।

कभावनः ॥ सभूत्वानियताहारः परमेणसमाधिना ॥ ३९ ॥ आराधयामासहरिञ्जगत्कारणकारणम् ॥ सर्व्वेषाञ्जगता
न्नाथन्नीलमेघाञ्जनप्रभम् ॥ ४० ॥ शङ्खचक्रगदापद्मधरङ्कमललोचनम् ॥ पीताम्बरधरन्देवङ्गरुडोपरिसंस्थितम् ॥ ४१ ।
जगन्मयल्लोँकनाथव्व्यक्ताव्यक्तस्वरूपिणम् ॥ जगद्बीजंसहस्राक्षंसहस्रशिरसम्प्रभुम् ॥ ४२ ॥ सर्व्वव्यापिनमाधारन्न
रायणमजव्विँभुम् ॥ जपन्नेतत्परम्मन्त्रंसर्व्ववेदमयम्मनुः ॥ ४३ ॥ हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपिणे ॥ ओँनमोव
सुदेवायशुद्धज्ञानस्वरूपिणे ॥ ४४ ॥ इतिजप्यम्प्रजपतोमनोः स्वायम्भुवस्यतु ॥ प्रससादजगन्नाथः केशवोनचिरादथ
॥ ४५ ॥ ततः क्षुद्रझषोभूत्वादूर्व्वादलसमप्रभः ॥ कर्प्पूरकलिकायुग्मतुल्यनेत्रयुगोज्ज्वलः ॥ ४६ ॥ तपस्यन्तम्म
हात्मानम्मनुंस्वायम्भुवम्मुनिम् ॥ आससादतदाक्षुद्रमत्स्यरूपीजनार्द्दनः ॥ ४७ ॥ उवाचचमहात्मानम्मनुंस्वायम्भुव
न्तथा ॥ सुसन्त्रस्तः सकारुण्ययुक्तम्भीतिसगद्गदम् ॥ ४८ ॥ तपोनिधेमहाभागभीतम्मान्त्रातुमर्हसि ॥ नित्यमुद्वेजितम्म
त्स्यैर्व्विशालैर्भक्षितुम्प्रति ॥ ४९ ॥ प्रत्यहम्माम्महाभागमीनाधावन्तिभक्षितुम् ॥ समन्ततोधिकारान्तुत्वन्नाथोगोपितुङ्क्ष
मः ॥ ५० ॥ अद्यप्रभूतैर्व्विपुलैर्द्दारितः पृथुरोमभिः ॥ विश्रान्तोहङ्क्षुद्रतरोनचशक्तः पलायने ॥ ५१ ॥ प्राणाकाङ्क्षीमहा
त्मानम्भवन्तंशरणम्मुनिम् ॥ प्राप्तोहश्चेदनुक्रोशस्तेस्तिमाम्प्रतिपालय ॥ ५२ ॥ भयोद्भ्रान्तमनाश्चाहव्वृक्षछायाञ्चचञ्चला

म् ॥ दृष्ट्वाचलतरङ्गाँश्चमत्स्यादिवबिभेम्यहम् ॥ ५३ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इतितस्यवचःश्रुत्वामनुःस्वा
यम्भुवस्ततः ॥ कृपयापरयायुक्तःप्रोचेहंरक्षितातव ॥ ५४ ॥ ततःकरोदरेतोयमादायाधायतत्रतम् ॥ समक्षञ्चद्रमत्स्यस्यवि
हारंसमलोकयत् ॥ ५५ ॥ ततोदयालुःसमनुस्तम्मत्स्यञ्चारुरूपिणम् ॥ अलिञ्जरेतोयपूर्णेन्यधाद्विपुलभोगिनि ॥ ५६ ॥
सतस्मिन्मणिकेमत्स्योवर्द्धमानोदिनेदिने ॥ सामान्यरोहितप्रायदेहोभून्नचिरादथ ॥ ५७ ॥ दशघटजलपूर्णम्प्रत्यहंसम
हात्मामणिकमतिकुर्व्वन्वर्द्धयामासमत्स्यम् ॥ सचसुविशदनेत्रोमत्स्यबालोचिरेण मणिकसलिलमध्येलोमशःपीनदे
हः ॥ ५८ ॥ इतिश्रीकालिकापुराणेत्रयस्त्रिंशोध्यायः ॥ ३३ ॥ छ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ तन्तथापीवरत
नुन्दृष्ट्वामत्स्यम्मनुःस्वयम् ॥ गृहीत्वापाणिनाफुल्लनलिनांसरसीय्ययौ ॥ १ ॥ तत्सरस्तत्रविपुलम्पुण्येनारायणाश्रमे ॥ ए
कयोजनविस्तीर्ण्णंसार्द्धयोजनमायतम् ॥ २ ॥ नानामीनगणोपेतंशीतामलजलोत्करम् ॥ तदासाद्यसरोमत्स्यव्विंनि
धायमनुस्तदा ॥ ३ ॥ पालयामाससुतवत्कृपयापरयायुतः ॥ सोचिरेणैवकालेनपीनोवैसारिणोभवत् ॥ ४ ॥ नममौत
त्रसरसिवृहत्वाद्द्विजसत्तमाः ॥ सएकदामहामत्स्यःपूर्व्वापरतटद्वये ॥ ५ ॥ शिरःपुच्छेनिधायाशुतुङ्गदेहःसमुच्छ्रितः ॥
स्वायम्भुवम्महात्मानञ्चुक्रोशत्राहिमामिति ॥ ६ ॥ तन्तथासमनुर्ज्ञात्वाक्रोशन्तंस्थूलपुच्छकम् ॥ आससादतदामत्स्यञ्चग्राह

१ अलिञ्जरः मृदादिघटितजलपात्रविशेषः । २ भलिञ्जरे । ३ प्रशंसायांकन् ।

चकरेणतम् ॥ ७ ॥ नशक्याम्यहमुद्धर्त्तुम्पृथुरोमाणमद्भुतम् ॥ इतिसञ्चिन्तयन्नेवप्रोद्दधारकरेणनम् ॥ ८ ॥ भगवान
पिविश्वात्मामत्स्यरूपीजनार्द्दनः ॥ स्वायम्भुवकरम्प्राप्यलघिमानमुपाश्रयत् ॥ ९ ॥ ततःकराभ्यामुद्धृत्यस्कन्धेकृत्वा
णुजम्मनुः ॥ निनायसागरन्तत्रतोयेचनिदधेततः ॥ १० ॥ यथेच्छमत्रवर्द्धस्वनकोपित्वाम्वँधिष्यति ॥ अचिरेणैवसम्पू
र्णदेहंत्वंसमवाप्नुहि ॥ ११ ॥ इत्युक्त्वासमहाभागःसर्व्वप्राणभृताम्वँरः ॥ लघुत्वञ्चिन्तयँस्तस्यविस्मयम्परमङ्गतः ॥ १२ ॥
मत्स्योपिनचिरादेवपूर्णकायस्तदामहान् ॥ सर्व्वतःपूरयामासदेहाभोगेनसागरम् ॥ १३ ॥ तम्पूर्णकायमालोक्यठय
तीत्याम्भःसमुच्छ्रितम् ॥ शिलाभिर्न्निचितस्फीतम्मानसाचलसन्निभम् ॥ १४ ॥ रुन्धन्तंसागरंसर्व्वदेहाभोगाचलीकृतम् ॥
स्वायम्भुवोमनुर्द्धीमान्मेनेमत्स्यन्नतन्तदा ॥ १५ ॥ ततःपप्रच्छतंसाम्नामत्स्यंस्वायम्भुवोमनुः ॥ विचिन्त्यलघिमानञ्चपश्य
न्मूर्त्तिन्तदाद्भुताम् ॥ १६ ॥ मनुरुवाच ॥ नत्वाम्मत्स्यमहम्मन्येकस्त्वम्मेवदसत्तम ॥ महत्त्वल्लँघिमानन्तेचिन्तयन्त्सु
महत्तर ॥ १७ ॥ त्वम्ब्रह्माह्यथवाविष्णुःशम्भुर्व्वामीनरूपधृक् ॥ नचेद्भुत्यम्महाभागतन्मेवदमहामते ॥ १८ ॥
मत्स्यउवाच ॥ आराध्योहन्त्वयानित्यध्योर्हँरिःससनातनः ॥ तवेष्टकामसिद्धयर्थम्प्रादुर्भूतःसमाहितः ॥ १९ ॥ यत्त्व
मिच्छसिभूतेशमत्तस्त्वम्मोनमूर्त्तितः ॥ तत्करिष्येऽद्यताम्मूर्त्तिमिमाव्विँद्धिमनोमम ॥ २० ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इति

१ आभोगः परिपूर्णता । देहपूर्णतयेत्यर्थः ।

तस्यवचः श्रुत्वाविष्णोरमिततेजसः ॥ ज्ञात्वाप्रत्यक्षतोविष्णुम्मनुस्तुष्टावकेशवम् ॥ २१ ॥ ॥ मनुरुवाच ॥ ॥ नमस्तेजग
दव्यक्तपरापरपतेहरे ॥ पावकादित्यशीतांशुनेत्रत्रयधराव्यय ॥ २२ ॥ जगत्कारणसर्व्वज्ञजगद्धामहरेपर ॥ परापरात्मरू
पात्मन्पारिणाम्पारकारण ॥ २३ ॥ आत्मानमात्मनाधृत्वाधरारूपधरोहरे ॥ बिभर्षिसकलाँल्लोकानाधारात्मँस्त्रिविक्रम
॥ २४ ॥ सर्व्ववेदमयश्रेष्ठधामधारणकारण ॥ सुरौघपरमेशाननारायणसुरेश्वर ॥ २५ ॥ अयोनिस्त्वञ्जगद्योनिरपाद
स्त्वंसदागतिः ॥ त्वन्तेजस्पर्शहीनश्चसर्व्वेशस्त्वमनीश्वरः ॥ २६ ॥ त्वमनादिः समस्तादिस्त्वन्नित्यानन्तरोन्तरः ॥ य
द्वैममण्डञ्जगताम्बीजम्ब्रह्माण्डसञ्ज्ञितम् ॥ २७ ॥ तद्बीजम्भवतस्तेजस्त्वयोक्तंसलिलेषुच ॥ सर्व्वाधारोनिराधारोनिर्हेतुः
सर्व्वकारणम् ॥ २८ ॥ नमोनमस्तेविश्वेशलोकानाम्प्रभवप्रभो ॥ सृष्टिस्थित्यन्तहेतुस्त्वंव्विधिविष्णुहरात्मधृक् ॥ २९ ॥
यस्यतेदशधामूर्तिरूर्म्मिषट्कादिवर्ज्जिता ॥ ज्योतिःपतिस्त्वमम्भोधिस्तस्मैतुभ्यन्नमोनमः ॥ ३० ॥ कस्तेभावव्वँक्तुमीशः
परेशस्थूलात्स्थूलोयोणुरूपोर्थवर्ग्गात् ॥ तस्मैनित्यम्मेनमोस्त्वद्वयोभूदादित्यवर्ण्णन्तमसः परस्तात् ॥ ३१ ॥ सहस्त्रशी
र्षापुरुषःसहस्त्रपात्सहस्त्रचक्षुः पृथिवींसमन्ततः ॥ दशाङ्गुलय्योँहिसमेत्यतिष्ठत्समेप्रसीदत्विहविष्णुरुग्रः ॥ ३२ ॥ नमस्ते
मीनमूर्तेहेनमस्तेभगवन्हरे ॥ नमस्तेजगदानन्दनमस्तेभक्तवत्सल ॥ ३३ ॥ ॥ मार्कण्डेयउवाच ॥ स्वयाम्भुवेन

मनुनासंस्तुतोमत्स्यरूपधृक् ॥ वासुदेवस्तदाप्राहमेघगम्भीरनिःस्वनः ॥ ३४ ॥ ॥ भगवानुवाच ॥ ॥ तुष्टोस्मि
तपसातेद्यभक्त्याचापिस्तुतोमुहुः ॥ सपर्य्ययाचदानेनवरव्वँरयसुव्रत ॥ ३५ ॥ इष्टार्थंसम्प्रदास्यामितुभ्यन्नात्रविचार
णा ॥ वरयस्वेप्सितान्कामाल्लँोकानाव्वाँहितश्चयत् ॥ ३६ ॥ ॥ मनुरुवाच ॥ ॥ यदिदेयोवरोमेद्यलोकानाय्येयोहि
तोभवेत् ॥ तन्मेदेहिवरव्विँष्णोतव्वँक्ष्यामिशृणुष्वमे ॥ ३७ ॥ शशापकपिलः पूर्व्वम्मदर्थेभुवनत्रयम् ॥ हतप्रहतवि
ध्वस्तंसकलन्तेभवेदिति ॥ ३८ ॥ येनेयमुद्धृतापृथ्वीयेनेयम्प्रतिपालिता ॥ संहरिष्यतियस्त्वेनान्तेधुनाह्लावयन्त्विमाम्
॥ ३९ ॥ ततोहन्दीनहृदयस्त्वामेवशरणङ्गतः ॥ नयथेदन्त्रिभुवनम्भविष्यतिजलप्लुतम् ॥ ४० ॥ हतप्रहतविध्वस्तन्त
थात्वन्देहिमेवरम् ॥ भगवानुवाच ॥ नमत्तःकपिलोभिन्नस्तथानकपिलादहम् ॥ ४१ ॥ यदुक्तन्तेनमुनिनामयोक्त
व्विँद्धितन्मनो ॥ तस्माद्यदुदितन्तेनतत्सत्यन्नान्यथाभवेत् ॥ ४२ ॥ करिष्येतत्रसाहाय्यंस्वायम्भुवनिबोधतत् ॥ हतं
प्रहतविध्वस्तेतोयमग्रेजगत्त्रये ॥ ४३ ॥ नचिरादेवतत्तोयंशोषयिष्यामिवैमनो ॥ यावज्जलप्लवस्तावद्यथाकार्य्यन्त्वया
मनो ॥ ४४ ॥ तन्मेनिगदतःपथ्यंशृणुष्वावहितोधुना ॥ सर्व्वयज्ञियकाष्ठौघैरेकानौकाविधीयताम् ॥ ४५ ॥ तामहन्द्रढयि
ष्यामियथानोभिद्यतेजलैः ॥ दशयोजनविस्तीर्णान्त्रिंशद्योजनमायताम् ॥ ४६ ॥ धारणींसर्व्वबीजानाम्भुवनत्रयवर्द्धि

नीम् ॥ सर्व्वयज्ञियवृक्षाणाम्भूरिबल्वलतन्तुभिः ॥ ४७ ॥ नवयोजनदीर्घान्तुव्यामत्रयसुविस्तृताम् ॥ कुरुष्वत्वम्मनो
तूर्णम्बृहतीमीरिकाव्वटीम् ॥ ४८ ॥ जगद्धात्रीजगन्मायालोकमाताजगन्मयी ॥ द्रढयिष्यतितांरज्जुन्नत्रुट्यतियथात
था ॥ ४९ ॥ सर्व्वाणिबीजान्यादायसवेदान्त्सप्तवैऋषीन् ॥ तस्यान्नाविनिषण्णस्त्वव्वर्त्तमानेजलप्लवे ॥ ५० ॥ दक्षेण
सहसङ्गम्यस्मरिष्यसिमनोमम ॥ स्मृतोहन्तूर्णमायास्येभवतोनिकटम्प्रति ॥ ५१ ॥ श्यामलेनाथशृङ्गेणत्वम्माञ्ज्ञास्य
सिवैतदा ॥यावत्प्रहतविध्वस्तहतंस्याद्भुवनत्रयम्॥५२॥तावत्पृष्ठेनतान्नावव्वोढाहन्नात्रसंशयः॥जलप्लुतेतुसम्पूर्णेशृङ्गेमम
चतान्तरिम् ॥ ५३ ॥ त्वन्तदावटीरिकयासन्धानिष्यसिवैदृढम् ॥ बद्धायान्नाविमेशृङ्गेदेवमानेनवत्सरान् ॥ ५४ ॥ सहस्र
म्प्रेरयिष्यामितान्नावंशोषयञ्जलम् ॥ ततःशुष्केषुतोयेषुप्रोत्तुङ्गेशिखरेगिरेः ॥ ५५ ॥ हिमाचलस्यबद्धाहन्तस्मिन्नावमहम्म
नो ॥ ताव्वैगोपयितानित्याव्याँवद्भूःशोषयेज्जलम् ॥ ५६ ॥ चिन्तितोहन्त्वयाप्राप्स्येयदाहिनिकटन्तव ॥ शृङ्गेणश्यामलेनैव
त्वम्माञ्ज्ञास्यासिपुष्करे ॥ ५७ ॥ पुनःसृष्टिन्ततःकृत्वामत्प्रसादान्महामते ॥ त्रैलोक्यदुर्ल्लभामृद्धिमवाप्स्यसिसनातनीम्
॥ ५८ ॥ अहमाराधितोयेनजप्येनभवतामनो ॥ सर्व्वसिद्धिर्भवेत्तस्ययस्तोषयतितेनमाम्॥५९॥ ॥ मार्कण्डेयउवाच॥
इतिदत्वावरन्तस्मैमत्स्यस्तेननमस्कृतः ॥ अन्तर्दधेजगन्नाथोलोकानुग्रहकारकः ॥ ६० ॥ स्वायम्भुवोपिभगवानन्तर्द्धान

२ व्यामोबाह्वोःसकरयोरित्यमरः ॥ १ वटी रज्जुः।

ङ्गतेहरौ ॥ यथोक्तंहरिणापूर्व्वन्नावंरज्जुन्तथाकरोत् ॥ ६१ ॥ सर्व्वैर्यज्ञियवृक्षौघाञ्छित्वास्वायम्भुवस्तदा ॥ उद्धृत्यका
रयामासवास्यादिभिरसौतरिम् ॥ ६२ ॥ तेषाव्वँल्कलमुद्भूतसूत्रसङ्घैर्व्वटीरिकाम् ॥ पूर्व्वोक्तेनप्रमाणेनकारयामासवै
मनुः ॥६३॥ततःकालेनमहतावृत्तय्युँद्धम्महाद्भुतम् ॥ विष्णोर्य्यज्ञवराहस्यशरभस्यहरस्यच ॥ ६४ ॥ ततोजलप्लवेजा
तेविध्वस्तेभुवनत्रये ॥ तयारज्ज्वातरिम्बद्ध्वाबीजान्यादायसर्व्वशः ॥ ६५ ॥ वेदानृषीस्तँदासप्तदशञ्चादायवैमनुः ॥
तस्यान्नाविसमाधायतोयमग्नेचराचरे ॥ ६६ ॥ स्वायम्भुवस्तदामत्स्यंहरिंसस्मारनौगतः ॥ ततोजलानामुपरिसशृङ्गइवप
र्व्वतः ॥ ६७ ॥ उदितश्चैकशृङ्गेणविष्णुर्म्मत्स्यस्वरूपधृक् ॥ आगतस्तत्रनचिराद्यत्रास्तेतरिणांमनुः ॥ ६८ ॥ तरिमारु
ह्यविपुलेतोयराशौभयङ्करे ॥ यावच्चलाचलन्तोयन्तावत्पृष्ठेतरिंन्यधात् ॥ ६९ ॥ जलेप्रकृतिमापन्नेशृङ्गेबद्ध्वावटीरिकाम् ॥
तान्नावन्नोदयामाससहस्रन्दैववत्सरान् ॥ ७० ॥ स्वयन्नावमवष्टभ्यदधारपरमेश्वरः ॥ योगनिद्राजगद्धात्रीसमासीद्दृढटी
रिकाम् ॥ ७१ ॥ ततः शनैः शनैस्तोयेशोषङ्गच्छतिवैचिरात् ॥ पश्चिमंहिमवच्छृङ्गंसुमग्नन्तोयमध्यतः ॥ ७२ ॥ द्वेसह
स्त्रेयोजनानामुच्छ्रितस्यहिमप्रभोः ॥ पञ्चाशत्तुसहस्राणिशृङ्गन्तत्तस्यचोच्छ्रितम् ॥ ७३ ॥ तस्मिञ्छृङ्गेततोनावम्बद्धाम
त्स्यात्मधृग्घरिः ॥ जगामशोषणायाशुजलानाञ्जगताम्पतिः ॥ ७४ ॥ एवंहिमत्स्यरूपेणवेदास्त्राताश्चशार्ङ्गिणा ॥ क

१ आर्षोनाभावः।

पिलस्यतुशापेनकृतआकालिकोलयः ॥ ७५ ॥ आकालिकोयम्प्रलयोयतोभगवताकृतः ॥ इतिवः कथितंसर्व्वंय्यँथावद्दि
जसत्तमाः ॥ ७६ ॥ इतिश्रीकालिकापुराणेचतुस्त्रिंशोध्यायः ॥ ३४ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ ७ ॥ यथापुनरभू
त्सृष्टिरकालप्रलयेगते ॥ येनचैवोद्धृतापृथ्वीतच्छृण्वन्तुद्विजोत्तमाः ॥ १ ॥ व्यतीतेप्रलयेविष्णुः कूर्म्मरूपीमहाबलः ॥ पृ
ष्ठेनिधायपृथिवीमुद्धृत्याथसपर्व्वताम् ॥ २ ॥ समाञ्चकारसकलाम्पूर्व्ववत्परमेश्वरः ॥ शरभस्यवराहस्यतत्पुत्राणाम्पदक्र
मैः ॥ ३ ॥ यत्रभूमिर्व्विशीर्णाभूत्तांसमाक्रमठोकरोत् ॥ कृत्वासमन्ततोभूमिम्पूर्व्ववत्परमेश्वरः ॥ ४ ॥ अनन्तन्धारयामा
सपृथिवीतलसंश्रितम् ॥ ततोब्रह्माचविष्णुश्चहरश्चपरमेश्वरः ॥ ५ ॥ नावोदरस्थान्त्सप्तमुनीन्मनुंस्वायम्भुवन्तदा ॥ न
रनारायणौचौभौदक्षश्चोचुः समागताः ॥ ६ ॥ शृण्वन्तुमुनयः सर्व्वेनरनारायणौतथा ॥ दक्षस्वायम्भुवमनोवयम्ब्रूमोधु
नाचयत् ॥ ७ ॥ सृष्टिर्न्नष्टावराहस्यशरभस्यचसङ्गरात् ॥ अतोस्माकंय्ययथाकार्य्यासृष्टिराकर्ण्णयन्तुतत् ॥ ८ ॥ नरनाराय
णावेतौसृष्ट्यर्थंसमुपस्थितौ ॥ संस्थापनायदेवानाम्परमन्तप्यतान्तपः ॥ ९ ॥ आप्याय्यतपसाचोभौजनलोकगता ९२
न्सुरान् ॥ आनयन्त्वपराञ्छश्वत्सँसृजन्तुगणान्बहून् ॥ १० ॥ नक्षत्राणिग्रहाँश्चैवतेषांस्थानानिवैमुने ॥ एतयोस्तप
सायान्तुस्थिरताम्पूर्व्ववन्मनो ॥ ११ ॥ सूर्य्यस्यरथसंस्थानन्तथाचन्द्ररथस्थितिम् ॥ करोत्वयम्महाभागः स्वयमेवजना

१ नावउदरस्थामित्यत्रयत्वयलोपयोः सतोरार्षत्वात्सन्धिः ।

र्द्दनः ॥ १२ ॥ पृथिव्यांसर्व्वबीजानिस्वायम्भुवमनोत्वया ॥ उप्यन्तांसर्व्वतःसस्यपूर्णाभवतुमेदिनी ॥ १३ ॥
प्ररोहयौषधीर्व्वृक्षाल्लँतावल्लीश्चसर्व्वतः ॥ स्वायम्भुवमहान्त्येतत्प्राप्तान्यृतुफलानिच ॥ १४ ॥ दक्षःसप्तमुनीन्द्रै
स्तुयज्ञेनयजतांहरिम्॥ वराहपुत्रदेहोत्थमग्नित्रयमिदय्यँजन् ॥ १५ ॥ असौयज्ञोवराहस्यदेहाज्जातस्तुसृष्टये ॥ अ
नेनैवतुयज्ञेनदक्षःसृष्टिन्तनोत्विमाम् ॥ १६ ॥ नरनारायणाभ्यान्तुमुनिभिःसप्तभिस्तथा ॥ दक्षेणभवताचापियज्ञे
नैभिस्तथाग्निभिः ॥ १७ ॥ सम्पूर्य्यतामियंसृष्टिःस्वर्ग्गेभुविरसातले ॥ वयञ्चसृष्टिमाप्याय्ययथासम्पद्यतेत्वियम् ॥
॥ १८ ॥ यतिष्यामस्तथानित्यय्यूँयङ्कुरुतसर्ज्जनम् ॥ ततःसम्पद्यतांसृष्टिर्य्यथापूर्व्वन्तथैवच ॥ १९ ॥ प्रथमन्त्व
न्तुबीजानिप्ररोहयमनोधुना ॥ ॥मार्क्कण्डेयउवाच ॥ ॥इत्यादिश्यमहाभागाविधिविष्णुवृषध्वजाः ॥ २० ॥ यथास्था
नंस्थापयितुम्पर्व्वतान्प्रययुस्ततः ॥ मेरुमन्दरकैलासहिमवत्प्रभृतिष्वथ ॥ २१ ॥ पुराणिसर्व्वदेवानान्तेवैचक्रुःपृथक्पृ
थक् ॥ परित्यज्यततोनावमवधृत्यवसुन्धराम् ॥ २२ ॥ स्वायम्भुवःक्षितौबीजान्यवपत्सर्व्वसम्पदे ॥ ततोवृक्षलताव
ल्लीगुल्मानिचवनानिच ॥ २३ ॥ बालसस्यानिधान्यानितथैवौषधयःसमाः ॥ बीजकाण्डप्ररोहाश्चप्रतानाजलजा
निच ॥ २४ ॥ प्रफुल्लानिविकोशानिफलकन्ददलानिच ॥ बभूवुःशाद्वलान्येवसर्व्वेषाम्प्राणवृद्धये ॥ २५ ॥ पृथि

वीसस्यसम्पन्नाद्वृक्षास्तेशाद्वलाःशुभाः ॥ दृष्टाःपूर्व्वंयथातस्मान्मनुनाचित्तहर्षिणा ॥ २६ ॥ ततोनरोमहायोगीतपस्ते
पेमहत्तमम् ॥ नारायणश्चदेवानाम्भावनायमहामतिः ॥ २७॥ नारायणोनरश्चोभौपरमावृषिसत्तमौ ॥ तपसाराध्यपरम
न्तेजोमयमनामयम् ॥२८॥आनिन्यातेजलगतान्देवान्देवर्षिसत्तमान् ॥ येमृताअमराःपूर्व्वङ्गणशस्तान्पृथक्पृथक् ॥ २९॥
तपोबलेनमहतासर्ज्जयामासतुर्म्मुनी ॥ सूर्य्याचन्द्रमसौदेवौदिक्पालाँश्चतथादश ॥ ३० ॥ जनार्द्दनःस्वयञ्चक्रेपाताल
तलवासिनः ॥ सूर्य्याचन्द्रमसोश्चक्रेरथसंस्थानमच्युतः ॥ ३१ ॥ पूर्व्ववद्योजयामासदिवारात्रस्थितौचतौ ॥ ओषधी
षुचजातासुयज्ञवृक्षेषुसत्तमाः ॥ ३२ ॥ सस्यबीजेषुजातेषुदेवेषुचपृथक्पृथक् ॥ दक्षःकर्त्तुंसमारेभेज्योतिष्टोमम्महाध्व
रम् ॥ ३३ ॥ कश्यपोत्रिर्व्वसिष्ठश्चविश्वामित्रोथगौतमः ॥ जमदग्निर्भरद्वाजएतेसप्तर्षयोमलाः ॥ ३४ ॥ एतैःसप्त
मुनीन्द्रैस्तुदक्षोब्रह्मसुतःस्वयम् ॥ महायज्ञन्ततश्चक्रेयावद्द्वादशवत्सरान् ॥ ३५॥ हूयमानेषुतत्रैवत्रिष्वग्निषुपुनःपुनः ॥
इज्यमानेवराहेतुयज्ञरूपेतदाद्विजैः ॥ ३६ ॥ चतुर्व्विधाःप्रजाजातायज्ञाद्देवद्विजोत्तमाः ॥ ततोदक्षस्यसञ्जाताःपुत्र्यःपुण्या
स्त्रयोदश ॥ ३७॥ सुरूपगुणसम्पन्नाःसृष्ट्यर्थममितप्रजाः ॥ ताःपुत्रीःप्रददौदक्षःकश्यपायमहात्मने ॥ ३८ ॥ ताभ्यो
जाताश्चबहवस्तैर्व्याप्तंसकलञ्जगत् ॥ ससर्व्वासाम्प्रजानान्तुकश्यपोजनकोह्यभूत् ॥ ३९ ॥ निश्चितन्द्विजशार्द्दूलाःकश्य

पात्सकलञ्जगत् ॥ तासान्नामानितज्जाताःप्रजाःसर्व्वाःपृथक्पृथक् ॥४०॥ शृण्वन्तुमुनयःसर्व्वेसम्यक्कथयतोमम ॥ अदिति
र्द्दितिर्द्दनुःकालादनायुःसिंहिकामुनिः ॥४१॥ क्रोधाप्रधावरिष्ठाचविनताकपिलातथा ॥ कद्रूस्त्रयोदशसुताएतादक्षस्यकीर्त्ति
ताः ॥ ४२ ॥ सञ्जातोदक्षिणाङ्गुष्ठान्मनसाध्यायतोविधेः ॥ तेनदेवमनुष्येषुदक्षइत्येवकथ्यते ॥४३॥ ब्रह्मणोमानसाःपुत्राद
शपूर्व्वम्प्रकीर्त्तिताः ॥ तेषांषट्सृष्टिकर्त्तारोव्यतीतेस्मिञ्जनक्षये ॥४४॥ मरीचिरत्र्यङ्गिरसौपुलस्त्यःपुलहःक्रतुः ॥ मरीचेस्तन
योजातःकाश्यपोलोकभावनः ॥ ४५ ॥ अस्यैवदक्षकन्याभ्यःप्रजाजज्ञेथभूरिशः ॥ अस्यजायाप्रजातानान्नामतोविनिबो
धत ॥ ४६ ॥ धातामित्रोर्य्यमाशक्रोवरुणःसोमएवच ॥ भगोविवस्वान्पूषाचसवितात्वष्टाविष्णवः ॥ ४७ ॥ अदितेर्द्वादशसु
ताआदित्यास्तेप्रकीर्त्तिताःएषाङ्कनीयान्गुणवान्त्सदायस्तपतिप्रजाः ॥ ४८॥ सर्ववंशकरोमुख्योगद्यतेवोदिवाकरः ॥ एकए
वदितेःपुत्रोहिरण्यकशिपुर्ब्बली ॥ ४९ ॥ चत्वारस्तस्यतनयाहृष्टामदबलान्विताः ॥ प्रल्हादोह्यथसंह्लादोबाष्कलःशिबिरे
वच ॥ ५० ॥ प्रल्हादस्यत्रयःपुत्रास्तेषामाद्योविरोचनः ॥ कुम्भोनिकुम्भोबलवाँस्त्रयःप्राल्हादयःस्मृताः ॥ ५१ ॥ विरोचन
सुतोजातोदानशौण्डोबलिर्म्महान् ॥ बलेश्चपुत्रोविदितोबाणोनाममहाबली ॥ ५२ ॥ शम्भोरनुचरःश्रीमान्महाकालाह्व
यश्चसः ॥ बाणस्यचशतम्पुत्राःकुसुम्भमकरादयः ॥ ५३ ॥ चत्वारिंशद्दनोःपुत्राविप्रचित्तिपुरःसराः ॥ शम्बरोनमुचिश्चैवपु

लोमाचतथैवच ॥ ५४ ॥ असिलोमातथाकेशीदुर्ज्जयोऽयःशिरास्तथा ॥ अश्वशीर्षोह्ययःशङ्कुर्व्वियन्मूर्द्धामहाबलः ॥५५॥
वेगवान्केतुमाँश्चैवअयःस्वर्भानुरेवच ॥अश्वोह्यश्वपतिःकुण्डोवृषपर्व्वाजकस्तथा ॥ ५६ ॥ अश्वग्रीवश्चसूक्ष्मश्चतुरुण्डुम्मर्मा
ण्डलस्तथा ॥ ईषुबाहुश्चैकचक्रोविरूपाक्षोहराहरौ॥५७॥नियन्त्रश्चनिकुम्भश्चकपसुश्चपटस्तथा ॥ सरभःशूलभश्चैवसूर्य्य
चन्द्रमसौतथा ॥ ५८ ॥ अन्यावेतौदनोःपुत्रौसूर्य्यचन्द्रमसौतथा ॥ दिवाकरनिशानाथौतावन्यौदेवपुङ्गवौ ॥ ५९ ॥
एषाम्पुत्रैश्चपौत्रैश्चतत्पुत्रैश्चैवभूरिभिः ॥ जगद्व्याप्तमिदंसर्व्वम्बलवीर्य्यसमन्वितैः॥६०॥दनायुषोभवन्पुत्राश्चत्वारोबलवत्त
राः॥वीरभद्रोविक्षरश्चवत्सोवृत्तस्तथैवच॥६१॥एषाञ्चतुर्ण्णाम्बहवःपुत्राजाताद्विजोत्तमाः॥ रूपसत्त्वबलोपेताएकैकस्यशतं
शतम्॥६२॥ कालायास्तनयाजाताःकालेयाइतिविश्रुताः॥विख्यातास्तेमहावीर्य्याश्चत्वारोदानवाधिपाः॥६३॥विनाशनश्च
क्रोधश्चक्रोधहन्तातथैवच॥क्रोधशत्रुस्तथाचैतेकालापुत्राःप्रकीर्त्तिताः॥६४॥सिंहिकायाःसुतोजातोराहुश्चंद्रार्कमर्दनः॥ सुच
न्द्रश्चन्द्रहन्ताचतथाचन्द्रविमर्द्दनः॥६५॥क्रोधायास्तनयाजाताः क्रूरकर्म्मकरास्तथा ॥ सिंहिकाचैवक्रोधाचद्वेसुतेक्रूरिकेसदा
॥६६॥ताभ्याञ्चप्रभवोवंशोह्यतःक्रूरतरःस्मृतः॥ एकएवमुनेःपुत्रोजातःशुक्रःकविर्म्महान्॥६७॥ दैत्यदानवकालेयप्रभृतीनां
सदागुरुः॥ चत्वारस्तस्यतनयाजाताअसुरयाजकाः ॥ ६८ ॥ त्वष्टावरस्तथात्रिश्चसौकलश्चेतिवाग्मिनः ॥ तेजसासूर्य्य

सदृशाब्रह्मलोकप्रभावना: ॥ ६९ ॥ असुराणांसदैत्यानाङ्कालेयानान्तथैवच ॥ क्रोधात्मजानाञ्चतथासिंहिकातनयस्यच
॥७०॥ सूतिप्रसूतिभिःसर्व्वञ्जगद्व्याप्तञ्चराचरम् ॥ तेषान्तुयान्यपत्यानिवर्द्धितानिक्रमाद्द्विजाः ॥७१॥तेषाम्बहुत्वात्सङ्ख्यातु
ञ्चिरेणापिनशक्यते ॥तार्क्ष्यश्चारिष्टनेमिश्चअनूरुर्गरुडस्तथा॥७२॥आरुणिर्व्वारुणिश्चैवविनतातनयाःस्मृताः ॥ शेषोवा
सुकिराजश्चतक्षकःकुलिकस्तथा ॥७३॥ कूर्म्मश्चसुमनाश्चेतिकाद्रवेयाःप्रकीर्त्तिताः ॥भीमसेनोग्रसेनश्चसुपर्णोगरुडस्तथा
॥७४॥गोपतिर्द्धृतराष्ट्रश्चसूर्य्यवर्च्चाश्चवीर्य्यवान् ॥ अर्क्कपृष्ठःप्रयुक्तश्चविश्रुतःसुश्रुतस्तथा ॥७५॥ भीमश्चित्ररथश्चैवविख्या
तःसर्व्वविद्वशी ॥ शालिशीर्षश्चपर्ज्जन्यःकलिर्न्नारदएवच ॥ ७६॥ इत्येतेदेवगन्धर्व्वामुनिपुत्राःप्रकीर्त्तिताः ॥ अनवद्यांसानुरा
गांसवराम्मार्ग्गणाम्प्रियाम्॥७७॥असूयांसुभगाम्भासीमितिकन्याअसूयत ॥प्राधासर्व्वगुणोत्थानात्कश्यपात्तुतपोधनात्
॥७८॥विश्वावसुः सुचन्द्रश्चसुपर्णःसिद्धएव ॥ बार्हिःपूर्णश्चपूर्णाङ्गोब्रह्मचारीरतिप्रियः ॥ ७९ ॥ भानुश्चदशमश्चैतेप्राधा
पुत्राःप्रकीर्त्तिताः ॥इत्येतेदेवगन्धर्व्वाःसन्ततम्पुण्यलक्षणाः ॥ ८० ॥ प्राधासूतमहाभागादेवीदेवर्षिसत्तमात् ॥ अलम्बूषा
मिश्रकेशीगामिनीचमनोरमा॥८१॥ विद्युत्पर्णानघारम्भात्वरुणारक्षितातुला॥सुबाहुःसुरताचैवसुरजासुप्रियातथा ॥८२॥
वपुस्तिलोत्तमाचेतिमुख्याअप्सरसःस्मृताः ॥ अतिबाहुस्तुम्बुरुश्चहाहाहूहूस्तथैवच ॥ ८३ ॥ गन्धर्व्वाणामिमेमुख्यादेवतु

ल्याः प्रकीर्त्तिताः ॥ अमृतम्ब्राह्मणागावोमुनयोप्सरसस्तथा ॥ ८४ ॥ कपिलातनयाः प्रोक्तामहाभागामहोत्सवाः ॥ इति
दक्षसुतानाय्यौँकश्यपात्तनयास्मृताः ॥ ८५ ॥ तैरिदँसकलँव्याप्तञ्जगत्स्थावरजङ्गमम् ॥ एवय्यँज्ञवराहस्ययज्ञरूपस्यपा
तनात् ॥८६॥ त्रिभ्योग्निभ्योमनोस्तस्मात्स्वायम्भुवमहात्मनः ॥ मुनिभ्यश्चैवसप्तभ्यः कश्यपादिभ्यएवच ॥८७॥ नरनाराय
णाभ्यान्तुव्यतीतेऽकालिकेलये ॥ पुनः प्रजाः पुरासृष्टाहरिणानेकरूपिणा ॥ ८८ ॥ एवम्पूनरभूत्सृष्टिः सृष्टिस्थित्यन्तका
रिणः ॥ हरेस्तस्यप्रसादेननरनारायणात्मनः ॥ ८९ ॥ इतिश्रीकालिकापुराणेपञ्चत्रिंशोध्यायः ॥ ३५ ॥ ॥ मार्कण्डे
यउवाच ॥ ॥ ७ ॥ ईश्वरः शरभाङ्गायय्यँथातत्याजयत्नतः ॥ तन्मेनिगदतोभूयः शृणुध्वन्द्विजसत्तमाः ॥ १ ॥ हतेय
ज्ञवराहेतुब्रह्मालोकपितामहः ॥ उवाचशरभङ्गन्त्वासामयुक्तञ्जगद्धितम् ॥ २ ॥ देहाभोगेनभवतः पूरितम्भूरियोजनम् ॥
उपसंहरतस्मात्त्वङ्कायल्लोँकभयङ्करम् ॥ ३ ॥ तवयुद्धेनसकलम्प्रनष्टम्भुवनत्रयम् ॥ आकाशगन्तुत्वान्दृष्ट्वाबिभेत्यद्यज
नार्द्दनः ॥ ४ ॥ तस्मात्त्वमूर्द्ध्वलोकानांहितायत्यजवैतनुम् ॥ ॥ मार्कण्डेयउवाच ॥ ॥ ततस्तस्यवचः श्रुत्वासुरज्ये १५
ष्ठस्यशङ्करः ॥ ५ ॥ तत्याजशारभाङ्गायन्तोयोपय्यैँवतत्क्षणात् ॥ त्यक्तस्यतस्यदेहस्यशङ्करेणमहात्मना ॥ ६ ॥ अष्टौ
पादाअष्टमूर्त्तैस्तेषुचाष्टसुभेजिरे ॥ आद्यन्तुदक्षिणम्पादमाकाशमगमद्द्रुतम् ॥ ७ ॥ तद्वामम्मिहिरम्भेजेपश्चाद्दक्षिणज

र्विधौ ॥ वामन्तुज्वलनम्भेजेपृष्ठाग्रम्पद्मतङ्क्तिम् ॥ ८ ॥ पृष्ठाग्रवामंसलिलन्तत्पश्चाद्दक्षिणन्तथा ॥ वायौवामपदम्भेजेहो
तारंसर्वतोमुखम् ॥ ९ ॥ एवन्तस्याष्टमूर्तेस्तुअष्टमूर्तिषुतत्क्षणात् ॥ अष्टौपादास्तथाभेजुःस्वंस्वन्तेजोययुःपदम् ॥ १० ॥
मध्यन्तुशारभङ्कायंशङ्करस्यमहात्मनः ॥ कपालीभैरवोभूतश्चण्डरूपोदुरासदः ॥ ११ ॥ मस्तिष्कमेदसायुक्तम्मांसञ्जुह
तियेशुचौ ॥ ब्रह्मकपालपात्रस्थंसुराभिर्देवपूजनम् ॥ १२ ॥ बलिर्म्मनुष्यमांसेनपानन्तुरुधिरंसदा ॥ सुरयापारणय्यँ
ञ्चकपालोद्भटधारणम् ॥ १३ ॥ व्याघ्रचर्म्मपरीधानंसमलन्त्रिवलीवृतम् ॥ एवङ्कुर्व्वन्तिसततङ्कपालव्रतधारिणः ॥ १४ ॥
कपालीभैरवस्तेषान्देवः पूज्यस्तुनित्यशः ॥ [1]श्मशानभैरवोयोसौयोमहाभैरवाह्वयः ॥ १५ ॥ बालसूर्य्यसमोद्योतः सदा
ष्टादशबाहुभिः ॥ विभ्राजमानोरक्ताक्षः सर्व्वदानायिकाव्रजैः ॥ १६ ॥ कालीप्रचण्डाप्रमुखैः क्रीडमानस्तुनित्यशः ॥
सद्योदग्धनृमांसाशीगलल्लालगलद्भुजः ॥ १७ ॥ लोहिताहारविघसःप्रेताशनगतःसदा ॥ स्थूलवक्त्रोथलम्बोष्ठोह्र
स्वस्थूलपदालयः ॥ १८ ॥ विनोदीवादनोलोकेसाट्टहासस्तुभैरवः ॥ एवंसचमहादेवोमहाभैरवरूपधृक् ॥ १९ ॥
मध्यशारभकायेनकायन्दध्रेमहाभुजः ॥ सजगामततोदेवोहरस्यप्रमथान्प्रति ॥ २० ॥ गणैःसार्द्धन्तथाकाशेविक्रीडति
सभैरवः ॥ समहाभैरवोदेवःपूज्यमानोजगज्जनैः ॥ आद्यापिकुरुतेनित्यमिष्टकामस्यसाधनम् ॥ २१ ॥ चत्रैशुक्लचतुर्दश्या

१ यः स्मशानभैरवः पञ्चमहाभैरवाह्वयःसोप्यसावेनकपालीभैरवएवेत्यर्थः ।

म्मद्वासवप्रयःफलैः ॥ मांसैर्म्मत्स्यैःसरुधिरैःसकृद्योभैरवय्यॅजेत् ॥ २२॥ ससर्व्वकामान्संसाध्यभोगान्भुक्त्वायथेष्टतः
॥ प्रयातिशम्भुभवनमारुह्यवृषभव्वॅरम् ॥ २३ ॥ एवन्दःकथितंसर्व्वय्यॅत्पृष्टोहन्द्विजोत्तमैः ॥ भवद्भिर्य्यच्चवोन्यद्वारोच
तेपृच्छमान्तुतत् ॥ २४ ॥ इतिकालिकापुराणेषट्त्रिंशोध्यायः ॥३६॥ ७ ॥ ऋषयऊचुः ॥ कथव्वॅराहपुत्रोसौनरकोनाम
वीर्य्यवान् ॥ सञ्जातोसुरसलःसदेवदेवीसुतोपिसन् ॥ १ ॥ चिरजीवीकथंसोभूत्किमर्थमुदरेचिरम् ॥ पृथिव्यान्यव
सज्जातःकुत्रवासमहाबलः ॥ २ ॥ सोसुराणांकथंराजापुरन्तस्यकिमाह्वयम् ॥ मलिनीरतिसञ्जातःसक्षितौपोत्रिणस्तथा
॥ ३ ॥ श्रूयतेमुनिशार्द्दूलकथम्भूतस्तथाविधः ॥ एतत्सर्व्वमशेषेणपृच्छतान्तव्वॅदस्वनः ॥ ४॥ त्वन्नोगुरुश्चशास्ताच
सर्व्वप्रत्यक्षदर्शिवान् ॥ कथल्लॅब्धवरोभूतोब्रह्मणाप्रभविष्णुना ॥ ५ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ शृण्वन्तुमुनयःसर्व्वेय
त्पृष्टोहन्द्विजोत्तमाः ॥ यथासनरकोजातोधरागर्भोमहासुरः ॥ ६ ॥ रजस्वलायागोत्रायागर्भेवीर्य्येणपोत्रिणः ॥ यतो
जातस्ततोभूतोदेवपुत्रोपिसोसुरः ॥ ७ ॥ गर्भसंस्थम्महावीरञ्ज्ञात्वाब्रह्मादयःसुराः ॥ वराहपुत्रन्दुर्द्धर्षम्महाबलपराक्र
मम् ॥ ८ ॥ गर्भएवतदादेवाःशक्त्यादध्रुश्चिरन्दृढम् ॥ यथाकालेपिसम्प्राप्तेनोगर्भाज्जायतेसच ॥ ९ ॥ ततस्त्यक्तशरी
रस्तुवराहस्तनयैसह ॥ अतीवशोकसन्तप्ताजगद्धात्र्यभवत्क्षितिः ॥ १० ॥ शोकाकुलासाव्यलपच्चिरकालम्मुहुर्म्मुहुः ॥

प्रकृतिस्थाक्षितिर्ब्भूतामाधवेनप्रबोधिता॥ ११ ॥ततःकालेपिसम्प्राप्तेदेवशक्त्यायदाधृतः॥ नगर्ब्भःप्रसवय्यँयातितदाभूत्पी
डिताक्षितिः॥ १२ ॥ कठोरगर्ब्भासादेवीगर्ब्भंभारन्नचाशकत्॥ यदावोढुन्तदादेवम्माधवंशरणङ्गता॥ १३ ॥ शरण्यंशरण
ङ्गत्वामाधवञ्जगताम्पतिम्॥ प्रणम्यशिरसादेवीवाक्यमेतदुवाचह॥ १४ ॥ पृथिव्युवाच॥ नमस्तेजगदव्यक्तरूपकारणका
रण॥ प्रधानपुरुषातीतस्थित्युत्पत्तिलयात्मक॥ १५॥ जगन्नियोजनपरस्वाहाभोगधरोत्तम॥ जगदानन्दनन्दात्मनूभगवञ्ज
गदीश्वर॥ १६ ॥ नियोजकोनियोज्यश्चविभ्भ्राजन्विष्णुरव्यय॥ नमस्तुभ्यञ्जगद्धातस्त्रिलोकालयविश्वकृत्॥ १७॥ यःपा
लयतिनित्यानिस्थापयत्येवतत्पर॥ तन्त्वान्नियमरूपेणनमामिजगदीश्वर ॥ १८ ॥ त्वम्माधवःप्रवेकश्चकामःकामालयोल
यः॥प्रसूतिच्युतिहेत्वर्थन्त्राणकारणमीश्वर॥१९॥ नयस्यतेक्केदायस्युरापोनोष्मातथोष्मणे॥ नशीतायभवेच्छीतन्तस्मैतुभ्य
न्नमोनमः॥ २० ॥ नसमुद्रःप्लवकरोनशोषायदहात्मकः॥ नमृत्यवेयस्ययमस्तस्मैतुभ्यन्नमोनमः॥ २१ ॥ यच्चिद्वार्य्यय्यो
गिभिःशान्तदेहैरुन्मार्ग्गाणाय्यँात्यरिध्येयकृत्यम्॥ नित्यय्यँत्तद्रूपमार्ग्गावसक्तंसत्वन्त्राहित्राणमिच्छन्धरित्रीम्॥ २२ ॥
॥ ॥ मार्क्कण्डेयउवाच॥ ॥ इतिश्रुतोहृषीकेशोजगद्धात्र्यातदाहरिः॥ प्रादुर्ब्भूतस्तदाप्राहधरित्रीन्दीनमानसाम्॥
॥२३॥ ॥ श्रीभगवानुवाच॥ ॥ कथन्दीनमनादेविधरित्रिपरिदेवसे॥ तववाक्किङ्कृतांपीडावेत्तुमिच्छामितामहम्॥

॥ २४ ॥ मुखन्तेपरिशुष्कन्तुशरीरङ्कान्तिवर्जितम् ॥ आकुलन्नयनद्वन्द्वम्भ्रूविभ्रमविवर्जितम् ॥ २५ ॥ ईदृशन्त
वरूपन्तुदृष्टपूर्व्वङ्कदापिन ॥ रूपस्यतुविपर्य्यासेदुःखबीजञ्चआषय ॥ २६ ॥ एतच्छ्रुत्वावचस्तस्यमाधवस्यजगत्पतेः
॥ विनयावनतादेवीपृथ्वीप्राहसगद्गदम् ॥ २७ ॥ ॥ पृथिव्युवाच ॥ ॥ नगर्भभारंसव्वोढुम्माधवाहङ्क्षमाधुना ॥ भृश
न्नित्यव्विषीदामितस्मात्त्वन्त्रातुमर्हसि ॥ २८ ॥ त्वयावराहरूपेणमलिनीकामितापुरा ॥ तेनकामेनकुक्षौमेयोगर्भोयन्त्व
याहितः ॥ २९ ॥ कालेप्राप्तेपिगर्भोयन्नप्रच्यवतिमाधव ॥ कठोरगर्भातेनाहम्पीडितास्मिदिनेदिने ॥ ३० ॥ यदिन
त्राहिमान्देवगर्भदुःखाज्जगत्पते ॥ नचिरादेवयास्यामिमृत्योर्व्वशमसंशयम् ॥ ३१ ॥ कथापिनेदृशोगर्भःपूर्व्वम्माधववै
धृतः ॥ योऽचलाञ्चालयतिमांसरसीमिवकुञ्जरः ॥ ३२ ॥ एतच्छ्रुत्वावचस्तस्याःपथिव्याःपृथिवीवरः ॥ आल्हादयन्प्र
त्युवाचहरिस्तत्क्षाल्लँतामिव ॥ ३३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ नघरेतेमहद्दुःखञ्चिरस्थायिभविष्यति ॥ शृणुयेनप्र
कारेणचानुभूतमिदन्त्वया ॥ ३४ ॥ मलिन्यासहसङ्गेनयोगर्भःसन्धृतस्त्वया ॥ सोभूदसुरसत्त्वस्तुघृष्टेःपुत्रोपिदारुणः
॥ ३५ ॥ ज्ञात्वातस्यचवृत्तान्तङ्गर्भस्यद्रुहिणादयः ॥ दैवीभिःशक्तिभिर्ब्बद्धस्तवकुक्षौतुतत्पुरः ॥ ३६ ॥ सर्ग्गादौयदिजायेत
भवत्यास्तादृशःसुतः ॥ भ्रंशयेत्सकलाँल्लोकाँस्त्रीनिमान्त्ससुरासुरान् ॥ ३७ ॥ अतस्तस्यबलव्वीर्य्यञ्ज्ञात्वाब्रह्मादयःसुराः

१ घृष्टिःशूकरी।

प्राक्सृष्टिकालेतेगर्ब्भन्तथाधूर्ज्जगताङ्कते ॥ ३८ ॥ अष्टाविंशतिमेप्राप्तेआदिसर्ग्गाच्चतुर्य्युगे ॥ त्रेतायुगस्यमध्येतुसुतन्त्व
ञ्जनयिष्यसि ॥ ३९ ॥ यावत्सत्ययुगय्यातित्रेतार्द्धञ्चवरानने ॥ तावद्वहमहागर्ब्भन्दत्तःकालोमयातव ॥ ४० ॥ न
यावज्जायतेधात्रिगर्ब्भस्तेत्यतिदारुणः ॥ ४१ ॥ तावद्गर्ब्भंवतीदुःखन्नत्वम्प्राप्स्यसिभामिनि ॥ ॥ मार्क्कण्डेयउवाच ॥
इत्युक्त्वाभगवान्विष्णुःपृथिवीङ्गर्ब्भिणीन्तदा ॥ ४२ ॥ नाभौपरस्पर्शंदयितांशङ्खाग्रेणातिपीडिताम् ॥ सास्पृष्टाविष्णुना
पृथ्वीशरीरल्लँघुचासदत् ॥ ४३ ॥ गर्ब्भोपिलघिमानंसाप्रापातीवसुखप्रदम् ॥ अगर्ब्भायादृशीनारीतादृशीसाप्यजायत
॥ ४४ ॥ धृतगर्ब्भापिमुदितासाबभूवजगत्प्रसूः ॥ ततःपुनरिदंव्वाँक्यमुक्त्वासभगवान्क्षितिम् ॥ ४५ ॥ पुनःप्रसादया
माससामभिर्ब्बहुभिश्श्रुताम् ॥ जगद्धात्रिमहासत्वेत्वन्धृतिर्द्धारणात्मिका ॥ ४६ ॥ सर्व्वेषान्धारणाद्देवित्वन्धात्रीतिप्रगी
यसे ॥ क्षमायस्माज्जगद्धर्त्तुंशक्ताक्षान्तिर्युतात्रयत् ॥ ४७ ॥ सर्व्वंव्वँसुत्वयिन्यस्तय्यँस्माद्वसुमतीततः ॥ तद्दुःखन्त्यजपु
त्रस्तेयदासञ्जायतेतदा ॥ ४८ ॥ मांस्मरिष्यसिदेवित्वम्पुत्रन्तेपालयाम्यहम् ॥ इदंरहस्यङ्कुत्रापिनप्रकाश्यन्त्वयाध
रे ॥ ४९ ॥ यन्मयाकथितन्देविरहस्यम्परमम्परम् ॥ गर्ब्भस्तवमहाभागेत्रेतायामध्यभागतः ॥ ५० ॥ उत्पत्स्यतेहतेवी
रेरावणेरामसञ्ज्ञिना ॥ मार्क्कण्डेयउवाच ॥ ॥ इत्युक्त्वाभगवान्विष्णुस्तत्रैवान्तरधीयत ॥ ५१ ॥ आज्ञाप्यपृथिवीन्देवीङ्गर्ब्भं

भारप्रपीडिताम् ॥ धरापिकुशलाक्षामालघुकायाबलैर्य्युता ॥ अगर्ब्भैवययौदेवीमुदापरमयायुता ॥ ५२ ॥ इतिश्रीकालिका
पुराणेसप्तत्रिंशोध्यायः ॥ ३७॥ ॥ छ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ अथकालेबहुतिथेव्यतीतेद्विजसत्तमाः ॥ विदेहवि
षयेराजाजनकोनामवीर्य्यवान् ॥ १ ॥ सर्व्वराजगुणैर्य्युक्तोराजनीतिविवर्द्धितः ॥ सत्यवाक्शीलवान्दक्षोब्रह्मण्यःप्रयतःशु
चिः ॥ २ ॥ देवद्विजगुरूणाञ्चपूजासुनिरतःसदा ॥ बभूवसर्व्वलोकानाम्पितेवपरिपालकः ॥ ३ ॥ तस्यराज्ञःसुतोना
भूत्प्राप्तेकालेपिवैयदा ॥ तदासविमनाभूत्वाचिन्ताध्यानपरोभवत् ॥ ४ ॥ एकदासोथशुश्रावनारदस्यमुखान्नृपः ॥ अपु
त्रोनृपतिर्व्वृद्धोनाम्नादशरथोमहान् ॥ ५ ॥ पुत्राल्लोभेमहासत्वानध्वरेणमहामतिः ॥ अयोध्यायान्नगर्य्यान्तुऋष्यशृङ्ग
पुरोगमैः ॥ ६ ॥ मुनिभिर्व्विहितैर्य्यज्ञैर्ल्लब्धवान्सनृपःसुतान् ॥ रामञ्चभरतञ्चैवशत्रुघ्नल्लँक्ष्मणन्तथा ॥ ७ ॥ महास
त्वान्महावीरान्देवगर्ब्भोपमाञ्छुभान् ॥ तच्छ्रुत्वाजनकोराजाप्रविश्यान्तःपुरंस्वकम् ॥ ८ ॥ आर्य्याभिर्म्मन्त्रयामासयज्ञा
र्थम्पुत्रजन्मने ॥ मन्त्रयित्वातदाराजामहिषीप्रमुखैःस्वयम् ॥ ९ ॥ चतसृभिस्तुआर्य्याभिर्य्यज्ञार्थन्दीक्षितोभवत् ॥ ततःपुरो
धसंराजागौतमम्मुनिसत्तमम् ॥ १० ॥ तत्पुत्रञ्चशतानन्दम्पुरोधायाकरोन्मखम् ॥ द्वौपुत्रौतस्यसञ्जातौयज्ञभूमौमनो
हरौ ॥ ११ ॥ एकाचदुहितासाध्वीभूम्यन्तरगताशुभा ॥ नारदस्योपदेशेनयज्ञभूमिन्ततोनृपः ॥ १२ ॥ हलेनदारयामासय

ज्ञवाटावधिस्स्वयम् ॥ तद्भूमिजातसीतायांशुभाङ्कन्यांसमुत्थिताम् ॥ १३ ॥ लेभेराजामुदायुक्तः सर्व्वलक्षणसंयुताम् ॥
तस्यान्तुजातमात्रायाम्पृथिव्यन्तर्हितास्वयम् ॥ १४ ॥ जगादवचनञ्चेदङ्गौतमन्नारदन्नृपम् ॥ ॥ पृथिव्युवाच ॥ ॥ एषासु
तामयादत्तातवराजन्मनोहरा ॥ १५ ॥ एनाङ्गृहाणसुभगाङ्कुलद्वयशुभावहाम् ॥ अनयामेमहाभारस्त्वत्वतोहेतुभूतया ॥
॥१६॥ क्षयय्यास्यतिभारार्त्तिम्मोचयिष्यामिदारुणाम् ॥ रावणाद्यामहावीराः कुम्भकर्णादयोपरे ॥ १७ ॥ नाशय्यास्य
न्तिदुर्द्धर्षाः कृतेस्याराक्षसाः परे ॥ त्वञ्चमोदन्दुराधर्षंदुहितृकृतिजन्नृप ॥ १८ ॥ अवाप्स्यसिसुराणाञ्चपितृणामृणशोधन
म् ॥ किन्त्वेकःसमयःकार्य्यस्त्वयाममनरोत्तम ॥ १९ ॥ तमहन्तेप्रवक्ष्यामिपुरोनारदगौतमे ॥ निहतेरावणेवीरेभारार्त्तिरहि
तासुखम् ॥ २० ॥ सुपुत्रञ्जनयिष्यामियज्ञभूमावहन्तव ॥ तम्पुत्रवत्पालयिताभवान्नृपतिसत्तम ॥ २१ ॥ यावद्व्यतीत
बाल्यःसन्भवितातनयोमम ॥ व्यतीतबाल्यन्तमहम्पालयिष्येस्वयन्नृप ॥ २२ ॥ तस्यस्यान्मानुषोभावोयथात्वन्तत्करिष्य
सि ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इतिपृथिव्यावचनंश्रुत्वाराजातदामुदा ॥ २३ ॥ प्रणम्यपृथिवीम्प्राहसान्त्वासजन
काह्वयः ॥ राजोवाच ॥ यत्त्वम्ब्रूषेजगद्धात्रिकरिष्येतद्वचस्तव ॥ २४ ॥ ममापीष्टम्प्रयच्छस्वप्रसीदपरमेश्वरि ॥ देविप्रत्यक्ष
तोरूपन्द्रष्टुमिच्छाम्यहन्तव ॥ २५ ॥ शक्तिस्त्वँल्लोकजननीत्वान्नमामिप्रसीदमे ॥ इतितस्यसीवचःश्रुत्वाजनकस्यतदाक्षितिः

॥ २६ ॥ मुनीनांसन्निधौरूपन्दर्शयामासभूभृते ॥ नीलोत्पलदलश्यामामक्षमालाब्जधारिणीम् ॥ २७॥ बाहुयुग्मेनशुभ्रे
णमृणालायतशोभिना ॥ सुन्दरीँल्लोकधात्रीन्तान्दृष्ट्वाशश्वन्नृपोनमत् ॥ २८ ॥ ततःसापृथिवीदेवीसीताज्ञा तान्नृपात्मजाम् ॥
करेणशश्वत्संस्पृश्यवचनञ्चेदमब्रवीत् ॥ २९ ॥ इयन्तेमानुषम्भावमवाप्स्यतिजगत्प्रसूः ॥ तवपुत्रीनृपश्रेष्ठसमयम्प्रति
पालय ॥ ३० ॥ ॥मार्क्कण्डेयउवाच ॥ ॥इत्युक्त्वापृथिवीदेवीराजानञ्जनकाह्वयम् ॥ सम्भाष्यनारदादींस्तांस्तत्रैवान्त
रधीयत ॥ ३१ ॥ जनकोपिसुतांल्लब्ध्वासर्व्वलक्षणशालिनीम् ॥ सुतद्वयन्तथाप्राप्यमुदितःस्वगृहय्ययौ ॥ ३२ ॥ ततःकाले
तुसम्प्राप्तेरावणेराक्षसेहते ॥ मानुषेणस्वरूपेणविष्णुनाप्रभविष्णुना ॥ ३३ ॥ गत्वाविदेहराजस्ययज्ञभूमिन्तदाक्षितिः ॥
सुषुवेतनयँव्वीरय्यँत्रसीतापुराभवत् ॥ ३४ ॥ जातेपुत्रेतदादेवीजगद्धात्रीजगत्प्रभुम् ॥ सस्मारसमयेविष्णुँस्मरन्तीसमयम्पुरा
॥ ३५ ॥ स्मृतमात्रस्तदादेवःसमयम्प्रतिपालयन् ॥ क्षितेर्य्यत्रसुतोजातस्तत्रप्रादुर्ब्बभूवह ॥ ३६ ॥ प्रादुर्भूतन्तदादेवीप्रणम्य
परमेश्वरम् ॥ संस्तूयसन्नतंशश्वदिदमाहजगत्प्रभुम् ॥ ३७ ॥ पृथिव्युवाच ॥ एषतेतनयोजातःसुकुमारोमहाप्रभः ॥
संस्मरन्तसमयम्पूर्व्वन्त्वमेनम्प्रतिपालय ॥ ३८ ॥ श्रीभगवानुवाच ॥ अयन्तेतनयोदेविमहाबलपराक्रमः ॥ भविता
मानुषम्भावन्तन्वानःसुचिरम्बुधः ॥ ३९ ॥ यावन्मानुषभावन्तेतनयोभावयिष्यति ॥ तावत्कल्याणभाग्भूत्वाचिरंरा

ज्यङ्करिष्यति ॥४०॥ त्यक्तमानुषभावस्तुयदाचायव्विँचेष्टते ॥ तदातुनास्यसुचिरञ्जीवितंसंभविष्यति ॥४१॥ सम्प्राप्तेषोड
शेवर्षेराज्यमासादयिष्यति ॥ धनरत्नगजैश्वर्य्ययुक्तोयंरथसञ्चयैः ॥ ४२ ॥ आसाद्यमहतीन्नित्यांश्रियम्भोक्ष्यतिवीर्य्यवा
न् ॥ यस्मिन्यस्मिय्युँगेभावोयोयोभवतिवैनृणाम् ॥ ४३ ॥ तन्तम्भावन्तथैवायङ्करिष्यतितथाकुरु ॥ एतस्यनिभृतंरा
ज्यय्यँत्प्राग्ज्योतिषसञ्ज्ञकम् ॥ ४४ ॥ पुरन्तत्रचिरंशास्ताराज्यमेषसुतस्तव ॥ इत्युक्त्वापृथिवीव्विँष्णुःसमाभाष्यज
गत्पतिः ॥ ४५ ॥ दृश्यमानस्तयाक्षिप्रन्तत्रैवान्तर्दधे प्रभुः ॥ प्रसूयपृथिवीपुत्रम्मध्यरात्रेमहाद्युतिम् ॥ ४६ ॥ जनक
ञ्ज्ञापयामासरहस्यम्पूर्व्वमीरितम् ॥ विदेहराजोज्ञात्वैवपृथिवीजनितंसुतम् ॥ ४७ ॥ तत्रैवयज्ञवाटंसरात्रावागात्कृत
क्रियः ॥ गछन्तय्यँज्ञवाटन्तन्दृष्ट्वासर्व्वंसहातदा ॥ ४८ ॥ नोक्त्वाकिञ्चनतंशश्वदन्तर्द्धानङ्गतानृपम् ॥ अथगत्वात
दातत्रविदेहाधिपतिःसुतम् ॥ ४९ ॥ धरायान्ददृशेकान्त्याचन्द्रार्कज्वलनोपमम् ॥ रुदन्तम्बहुशःस्निग्धञ्चलद्धस्तपदद्वय
म् ॥ ५० ॥ वपुष्मन्तांश्रियादीप्तङ्कार्त्तिकेयमिवापरम् ॥ उद्गच्छन्त्सरुदन्बालोयज्ञभूमिव्व्यँतीत्यच ॥ ५१ ॥ कियद्दूरञ्ज
गामाशूत्तानशायीमहाद्युतिः ॥ मनुष्यस्यशिरस्तत्रमृतस्यप्राप्यबालकः ॥ ५२ ॥ स्वशिरस्तत्रविन्यस्यरुदस्तँस्थौ
क्षणन्तदा ॥ ततोविदेहराजोपिमार्ग्गमाणःक्षितेःसुतम् ॥ ५३ ॥ व्यतीत्ययज्ञभूमिन्तमाससादाञ्जसाबहिः ॥ आसा

द्यबालकन्दीप्तम्प्रदीप्तमिवपावकम् ॥ ५४ ॥ कान्त्याचन्द्रमसस्तुल्यन्तेजोभिर्भास्करोपमम् ॥ शरमध्यगतम्पूर्व्वम्पावकिम्पा
वकोयथा ॥ ५५ ॥ स्वयङ्ग्राहतंराजापृथिव्याःसमयंस्मरन् ॥ उद्धृक्रन्तच्छिरोदेशेददृशेमानुषंशिरः ॥ ५६ ॥ शशंसचाचिरंशी
र्षम्मानुषङ्गौतमायसः ॥ अथबालंसमादायप्रविश्यान्तःपुरंस्वकम् ॥ ५७ ॥ महिष्यैकथयामासप्राप्तम्पुत्रङ्गुहोपमम् ॥ सातन्दृष्ट्वा
विशालाक्षंसिंहस्कन्धम्महाभुजम् ॥ ५८ ॥ विस्तीर्ण्णहृदयङ्कान्तन्नीलोत्पलदलच्छविम् ॥ मुमोदपालनोयोयम्मयेतिन्यव
दन्नृपम् ॥ ५९ ॥ तांराजापिततः प्राहपुत्रोयम्ममसुन्दरि ॥ यज्ञभूमौसमुत्पन्नः स्वच्छन्दम्पाल्यतामयम् ॥ ६० ॥ यत्पृथि
व्यारहः प्रोक्तन्नतदेव्यैन्यवेदयत् ॥ सत्यसन्धोनृपश्रेष्ठः प्रियायाअपिभाषितम् ॥ ६१ ॥ ममसुतसुतवंशान्पालयित्रीधरेयमि
तिनरपतिवर्य्योमोदवाँस्तद्दिनेच ॥ सुरतनयसमानम्पुत्रमासाद्यदेवीजितरिपुरतिधीमान्स्यादयश्चात्यमोदत् ॥ ६२ ॥ इतिश्री
कालिकापुराणेअष्टत्रिंशोध्यायः ॥ ३८ ॥ छ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ अथतस्यनृपश्रेष्ठोगौतमेनमहर्षिणा ॥ संस्कारङ्का
रयामासविधिनामानुषेणतु ॥ १ ॥ नरस्यशीर्षंस्वशिरोनिधायस्थितिवान्यतः ॥ तस्मात्तस्यमुनिश्रेष्ठोनरकन्नामवैव्यधा
त् ॥ २ ॥ अपरान्बालसंस्कारान्क्षात्रेणविधिनामुनिः ॥ केशान्तावधिसञ्चक्रेऋग्यजुः साममन्त्रकैः ॥ ३ ॥ ववृधेतस्य
सदनेनरकोनामभूसुतः ॥ दिनन्दिनन्धृतान्यःश्रीःशरदीवनिशाकरः ॥ ४ ॥ सराजातंसदाभावैर्म्मानुषैर्य्योजयन्स्वयम् ॥

गौतमस्यसुतेनाथशतानन्देनधीमता ॥ ५ ॥ ग्राहयामासतन्नित्यङ्क्षात्रंभावञ्चमानुषम् ॥ तथैवपृथिवीदेवीधात्रीवेषेणतं सुतम् ॥ ६ ॥ नियतङ्ग्राहयामासमानुषञ्चरितंशुभम् ॥ यदैवपुत्रउत्पन्नस्तदैवपृथिवीस्वयम् ॥ ७ ॥ मायामानुषरूपेणनृपान्तःपुरमाविशत् ॥ प्रविश्यतत्रसादेवीनृपस्यानुमतेभवत् ॥ ८ ॥ धात्रीतस्यद्विजश्रेष्ठाः कात्यायन्याध्यैवस्थया ॥ यावत्षोडशवर्षाणितस्यबालस्यभाविनी ॥ ९ ॥ तावत्स्वयम्पालयन्तीग्राहयामाससन्नयम् ॥ सवर्द्धमानोनुदिनन्नरकः पृथिवीसुतः ॥ १० ॥ अत्यक्रामत्सुतान्सर्व्वाञ्जनकस्यमहात्मनः ॥ शरीरेणाथवीर्य्यैणरूपेणबलवत्तया ॥ ११ ॥ धनुषागदयावीरोह्यत्यक्रामन्नृपात्मजान् ॥ सशास्त्रवादकुशलोधनुर्व्वेदेचकोविदः ॥ १२ ॥ वर्षैः षोडशभिर्भूतोवीरैरन्यैर्दुरासदः ॥ विदेहाधिपतिर्दृष्ट्वामहाबलपराक्रमम् ॥ १३ ॥ ततोन्यूनान्स्वपुत्रांश्चनातिहृष्टमनोभवत् ॥ निरस्यासौचमत्पुत्रान्ममराज्यङ्ग्रहीष्यति ॥ १४ ॥ कालेप्राप्तेमहावीरोमतिस्तस्याभवत्पुरा ॥ अन्तःपुरेयदापुत्रान्सर्व्वान्नमयतेनृपः ॥ १५ ॥ तदातुनरकँव्वीक्ष्यहर्षम्प्राप्नोतिनाधिकम् ॥ तस्यतद्बुबुधेदेवीनृपस्याथवसुन्धरा ॥ १६ ॥ महिषीविस्मयश्चक्रेतस्मिन्भावेतुभूभृतः ॥ अथैकदामहादेवीजनकस्यमहात्मनः ॥ १७ ॥ पप्रच्छनृपतिश्रेष्ठव्विँदेहाधिपतिम्पतिम् ॥ नाथपृच्छामितेकिञ्चिद्रहस्यय्यँदिनोतव ॥ १८ ॥ तदामान्तद्वदस्वत्वङ्कृपाचेद्वियतेमयि ॥ यदैवतनयाः सर्व्वैविहरन्तिपुर

१ अर्द्धवृद्धया। २ दीर्घआर्षः।

स्तव ॥ १९ ॥ तदैवनरकन्दृष्ट्वाविशीर्णइवलक्ष्यसे ॥ तन्मेरात्रिन्दिवम्बाढव्विँस्मयः प्रतिवर्द्धते ॥ २० ॥ संश
यश्चभयश्चैवनजहातिचमांसदा ॥ रूपवान्वीर्य्यवानेषनयेचविनयेतथा ॥ २१ ॥ कुशलः प्रतिबुद्धश्चपुत्रस्तवमहाबलः ॥
नसभाजयसेकस्मात्पुत्रमन्यैर्दुरासदम् ॥ २२ ॥ तदहञ्ज्ञातुमिच्छामियदितथ्यव्वँदस्वमे ॥ ॥ मार्कण्डेयउवाच ॥
॥ इतितस्यावचःश्रुत्वाप्रियायाःपृथिवीपतिः ॥ २३ ॥ तूष्णीम्भूत्वाक्षणन्देवीमिदव्वँचनमब्रवीत् ॥ ॥ राजोवाच ॥
कथयिष्येप्रियेतत्त्वय्यँत्पृष्टोहन्त्वयाधुना ॥ २४ ॥ मासत्रयेव्यतीतेतुसमयम्प्रतिपालय ॥ निगूढःकश्चिदत्रास्तिदेव
स्यसमयोमम ॥ २५ ॥ तेनाधुनानकिञ्चित्तेकथयिष्यामितद्रहः ॥ ॥ मार्कण्डेयउवाच ॥ ॥ राज्ञोत्थयंसभार्य्य
स्यसव्वाँदोभवदन्तिके ॥ २६ ॥ मानुषीपृथिवीधात्रीतंशुश्रावयदातदा ॥ श्रुत्वातयोस्तुसव्वाँदम्महिषीभूपयोःक्षितिः
॥ २७ ॥ मासत्रयेणसमयन्दत्तन्देव्यैधराभृता ॥ तत्कालेविमनस्कञ्चभूपन्नरकसञ्ज्ञया ॥ २८ ॥ त्रिभिर्म्मासै
र्व्यतीतैःस्यादस्यषोडशवत्सरः ॥ ततोनृपोमहिष्यास्तुकथयिष्यतितद्रहः ॥ २९ ॥ ततोममरहस्यन्तुविदितंसम्भविष्य
ति ॥ चिन्तयित्वेतिसादेवीजगद्धात्रीसुतम्प्रति ॥३०॥ निश्चित्येदन्तदाकृत्यम्प्राप्तकालमचेष्टत ॥ ततोरहसिभूपन्तंसमासा
द्यसगौतमम् ॥ ३१ ॥ इदमाहजगद्धात्रीस्वपुत्रार्थँयशस्विनी ॥ योमयासमयोदत्तःपालितःसत्वयानघ ॥ ३२ ॥ पुत्रश्च

पालितोमेयन्नरकोविनयैर्युतः ॥ सम्प्राप्तयौवनःपुत्रोयोजितश्चत्वयानयैः ॥ ३३ ॥ तवप्रसादात्पुत्रोमेसुखीवृद्धोगृहेतव ॥
तमहम्पूर्व्वसमयान्नयिष्यामिस्वमात्मजम् ॥ ३४ ॥ अनुजानीहिभद्रन्तेनरकस्यगतिम्प्रति ॥ रक्षितव्यश्चभवतासमयःस
पुरोधसा ॥ ३५ ॥ छन्नमेवनयिष्यामिभूपतेमाकृथाव्यथाम् ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इत्युक्त्वाजगतान्धात्रीविदेहाधि
पतिन्नृपम् ॥ ३६ ॥ तत्रैवपश्यतान्तेषामन्तर्द्धानमुपागमत् ॥ नृपोपितस्यास्तद्वाक्यमङ्गीकृत्यक्षितिम्प्रति ॥ ३७ ॥ त
स्याःप्रत्यक्षतःस्थानञ्जगामसपुरोहितः ॥ अथैकदावरादेवीमायामानुषरूपिणी ॥ ३८ ॥ उपांशुनरकम्प्राहधात्रीत
स्यमहात्मनः ॥ त्वयासमम्महाबाहोगङ्गाय्यांतुमतोमम ॥ ३९ ॥ यदित्वय्याँसियास्यामिरथेनाद्यैवपुत्रक ॥ ॥ नरकउ
वाच ॥ ॥ नपितुर्व्वचनँय्यास्येविनामातस्त्वयासमम् ॥ ४० ॥ अनुज्ञाप्यमहाराजङ्करिष्यामितवेप्सितम् ॥ गुरुञ्चत
नयन्तस्याःशतानन्दन्द्विजोतत्तमम् ॥ ४१ ॥ अनुज्ञाप्यरथेनाहय्यँास्येगगान्त्वयासमम् ॥ धात्र्युवाच ॥ नतेपितायञ्जनकोयः
सर्व्वजगताम्प्रभुः ॥ ४२ ॥ सतेपितातङ्गङ्गायाम्पश्यगत्वामयासह ॥ अयम्पितापालकस्तेनराज्यंसम्प्रदास्यति ॥
॥ ४३ ॥ यस्तेवर्द्धयितातातमासाद्यपुत्रक ॥ अत्रयद्यद्रहस्यन्तद्गङ्गायामेवपुत्रक ॥ ४४ ॥ कथयिष्याम्यहंस
र्व्वँरहोभङ्गस्ततोन्यथा ॥ ॥ मार्कण्डेयउवाच ॥ ॥ जातसम्प्रत्ययोधात्र्यावचसानरकस्तथा ॥ ४५ ॥ विहाय

यानञ्छन्देनपद्भ्याङ्गङ्गाय्यैययौतदा ॥ अथगङ्गांसमासाद्यसंस्नाप्यविधिवत्सुतम् ॥ ४६ ॥ आत्मानन्दर्शयामास
पृथिवीस्वसुतायवै ॥ मयामानुषमूर्त्तिन्ताव्विँहायजगताम्प्रसूः ॥ ४७ ॥ नीलोत्पलदलश्यामंसर्व्वलक्षणसय्युँतम् ॥
सर्व्वाङ्गसुन्दरञ्चारुनानालङ्कारभूषितम् ॥ ४८ ॥ पुत्रायदर्शयामासनरकायवसुन्धरा ॥ कथामेताञ्चपूर्व्वस्मिन्नुद्धृता
म्पृथिवीतदा ॥ ४९ ॥ कथयामासपुत्रायप्रतीतिज्ज्जायतेयथा ॥ ममगर्भेयथापुत्रवर्द्धसेत्वन्दिनेदिने ॥ ५० ॥ ब्र
ह्मादयस्तदादेवाआलोक्यस्वयमेवते ॥ मलिनीक्षितिसञ्जातःपुत्रोविष्णोर्म्महात्मनः ॥ ५१ ॥ आसुरम्भावमास्थायस
र्व्वानस्मान्हनिष्यति ॥ इतिचिन्तापरादेवाःकुमन्त्रञ्चक्रिरेतदा ॥ ५२ ॥ अयन्नोत्पद्यताङ्गर्भाद्गर्भेतिष्ठत्वयंसदा ॥ त
तोममभवान्गर्भेसुबहूनियुगान्यथ ॥ ५३ ॥ अवसद्दुःखवान्पुत्रदेवानाञ्चकुमन्त्रतः ॥ मृतकल्पाभवमहम्भवतोधारणात्सु
त ॥ ५४ ॥ ततोहंशरणय्याँताभगवन्तंसनातनम् ॥ नारायणस्यवाक्यात्तुभवानुत्पन्नवाँस्ततः ॥ ५५ ॥ इतिसत्यम्ममवचः
पुत्रजानीहिनिश्चितम् ॥ अथयावन्नपुत्रस्यविस्मयःसमपद्यत ॥ ५६ ॥ यावद्देवस्स्वयन्देवीप्रोचेपुत्रमिदव्वँचः ॥ अहन्ते
जननीतातमयाज्ञातोसिपुत्रक ॥ ५७ ॥ पृथिव्यहञ्जगद्धात्रीमद्रूपम्मृन्मयन्विदन् ॥ पितातवमहाबाहोप्रभुर्न्नारायणो
ऽव्ययः ॥ ५८ ॥ अच्युतोजगतान्धातामहात्माशूकरात्मधृक् ॥ तेनाहितस्त्वम्मद्गर्भेसुचिरन्त्वम्पुरावसः ॥ ५९ ॥ सम्प्राप्तेस

मयेजातःपालितश्चेहभूभृता ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इतितस्यावचःश्रुत्वाहर्षशोकाकुलस्तदा ॥ ६० ॥ नरकःपृ
थिवीन्देवीमिदमाहधनुर्द्धरः ॥ नमाताविदितापूर्व्वम्माताहमितिभाषसे ॥ ६१ ॥ विष्णुःपितेतिचवचोनपिताविदितोमम ॥
जानामिपितरञ्चाहँव्विदेहाधिपतिन्नृपम् ॥ ६२ ॥ तस्यभार्य्यांसुमत्याख्यामहञ्जानामिमातरम् ॥ भ्रातरस्तत्सुताःसर्व्वे
सीतामेभगिनीशुभा ॥ ६३ ॥ सुमतिर्म्ममातेतिलोकोजानातिसन्ततम् ॥ कात्यायनीचधात्रीमेयाधुनैवकृतात्वया ॥
॥ ६४ ॥ एतत्सर्व्वन्त्वयामिथ्याशंसितम्ममसाम्प्रतम् ॥ यथातवाहन्तनयःसत्यमाख्याहितन्मम ॥ ६५ ॥ मार्कण्डेय
उवाच ॥ ॥ पुत्रस्यवचनञ्चेतिश्रुत्वासर्व्वंसहातदा ॥ सर्व्वन्तत्पूर्व्ववृत्तान्तन्तनयायन्यवेदयत् ॥ ६६ ॥ यथामलि
न्याःसम्भोगोवराहस्याभवत्पुरा ॥ यथागर्भोधृतोदेवैर्य्येनवाकारणेनसः ॥ ६७ ॥ यथाचगर्भदुःखार्त्तामाधवंशरणङ्ग
ता ॥ यथातेनप्रदत्तश्चसमयोजननम्प्रति ॥ ६८ ॥ यथाविदेहराजस्ययज्ञभूमावसूयत ॥ विदेहराजेनसमर्थ्याँदशःस
मयोभवत् ॥ ६९ ॥ यथामानुषरूपेणधात्रीसासमपद्यत ॥ तत्सर्व्वङ्कथयामासनरकायमहात्मने ॥ ७० ॥ ऋषयऊचुः ॥
किमर्थंसमयोदत्तोविष्णुनाप्रभविष्णुना ॥ निहतेरावणेवीरेरामेणसुमहात्मना ॥ ७१ ॥ भविष्यतिसुतस्तेवैतत्रनःसंशयोम
हान् ॥ एतत्त्वंसंशयञ्छिन्धिगुरोशास्तासिनःसदा ॥ ७२ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ आरात्तारावणादीनाम्पृथिवी

मांसभाग्निनाम्[1] ॥ ७३ ॥ अधोगतायोजनानिपञ्चवैद्विजसत्तमाः ॥ अयव्वँराहवीर्य्येणयातोगर्भ्भैक्षितेःपुनः ॥ ७४ ॥
असावपिमहाराजोदशग्रीवोयथाभवत् ॥ अधोयास्यतिभारार्त्तासातीवपृथिवीतिबिति ॥ ७५ ॥ समयन्दत्तवान्वीष्णूराव
णेनिहतेसति ॥ धरायैभारविहातिव्याजेनद्विजसत्तमाः ॥ ७६ ॥ अथैनाम्पृथिवीम्प्राहनरकःपुनरेवहि ॥ पृथिव्यावच
नंश्रुत्वास्वल्पसंशयसय्युँतः ॥७७॥यद्येवम्मेपिताविष्णुर्म्मातात्वम्पृथिवीशुभे॥ आगच्छतुजगन्नाथोममैवाभ्युपपत्तये॥७८॥
सएवसर्व्वलोकेशोयदिमाम्भाषतेच्युतः ॥ पिताहन्तेत्वियम्माताश्रद्दधेतदहंशुभे ॥ ७९ ॥ त्वयामानुषरूपेणधात्र्याहम्प्र
तिपालितः॥ तद्रूपंद्रष्टुमिच्छामियदितेरूपमीदृशम् ॥ ८० ॥ त्वत्पूर्व्वरूपन्दृष्ट्वैववचनाच्चजगद्गुरोः ॥ जातश्रद्धोमहाभागे
स्थास्यामिसमयेतव ॥ ८१ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ पुत्रस्यवचनंश्रुत्वापृथिवीप्रथमन्तदा ॥ मायामानुषरूपन्तत्प्र
तिजग्राहतत्पुरः ॥ ८२ ॥ तथाकात्यायनीरूपय्यैनरूपेणपालितः॥ नरकःसातुतद्दृष्ट्वातत्याजपृथिवीतनुम् ॥ ८३ ॥ अ
थदृष्ट्वैवनरकोधात्रीङ्कात्यायनीन्तदा ॥ पप्रच्छपूर्व्ववृतान्तय्यँद्वृत्तन्नृपमन्दिरे ॥ ८४ ॥ सातथाकथयामासयथासप्रतिपा
लितः ॥ यद्वृत्तम्पूर्व्वतोगेहेन्नृपस्यजनकस्यतु ॥ ८५ ॥ जातसम्प्रत्ययस्तत्रनरकः समपद्यत ॥ पृथिवीचपुनर्द्दैवीरूपंस्व
ञ्जग्राहेतदा ॥ ८६ ॥ अथसस्मारपृथिवीजगन्नाथंहरिम्प्रभुम् ॥ समयेपूर्व्वविहितेप्रणम्यशिरसामुहुः ॥ ८७ ॥ स्मृत

[1] आत्मभोगिनामिति वा पाठः।

मात्रस्तदाक्षित्यामाधवोगरुडध्वजः ॥ प्रसन्नोजगतान्नाथः प्रत्यक्षत्वङ्गतस्तदा ॥ ८८ ॥ तन्दृष्ट्वापृथिवीदेवीदेवङ्गरुडवाहनम् ॥ नीलोत्पलदलश्यामंशङ्खचक्रगदाधरम् ॥ ८९ ॥ पीताम्बरञ्जगन्नाथंश्रीवत्सोरस्कमव्ययम् ॥ प्रणनाममहाभक्त्यापस्पर्शशिरसामहीम् ॥ ९० ॥ परमेशजगन्नाथजगत्कारणकारण ॥ प्रसीदेतिवचश्चापितदाप्रोचेजगत्प्रसूः ॥ ॥ ९१ ॥ नरकस्तुहरिन्दृष्ट्वानिमील्यनयनद्वयम् ॥ तत्तेजसाचाभिभूतस्तदाभूमावुपाविशत् ॥ ९२ ॥ उपविष्टेतदादेवीतनयेनरकाह्वये ॥ प्रसादयामासतदापुत्रार्थेवरवर्णिनी ॥ ९३ ॥ प्रसाद्यमानोधरयाहरिर्न्नारायणोऽव्ययः ॥ शङ्खाग्रेणतदापुत्रम्परस्पर्शनरकाह्वयम् ॥ ९४ ॥ स्पृष्टमात्रोऽथहरिणानरकोऽभूत्सुदर्शनः ॥ हृष्टश्चोत्साहवाँश्चैवबलवान्समपद्यत ॥ ९५ ॥ ततउत्थायनरकोहरिन्नारायणम्प्रभुम् ॥ भक्त्याप्रणम्यगोविन्दंसाष्टाङ्गञ्चमुहुर्म्मुहुः ॥ ९६ ॥ ननामपृथिवीव्वीरोजातसम्प्रत्ययस्तदा ॥ प्रणम्यचमहाभागान्भक्त्यापरमयायुतः ॥ ९७ ॥ प्राञ्जलिः पुरतस्तस्थौनोक्काकिञ्चनवैभिया ॥ ततस्तदर्त्थेपृथिवीमाधवंसमयाचत ॥ ९८ ॥ प्रसीददेवदेवेशसमयम्प्रतिपालय ॥ त्वयायन्तनयोदत्तोममसर्व्वञ्जगत्पते ॥ ९९ ॥ एतदर्त्थेप्रतिज्ञातय्यँदत्तम्प्रतिपालय ॥ १०० ॥

॥ भगवानुवाच ॥

॥ भवतीयत्सुपुत्रार्त्थेमामयाचत्पुरामया ॥ तत्सर्व्वन्तवदत्तव्वैराज्यन्दत्तञ्चत्वत्सुते ॥ १ ॥ इत्युक्त्वाभगवान्विष्णुरादायनरकाह्वय

म् ॥ सार्द्धम्पृथिव्यागङ्गायांममज्जजगताम्प्रभुः ॥ २ ॥ निमज्ज्यक्षणमात्रेणप्राग्ज्योतिषपुरङ्गतः ॥ मध्यगङ्गामरूपस्य
कामाख्यायत्रनायिका ॥ ३ ॥ सचदेशः स्वराज्यार्त्थेपूर्व्वङ्गुप्तश्चशम्भुना ॥ किरातैर्ब्बलिभिः क्रूरैरज्ञैरपिचवासितः ॥
॥ ४ ॥ रुक्मस्तम्भनिभाँस्तत्रकिरातान्ज्ञानवर्ज्जितान् ॥ अनर्त्थमुण्डितान्मद्यमांसाशनैकतत्परान् ॥ ५ ॥ ददर्शवि
ष्णुः कुपितान्विष्णुर्न्दृष्ट्वाद्विजर्षभाः ॥ तेषामधिपतिस्तत्रघाटकोनामवीर्य्यवान् ॥ ६ ॥ रुक्मस्तम्भनिभस्तुङ्गः प्रदीप्त
इवपावकः ॥ सक्रोधाच्चतुरङ्गेनबलेनमहतायुतः ॥ ७ ॥ आससादजगन्नाथन्नरकञ्चमहाबलम् ॥ आसाद्यशरवर्षेणव
वर्षप्रभुमव्ययम् ॥ ८ ॥ किरातैः सहितोराजाघाटकाख्यः किरातराट् ॥ माधवोपितदापुत्रन्नरकव्वीर्य्यवत्तरम् ॥
॥ ९ ॥ प्रेषयामासयुद्धायकिरातनृपतेस्तदा ॥ नरकोधनुरादायसहतैर्ब्बलवत्तरैः ॥ ११० ॥ युयुधेसुचिरन्तत्र
शस्त्रास्त्रैर्ब्बहुधेरितैः ॥ ततोऽसौभल्लमादाययोजयित्वाधनुर्ग्गुणैः ॥ ११ ॥ शिरःकिरातराजस्यचिच्छेदनरकोबली ॥
मुख्यान्मुख्यान्किरातांश्चबहून्सेनाधिपाँस्तथा ॥ १२ ॥ जघानकुपितोवीरः केसरीवमतङ्गजान् ॥ हतेथनृपतौ
केचित्पलायनपरायणाः ॥ १३ ॥ किराताःकेचनपुनर्न्नरकंशरणाङ्गताः ॥ निहत्ययुद्ध्यमानाँस्तुसंरक्ष्यशरणङ्गतान् ॥
॥ १४ ॥ नरकःपितरङ्गत्वाप्रणम्याथन्यवेदयत् ॥ हतस्तातकिरातानामधिपोघाटकोमया ॥ १५ ॥ सेनाधिपाँश्चतस्या

न्यान्किमन्यत्करवाण्यहम् ॥ ॥ भगवानुवाच ॥ ॥ किराताञ्जहियावत्त्वन्देवींदिक्करवासिनीम् ॥ १६ ॥ पलायमानान्
विद्राव्यपालयञ्छरणङ्गतान् ॥ ॥ मार्कण्डेयउवाच ॥ ॥ ततःसनरकोवीरःसमारुह्यसितङ्गजम् ॥ १७ ॥ चतुर्द्दन्तम्म
हाकायाङ्किराताधिपवाहनम् ॥ ऐरावतसमव्वीर्य्यंवेगेनगरुडोपमम् ॥ १८ ॥ किरातान्द्रावयामासयावद्दिक्करवासिनीम् ॥
पितरम्पुनरागत्यवचनञ्चेदमब्रवीत् ॥ १९ ॥ विद्राविताःकिरातास्तेसागरान्तंसमाश्रिताः ॥ हतश्चघाटकाख्योहिकिरा
ताधिपतिर्म्महान् ॥ २० ॥ वेगिनङ्गजमारुह्यऐरावतसमङ्गुणैः ॥ यदन्यत्करणीयम्मेतदाज्ञापयसम्प्रति ॥ २१ ॥ ॥ भग
वानुवाच ॥ ॥ करतोयासदागङ्गापूर्व्वभागावधिश्रया ॥ यावल्ललितकान्तास्तितावद्देवपुरन्तव ॥ २२ ॥ अत्रदेवीमहामाया
योगनिद्राजगत्प्रसूः ॥ कामाख्यारूपमास्थायसदातिष्ठतिशोभना ॥ २३ ॥ अत्रास्तिनदराजोयंलौहित्योब्रह्मणःसुतः ॥
अत्रैवदशदिक्पालाःस्वेस्वेपीठेव्यवस्तिथाः ॥ अत्रस्वयम्महादेवोब्रह्माचाहञ्च्यवस्थिताः ॥ २४ ॥ चन्द्रःसूर्य्यश्चसततव्वँस
तोत्रवपुत्रक ॥ सर्व्वैक्रीडार्थमायातारहस्यन्देशमुत्तमम् ॥ २५ ॥ अत्रश्रीर्व्वसतेभद्राभोग्यमत्रतथाबहु ॥ अस्यमध्येस्थि
तोब्रह्माप्राग्नक्षत्रंससर्ज्जह ॥ २६ ॥ ततःप्राग्ज्योतिषाख्येयम्पुरीशक्रपुरासमा ॥ अत्रत्वव्वँसभद्रन्तेत्यभिषिक्तोमया
स्वयम् ॥ २७ ॥ कृतदारःसहामात्यैराजाभूत्वामहाबलः ॥ ॥ मार्कण्डेयउवाच ॥ ॥ एवमुक्त्वास्वयव्विँष्णुःशम्भो

रनुमतेतदा ॥ २८॥ सर्व्वान्किरातान्पूर्व्वस्यांसागरान्तेन्यवेशयत् ॥ पूर्व्वँल्ललितकान्तायाःसमादायावधिम्पुनः ॥ २९ ॥
यावत्सागरपर्य्यन्तङ्किरातास्तावदावसन् ॥ पश्चाल्ललितकान्तायादेशङ्कृत्वावधिम्पुनः ॥ ३० ॥ ॥ करतोयानदीय्यावँ
त्कामाख्यानिलयन्तुतत् ॥ तस्मात्किरातानुत्सार्य्यवेदशास्त्रातिगान्बहून् ॥ ३१ ॥ द्विजातीन्वासयामासतत्रवर्णान्त्स
नातनान् ॥ वेदाध्ययनदानानिसततव्वँर्त्ततेयथा ॥ ३२ ॥ तथाचकारभगवान्मुनिभिर्व्वासयन्विभुः ॥ वेदवादरताःसर्व्वे
दानधर्म्मपरायणाः ॥ ३३ ॥ नचिरादभवद्देशःकामरूपाह्वयस्तदा ॥ ततोविदर्भराजस्यपुत्रीम्मायाह्वयांहरिः ॥ ३४ ॥
पुत्रार्त्थैवरयामासनरकस्यसमाद्गुणैः ॥ तामुद्वाह्यहृषीकेशस्तस्मिन्पुरवरेस्वयम् ॥ ३५ ॥ तयासमंस्वतनयंराजत्वेनाभ्य
षेचयत् ॥ सुगुप्ताञ्चपुरीञ्चक्रेगिरिदुर्ग्गेणमाधवः ॥ ३६ ॥ तद्दुर्ग्गंसर्व्वतोभद्रन्देवैरपिदुरासदम् ॥ ततःकिरातराजस्य
चतुर्द्दन्ताःसुदन्तिनः ॥ ३७ ॥ पञ्चविंशतिसाहस्रामहामात्रकुथैर्य्युताः ॥ यानिरत्नान्यनेकानिसैन्यानिविविधानिच ॥
॥ ३८ ॥ अश्वाश्वाभरणाश्चैवतत्सर्व्वन्नरकोऽग्रहीत् ॥ यद्यत्सुभूषणंराज्ञोध्वजाश्चाभरणानिच ॥ ३९ ॥ तानितानिस्व
यव्विँष्णुस्तनयस्यददौतदा ॥ रथञ्चप्रददौतस्मैत्रिषुलोकेषुदुर्ल्लभम् ॥ ४० ॥ लोहाष्टचक्रसञ्छन्नमर्द्धयोजनविस्तृतम् ॥
युक्तमश्वसहस्रैश्चतथाष्टाभिर्म्मनोजवैः ॥ ४१ ॥ रत्नकाञ्चनचित्राढ्यव्वँदिकाभागविस्तरम् ॥ वज्रध्वजेनमहताकाञ्चने

नविराजितम् ॥ ४२ ॥ हेमदण्डपताकाढ्यव्वैँदूर्य्यमणिकूबरम् ॥ सिंहव्याघ्रसमुद्भूतैश्चर्म्मभिश्छादितंसदा ॥ ४३ ॥ लो
हतास्त्रैश्चसञ्छन्नङ्किङ्किणीजालमालिनम् ॥ सर्व्वप्रहरणैर्य्युक्तम्बहुमायासमन्वितम् ॥ ४४ ॥ शक्तिञ्चप्रददौतस्मैसर्व्व
शत्रुविशातनीम् ॥ ज्वालामालाभिदीप्ताङ्गीं रिपुकक्षाग्निरूपिणीम् ॥ ४५ ॥ इमञ्चसमयम्प्रोचेनरकायमहात्मने ॥ नरक
स्यहितायेशोवसुधायाःसमक्षतः ॥ ४६ ॥ इमांशक्तिन्नहिभवान्प्राणस्यसंशयव्विँना ॥ प्रयोक्ष्यतिकदाचित्तुमानुषेषु
विशेषतः ॥ ४७ ॥ एषामायाचवैदर्भीभवतःसदृशीगुणैः ॥ भवतोजीवनय्यावत्तावत्स्थास्यतिशोभना ॥ ४८ ॥ त्वंतुप्र
जायैत्रेतायाय्यँत्वान्वैभविष्यसि ॥ द्वापरान्तेतुसम्प्राप्तेप्रजातवभविष्यति ॥ ४९ ॥ विरोधोमुनिभिःसार्द्धम्ब्राह्मणैरपि
पुत्रक ॥ नकदाचित्त्वयाकार्य्यश्चिरञ्जीवितुमिच्छता ॥५०॥ नराजभिर्न्नदेवैश्चविरोधोयुज्यते तव ॥महादुर्ग्गस्यवैमध्येवस
तोह्यपराजिते ॥ ५१ ॥ दिव्ययोषिद्गणैःसार्द्धव्वैँसमानोतिभोगवान् ॥ स्वपर्व्वतेकामरूपेचिरन्त्वन्तिष्ठपुत्रक ॥ ५२ ॥
महादेवीम्महामायाञ्जगन्मातरमम्बिकाम् ॥ कामाख्यान्त्वव्विँनापुत्रनान्यदेवय्यँजिष्यसि ॥ ५३ ॥ इतोन्यथात्वंव्विहँ
रन्गतप्राणोभविष्यसि॥ तस्मान्नरकयत्नेनसमयम्प्रतिपालय॥ ५४ ॥ मार्कण्डेयउवाच ॥ इत्युक्त्वाभगवान्विष्णुर्न्नरकन्तनयं
स्वकम्॥तमपास्यरहस्येनाम्पृथिवीव्वाक्यमब्रवीत्॥ ५५ ॥यद्यत्पूर्व्वम्मयाप्रोक्तङ्कृतंतव्यन्तवसुन्दरि॥ तत्सर्व्वन्नरकायाशुभू

१ रममाण इ०पा० ।

त्यैसमुपदेशय ॥ ५६ ॥ यदैनन्त्वंस्वयंहन्तुम्माञ्जगद्धात्रिभाषसे ॥ तदातुमानुषःकश्चिन्नरकन्निहनिष्यति ॥ ५७ ॥
॥ पृथिव्युवाच ॥ ॥प्रजार्थमेषयत्नोमेनिन्द्यःस्यात्सन्ततिर्व्विना ॥ तस्मान्नाथप्रयत्नान्मेसन्ततिम्पालयिष्यसि ॥ ५८ ॥
॥ मार्कण्डेयउवाच॥ ॥ एवमस्त्वितितांव्विष्णुःपृथिवीम्प्रतिपावनः॥नरकञ्चसमाभाष्यतत्रान्तर्द्धिमगात्क्षणात्॥५९॥ग
तेहरौनिजस्थानम्पृथिवीतनयंस्वकम्॥यत्पूर्व्वंहरिणाप्रोक्तन्तत्रतंव्व्यनयत्स्वयम् ॥ ६० ॥ नरकोपितदाधीमान्वेदशास्त्रार्थ
पारगः॥ ब्रह्मण्योनीतिकुशलोवदान्योदानतत्परः॥६१॥ कामाख्यापूजनरतोनीलकूटेमहागिरौ ॥महाभोगीमहाश्रीमान्हीन
बाधश्चशत्रुभिः॥६२॥सुचिरंराज्यमकरोच्छक्रवत्त्रिदशालये ॥ ततोविदेहराजोपिश्रुत्वैवनरकश्रियम् ॥६३ ॥सपुत्रभार्य्यःस
गणोनरकन्द्रष्टुमभ्यगात्॥प्राग्ज्योतिषम्पुरङ्गत्वाकामरूपान्तरस्थितम्॥६४॥ददर्शनरकंराजाशरच्चन्द्रसमश्रिया ॥प्राग्ज्यो
तिषम्पुरम्मेनेसराजात्वमरावतीम् ॥६५॥ देवेन्द्रन्नरकम्मेनेसत्परिच्छदभूषणम् ॥ ततोमहिष्यैतत्सर्व्वंजनकोवाक्यमब्रवी
त् ॥ ६६॥ एषतेपालितसुतःश्रीमान्नरकसंज्ञकः ॥ पृथिव्यादयितःपुत्रःसञ्जातोघृष्टिरूपिणा॥ ६७ ॥ विष्णुनाजगदीशेनत्व 
मेनम्पश्यसङ्गतम् ॥ ॥ मार्कण्डेयउवाच ॥ ॥इत्युक्त्वाजनकोराजायथावृत्तन्तथापुरा ॥६८॥ वृत्तान्तङ्कथयामासनर
कोजातवान्यथा ॥ ततस्तत्रचिरंस्थित्वाप्राग्ज्योतिषपुरेमुदा ॥६९ ॥ विदेहाधिपतीराजानरकेणप्रपूजितः ॥ स्वस्थानङ्ग

तवाँस्तस्मात्स्वगणैः परिवारितः ॥७०॥ एवंसनरकोजातः पृथिव्यास्तनयस्तदा॥ हीनाऽसुरस्वभावःसव्विँजहारचिरंक्षितौ
॥ ७१ ॥ छ ॥ इतिकालिकापुराणेऊनचत्वारिंशत्तमोध्यायः ॥ ३९ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ सराजानरकःश्री
मांश्चिरञ्जीवीमहाभुजः ॥ मानुषेणैवभावेनचिरंराज्यमथाकरोत् ॥ १ ॥ त्रेतायाञ्चव्यतीतायांद्वापरस्यतुशेषतः ॥ अभव
च्छोणितपुरेबाणोनाममहासुरः॥२॥ तस्याग्निदुर्गन्नगरं सचशम्भुसखोबली ॥ सहस्रबाहुर्दुर्द्धर्षःप्रियःपुत्रःसवैबलेः ॥ ३ ॥
नरकेणसमन्तस्यमहामैत्रीव्यजायत ॥ गमनागमनन्नित्यमन्योन्यानुग्रहैस्तथा ॥ ४ ॥ तयोरभून्महाप्रीतिःपवनानल
योर्य्यथा ॥ सचबाणःसमाराध्यमहादेवञ्जगत्प्रभुम् ॥ ५ ॥ आसुरेणाथभावेनव्यचरच्चाकुतोभयः ॥ तत्संसर्ग्गात्सनर
कोदृष्ट्वातस्याद्भुताङ्कृतिम् ॥ ६ ॥ तेनैवसहभावेनविहर्त्तुमुपचक्रमे ॥ नब्राह्मणान्पूजयतियथापूर्व्वन्तथाद्विजाः ॥ ७ ॥
नचयज्ञेषुदानेषुपूर्व्ववन्मुदितः सच ॥ नतथाविष्णुमभ्येतिपृथिवींव्वाँपिनार्च्चति ॥ ८ ॥ कामाख्यायान्तथाभक्तिस्तदा
तस्याऽथनाभवत् ॥ एतस्मिन्नन्तरेधातुस्तनयोमुनिसत्तमः ॥ ९ ॥ वशिष्ठोनामकामाख्यान्द्रष्टुम्प्राग्ज्योतिषङ्गतः
॥ तान्दुर्ग्गाभ्यन्तरेनीलकूटेदेवीव्व्यँवस्थिताम् ॥ १० ॥ द्रष्टुङ्गन्तुव्वँशिष्ठस्यनद्वारन्नरकोव्यदात् ॥ ततोवशिष्ठःकुपितोव
चनम्परुषम्मुनिः ॥ ११ ॥ जगादनरकव्वाँरङ्गर्हयन्मुनिसत्तमः ॥ कथम्पृथिव्यास्तनयोवराहस्यसुतेजसा ॥ १२ ॥

देवीन्द्रष्टुम्ब्राह्मणस्यनददासितथागतः ॥ किन्तेकुलोचितङ्कर्म्मंत्वङ्करोषिधरात्मज ॥ १३ ॥ देवीम्प्राग्ज्योतिषङ्गत्वापूज
यिष्येजगन्मयीम् ॥ ततः सनरकोराजाप्राप्तकालः क्षितेः सुतः ॥ १४ परुषेणाऽथवाक्येनतमाक्षिप्यनिरस्तवान् ॥ त
तोमुनिः सकुपितः शशापनरकन्नृपम् ॥ १५ ॥ नचिराद्येनजातोसितेनमानुषरूपिणा ॥ मरणम्भवितापापवराहकुलपां
सन ॥ १६ ॥ मृतेत्वयिमहादेवीङ्कामाख्याञ्जगताम्प्रसूम् ॥ पूजयिष्याम्यहम्पापप्रतिष्ठयास्येस्वमालयम् ॥ १७ ॥ त्व
य्यॅंवज्जीवितापापकामाख्यापिजगत्प्रसूः ॥ सर्व्वैःपरिकरैः सार्द्धमन्तर्द्धानायगच्छतु ॥१८॥ मार्कण्डेयउवाच ॥ ॥ इत्युक्त्वाब्र
ह्मपुत्रःसस्वस्थानङ्गतवान्मुनिः ॥ वशिष्ठस्तेनभौमेननिरस्तःकुपितोभृशम् ॥१९॥ गतेवशिष्ठेनरकः शीघ्रव्विँस्मयसँय्युतः ॥
जगामदेवीभवनन्नीलकूटम्महागिरिम् ॥२०॥तत्रगत्वानचापश्यत्कामाख्याङ्कामरूपिणीम् ॥ नयोनिमण्डलन्तस्याःसर्व्वा
न्परिकराँस्तथा ॥ २१ ॥ ततःसविमनाभूत्वाक्षितिंसस्मारमातरम् ॥ पितरञ्चजगन्नाथन्नरकःप्रभुमव्ययम् ॥ २२ ॥ नता
वपितदायातौतस्यप्रत्यक्षतांद्विजाः ॥ व्युत्क्रान्तसमयस्येतिनीतिहीनस्यशम्भवे ॥ २३ ॥ चिरम्प्रतीक्ष्यतौतत्रभौमोवज्र
ध्वजस्तदा ॥ अप्राप्तक्षितिविष्णुःससशोकःस्वन्निवेशनम् ॥ २४ ॥ सङ्गच्छन्स्वगृहम्भौमःपुरींस्वान्दृष्टवाँस्तुसः ॥ पूर्व्वं
श्रियापरित्यक्ताम्मलिनीव्वँनितामिव ॥ २५ ॥ देव्यामन्तर्हितायान्तुवेदवादविवर्जितम् ॥ पुण्यस्वल्पादरजनन्तत्पुरंसमप

१ शम्भवेकल्याणभवनेमित्तनीतेराहेतायेत्यर्थः ।

द्यत ॥ २६ ॥ नदेवास्तत्रगच्छन्तिनविप्रानमहर्षयः ॥ बभूवनगरन्तस्यस्वल्पयज्ञक्रियोत्सवम् ॥ २७ ॥ ईतयोबहवोजा
ताम्मृताश्चबहवोजनाः ॥ लौहित्यनदराजोपिहीनतोयस्तदाभवत् ॥ २८ ॥ बहूनिविपरीतानिदृष्ट्वासनरकस्तदा ॥ मेनेमर
णमासन्नमात्मनोब्रह्मशापतः ॥ २९ ॥ ततःप्राग्ज्योतिषाध्यक्षःशोकविह्वलचेतनः ॥ चिन्तयन्मनसामित्रम्बाणम्बलिसुत
म्ययौ ॥ ३० ॥ सखाप्राणसमःसोस्यसततान्योन्यरक्षणे ॥ तत्परौबाणनरकौस्वर्व्वैद्यावश्विनाविव ॥ ३१ ॥ एतस्मिन्न
न्तरेबाणोमित्रंशम्भुसखोबली ॥ अनुकूलयितामन्त्रप्रदानेनमहाबुधः ॥ ३२ ॥ इतिचासीन्मतिस्तस्यवज्रकेतोस्तदाऽच
ला ॥ दूतञ्चप्राहिणोद्दीप्तम्बाणस्यनगरम्प्रति ॥ ३३ ॥ सशोणितपुरङ्गत्वास्यन्दनेनाशुगामिना ॥ ततोभौमस्यवृत्तान्त
म्बाणायाशुन्यवेदयत् ॥ ३४ ॥ यथाशप्तोवशिष्ठेनयथाचान्तर्हिताम्बिका ॥ यथाविघ्नःपुरवरेजातःप्राग्ज्योतिषाह्वये ॥ ३५ ॥
समयस्यव्यतिक्रान्तिर्भूमिमाधवयोर्य्यथा ॥ तथासदूतोभौमस्यशशंसबलिसूनवे ॥ ३६ ॥ ससमाकारमित्रस्यसम्यग्दै
वपराभवम् ॥ स्वयञ्जगामनरकंसभाजयितुमीश्वरः ॥ ३७ ॥ सकाञ्चनविचित्राङ्गर्य्युक्तमश्वशतैस्त्रिभिः ॥ लोहचक्रञ्चवै
याघ्रम्मयूरध्वजभूषितम् ॥ ३८ ॥ हेमदण्डसितच्छत्रच्छादितङ्किङ्किणोगणैः ॥ नानारत्नौघरचितमारुरोहमहारथम् ॥
॥ ३९ ॥ ससहस्रभुजःश्रीमाँश्चतुरङ्गबलैर्य्युतः ॥ प्राग्ज्योतिषम्भौमपुरमचिरादाजगामह ॥ ४० ॥ तमासाद्यमहाबाहुर्ब्ब

णः प्राग्ज्योतिषेश्वरम् ॥ हीनम्पूर्व्वश्रियामित्रमपश्यन्नगरञ्चतत् ॥ ४१ ॥ सतेनपूजितोबाणोयथायोग्यंसुतेनकोः ॥ पप्रच्छ
किन्निमित्तन्तेहीनश्रीकमभूत्पुरम् ॥ ४२ ॥ शरीरञ्चयथापूर्व्वन्तथानतवराजते ॥ मनश्चतेनातिहृष्टन्तत्रहेतुर्व्वदस्वमे ॥
॥ ४३ ॥ एवमादीनिपृष्टःसनरकःक्षितिनन्दनः ॥ यथावशिष्ठशापोऽभूत्तत्सर्व्वन्तस्यचाब्रवीत् ॥ ४४ ॥ यच्छ्रुतम्भौमवदनात्त
दूतावेदितम्पुरा ॥ ज्ञात्वातथातम्प्रोवाचबाणोवज्रध्वजम्पुनः ॥ ४५ ॥ नहिमन्युस्त्वयाकार्य्यःसुखेदुःखेशरीरिणाम् ॥ च
क्रवत्परिवर्त्तेतेनैताभ्याङ्कोपिहीयते ॥ ४६ ॥ परन्तत्रप्रतीकारःकार्य्योधीरैर्व्विभूतये ॥ भवानपिप्रतीकारङ्कर्त्तुमर्हतिसम्प्र
ति ॥ ४७ ॥ यएवमानुषःपृथ्व्यामसाधारणभूतिभिः ॥ वर्द्धतेदानवोवापिदैत्योवाप्यथवासुरः ॥ ४८ ॥ राक्षसःकिन्न
रोवापिशक्रस्तान्नसहतेनहि ॥ सकौटिल्यन्देवगणैःसार्द्धंकुर्व्वन्नितस्ततः ॥ ४९ ॥ यथातथाप्रकारेणभ्रंशयत्येवतंश्रियः ॥
तस्यचेष्टतमोदेवोविष्णुर्न्नित्यंसनातनः ॥ ५० ॥ सनशक्तस्यकुरुतेमनोऽनिष्टम्मनागपि ॥ यःसमाराधयेद्विष्णुंशक्रस्या
निष्टकारकः ॥ ५१ ॥ तस्मैवरन्तुसच्छिद्रन्दत्वातंशातयत्यवित ॥ चिरमाराधितोविष्णुरिष्टान्कामान्प्रयच्छति ॥ ५२ ॥ मह
ताकायदुःखेनपूजितःसन्प्रसीदति ॥ विनेष्टदेवतापूजाव्विभूतिमतुलाम्पुमान् ॥ ५३ ॥ कःप्राप्नोतिश्रुतःपूर्व्वन्नवापूर्व्व
तरःक्वचित् ॥ त्वयानाराधितःपूर्व्वम्ब्रह्मावाविष्णुरीश्वरः ॥ ५४ ॥ तेनतेद्यमहाविघ्नाउत्पन्नाविषयेतव ॥ योवाविष्णुः

पालकस्तेननिसर्ग्गानुकम्पकः ॥ ५५ ॥ किन्तुतेसंक्षितेर्व्वाक्यात्तयाचाराधितोमुहुः ॥ दत्तञ्छिद्रश्चतेविष्णुर्न्नापराध्यास्त्व
याद्विजाः ॥ ५६ ॥ इतोन्यथालम्भविताहतश्रीरितिनः श्रुतम् ॥ अपराध्यस्त्वयाभूपवशिष्ठःपरमोमुनिः ॥ ५७ ॥ तेन
स्मरणमात्रेणनायातौक्षितिमाधवौ ॥ तस्मात्त्वम्मित्रबुध्यस्वकौटिल्यंहरिमेधसः ॥ ५८ ॥ नाधुनायुज्यतेभौमतवौदासीन
ताकृतिः ॥ यत्तेमनसितातोयमितिसम्प्रत्ययः सते ॥ ५९ ॥ वराहएवतेतातःसचलोकान्तरङ्गतः ॥ वराहोपिहरेरंशइति
यच्छ्रूयतेत्वया ॥ ६० ॥ तस्यांशइत्यनुक्रोशः केनवाक्रियतेवद ॥ तस्मात्त्वङ्कुरुशम्भोर्व्वाब्रह्मणोवाधुनार्च्चनम् ॥ ६१ ॥
सतेप्रसन्नः परममिष्टकामम्प्रदास्यति ॥ विघ्नोवामुनिशापोवामहतिर्व्वातिपीडकः ॥ ६२ ॥ विधौप्रसन्नेशम्भौवानचि
रात्क्षयमेष्यति ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ जातसम्प्रत्ययोभौमोबाणस्यवचनात्तदा ॥ ६३ ॥ सुप्रीतः समुवाचेदन्धी
रघर्घरनिःस्वनः ॥ ॥ भौमउवाच ॥ ॥ यत्त्वयागदितम्बाणहितम्मेमित्रवत्सल ॥ ६४ ॥ तत्कार्य्यमचिरादेवतपश्चरणमुत्तम
म् ॥ विष्णुर्न्नाराधनीयोमेतत्रहेतुस्त्वयोदितः ॥ ६५ ॥ नैवाराध्यस्तथाशम्भुरन्तर्ग्गुप्तः समेपुरे ॥ तस्माद्ब्रह्मासमारा
ध्योवचनात्तवमित्रक ॥ ६६ ॥ तत्पुत्रस्यमहाबाहोर्लौहित्यस्याम्बुसन्निधौ ॥ भवताध्यापितश्चाहंशिष्योऽथगुरुणायथा ॥
॥ ६७ ॥ मित्रम्मित्रयथाधीरसाम्नापरमवल्गुना ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ इत्युक्त्वासमहाबाहुर्ब्बाणव्वँज्रध्वजस्तदा ॥

१ महती/चासावीतिरितिकर्म्मधारयः ।

॥ ६८॥यथावत्पूजयामासतन्मित्रम्मित्रवत्सलः ॥ अर्च्चयित्वायथायोग्यम्प्रस्थाप्यचबलेःसुतम् ॥ ६९ ॥ ब्रह्माराधनमत्युग्र
ङ्कर्तुमिच्छन्क्षितेः सुतः ॥ सतीरेनदराजस्यलौहित्यस्यमहात्मनः ॥ ७० ॥ब्रह्माचलंसमारुह्यतपस्तप्तुमुपस्थितः॥ समानु
षेणमानेनक्षितिपुत्रःशतंसमाः ॥ ७१ ॥ जलाहारव्रतेनैवसमानर्चपितामहम्॥ सन्तुष्टःशतवर्षान्तेब्रह्मालोकपितामहः ॥
॥ ७२ ॥ प्रत्यक्षीभूयनरकस्याग्रतःसमुपस्थितः॥ प्रीतोऽस्मितेवरन्दास्येवरव्वँरयसुव्रत॥ ७३ ॥ इतिचोवाचनरकंसतदा
कमलासनः ॥ सदृष्ट्वासर्व्वलोकेशम्प्रत्यक्षङ्कमलासनम्॥७४॥प्रणम्यप्राञ्जलिःप्रोचेविनयानतकन्धरः ॥ देवाऽसुरेभ्योरक्षो
भ्यःसर्व्वेभ्योदेवयोनितः ॥ ७५ ॥ अवध्यत्वंसुरश्रेष्ठवरमेकम्प्रयच्छमे ॥ अविच्छिन्नासन्ततिर्म्मेयावच्चन्द्रोरविस्तपेत् ॥
॥ ७६ ॥ तावद्भवतुलोकेशद्वितीयोयव्वँरोमम ॥ तिलोत्तमाद्यायादेव्यःसद्रूपगुणसय्युँताः ॥ ७७ ॥ तास्तामेदयिताः
सन्तुसहस्राणितुषोडश ॥ अजेयत्वंसदाश्रीर्म्मान्नजहातुकदाचन ॥ ७८ ॥ इतिपञ्चवरामेद्यवृतास्त्वत्तःपितामह॥ ॥ मा
र्कण्डेयउवाच॥ ॥माययामोहितोभौमोमुनिशापंविस्मृत्यच॥७९॥अन्यद्वरान्तरव्वँव्रेमुनिशापस्तथास्थितः॥एवमस्त्विति
तान्सर्व्वान्वरान्दत्वापितामहः ॥८० ॥उवाचेदन्द्वापरान्तेसंध्यायांसुरकन्यकाः ॥ तिलोत्तमाद्यास्तेजायाःसम्भविष्यन्तिभूत
ले ॥ ८१ ॥ नयावन्नारदोयातिवज्वध्वजपुरस्तव ॥ तावन्नमैथुनेयोज्याभवताताःक्षितेःसुत ॥ ८२ ॥ इत्युक्तासर्व्वलोकेशःक्ष

णादन्तर्हितोऽभवत् ॥ मुदमासाद्यपरमांस्वस्थानन्नरकोऽभ्यगात् ॥ ८३ ॥ ततोमुदितलोकन्तन्नगरंश्रीनिषेवितम् ॥ सदासो
त्साहसम्पूर्णमीतिविघ्नविवर्ज्जितम् ॥ ८४ ॥ अभवत्पशुसङ्घैश्चवाजिवारणकुम्भकैः ॥ सम्पूर्णन्देवराजस्यदयितेवामरा
वती ॥८५॥ उत्तीर्ण्णतपसंश्रुत्वाबाणोदत्तवरन्तथा ॥ स्वयम्पुनरुपातिष्ठद्भौमव्वँज्रध्वजन्तदा ॥ ८६ ॥ सगत्वाभौमनगर
म्बाणःप्राग्ज्योतिषाह्वयम् ॥ पप्रच्छनरकम्मित्रन्तपसःसन्निवेशनम् ॥ ८७ ॥ कुत्रत्वयातपस्तप्तङ्किँव्वाचीर्ण्णन्त्वया
व्रतम् ॥ कीदृशोवावरोलब्धस्तन्ममाख्यातुमर्हसि ॥ ८८ ॥ दृष्टन्तवपुरंसर्व्वम्प्रहृष्टजनसङ्कुलम् ॥ वाजिवारणरत्नौघैःपूरि
तम्मङ्गलस्वनैः ॥ ८९ ॥ दृश्यतेद्यत्वयापाल्यंसस्यपूर्णमनामयम् ॥ कथ्यताव्वाँकथम्ब्रह्मावरन्तुभ्यम्प्रदत्तवान् ॥ ९० ॥
भौमउवाच ॥ ॥ ब्रह्मास्वयम्पर्व्वतरूपधारीकामेश्वरीन्धर्त्तुमिहाऽवतीर्ण्णः ॥ तत्रस्वयंसम्प्रतिघस्रमेतिपुरानयावच्छपतेव
शिष्टः ॥ ९१ ॥ सोयम्पुरेमेबलिपुत्रराजतेदेवौघसेव्योप्यमरोत्तमांशः ॥ तत्राहमेकोवरतोयभोजनोवर्षाण्यकार्षञ्चतपःशता
निवै ॥ ९२ ॥ लौहित्यतीरेघनवायुसेवितेमनोहरेप्राणभृतांसुखप्रदे ॥ तपःप्रवृत्तस्यसुखंसमागमच्छरद्यथैकाशरदां
शतानिमे ॥ ९३ ॥ ततःसतुष्टश्चतुराननोभवत्प्रत्यक्षतोमाऽभ्यगदच्चमद्धितम् ॥ तवप्रसन्नोस्मिवरय्यँथेप्सितन्दास्येगृहा
णेतिपुरोऽथभूत्वा ॥ ९४ ॥ अवध्यतामेसुरयोनितःसुरादच्छिन्नसन्तानमजेयतातथा ॥ सदाविभूतिर्नजहातुमामितिवरा

श्चनाप्यौनवयौवनान्विताः ॥ ९५॥ एतेवराःपञ्चमयाततोवृताःसोपिप्रतिश्रुत्यगतोनिजास्पदम् ॥ ९६ ॥ ततोहमभ्येत्य
पुरन्निजम्मुदामन्त्रिप्रवीरैःसहितःपुनस्तान् ॥ पौरान्सबन्धून्सगणानमोदयन्दानेनमानेनचभोजनेन ॥ ९७॥ ॥ मार्क
ण्डेयउवाच ॥ ॥ इतीरितन्तस्यबलेःसुतस्तदाभौमस्यश्रुत्वामुमुदेनतत्क्षणात् ॥ इदन्तदोचेवचनङ्क्षितेःसुतन्तत्कालयुक्त
न्नचसूनृतोद्भवम् ॥ ९८ ॥ नतेमुनेःशापमतीत्यगन्तुम्भूतामतिर्मित्रतदाविधेःपुरः ॥ कथन्तुभद्रम्भवितातवेहभावीत्यवश्य
ङ्क्षितिपुत्रनित्यम् ॥९९॥ कृतस्यकरणन्नास्तिदैवाधिष्ठितकर्म्मणः ॥ भावीत्यवश्यय्यँद्भाव्यन्तत्रब्रह्माप्यबाधकः ॥१००॥
तस्मात्त्वंसुमहावीरानसुरान्पावकोपमान् ॥ सन्धायचपुरस्कृत्यसाचिव्येविनियोजय ॥ १ ॥ द्वारिसंस्थाप्यवैवीरान्देवैरपिदु
रासदान् ॥ अतिक्रमस्वदेवेशय्यँदिलब्धवरोभवान् ॥ २ ॥ विधिनायोवरोदत्तोभवतेतत्परीक्षणम् ॥ कर्त्तुमर्हसिजायायामपु
त्रोजनयात्मजम् ॥३॥ इत्युक्त्वाप्रययौबाणोयथावत्तेनपूजितः ॥ नरकोमित्रवचनङ्कर्त्तुंसमुपचक्रमे॥१०४॥ ॥७॥ ॥इतिका
लिकापुराणेचत्वारिंशत्तमोध्यायः ॥४०॥ ॥ मार्कण्डेयउवाच ॥ ॥ ऋतुमत्यान्तुजायायाङ्कालेसनरकःक्रमात्॥भगदत्तम्म
हाशीर्षम्मदवन्तंसुमालिनम् ॥ १ ॥ चतुरोजनयामासपुत्रानेतान्क्षितेःसुतः ॥ महासत्वान्महावीर्य्यान्वीरैरन्यैर्दुरासदान् ॥
॥२॥ ततोबाणस्यवचनाद्धयग्रीवन्तथामुरुम् ॥ सन्धायाथसमानीयसैनापत्येभ्यषेचयत् ॥३॥मुरुंसन्निहितंश्रुत्वाहयग्रीवञ्च

भौमिना ॥ येयेक्षितौतदाढ्यासन्नसुरास्तेऽपिसङ्गताः॥४॥हयग्रीवम्मुरुंश्रुत्वानरकेणसमागतम् ॥निसुन्दसुन्दनामानावसुरौ
सैनिकैःसह ॥ ५ ॥ विरूपाक्षस्तदादैत्यःसर्व्वैतेनसमागमन् ॥ ततःसपश्चिमद्वारिनरकःसेनयासह ॥ ६ ॥ मुरुन्द्वारा
धिपश्चक्रेहयग्रीवन्तथोत्तरे ॥ पूर्व्वद्वारिनिसुन्दन्तुविरूपाक्षन्तुदक्षिणे ॥ ७ ॥ मध्येपञ्चजनंसुन्दंसैनापत्येभ्यषेचयत् ॥
मुरुःक्षुरान्तान्पाशांश्चषट्सहस्राण्ययोजयत् ॥ ८ ॥ द्वारितत्पुररक्षार्थंसत्कृतःक्षितिसूनुना ॥ एवम्पूर्वान्पूर्व्वतरानवमत्यसुम
न्त्रिणः ॥ ९ ॥ असुरैरेवसततंसोऽसुरोमुदितोभवत् ॥ पूर्व्वङ्गृहीतम्भावंसपरित्यज्यक्षितेःसुतः ॥ १० ॥ आसुरम्भाव
मासाद्यबाधतेत्रिदिवौकसः ॥ नदेवान्नमुनीन्सर्व्वान्नचजानातिकाँश्चन ॥ ११ ॥ सुरेश्वरञ्जिगायाशुहयग्रीवसहायवान् ॥
एवंसचासुरम्भावन्तन्वानोविचरन्क्षितौ ॥ १२ ॥ बाणस्यवचनाच्छक्रंबाधयत्येववैमुनीन् ॥ देवेश्वरन्त्रिधाजित्वाहयग्रीवस
हायवान् ॥ १३ ॥ अदित्याःकुण्डलयुगन्त्रिषुलोकेषुविश्रुतम् ॥ सर्व्वरत्नाऽमृतश्राविदुःखविघ्नहरम्परम् ॥ १४ ॥ जहा
रनरकोभौमोनिर्भीतोदैवशापतः ॥ एवन्देवान्बाधमानोमुनीन्विप्रान्क्षितेःसुतः ॥ १५ ॥ पञ्चवर्षसहस्राणिराज्यम्प्रा
ग्ज्यौतिषेकरोत् ॥ एतस्मिन्नन्तरेदेवीमहाभारार्दिताक्षितिः ॥ १६ ॥ ब्रह्मविष्णुमुखान्देवान्रक्षार्थंशरणङ्गता ॥ इदञ्चो
वाचधातारम्प्रणम्योर्व्वीसमाधवम् ॥ १७ ॥ दानवाराक्षसादैत्याहरिणायेचसूदिताः ॥ तेराज्ञाम्मन्दिरेजाताअधुनाबल

गर्विताः ॥ १८ ॥ तेषाम्भारमहंसोढुन्नशक्नोमिमहत्तरम् ॥ असङ्ख्याताश्चतेसर्व्वेतान्सङ्ख्यातुन्नचोत्सहे ॥ १९ ॥ अष्टौशतस
हस्राणितेषाम्मुख्यामहाबलाः ॥ तेष्वप्यतिबलान्वोढुन्नताञ्छक्नोमिचाधुना ॥ २० ॥ बाणम्बलेःसुतव्वीरङ्कंसन्धेनुकमेवच ॥
अरिष्टञ्चप्रलम्बञ्चसुनामानम्मुरंशलम् ॥ २१ ॥ चाणूरमुष्टिकौमल्लौजरासन्धम्महाबलम् ॥ नरकञ्चहयग्रीवन्निसुन्दंसुन्दमे
वच ॥ १९ ॥ विरूपाक्षम्पञ्चनदंहिडिम्बञ्चबकम्बलम् ॥ जटासुरञ्चकिर्म्मीरम्मलायुधमलम्बुषम् ॥ २० ॥ सौभाख्यञ्चजरा
सन्धन्द्विविदञ्चापिवानरम् ॥ श्रुतायुधम्महादैत्यंशतायुधमथाऽपरम् ॥ २१ ॥ ऋष्यश्रृङ्गसुतञ्चैवसुबाहुमतिबाहुकम् ॥ का
लकञ्जाँस्तथादैत्यान्हिरण्यपुरवासिनः ॥ २२ ॥ एतेषान्तुपदक्षोभैर्व्विशीर्ण्णाहन्दिनेदिने ॥ लोकान्वोढुन्नशक्नोमितान्निघ्नन्तु
सुरोत्तमाः ॥ २३ ॥ नचेद्रक्षाम्प्रकुर्व्वन्तिभवन्तःसुरसत्तमाः ॥ तदाविशीर्ण्णायास्यामिपातालमवशाधुना ॥ २४ ॥ ॥ मार्क
ण्डेयउवाच ॥ ततस्तस्यावचः श्रुत्वाब्रह्मविष्णुमहेश्वराः ॥ इत्यूचुस्तेकरिष्यामः क्षितेभारविमोक्षणम् ॥ २५ ॥ विसृज्यपृथिवी
न्देवींसर्व्वेदेवाः सनातनम् ॥ माधवन्तोषयामासुर्भारावतरणम्प्रति ॥ २६ ॥ सतुतुष्टःसुरान्सर्व्वान्स्वांशैरवतरन्तुवै ॥ क्षितौ
भारावतारायेत्युक्त्वास्वयमिहप्रभुः ॥ २७ ॥ अवतीर्ण्णोऽथदेवक्यागर्भेभारावतारणे ॥ विष्णुञ्चावतरिष्यन्तंज्ञात्वादेवाःसना
तनम् २८ रम्भातिलोत्तमाद्याश्चदेव्योरूपगुणान्विताः ॥ क्षितावुत्पादयामासुःसहस्राणितुषोडश ॥ २९ ॥ ताःसर्व्वाहिमवत्पृष्ठे

क्रीडमानावरस्त्रियः ॥ अपश्यन्नरकोभौमस्ताजहारतदाहठात् ॥ ३० ॥ तेनताधर्षितादेव्योनीताः प्राग्ज्योतिषम्प्रति ॥
नरकम्प्रार्थयामासुः समयम्मैथुनम्प्रति ॥ ३१ ॥ नारदोयावदायातिनगरम्प्रतिभौमते ॥ अस्माकङ्कुरुरक्षाञ्चतावन्नो
मुञ्चमैथुने ॥ ३२ ॥ ससमेष्यतिवीरत्वान्नचिरान्नोत्यनुग्रहात् ॥ तेनदृष्टावयंसार्द्धमेष्यामः सङ्गमन्त्वया ॥ ३३ ॥ इतिस
म्प्रार्थितस्ताभिर्न्नरकोभूमिनन्दनः ॥ ब्रह्मवाक्यन्तदास्मृत्वाएवमस्तूचिवान्मुहुः ॥ ३४ ॥ एतस्मिन्नन्तरेदेवोभगवाँ
ल्लोकभावनः ॥ देवक्याजठराज्जातोवृद्धोनन्दगृहेभवत् ॥ ३५ ॥ कंसकेशिप्रलम्बादीन्हत्वादैत्याननेकशः ॥ अ
करोद्द्वारकावासंसागरेसलिलान्तरे ॥ ३६ ॥ तत्राष्टौकन्यकास्तेनस्वधर्म्मेणचस्वीकृताः ॥ कालिन्दीमानुषीरू
पारुक्मिणीरमणीततः ॥ ३७ ॥ नग्नजित्तनयासत्यालक्ष्मणाचारुहासिनी ॥ सुशीलाशीलसम्पन्नातथाजाम्बव
तीसती ॥ ३८ ॥ एतासुस्त्रीषुचततोह्यनुरक्तस्यतस्यवै ॥ षट्त्रिंशद्वत्सराजाताबलदेवसहायिनः ॥ ३९ ॥ प्रद्युम्नसाम्ब
प्रमुखाःपुत्रास्तस्यमहाबलाः ॥ जातास्तत्रद्विजश्रेष्ठाःशास्त्रेशस्त्रेचकोविदाः ॥ ४० ॥ अनेकेनिहतादैत्याभारभूतास्तदा
क्षितेः ॥ प्रहृष्टःक्रीडमानश्चद्वारकायामुवाससः ॥ ४१ ॥ अथशक्रस्तदायातोनरकेणार्द्दितोभृशम् ॥ द्वारकाम्प्रतिकृष्णस्य
दर्शनायगणैःसह॥४२॥ तत्रगत्वापरिष्वज्यकृष्णल्लोकनमस्कृतम् ॥ पूजितस्तेनबहुशआसनेकाञ्चनेस्थितः ॥ ४३॥ कथया

मासहरयेनरकस्यविचेष्टितम् ॥ शक्रोयथापूर्व्ववृत्तय्यँथावावर्त्ततेऽधुना ॥ ४४ ॥ शक्रउवाच ॥ शृणुकृष्णमहाबाहोयदर्त्थं
महमागतः ॥ कथयिष्यामितत्सर्व्वन्तत्रशङ्कान्नसङ्कुरु ॥ ४५ ॥ भूमिपुत्रोऽसुरोनाम्नानरकःसुरमर्द्दनः ॥ चिरंजीवापुराविष्णु
क्षितिभ्याम्परिपालितः ॥ ४६ ॥ अधुनासक्षितिव्विष्णुमवज्ञायदुरासदः ॥बाणस्यवचनाद्धीमोब्रह्माणम्पर्य्यतोषयत् ॥४७॥
ब्रह्मणःसवराल्लँब्ध्वात्यतीवाऽभूत्त्वदर्प्पितः ॥माधवम्पृथिवीव्वाँपिसस्मारनकदाचन ॥४८॥ पूर्व्वमासीत्सधर्म्मात्माद्याराधि
तसुरोव्रती॥ अधुनाबाधतेसर्व्वानासुरम्भावमाश्रितः ॥ ४९ ॥ अदितेःकुण्डलेमोहाज्जहारामृतसम्भवे ॥ देवानृषीन्बाधमा
नोविप्राणामप्रियेरतः ॥ ५० ॥ माञ्चापिबाधतेनित्यङ्कामगामीदुरासदः ॥ जेतातुसुरदैत्यानामवध्यःसर्व्वदेहिनाम् ॥ ५१ ॥
तवचाप्यन्तरप्रेक्षीतम्पापञ्जहिभूतये ॥ त्वदर्थंसर्व्वदेवेर्य्यांदेवगन्धर्व्वकन्यकाः ॥ ५२ ॥ पुरापर्वतमुख्येतुहिमवत्यवतारि
ताः ॥ चतुर्द्दशसहस्राणिसहस्रेद्वेशताधिके ॥ ५३ ॥ ताःसर्व्वाःकन्यकाःपापःप्रसह्यवरदर्पितः ॥ जहारसदुराधर्षोहयग्रो
वसहायवान् ॥ ५४ ॥ सागरेयानिरत्नानिपृथिव्याञ्चत्रिविष्टपे ॥ तानिसर्वाणिसंहृत्यप्रमथ्यसुरमानुषान् ॥ ५५ ॥ तीरेलौ
हित्यतीर्त्थस्यसोकरोन्मणिपर्व्वतम् ॥ तस्मिन्गिरौपुरींरम्याङ्कारयित्वालकाह्वयाम् ॥ ५६ ॥ ताःसर्व्वावासयामासदेवगन्ध
र्व्वयोषितः ॥ एकवेणीधराःसर्व्वाःसम्भोगपरिवर्ज्जिताः ॥ ५७ ॥ त्वामेवताःप्रतीक्षन्तेसनाथाःकुरुकृष्णताः ॥ यावदा

गच्छतिपुरम्भवतोनारदोमुनिः ॥ ५८ ॥ तावन्नमैथुनेयत्नम्भौमत्वंसङ्करिष्यसि ॥ इतिताःसमयञ्चक्रुर्न्नरकस्यदुरात्मनः ॥ ५९ ॥ नारदश्चतदायातःप्राग्ज्योतिषपुरम्प्रति ॥ यदात्वन्नरकंहन्तुङ्गन्तातत्पुरमुत्तमम् ॥ ६० ॥ तस्मात्त्वम्पापकर्म्माणन्नरकन्नरकोपमम् ॥ जहिदेवमनुष्याणाङ्कण्टकन्त्वन्दुरासदम् ॥ ६१ ॥ वधात्तस्यक्षितिर्द्देवीपुत्रशोकन्नचाप्स्यति ॥ स्वयमेववधन्तस्यदेवेभ्योयदयाचत ॥ ६२ ॥ तस्मात्त्वञ्जहिपापिष्ठन्नरकम्पापपूरुषम् ॥ स्त्रीरत्नान्यपिरत्नानितान्निहत्यसमुद्धर ॥ ६३ ॥ इत्युक्तोजगतान्नाथःशक्रेणसुमहात्मना ॥ प्रतिजज्ञेक्षितिसुतंहन्तुम्प्रतितदैवहि ॥ ६४ ॥ प्रतिज्ञायवधन्तस्यशक्रेणसहकेशवः ॥ तदैवयात्रामकरोत्प्राग्ज्योतिषपुरम्प्रति ॥ ६५ ॥ आरुह्यगरुडङ्कृष्णःसत्यभामाद्वितीयकः ॥ प्राग्ज्योतिषमुखोगच्छद्वासवस्त्रिदिवय्ययौ ॥ ६६ ॥ दिवमाक्रम्यगच्छन्तौकृष्णशक्रौमहाद्युती ॥ यादवाददृशुस्तत्रसूर्य्याचन्द्रमसौयथा ॥ ६७ ॥ संस्तूयमानौगन्धर्व्वैर्द्देवैरप्सरसाङ्गणैः ॥ कृष्णःशक्रःक्षणादेवगतौखेतावदृश्यताम् ॥ ६८ ॥ ततःक्षणेनगरुडेनाससादजगत्पतिः ॥ पुरम्प्राग्ज्योतिषंरम्यन्नरकेणवशीकृतम् ॥ ६९ ॥ सदुर्ग्गैर्मौरवैःपाशैःषट्सहस्रैर्भयङ्करैः ॥ क्षुरान्तैर्व्वेष्टितम्पार्श्वैर्मृत्युपाशैरिवोच्छ्रितम् ॥ ७० ॥ निर्ग्गच्छन्तम्पुरात्तस्मान्नारदञ्चददर्शसः ॥ सतुदेवमुनिःश्रीमान्यदागान्नरकम्प्रति ॥ ७१ ॥ तदाप्राग्ज्योतिषङ्गत्वासत्कृतस्तेननारदः ॥ सङ्गमेसमयम्प्रोचेनरकायसयोषिताम् ॥ ७२ ॥ प्रवर्त्ततेद्यचै

१ प्राग्ज्योतिषंगत्वायदानरकम्प्रत्यगादित्यन्वयः।

त्रस्यशुक्लपक्षस्यपञ्चमी ॥ नवम्यान्तुधरापुत्रप्राप्नोतिमहदापदम् ॥ ७३ ॥ तदायदिचतुर्दश्यांसुस्नातायोपितास्त्वमाः ॥
सुरतेपुत्वयातत्रप्रयोक्तव्यायथासुखम् ॥ ७४ ॥ नारदस्यवचःश्रुत्वानरकोभयमोहितः ॥ आसारञ्चप्रसारञ्चनगरेसन्न्यवे
दयत् ॥ ७५ ॥ रक्षिभीरक्षितंराज्यंरक्षितञ्चसमन्ततः ॥ अथहर्षयुतोभौमःसमयंसमवैक्षत ॥ ७६ ॥ तस्मिन्नवसरेप्रा
पकृष्णःप्राग्ज्योतिषम्पुरम् ॥ प्रथमम्पश्चिमन्द्वारमासाद्यगरुडध्वजः ॥ ७७ ॥ पाशानांषट्सहस्राणिक्षुरान्तःसञ्छिद्यनै
कधा ॥ जघानसमुरुन्दैत्यंसानुगञ्चसबान्धवम् ॥ ७८ ॥ षट्सहस्रामहावीरादानवाद्वारिसंस्थिताः ॥ हताश्चक्रेणहरि
णातदैवमुरुणासह ॥ ७९ ॥ मुरुंहत्वासहस्राणिपुत्राँस्तस्यापराँश्चषट् ॥ जघानचक्रेणतदाखण्डशोन्याँश्चदानवान् ॥
॥ ८० ॥ ततोऽनेकशिलासङ्घानतिक्रम्यजनार्दनः ॥ सगणंसानुगञ्चैवनिसुन्दंसमपोथयत् ॥ ८१ ॥ एकोयोयो
धयेद्देवान्त्सहस्रव्वँत्सरान्पुरा ॥ शक्रञ्चसमतिक्रम्यमहावीरपराक्रमः ॥ ८२ ॥ तञ्जघानहयग्रीवंसमतिक्रम्यकेशवः ॥
मध्येलौहित्यसंज्ञस्यभगवान्देवकीसुतः ॥ ८३ ॥ औदकायाव्विँरूपाक्षंसुन्दंहत्वामहाबलः ॥ ततःपञ्चजनव्वीरञ्जघा
नपरमेश्वरः ॥ ८४ ॥ एतान्हत्वामहाकायान्महावीर्यान्दुरासदान् ॥ आससादजगन्नाथःपुरम्प्राग्ज्योतिषाह्वयम् ॥
॥ ८५ ॥ वियत्स्थैर्दैवतैःसर्वैर्न्नारदेनमहात्मना ॥ जयशब्दैःस्तूयमानःप्रविवेशाथयेश्वरः ॥ ८६ ॥ श्रियायुक्तान्दीप्यमाना

१ भवान्प्राप्स्यतीत्यर्थः । २ आसारःसैन्यानांसर्व्वतोव्याप्तिःप्रसारःसैन्यानांतृणकाष्ठादिहेतवेइतस्ततोगमन ।

म्प्राकाराट्टालभूषिताम् ॥ समेनेनगरीव्विष्णुःकिमिन्द्रस्यामरावती ॥ ८७ ॥ तत्रयुद्धम्महद्भूतन्नानाप्रहरणोद्यतम् ॥ भीरूणा
न्त्रासजननंशूराणांहर्षवर्द्धनम् ॥ ८८ ॥ यथादेवाऽसुरय्युद्धन्तथैवसमपद्यत ॥ ततःशार्ङ्गविनिर्म्मुक्तैर्ब्बाणैस्तान्दानवान्बहून्
॥ ८९ ॥ निजघानमहाबाहुर्ग्गरुडस्थोजनार्द्दनः ॥ अष्टौशतसहस्राणिअष्टौशतशतानिच ॥ ९० ॥ हत्वाऽसुरान्महाबाहुर्न्न
रकन्तंसमासदत् ॥ ९१ ॥ ततःश्रुत्वासनरकःपतितानसुरान्बहून् ॥ दृष्ट्वाकृष्णम्महाबाहुङ्गरुडस्थम्महाबलम् ॥ ९२ ॥ वशिष्ठ
शापंसस्मारसमयम्माधवस्यच ॥ नारदस्यवचश्चापिवरच्छिद्रन्तथाविधेः ॥ ९३ ॥ सप्राप्तकालश्चतदाकेशवेनसमा
गतः ॥ युद्धमेवपरम्मेनेस्मरन्बाणवचस्तदा ॥ ९४ ॥ सकाञ्चनंसमारुह्यरथव्वैजयध्वजव्वरम् ॥ लोहचक्राष्टसय्युक्तन्त्रिनल्व
प्रमितंरथम् ॥ ९५ ॥ युक्तमश्वसहस्रैस्तुवज्रध्वजविराजितम् ॥ नानाप्रहरणोपेतम्बहुतूणीरसय्युतम् ॥ ९६ ॥ आगच्छत्स
मरायाशुनरकःपृथिवीसुतः ॥ सगच्छन्समरायाशुमानुषम्भावमाश्रितम् ॥ ९७ ॥ निघ्नन्तथाऽसुरम्मेनेस्मरन्पूर्व्ववचोहरेः ॥
क्षणात्कृष्णंसददर्शगरुडोपरिसंस्थितम् ॥ ९८ ॥ शङ्खचक्रगदाशार्ङ्गवरासिधरमच्युतम् ॥ किरीटकुण्डलयुतंश्रीवत्सवक्षसंह
रिम् ॥ ९९ ॥ कौस्तुभोद्भासितोरस्कम्पीताम्बरधरम्परम् ॥ सतेनयुयुधेवीरोविष्णुनाप्रभविष्णुना ॥ १०० ॥ प्राग्ज्योतिषा
धिपोभौमोनरकःपृथिवीसुतः ॥ सयुध्यत्कृष्णनिकटेकालिकाङ्कालिकोपमाम् ॥ १०१ ॥ रक्तास्यनयनान्दीर्घाङ्कृश

क्तिधरान्तदा ॥ अपश्यज्जगतान्धात्रीङ्क्षामास्यामपिमोहिनीम् ॥ २ ॥ सविस्मितस्तदाभीतस्तान्दृष्ट्वाजगताम्प्रसूम् ॥ यो
द्धव्यमित्येवतदायुयुधेनरकोऽसुरः ॥ ३ ॥ तेनसार्द्धन्तदाकृष्णःकृत्वासुमहदद्भुतम् ॥ युद्धव्याद्दक्पुराभूतन्नदेवेनचमा
नुषे ॥ ४ ॥ ततस्तेनाथभौमेनयुद्धकेलिंसमाधवः ॥ चिरङ्कृत्वाजघानाथदेवेन्द्रम्प्रतिहर्षयन् ॥ ५ ॥ सुदर्शनेनच
क्रेणमध्यदेशेतदाहरिः ॥ द्विधाचिच्छेदनरकंसहतोभ्यपतद्भुवि ॥ ६ ॥ विभक्तन्तच्छरीरन्तुभूमौनिपतितन्तदा ॥ विरा
जतेवज्रभिन्नोयथागैरिकपर्व्वतः ॥ ७ ॥ पतितेतनयेदेवीपृथ्वीदृष्ट्वाशरीरकम् ॥ शोकवेगन्तदासेहेज्ञात्वाकालन्तदागत
म् ॥ ८ ॥ अदितेःकुण्डलयुगंस्वयमादायकाश्यपी ॥ उपातिष्ठतगोविन्दव्वँचनञ्चेदमब्रवीत् ॥ ९ ॥ त्वयावराहरूपेण
यदाहञ्चोद्धृतापुरा ॥ तदात्वद्गात्रसंस्पर्शात्पुत्रोमेनरकःस्थितः ॥१०॥सोयन्त्वयापालितश्चपातितश्चाधुनासुतः ॥ गृहा
णकुण्डलेचेमेअदितेःसर्व्वकामदे ॥ ११ ॥ सन्ततिश्चास्यगोविन्दप्रतिपालयनित्यदा ॥ ॥ श्रीभगवानुवाच ॥ ॥
भारावतरणेदेविनरकस्यवधःपुरा ॥ १२ ॥ त्वयैवप्रार्थितोयस्मात्तेनासौनिहतोमया ॥ पालयिष्येस्यसन्तानन्देवित्व
द्वचनादहम् ॥ १३ ॥ प्राग्ज्योतिषेभिषेक्ष्यामिनप्तारम्भगदत्तकम् ॥ एवमुक्त्वामहाबाहुर्भगवान्मधुसूदनः ॥ १४ ॥ अ
न्तःपुरव्विँवेशाथनरकस्यधनालयम् ॥ सतत्रददृशेवीरोरत्नानिविविधानिच ॥ १५ ॥ राशीभूतानिशुद्धानिपर्व्वतानिव

राजतः ॥ मुक्तामणिप्रवालानाँव्वैदूर्य्यस्यचपर्व्वतम् ॥ १६ ॥ तथारजतकूटानिवज्रकूटानिमाधवः ॥ सुवर्णसञ्चया
न्रुक्मदण्डान्रत्नमयध्वजान् ॥ १७ ॥ वाहनानिविचित्राणियानानिशयनानिच ॥ खचितानिस्वर्णरत्नैर्म्महार्हाणिमहा
न्तिच ॥ १८ ॥ यद्यद्दृष्टञ्चयावच्चधनंरत्नम्मणिस्तथा ॥ भुवितादृक्चनोदृष्टमन्यत्रनरकालयात् ॥ १९ ॥ नकुबेरस्य
नेन्द्रस्यनयमस्याप्यपाम्पतेः ॥ तावन्तिधनरत्नानियावन्तिनरकालये ॥ १२०॥ केशवोप्यथतत्रैवनारदेनचसङ्गतः ॥
अवेक्ष्यान्तःपुरधनंसारंसारतरन्ततः ॥ १२१ ॥ तेषांसमाददेग्राह्यम्प्रभूतम्परवीरहा ॥ यादत्तावैष्णवीशक्तिर्विष्णुनाप्र
भविष्णुना ॥ हत्वाभौमन्तुतांशक्तिञ्जगृहेदेवकीसुतः ॥ २२ ॥ पृथिव्यानारदेनैवसहितःकेशवस्तदा ॥ भगदत्तम्भौम
सुतम्प्राग्ज्योतिषपुरोत्तमे ॥ २३ ॥ अभिषिच्यतदाभूपम्पुरमध्येन्यवेशयत् ॥ अभिषिक्तन्तुतन्दृष्ट्वाभगदत्तन्तथा
क्षितिः ॥ २४ ॥ नप्तुरर्थेऽथतांशक्तिङ्केशवंसमयाचत ॥ केशवोपिक्षितेर्व्वाक्यान्नारदानुमतेनच ॥ २५ ॥ तांश
क्तिम्भगदत्तायसुप्रीतमनसाददौ ॥ यच्छत्रव्वँरुणञ्जित्वाकाञ्चनश्राविसंज्ञकम् ॥ २६ ॥ समानयत्पुराभौमस्तच्छत्रंहरि
राददे ॥ अष्टभारसुवर्णानियत्संस्रवतिचान्वहम् ॥ यत्क्रोशमात्रविस्तीर्ण्णमर्द्धयोजनमुच्छ्रितम् ॥ २७॥ रत्नोत्तमानिस
र्व्वाणिचतुर्द्दन्ताँस्तथागजान् ॥ चतुर्द्दशसहस्राणिपूजितान्प्रमदोत्कटान् ॥ २८ ॥ द्वारकाम्प्रतिदैत्यौघैर्व्वाहयामासकेश

वः ॥ २९ ॥ यादेवकन्यकाःपूर्व्वन्नरकेणाहृताबलात् ॥ तासांकृत्वाहृषीकेशोवेणीबन्धविमोक्षणम् ॥ १३० ॥ वासोभिर्भू
षणैर्दिव्यैस्ताःसत्कृत्यमुहुर्म्मुहुः ॥ आरोप्यचविमानेतुरक्षिभिर्बलिभिर्दृढैः ॥ १३१ ॥ नारदाधिष्ठिताःसर्व्वाद्वारकाम्प्र
त्यवाहयत् ॥ यःकृतःसुरकन्यार्थेभौमेनमणिपर्व्वतः ॥ ३२ ॥ मणिरत्नौघसम्पूर्णोदिवाकरसमप्रभः ॥ उत्पाट्यतञ्जग
न्नाथस्तार्क्ष्यपृष्ठेन्यवापयत् ॥ ३३ ॥ तथैववारुणञ्छत्रङ्गरुडोपरिमाधवः ॥ आरोप्यसत्ययासार्द्धमासीनःसुमनाहरिः
॥ ३४ ॥ भगदत्तंसमाश्वास्यपृथिवीञ्चजगत्पतिः ॥ प्रतस्थेद्वारकांवीरोवियन्मार्गेणवैद्रुतम् ॥ ३५ ॥ सुपर्णःकाञ्चनश्रा
विछत्रंसमणिपर्व्वतम् ॥ केशवंसत्ययासार्द्धंहेलयाखेवहन्ययौ ॥ ३६ ॥ क्षणेनद्वारकाम्प्राप्यकेशवःपरवीरहा ॥ मुदञ्चलेभेस
कलैर्ब्बान्धवैश्चतथागणैः ॥ ३७ ॥ एवङ्कालीमहामायाकालिकाख्याजगन्मयी ॥ विष्णुञ्चजगतान्नाथम्परापरपतिंहरिम्
॥ ३८ ॥ जगत्कारणकर्तारञ्ज्ञानगम्यञ्जगन्मयम् ॥ सम्मोहयत्येवतथाप्यनुरागविरागवान् ॥ ३९ ॥ अनुगृह्णातिमित्रा
णिस्वमित्राणिनिहन्तिच ॥ नारीषुमूढोरमतेद्वन्द्वेनापिचमुच्यते ॥ १४० ॥ इतिवःकथितंविप्रायथाभून्नरकोऽसुरः ॥
यथाचवरलब्धोभूद्यथाचास्यविचेष्टितम् ॥ १४१ ॥ आराधितोयथाब्रह्मावाणबुद्ध्याथभौमिना ॥ किमन्यद्वुचितव्वाँस्ति
तद्ब्रुवन्तुद्विजोत्तमाः ॥ ॥ ४२ ॥ इतिकालिकापुराणेनरकोपाख्यानेएकचत्वारिंशत्तमोध्यायः ॥ ४१ ॥ ॥ छ ॥

ऋषयउचुः ॥ कथङ्गिरिसुताकालीबभूवजगताम्प्रसूः ॥ दाक्षायणीत्यक्ततनुः कथमापहरम्पतिम् ॥ १ ॥ कथमर्द्धशरीरं साजहारचपिनाकिनः ॥ एतन्नः पृच्छतांसम्यक्कथयस्वमहामते ॥ २ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ शृणुध्वम्मुनिशार्दूलायथादाक्षायणीसती ॥ भूतागिरिसुतापूर्व्वय्यँथार्द्धमहरत्तनुम् ॥ ३ ॥ यदात्यजत्तनुन्देवीपूर्व्वन्दाक्षायणीसती ॥ तदैव मनसागच्छन्मेनकांहिमवद्गिरिम् ॥ ४ ॥ यदाहरेणसहितादक्षकन्याहिमाचले ॥ चिक्रीडचतदातस्यामेनकाभूद्धितैषिणी ॥ ५ ॥ तस्याः सुतास्यामितिचआधायमनसिद्विजाः ॥ त्यक्तप्राणातदादेवीभूताहिमवतः सुता ॥ ६ ॥ यदादाक्षायणी प्राणान्दक्षकोपाज्जहौपुरा ॥ तदैवमेनकादेवीआरिराधयिषुः शिवाम् ॥ ७ ॥ महामायाञ्जगद्धात्रीय्योँगनिद्रांसनातनीम् ॥ मोहिनींसर्व्वभूतानांशरणंसर्व्वनाकिनाम् ॥ ८ ॥ अष्टम्यामुपवासन्तुकृत्वासानवमीतिथौ ॥ मोदकैर्ब्बलिभिः पिष्टैः पायसैर्ग्गन्धपुष्पकैः ॥ ९ ॥ चैत्रेमासिसमारभ्यसप्तविंशतिवासरान् ॥ यावत्सम्पूजयामासपुत्रार्थिन्यन्वहंशुचिः ॥ १० ॥ गङ्गायामोषधिप्रस्थेकृत्वामूर्तिम्महीमयीम् ॥ कदाचित्सानिराहाराकदाचित्साधृतव्रता ॥ ११ ॥ शिवाविन्यस्तमनसासप्तविंशतिवत्सरान् ॥ निनायमेनकादेवीपरमाम्भूतिमिच्छती ॥ १२ ॥ सप्तविंशतिवर्षान्तेजगन्माताजगन्मयी ॥ सुप्रीताभवदत्यर्थम्प्राहप्रत्यक्षताङ्गता ॥ १३ ॥ ॥ देव्युवाच ॥ ॥ यत्प्रार्थितन्त्वयादेविमत्तस्तत्प्रार्थयाधुना ॥ दास्येतवाहन्तत्स

र्व्वंव्वाँञ्छितय्यँद्यदाभवेत् ॥१४॥ ततःसामेनकादेवीप्रत्यक्षङ्कालिकाङ्गताम् ॥ दृष्ट्वैवप्रणनामाथवचनञ्चेदमब्रवीत् ॥ १५॥
देविप्रत्यक्षतोरूपन्तवदृष्टम्मयाधुना ॥ त्वामहंस्तोतुमिच्छामिप्रसन्नायदिमेशिवे ॥ १६ ॥ ततःसामातरित्युक्त्वाकालिकासर्व्व
मोहिनी ॥ बाहुभ्याञ्चारुवृत्ताभ्याम्मेनकाम्परिषस्वजे ॥ १७ ॥ ततःसामेनकादेवीकालिकाम्परमेश्वरीम् ॥ तुष्टाववाग्भिरि
ष्टाभिःशिवाम्प्रत्यक्षतः स्थिताम् ॥ १८ ॥ मेनकोवाच ॥ प्रेरयन्तीञ्जगद्धामचण्डकाल्लोँकधारिणीम् ॥ प्रणमामिजगद्धा
त्रींसर्व्वकामार्थसाधिनीम् ॥१९॥ नित्यानन्दाञ्ज्ञानमयीय्यँयोगनिद्राञ्जगत्प्रसूम् ॥प्रणमामिशिवांशुद्धाव्विँधिशौरिशिवात्मि
काम् ॥ २० ॥ मायामयीम्महामायाम्भक्तशोकविनाशिनीम् ॥ कामस्यवनिताम्भद्रान्नमामित्वाञ्चितिंशिवाम् ॥ २१ ॥
सत्वोद्रेकाद्याभवित्रीहिनित्यानित्याचापिप्राणिनाम्बुद्धिरूपा ॥ सात्वम्बन्धच्छेदहेतुर्य्यतीनाङ्कस्तेगद्योमादृशोभिःप्रभावः
॥ २२ ॥ यात्वंसाम्नांसिद्धिरुक्तिस्तथर्च्चांय्यँवृत्तिय्यायजुषान्दीर्घरूपा ॥ हिंसायावाथर्व्ववेदस्यसात्वन्नित्यङ्कामन्त्वम्ममेष्ट
व्विँधेहि ॥ २३ ॥ नित्यानित्यैर्भागहीनैःपुरस्थैस्तन्मात्रैय्यैंर्य्यैत्स्यतेभूतवर्गः ॥ तेषांशक्तिस्त्वंसदानित्यरूपाकातेयो
षायोग्यव्वँक्तुंसमर्था ॥ २४ ॥ क्षितिर्द्धरित्रीजगतान्त्वमेवत्वमेवनित्याप्रकृतिस्वरूपा ॥ ययावशःक्रियतेब्रह्मरूपःसात्व
न्नित्यामेप्रसीदाद्यमातः ॥ २५ ॥ त्वञ्जातवेदोगतशक्तिरूपात्वन्दाहिकासूर्य्यकरस्यशक्तिः ॥ आल्हादिकात्वम्बहुच

न्द्रिकायास्तान्त्वामहंस्तौमिनमामिचाम्बिकाम् ॥ २६ ॥ योषायोषित्प्रियाणान्त्वव्विँद्यात्वञ्चोर्द्ध्वरेतसाम् ॥ वाञ्छात्वंस

र्व्वजगताम्मायाचत्वन्तथाहरेः ॥ २७ ॥ यानेकरूपाणिविधायनित्यंसृष्टिंस्थितिंहानिमपीहकर्त्री[1] ॥ ब्रह्माच्युतस्थाणुशरी

रहेतुःसात्वम्प्रसीदाद्यपुनर्न्नमस्ते ॥ २८ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ ततःसाजगताम्माताकालिकापुनरेवहि ॥ उवाचमेनका

न्देवीव्वाँञ्छितव्वँरयेत्युत ॥ २९ ॥ ततःसाप्रथमम्पुत्रशतव्वँव्रेयशस्विनी ॥ वीर्य्यवच्चायुषायुक्तमृद्धिसिद्धिसमन्वितम् ॥ ३० ॥

पश्चात्तथैकान्तनयांसुरूपाङ्गुणशालिनीम् ॥ कुलद्वयानन्दकरीम्भुवनत्रयदुर्ल्लभाम् ॥ ३१ ॥ ततोभगवतीप्राहमेनकाम्मुनिस

न्निभाम् ॥ स्मितपूर्व्वन्तदातस्याःपूरयन्तीमनोरथम् ॥ ३२ ॥ देव्युवाच ॥ शतम्पुत्राःसम्भवन्तुभवत्यावीर्य्यसय्युँताः ॥ तत्रैकोब

लवान्मुख्यःप्रथमंसम्भविष्यति ॥ ३३ ॥ सुताचतवदेवानाम्मानुषाणाञ्चरक्षसाम् ॥ हितायसर्व्वजगताम्भविष्याम्यहमेवते

॥ ३४ ॥ त्वंसुखप्रसवानित्यन्तथानित्यम्पतिव्रता ॥ अम्लानारूपसम्पन्नासुभगाचभविष्यसि ॥ ३५ ॥ एवमुक्त्वाजगद्धात्रीतत्रै

वान्तरधीयत ॥ मेनकाचमुदंल्लँब्ध्वास्वस्थानम्प्रविवेशह ॥ ३६ ॥ ततःकालेतुसम्प्राप्तेमैनाकमचलोत्तमम् ॥ यक्षेणसहयोद्यापि

सिन्धुमध्येप्रवर्त्तते ॥ ३७ ॥ मेनकासुषुवेदेवीदेवेन्द्रंस्पर्द्धयागतम् ॥ अन्यान्नूनशतम्पुत्रान्क्रमात्सासुषुवेसती ॥ ३८ ॥ महावीर्य्या

न्महासत्त्वान्त्सम्पन्नान्त्सर्व्वतोगुणैः ॥ ततःसाकालिकादेवीयोगनिद्राजगन्मयी ॥ ३९ ॥ पूर्व्वंत्यक्तसतीरूपाजन्मार्थम्मेनका

१ कर्त्रींति ताच्छील्यादिषुतृन् ।

र्य्ययौ ॥ समयस्यानुरूपेणमेनकाजठरेशिवा ॥४०॥ समुद्भूयसमुत्पन्नासालक्ष्मीरिवसागरात् ॥ वसन्तसमयेदेवीनवम्याम्‌क्षयोगतः ॥४१॥अर्द्धरात्रेसमुत्पन्नागङ्गेवशशिमण्डलात् ॥ ततस्तस्यान्तुजातायाम्प्रसन्नाअभवन्दिशः ॥४२॥अनुकूलोववौवायुर्ग्गम्भीरोगन्धवाञ्छुभः ॥ बभूवपुष्पवृष्टिश्चतोयवृष्टिस्तथापरा ॥४३॥जज्वलुश्चाग्नयःशान्ताजगर्ज्जुश्चघनाघनम् ॥ तस्यान्तुजातमात्रायांसर्व्वेस्वास्थामपद्यत ॥४४॥तान्तुदृष्ट्वातथाजातान्नीलोत्पलदलानुगाम् ॥श्यामांसामेनकादेवीमुदमापातिहर्षिता ॥ ४५ ॥ देवाश्चहर्षमतुलम्प्रापुस्तत्रमुहुर्म्मुहुः ॥ तुष्टुवुश्चान्तरिक्षस्थागन्धर्व्वाप्सरसाङ्गणाः ॥ ४६ ॥ तान्तुनीलोत्पलदलश्यामांहिमवतःसुतां ॥कालीतिनाम्नाहिमवानाजुहावकृतेदिने ॥४७॥ बान्धवैस्तुसमस्तैस्तन्नाम्नासापार्व्वतीतिच ॥ कालीतिचतथानाम्नाकीर्तितागिरिनन्दिनी ॥ ४८ ॥ ततःसाववृधेदेवीगिरिराजगृहेशुभा ॥ गङ्गेववर्षासमयेशारदीवाथचन्द्रिका ॥ ४९ ॥ एधमानानुदिवसञ्चार्व्वङ्गीचारुताम्मुहुः ॥ दध्रेसानुदिनङ्कालीचन्द्रबिम्बङ्कलामिव ॥ ५० ॥ साबालभावमापन्नाक्रीडन्तीकालिकामुदम् ॥ सखीभिःप्रापविपुलाङ्कालिन्दीवसरिद्व्रजैः ॥ ५१ ॥ षड्गुणास्तांस्वयन्देवीम्पूर्व्वजन्मवशीकृताः ॥ स्वयमीयुर्द्विजश्रेष्ठाःप्रावृषङ्कालिकायथा ॥ ५२ ॥ अतिचक्रामस्वगुणैःसादेवीदेवकन्यकाः ॥ रूपैरप्सरसःसर्व्वागीतैर्ग्गन्धर्व्वकन्यकाः ॥ ५३ ॥ साबाल्यएवसततम्बन्धुवर्ग्गप्रियाशुभा ॥ गुणैःस्वबन्धून्पितरम्मातरञ्चाप्यतोषयत् ॥५४॥

मातुःस्तुतिकरीनित्यम्पितृपूजनतत्परा ॥ सर्व्वदाभ्रातृसहिताजगन्माताअवत्तदा ॥५५ ॥ सर्व्वदासाजगन्माताकन्यासास
मुपस्थिता ॥ पितुःसमीपेवसतिकालिन्दीवविभावसोः ५६ ॥ अथैकदातान्निकटेनिधायहिमवद्गिरिः ॥ तनयैःसहसङ्गम्य
स्थितःपरमकौतुकात् ॥ ५७ ॥ अथागतस्तत्रमुनिर्न्नारदोदेवलोकतः ॥ हिमवन्तंसुखासीनंसुतैःसार्द्धन्ददर्शसः ॥ ५८ ॥ अ
पश्यन्निकटेकालीङ्कालिकामिवसूर्य्यतः ॥ ज्योत्स्नामिवसुधांशोस्तुसम्यग्वृद्धांशरन्निशि ॥ ५९ ॥ पूजितस्तेनगिरिणाकृता
सनपरिग्रहः ॥ नारदःप्रथमंशैलव्वृत्तान्तम्पर्य्यपृच्छत ॥ ६० ॥ ततोविदितवृत्तान्तोनारदोमेनकाम्प्रति ॥ उवाचहर्ष
यन्वाक्यम्मुनिर्व्वाक्यविशारदः ॥ ६१ ॥ एषातेतनयारुच्याशुद्धांशोरिववर्द्धिता ॥ आद्याकलाशैलराजसर्व्वलक्षणशालि
नी ॥ ६२ ॥ शम्भोर्भवित्रीदयितासानुकूलासदाहरेः ॥ तस्यचित्तव्वशेचैषाकरिष्यतितपस्विनी ॥ ६३ ॥ सचाप्येनामृतेजा
यान्नान्यामुद्वाहयिष्यति ॥ एतयोर्य्यादृशःप्रेमाकयोश्चिन्नैवतादृशः ॥ ६४ ॥ भूतोवाभवितावापिनाधुनाचप्रवर्त्तते ॥ अनया
सुरकार्य्याणिकर्त्तव्यानिबहूनिच ॥ ६५ ॥ अनयैवगिरिश्रेष्ठअर्द्धनारीश्वरोहरः ॥ भविष्यतिचसौहार्द्दाज्ज्योत्स्नयैवामृता
त्मनः ॥ ६६ ॥ शरीरार्द्धंहरस्यैषाकरिष्यतिनिजास्पदे ॥ स्वर्णगौरीसुवर्णाभातपसातोषितेहरे ॥ ६७ ॥ विद्युद्गौरीत्वियङ्का
लीतवपुत्रीभविष्यति ॥ गौरीतिनाम्नापश्चात्तुख्यातिमेषागमिष्यति ॥ ६८ ॥ नान्यस्मैत्वमिमान्दातुम्मनःकर्त्तुमिहार्हसि ॥

इदस्त्वोपांशुदेवानान्नप्रकाश्यङ्करिष्यसि ॥ ६९ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ इतितस्यवचःश्रुत्वादेवर्षेर्न्नारदस्यच ॥ उ
वाचहिमावान्वाक्यम्मुनिम्प्रतिविशारदः ॥ ७० ॥ श्रूयतेत्यक्तसङ्गःसमहादेवोयतात्मवान् ॥ तपश्चोपांशुतपतिदेवानाम
प्यगोचरः ॥ ७१ ॥ सकथन्ध्यानमार्ग्गस्थः परब्रह्मार्पितमनः ॥ भ्रंशयिष्यतिदेवर्षेतत्रमेसंशयोमहान् ॥ ७२ ॥ अक्षर
म्परमम्ब्रह्मप्रदीपकलिकोपमम् ॥ सोन्तःपश्यतिसर्व्वत्रनतुबाह्यन्निरीक्षते ॥ ७३ ॥ इतिस्मश्रूयतेनित्यङ्किन्नराणाम्मुखा
द्द्विज ॥ सकथन्तादृशंस्वान्तंशक्तोभ्रंशयितुंहरः ॥ ७४ ॥ विशेषतःश्रूयतेस्मदाक्षायण्यासमंहरः ॥ समयञ्ज्ञातवान्पूर्व्वन्त
न्मेनिगदतःशृणु ॥ ७५ ॥ त्वामृतेन्यान्नवनितान्दाक्षायणिसतिप्रिये ॥ भार्य्यार्थेसङ्ग्रहीष्यामिसत्यमेतद्ब्रवीमिते॥ ७६ ॥ इति
सत्यासमन्तेनपुरैवसमयःकृतः ॥ तस्याम्मृतायांसकथंस्त्रियमन्याङ्ग्रहीष्यति ॥ ७७॥ ॥ नारदउवाच ॥ ॥ नात्रकार्य्यात्व
याचिन्तागिरिराजभवत्सुता ॥ एषासतीसमुत्पन्नाहरायैवनसंशयः ॥७८ ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ इत्युक्त्वासतुदेव
र्षिर्न्नारदस्तुयथासती ॥ मेनकायांसमुत्पन्नासर्व्वन्तत्प्रोक्तवान्गिरौ ॥ ७९ ॥ तत्सर्व्वम्पूर्व्ववृत्तान्तन्नारदस्यमुखाद्गिरिः ॥ श्रु
त्वासपुत्रदारःसतदानिःसंशयोभवत् ॥ ८० ॥ ततःकालीकथांश्रुत्वानारदस्यमुखात्तदा ॥ लज्जयाधोमुखीभूत्वास्मित
विस्तारितानना ॥ ८१ ॥ करेणतान्तुसङ्गृह्यप्रोन्नमय्यमुखङ्गिरिः ॥ मूर्द्धिसम्यगुपाघ्रायस्वासनेसन्न्यवेशयत् ॥ ८२ ॥ त

तस्ताम्पुनरेवाहनारदः शैलपुत्रिकाम्॥हर्षयन्गिरिराजन्तुमेनकान्तनयैः सह॥८३॥सिंहासनेनकिन्त्वस्याः शैलराजभवेत्तव॥
शम्भोरूरुः सदैवास्याआसनन्तुभविष्यति ॥ ८४॥ हरोरुमासनम्प्राप्यतनयातवसन्ततम् ॥ नान्यत्रकुत्रचित्तुष्टिमासने
प्राप्यतेगिरे ॥ ८५ ॥ इतिवचनमुदारन्नारदः शैलराजन्त्रिदिवमगमदुक्त्वातत्क्षणाद्देवयानैः ॥ गिरिपतिरपिचिन्ताहर्षसम्मो
हयुक्तः प्रविशदचलयासौस्वान्तरम्पद्मगर्भम् ॥ ८६ ॥ इतिश्रीकालिकापुराणेद्वाचत्वारिंशोध्यायः ॥ ४२ ॥ ॥ ७ ॥
॥ मार्कण्डेयउवाच ॥ ॥ एतस्मिन्नन्तरेशम्भुः क्षिप्रन्त्यक्त्वातदासरः ॥ गङ्गावतारमगमद्धिमवत्प्रस्थमुत्तमम् ॥ १ ॥ यत्रग
ङ्गानिपतितापुराब्रह्मपुरात्सृता ॥ औषधीप्रस्थनगरस्यादूरेसानुरुत्तमः ॥ २ ॥ तत्रभर्ग्गः स्वमात्मानमक्षरम्परमात्परम् ॥
चेतोज्ञानमयन्नित्यञ्ज्योतीरूपन्निराकुलम् ॥ ३ ॥ जगन्मयम्प्रदीपाभन्द्वैतहीनाविशेषकम् ॥ एकाग्रश्चिन्तयामासभगवान्वृ
षभध्वजः ॥४॥ हरेध्यानपरेतस्मिन्प्रमथाध्यानतत्पराः॥ अभवन्केचिदपरेनन्दिभृङ्ग्यादयोगणाः॥५॥ द्वाःस्थाभूतामहाभा
गायेपूर्व्वंद्वारियोजिताः ॥ तावन्तोपिगणास्तत्रनैवकिञ्चनकूजितम् ॥ ६ ॥ तेषांसंश्रूयतेसर्व्वैनिःशब्दाःसंस्थितास्ततः॥ अ
न्येतुतत्रक्रीडन्तिगणादूरान्तरस्थिताः ॥ ७॥ कुसुमैश्चदलैर्भक्तैर्ग्गिरिप्रस्रवणोदकैः ॥ रत्नानिचविचिन्वन्तोभूषितागैरिकै
स्तथा ॥ ८ ॥ सगणन्तुतथादृष्ट्वागिरिराजोगतंहरम् ॥ स्वस्थानमोषधिप्रस्थन्निःसृत्यसहितोगणैः ॥ ९ ॥ पूजार्थमुपतस्थे

सयथायोग्यन्तथार्च्चयत् ॥ सचापिशम्भुस्तस्यार्च्चाम्परयाश्रद्धयायुतः ॥ १० ॥ प्रतिजग्राहकूटस्थोगङ्गाशीर्षेयथापुरा ॥ पू
जितस्तेनसहसागिरिराजव्वृँषध्वजः ॥ ११ ॥ उवाचध्यानयोगस्थः स्मयन्निवजगत्पतिः॥ ॥ईश्वरउवाच॥ ॥तवप्रस्थेतप
स्तप्तुंरहस्यमहमागतः ॥१२॥ नयथाकोपिनिकटंसमायातितथाकुरु ॥ त्वम्महात्माजगद्धाममुनीनाञ्चसदाश्रयः॥ १३॥ देवा
नांराक्षसानाञ्चयक्षाणाङ्किन्नरस्यच ॥ सदावासोद्विजातीनाङ्गङ्गापूतश्चनित्यदा ॥१४॥ त्वत्पुरस्यास्यनिकटेप्रस्थङ्गङ्गावता
रणम् ॥ आश्रितोहङ्गिरिश्रेष्ठतद्योग्यङ्कुरुसाम्प्रतम् ॥१५॥ इत्युक्त्वाजगतान्नाथस्तूष्णीमासद्वृषध्वजः ॥ गिरिराजस्तदाश
म्भुम्प्रणयादिदमब्रवीत्॥१६॥पूतोस्मिजगतान्नाथत्वयाहम्परमेश्वर ॥ आगतोनाद्यविषयमितः कृत्यङ्किमस्तिमे॥१७॥ त
पसामहतात्वंहिदेवैर्य्यत्नपरस्थितैः॥नप्राप्यसेजगन्नाथसत्वंस्वयमुपस्थितः॥१८॥मत्तोधन्यतरोनास्तिनमत्तोन्योस्तिपुण्य
वान् ॥ यद्भवान्हिमवत्प्रस्थेतपसेसमुपस्थितः ॥१९॥देवेन्द्रादधिकम्मन्येआत्मानम्परमेश्वर ॥ सगणेनत्वयाप्राप्तोयदहङ्का
मचारतः ॥२०॥इत्युक्त्वागिरिराजोथस्ववेश्मपुनरागमत् ॥ नियमायपरीवारान्गणानप्यवदत्स्वकान् ॥२१॥ अद्यप्रभृतिनो
गन्ताकोपिगङ्गावतारणम्॥मच्छासनन्नहिविनायोगन्तादण्डयेत्यहम्॥२२॥इतिस्वान्त्सनियम्याशुतिलपुष्पकुशान्फलम् ॥
समादायाशुतनयासहितोगाद्धरान्तिकम् ॥ २३ ॥ अथगत्वाजगन्नाथंहरन्ध्यानपरन्तदा ॥ ननयामासतनयाङ्कालींसर्व्व

गुणान्विताम् ॥ २४ ॥ तिलपुष्पादिकय्यँद्यत्तत्तदग्रेनिधायसः ॥ अग्रेकृत्वासुतांशम्भुमिदमाहसशैलराट् ॥ २५ ॥ भग
वँस्तनयेयम्मेत्वामाराधयितुम्प्रति ॥ समादिष्टासमानीतात्वदाराधनकाङ्क्षिणी ॥ २६ ॥ सखिभ्यांसहनित्यन्त्वांसेवतामीश
शङ्कर ॥ अनुजानीहिसेवार्थेमयितेयद्यनुग्रहः ॥ २७ ॥ अथतांशङ्करोपश्यत्प्रथमारूढयौवनाम् ॥ फुल्लेन्दीवरपत्राभाम्पूर्ण
चन्द्रनिभाननाम् ॥ २८ ॥ समग्रनीलकेशौघप्राप्तवेशविजृम्भिकाम् ॥ कम्बुग्रीवाव्विँशालाक्षीञ्चारुकर्णयुगोज्ज्वलाम्
॥ २९ ॥ मृडालायत पर्य्यन्तबाहुयुग्ममनोरमाम् ॥ राजीवकुण्डलप्रख्यघनपीनोन्नतस्तनौ ॥ ३० ॥ बिभ्रतीङ्क्षीणसन्मध्यां
रक्तपाणितलद्वयाम् ॥ स्थलपद्मप्रतीकाशपादयुग्ममनोरमाम् ॥ ३१ ॥ मध्यक्षीणाम्महासत्वाव्वृँत्तस्थूलघनोज्ज्वला
म् ॥ सुजङ्घान्नागनासोरुन्निम्ननाभिविभूषिताम् ॥ ३२ ॥ सुवृत्तचारुजङ्घायान्त्रिगम्भीरांषडुन्नताम् ॥ सर्व्वलक्षणसम्पू
र्णान्त्रिषुलोकेषुदुर्ल्लभाम् ॥ ३३ ॥ ध्यानपञ्जरनिर्ब्बन्धमुनिमानसमप्परम् ( ? ) ॥ दर्शनाद्भ्रंशनेसक्ताय्यँोषिद्गणशिरोम
णिम् ॥ ३४ ॥ तान्दृष्ट्वातपसेनित्यन्ध्यानिनाञ्चमनोहराम् ॥ विघ्नहेतुञ्चानुरागवर्द्धिनीङ्कामरूपिणीम् ॥ ३५ ॥ गिरिराजस्यवच
नात्तनयान्तस्यशङ्करः ॥ पर्येषणायैजगृहेगौरवादपिगौरथः ॥ ३६ ॥ उवाचेदन्तवसुतासखिभ्यांसहशैलराट् ॥ नित्यम्मेसे
वया यत्तानि०भीतात्यत्रतिष्ठतु ॥ ३७ ॥ एवमुक्तातुतान्देवींसेवायैजगृहेहरः ॥ इदमेवमहद्धैर्य्यय्यँद्विघ्नोनहिविघ्नयेत् ॥ ३८ ॥ नि

विघ्नंस्थानमासाद्ययत्तपःक्रियतेद्विजैः ॥ ३९ ॥ सविघ्नोविघ्नहेतुभ्यःपरिभूयप्रवर्त्तते ॥ तन्महत्त्वञ्चतपसान्घोरताचतप
स्विनाम् ॥ ॥ ४० ॥ ततःस्वपुरमायातोगिरिराट्परिचारकैः ॥ हरश्चध्यानयोगेनपरञ्चिन्तयितुंस्थितः ॥ ४१ ॥ काली
सखिभ्यांसहिताप्रत्यहञ्चन्द्रशेखरम् ॥ सेवमानामहादेवङ्गमनागमनेस्थिता ॥ ४२ ॥ कदाचित्सहिताकालीसखिभ्यां
शङ्करात्रतः ॥ वितन्वतीशुभङ्गीतम्पञ्चमञ्चातनोत्तदा ॥ ४३ ॥ कदाचित्कुशपुष्पादिसमिद्वारिहरायसा ॥ सखिभ्यां
स्नानसत्कारङ्कुर्व्वतीन्यवसत्तदा ॥ ४४ ॥ कदाचिदग्रेनियतास्थिताचन्द्रभृतोमुखम् ॥ वीक्षन्तीचिन्तयामाससका
माचन्द्रशेखरम् ॥ ४५ ॥ यदाकार्य्येषुसाव्यग्रातदातत्कर्म्मचेष्टते ॥ कृत्यहीनायदासातुतदैवाचिन्तयेद्धरम् ॥ ४६ ॥
कदामामेषभूतेशःकर्त्तापाणिगृहीतिकाम् ॥ कदामयासमंरन्तानानासद्भावभावनैः ॥ ४७ ॥ इतिचिन्तापराकाली
स्वप्नेपिपरमेश्वरम् ॥ अर्च्चयत्येवपरमंसदाचिन्तनतत्परा ॥ ४८ ॥ अग्रङ्गतायदाकालीप्रध्यायतिमहेश्वरम् ॥ तदा
तद्वेदभूतेशस्तान्निसर्ग्गपरिस्थिताम् ॥ ४९ ॥ किन्तुगर्ब्भगतैर्ब्बीजैर्द्धृतदेहेतितान्तदा ॥ नाग्रहीद्गिरिशःकालीम्भा
र्य्यार्थेत्यधृतव्रताम् ॥ ५० ॥ महादेवोपितान्दृष्ट्वातदैवेदमचिन्तयत् ॥ कथमेषातपश्चर्य्याव्रतङ्कुर्य्याद्गिरेःसुता ॥ ५१ ॥
कृतव्रताङ्ग्रहीष्यामिगर्ब्भबीजविवर्ज्जिताम् ॥ कालीम्भार्य्यांस्वदयितांयोनिजामतिदूषिताम् ॥ ५२ ॥ व्रतेनचाथसंस्का

रैर्ग्गर्भबीजव्विँमुच्यते ॥ तस्माद्व्रतय्यँथाकालीकुर्य्यात्तद्युज्यतेकथम् ॥ ५३ ॥ इतिश्रीकालिकापुराणेत्रिचत्वारिंशोध्या
यः ॥ ४३ ॥ ॥छ॥ ॥मार्क्कण्डेयउवाच ॥ ॥ इतिसञ्चिन्त्यभूतेशस्तदाध्यानमनास्थितः ॥ ध्यानासक्तस्यतस्याथना
न्यचिन्ताव्यजायत ॥ १ ॥ कालीत्वनुदिनंशम्भुम्भक्त्याभृशमसेवत ॥ विचिन्तयन्तीसततन्तस्यरूपम्महात्मनः ॥ २ ॥ हरो
ध्यानपरःकालीन्नित्यम्प्रत्यक्षतःस्थिताम् ॥ विस्मृत्यपूर्व्ववृत्तान्तम्पश्यन्नपिनपश्यति ॥ ३ ॥ एतस्मिन्नन्तरेदेवाँस्तारकोनाम
दैत्यराट् ॥ बबाधेसर्व्वलोकाँश्चब्रह्मणोवरदर्प्पितः ॥ ४ ॥ वशीकृत्यसलोकाँस्त्रीन्स्वयमिन्द्रोबभूवह ॥ विद्राव्यसकलान्दे
वान्दैत्यान्स्वाँस्तत्पदेषुच ॥ ५ ॥ स्वयन्नियोजयामासदेवयोनिषुचाप्यसौ ॥ नयमःस्वेच्छयालोकांस्तस्मिन्राज्ञिनियच्छ
ति ॥ ६ ॥ नस्वेच्छयातथासूर्य्योलोकाँस्तपतितद्भयात् ॥ चन्द्रस्तुनर्म्मसाचिव्यन्तस्यकुर्व्वन्सरश्मिभिः ॥ ७ ॥ वायुनासह
सङ्गम्यतत्सेवाव्विँदधेनिशम् ॥ सदासौगन्ध्यगाम्भीर्य्यशैत्यस्निग्धत्वसय्युँतः ॥ ८ ॥ तम्वीजयन्ववौवायुःशासनात्तस्यभू
भृतः ॥ धनदोपियथासारन्धनमादाययत्नतः ॥ ९ ॥ सावधानस्तस्यसेवामकरोत्तारकेच्छया ॥ अग्निस्तस्याभवत्सूदःशास
नात्तारकस्यतु ॥ १० ॥ व्यञ्जनान्यथभोज्यानिचक्रेतस्येच्छयातदा ॥ निर्ऋतिस्तस्यसततंसहितः सर्व्वराक्षसैः ॥ ११ ॥
अश्वान्गजान्वाहनानिकारयामाससाध्वसात् ॥ नृत्यद्भिरप्सरोभिश्चस्तुवद्भिःसूतमागधैः ॥ १२ ॥ गायमानैश्चगन्धर्व्वैःस

ञ्चिक्रीडसुरान्द्विषन् ॥ एवंससर्व्वंल्लोकाँस्तुत्रिष्वप्यथविलोडयन्॥ १३ ॥लोकेषुसारान्त्साराँश्चदेवानामप्यथाग्रहीत् ॥ तेना भिबाधिताःसर्व्वेदेवाःशक्रपुरोगमाः॥ १४ ॥ ब्रह्माणंशरणञ्जग्मुरनाथानाथमुत्तमम् ॥ तेप्रणम्यसुराःसर्व्वेपुरुहूतपुरोगमाः ॥१५॥ इदमूचुर्म्महात्मानंसर्व्वल्लोकपितामहम्॥ ॥देवाऊचुः॥ ॥लोकेशतारकोदैत्योवरेणतवदर्पितः ॥१६॥ निरस्यास्मान्ह ठादस्मद्विषयान्स्वयमग्रहीत्॥ रात्रिन्दिवम्बाधतेस्मान्यत्रतत्रस्थितावयम्॥ १७॥पलायिताश्चपश्यामःसर्व्वकाष्ठासुतारक म् ॥ अग्निर्य्यमोथवरुणोनिर्ऋतिर्व्वायुरेवच ॥ १८॥ तथामनुष्यधर्म्माचसर्वैः परिकरैर्य्युतः ॥ एतेतेनाहिताब्रह्मन्देवास्त स्यैवशासनात् ॥ १९॥ अनिच्छाकार्य्यनिरताः सर्व्वेतस्यानुजीविनः ॥ यादेववनिताः स्वर्ग्गेयेचाप्यप्सरसाङ्गणाः ॥२०॥ तान्सर्वानग्रहीद्दैत्यः सारल्लोकेषुयच्चयत् ॥ नयज्ञाः सम्प्रवर्त्तन्तेनतपस्यन्तितापसाः ॥२१॥ दानधर्म्मादिकङ्किञ्चिन्नलोके षुप्रवर्त्तते ॥ तस्यसेनापतिः पापः क्रौञ्चोनामातिदानवः ॥ २२॥ सपातालतलङ्गत्वाबाधतेहर्न्निशम्प्रजाः ॥ तस्मात्तुतारके णेदंसकलम्भुवनत्रयम् ॥ २३ ॥ हृतंसर्व्वञ्जगत्त्राहिपापात्तस्मात्पितामह ॥ वयञ्चयत्रस्थास्यामस्तत्स्थानव्विँनिदेशय ॥ २४॥ स्वस्थानाच्च्यावितास्तेनलोकनाथजगद्गुरो ॥ त्वन्नोगतिश्चशास्ताचत्वन्नस्त्रातापिताप्रसूः ॥ २५॥ त्वमेवभुवनाना ञ्चस्थापकः पालकः कृती ॥ तस्माद्यावत्तारकाख्येवह्नौदग्धाः प्रजापते ॥ २६ ॥ नभवामस्तथाकर्त्तुम्भवतायुज्यतेधुना ॥

॥ ॥मार्क्कण्डेयउवाच॥ ॥सुराणाव्वँचनंश्रुत्वाब्रह्मालोकपितामहः॥ २७ ॥प्रत्युवाचसुरान्सर्व्वाँस्तत्कालसदृशव्वँ
चः॥ ॥ब्रह्मोवाच॥ ॥ममैववरदानेनतारकाख्यः समेधितः॥ २८॥नमत्तस्तस्यमरणय्युँज्यतेत्रिदिवौकसः॥ युष्माक
ञ्चप्रतीकारः कर्त्तव्यः प्रतिकर्म्मणि॥ २९॥ किन्तुसम्यङ्नशक्तोमिप्रतिकर्त्तुम्प्रचोदितः॥ तस्माद्यथातारकाख्यः स्वयमेष्यति
सङ्क्षयम्॥ ३०॥ तथायूयंसर्व्विँदध्वमुपदेशकरस्त्वहम्॥ नमयातारकोवध्योनतथावनमालिना॥ ३१ ॥नहरेणतथावध्यो
नान्यैरपिसुरैर्न्नरैः॥एषएववरोदत्तोमयातस्मैतपस्यते ॥ ३२ ॥ उपायश्चिन्तितश्चास्तितत्कुर्व्वन्तुसुरोत्तमाः ॥ सतीदा
क्षायणीपूर्व्वन्त्यक्तदेहास्वजन्मने ॥ ३३ ॥ अगच्छन्मेनकान्देवीशैलराजस्ययोषितम् ॥तांसमुत्पादयामासमेनकाजठरे
गिरिः॥ ३४॥ लक्ष्मीमिवपुराख्यात्याम्भृगुः स्वतनयोमम ॥ तामवश्यम्महादेवः कुर्य्यात्पाणिग्रहीतिकाम्॥ ३५॥
यथासनचिरात्तस्यामनुरक्तोभवेत्सुराः॥ तथाविदध्वंसुतरांतत्तेजः प्रतिकर्त्तवः॥ ३६ ॥तमूर्द्ध्वरेतसंशम्भुंसैवप्रच्युतरेत
सम्॥कर्त्तुंसमर्थानान्यास्तिकाचिदप्यबलापरा ॥ ३७॥ तत्तेजःप्रच्युतय्येँयत्रतस्माद्योजायतेसुतः ॥ सएवतारकाख्य
स्यहन्तानान्यस्तुविद्यते ॥ ३८ ॥ सासुतागिरिराजस्यसाम्प्रतंरूढयौवना॥ तपस्यन्तङ्गिरिप्रस्थेनित्यम्पर्य्येषतेहरम्॥
॥ ३९॥ वाक्याद्धिमवतःसातुकालीनाम्नानिषेवते॥ सखिभ्यांसहसर्व्वज्ञन्ध्यानस्थम्परमेश्वरम्॥ ४०॥ तामग्रतोवर्तमान।

न्त्रिलोकवरवर्णिनीम् ॥ ध्यानासक्तोमहादेवोमनसापिनचेच्छते ॥ ४१ ॥ यथासमीहतेभार्य्याङ्कालींसचन्द्रशेखरः ॥
तथाकुरुध्वन्त्रिदशानचिरादेवयत्नतः ॥ ४२ ॥ स्वस्थानम्भवतांस्वर्ग्गस्तस्मात्तारकमप्यहम् ॥ निवर्तयिष्येसङ्गम्यग
च्छध्वंविगतज्वराः ॥ ४३ ॥ इत्युक्त्वासर्वलोकेशस्तारकाख्यमुपस्थितः ॥ उपसङ्गम्यवचनंसमाभाष्येदमब्रवीत् ॥
॥ ४४ ॥ भोभोतारकमास्वर्ग्गराज्यन्त्वम्परिशाधिभोः ॥ तदर्थन्नतपस्तप्तंसमयेभवतापुरा ॥ ४५ ॥ वरोनापिम
यादत्तोनमयास्वर्ग्गराजता ॥ तस्मात्स्वर्ग्गम्परित्यज्यक्षितौराज्यंसमाचर ॥ ४६ ॥ देवभोग्यानितत्रैवसम्भविष्य
न्तितेऽसुर ॥ इत्युक्त्वासर्व्वलोकेशस्तत्रैवान्तरधीयत ॥ ४७ ॥ सतारकःपरित्यज्यस्वर्ग्गङ्क्षितिमथाभ्ययात् ॥ तत्रैवसं
स्थितोदेवान्बाधतेस्मसनित्यशः ॥ ४८ ॥ इन्द्रङ्करप्रदश्चक्रेनिदेशस्थंम्महाबलम् ॥ तमिन्द्रःसततन्देवभोग्यानिवितरन्मुहुः
॥ ४९ ॥ सेवमानः क्षमोनाभूत्सन्तोषयितुमीश्वरम् ॥ एवन्तेनार्द्दितादेवामन्युनापरिपीडिताः ॥ ५० ॥ विधातुरुपदेशेनय
त्नश्चक्रुर्हरान्वये ॥ ततइन्द्रोथगुरुणासङ्गम्यकृतनिश्चयः ॥ ५१ ॥ कुसुमेषुंसमाहूयवचनञ्चेदमब्रवीत् ॥ ॥इन्द्रउवाच ॥ ॥ 
त्वयेदम्पाल्यतेविश्वन्त्वयाविश्वम्प्रसूयते॥५२॥त्वम्ब्रह्मविष्णुरुद्राणाम्प्रीतिहेतुःपुराभवः॥ब्रह्माप्रीत्यायथापूर्व्वमगच्छाच्चरि
तव्रताम् ॥ ५३ ॥ सावित्रीम्माधवोलक्ष्मींसतीन्दाक्षायणींहरः ॥ ताःप्रीतयेपुरातेषान्देवेशानाय्यैंथाकृताः ॥ ५४ ॥ तथैवकु

रुमेप्रीतिङ्कामप्राणभृतांसदा ॥ नत्वन्नकस्यचित्स्वर्गेपातालेवाथभूतले ॥ ५५ ॥ प्रियःप्राणभृताङ्कामसततञ्जगताम्मतः ॥
देवदानवयक्षाणांरक्षसाम्मानुषस्यच ॥ ५६ ॥ त्वम्पालकश्चकर्त्ताचहृदयेचप्रवर्त्तसे ॥ तस्मात्त्वंसर्व्वजगतांहितायकुरुचेष्टि
तम् ॥ ५७ ॥ देवदानवयक्षाणाम्मानुषाणाम्महात्मनाम् ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ एतच्छ्रुत्वावचस्तस्यशक्रस्यमक
रध्वजः ॥ ५८ ॥ देवराजमुवाचेदंसुप्रीतस्तद्वचोमृतैः ॥ यत्राहमीशिताशक्रतत्कर्म्मविदितन्त्वया ॥ ५९ ॥ तस्मान्ममोचितं
शक्यङ्करिष्येतन्निदेशय ॥ पञ्चैवबाणामृदवस्तेचपुष्पमयामम ॥ ६० ॥ चापस्तथापुष्पमयःसिञ्जिनीभ्रमरात्मिका ॥ र
तिर्म्मेदयिताजायावसन्तःसचिवोमम ॥ ६१ ॥ यन्तामलयजोवायुर्म्मित्रम्ममसुधानिधिः ॥ सेनाधिपोमेशृङ्गारोहावाभावा
श्चसैनिकाः ॥ ६२ ॥ सर्व्वेमेमृदवोऽक्रूराअहञ्चापितथाविधः ॥ यद्येनयुज्यतेकार्य्यंधीमाँस्तत्तेनयोजयेत् ॥ ६३ ॥ ममयो
ग्यन्तुयत्कर्म्मतस्मात्तस्मिन्नियोजय ॥ ॥ इन्द्रउवाच ॥ ॥ यत्कारयितुमिच्छामिभवतातन्मनोभव ॥ ६४ ॥ तत्तेसमुचित
ङ्कर्म्मतस्मिन्परिष्ठितोभवान् ॥ कृतकर्म्मार्पितत्वङ्कतीचापिमनोभव ॥ ६५ ॥ त्वदन्यैःकिन्तुदुःसाध्यन्तत्त्वान्तत्रनियोजये ॥
श्रूयतेहितपस्यन्तन्ध्यानस्थव्वृँषभध्वजम् ॥ ६६ ॥ गिरेर्हिमवतःप्रस्थेनिराकाङ्क्षम्वधूकृतौ ॥ तम्पितुर्व्वचनात्कालीतपस्य
न्तन्निषेवते ॥ ६७ ॥ सखिभ्यांसहितानित्यंहरस्यानुमतेऽधुना ॥ आरूढयौवनान्तान्तुस्त्रीरत्नमपिसुन्दरीम् ॥ ६८ ॥ ध्या

नासक्तोमहादेवोनेहतेमनसापिच ॥ सानुरागोयथातस्याञ्जायतेवृषभध्वजः ॥ ६९ ॥ तथाविधस्त्वदेवानांहितायजगता
मपि ॥ सहसत्यायथारेमेसानुरागोवृषध्वजः ॥ ७० ॥ तथैतयागिरिजयारमतान्तत्कृतेनवै ॥ तस्याःकृतेतुयत्तेजःप्रच्यु
तंस्याद्धरस्यवै ॥ ७१ ॥ ततोयोजायतेसोऽस्माँस्तारकादुद्धरिष्यति॥ ॥ मार्कण्डेयउवाच॥ ॥ ततःसदेवराज
स्यवचःश्रुत्वामनोभवः ॥ ७२ ॥ प्राप्तकालञ्चसस्मारशापम्ब्रह्मकृतम्पुरा ॥ सन्ध्याम्प्रतिविधातारय्यँदाशस्त्रम्परीक्षितुम्
॥ ७३ ॥ कामोहनत्पुष्पबाणैस्तदातमशपद्विधिः ॥ शम्भुनेत्राग्निदग्धस्त्वम्भविष्यसिद्विजोत्तमाः ॥ ७४ ॥ यदाकुर्य्याद्गि
रिसुतांहरःपाणिगृहीतिकाम् ॥ तदाभवाञ्छरीरेणागमिष्यतिसमग्रताम् ॥ ७५ ॥ इतिस्मृत्वाविधेःशापम्भीतोपिमकरध्व
जः ॥ अङ्गीचक्रेशक्रवाक्यात्काल्यायोजयितुंहरम् ॥ ७६ ॥ इदञ्चवचनम्प्रोचेतत्कासलदृशम्पुनः॥ ॥ मदनउवाच॥
करिष्येत्वद्वचःशक्रहरंसङ्गमयाम्यहम् ॥ ७७ ॥ काल्यागिरिजयासार्द्धन्दाक्षायण्यायथापुरा ॥ किन्त्वेकम्ममसाहाय्यङ्कु
र्त्तात्वंहरमोहने ॥ ७८ ॥ यदासम्मोहनेनाहंहरंसम्मोहयामिच ॥ तदाकुरुसहायत्वंस्वस्थमाप्याययस्वमाम् ॥ ७९ ॥ प्रवि
श्याहंसुरभिणानचिराच्छङ्कराश्रमम् ॥ विधायपूर्व्वम्मनसोविकारंहर्षणेनतु ॥ ८० ॥ सम्मोहनेनसुदृढम्मोहयिष्येवृषध्वज
म् ॥ स्मरिष्यसित्वंसम्प्राप्तकालेमाम्ममपालने ॥ ८१ ॥ अहञ्चच्छामिसहितन्तत्कर्तुम्बलसूदन॥ ॥ मार्कण्डेयउवाच॥ ॥

॥ इत्युक्त्वासजगामाथमदनःशङ्कराश्रमम् ॥ ८२ ॥ शक्रोपित्रिदशान्सर्व्वानिदमाहवचस्तदा ॥ यूयङ्कुरुध्वंसाहाय्यय्यँ
त्रयातिमनोभवः ॥ ८३ ॥ तत्रतत्रानुगम्यैवसमयेमाञ्चबोधत ॥ यदासम्मोहनेनायंसम्मोहयतिशङ्करम् ॥ ८४ ॥
तदाहमपिधास्यामितत्रबोधतमांसुराः ॥ इत्युक्तास्तेनशक्रेणदेवाजग्मुर्म्मनोभवम् ॥ ८५ ॥ सोपिगत्वायत्रहरोगङ्गावत
रणेगिरेः ॥ हिमभारभृतःसानौसुरभिञ्चन्ययोजयत् ॥ ८६ ॥ ततस्तत्रगतेसम्यक्सुरभौतस्यलक्षणम् ॥ अभवन्नचिरा
देवतरुगुल्मलतासुच ॥ ८७ ॥ पुष्पिताःकिंशुकास्तत्रमञ्जुलाःकेतकास्तथा ॥ सरांसिचसपद्मानिसविकाराश्चजन्तवः ॥
॥ ८८ ॥ ववौवायुश्चगम्भीरोगन्धिलःपुष्परेणुभिः ॥ शनैःशनैःसुखकरःकर्षयन्सहिमानसम् ॥ ८९ ॥ पक्षिणश्चमृगाश्चै
वयेचान्येप्राणधारिणः ॥ सिद्धाश्चकिन्नराश्चैवद्वन्द्वभावव्विर्तेनिरे ॥ ९० ॥ चूताःकुसुमितास्तत्रनवस्तबकभूषिताः ॥ अशो
काःपाटलाश्चैवनागकेशरकारुणाः ॥ ९१ ॥ सविकारागणाश्चासञ्छङ्करस्यतदाद्विजाः ॥ प्रत्यक्षतांयजुस्तेपिविकारंशम्भु
साध्वसात् ॥ ९२ ॥ भ्रमन्तिस्मतदातत्रभ्रमराःकुसुमोद्भवम् ॥ पिबन्तोबहुशश्चूतकुञ्जन्तःसहजायया ॥ ९३ ॥ एवम्प्रवृ
त्तेसुरभौशृङ्गारोपिगणैःसह ॥ हावभावयुतस्तत्रप्रविवेशहरान्तिकम् ॥ ९४ ॥ मदनःसगणस्तत्रनिवसँश्चिरमेवहि ॥ नद
ष्टवाँस्तदाशम्भोश्छिद्रय्येनप्रवेक्ष्यति ॥ ९५ ॥ यदाचप्राप्तविवरस्तदाभयविमोहितः ॥ नाग्रेसरोऽभवत्तस्यमदनोरतिवारि

तः ॥ ९६ ॥ एवंय्यांतस्तस्यकालःप्रभूतोद्विजसत्तमाः ॥ निरूपयन्नवाचापच्छिद्रन्तस्ययतेस्तदा ॥ ९७॥ ज्वलत्कालाग्नि
सङ्काशम्भानुलक्षसमप्रभम् ॥ ध्यानस्थंशङ्करङ्कोवासमासादयितुङ्क्षमः ॥ ९८ ॥ अथैकदागिरिसुताकालीतस्याभवत्पुरः
॥ कृत्वापरीष्टिङ्कर्त्तंव्व्यांसखिभ्याम्प्रणतास्थिता ॥ ९९ ॥ शङ्करोपितदाध्यानन्त्यक्त्वाक्षणमथास्थितः ॥ योजयन्स्व
गणान्कृत्येज्योतिश्चिन्ताविवर्जितः ॥ १०० ॥ तच्छिद्रम्प्राप्यमदनः प्रथमंहर्षणेनतु ॥ बाणेनहर्षयामासपार्श्वस्थश्चन्द्रशेख
रम् ॥१०१॥ शृङ्गारश्चतदाभावैर्हावैश्चसहितोहरम् ॥ जगामकामसाहाय्यङ्कुर्वन्सुरभिणासह ॥ १०२ ॥ हर्षणेनातिहर्षितः
शृङ्गाराद्यैर्न्निषेवितः ॥ शङ्करोवदनङ्काल्याः साकूतंसव्व्यलोकयत् ॥ ३ ॥ तत्प्राप्यविवरङ्कामःपुष्पचापेन्ययोजयत् ॥ स
म्मोहनम्पुष्पवृतम्पुष्पमालाविवर्द्धितम् ॥ ४ ॥ तदाभूद्दक्षिणेपार्श्वेरतिःप्रीतिस्तुवामतः ॥ पृष्ठेवसन्तस्तूणीरम्पौष्पमादा
यसुन्दरः ॥ ५ ॥ आकर्णपूरितम्पुष्पञ्चापमाकृष्यसर्व्वतः ॥ यदामनोभवोवायुस्तदातंसमुपेयिवान् ॥ ६ ॥ सहितेपु
ष्पबाणेतुगिरिजाञ्चन्द्रशेखरः ॥ जातेन्द्रियविकारःसञ्जिघृक्षुःसङ्गमेभवत् ॥ ७ ॥ अमराःशक्रसहितास्तदासर्व्वेविय
द्गताः ॥ सम्यङ्मनोभवम्मेनेसुरकृत्येनिवेशितम् ॥ ८ ॥ अथसंस्मृत्यसर्व्वम्स्यनिगृह्यविकृतिन्तदा ॥ इन्द्रियस्यमहादे
वः सहसेदव्व्यँचिन्तयत् ॥ ९ ॥ योनिजाङ्गिरिजाङ्कालीन्तपोव्रतविवर्जिताम् ॥ कथंसङ्गमकामोहन्धर्तुमिच्छामिवैहठात्

॥११०॥तपोव्रतपवित्राङ्गीन्तपश्चरणसत्कृताम्॥स्वयमेवग्रहीष्यामिसतीन्दाक्षायणीमिव॥ १ १ १॥कथव्विँकृतकामोहमनि
च्छन्निवसाम्प्रतम्॥ केनापिचाकृष्टइवचिकीर्षुः सङ्गमोद्भवम् ॥ ११२ ॥ एवव्विँकारहेतुंसनिश्चिन्वन्निन्द्रियस्यतु ॥ पुरोव
लोकयामाससंहितेषुम्मनोभवम्॥ ११३ ॥ एतस्मिन्नन्तरेब्रह्माविज्ञातसमयःसुरान्॥ दृष्ट्वास्थानादाजगामतत्समाजमनुग्र
हात्॥ ११४ ॥ ततःसकुपितोदृष्ट्वासन्धितेषुम्मनोभवम् ॥ जज्ज्वालज्वलनप्रख्यस्तन्दिधक्षुःप्रसह्यतु ॥ ११५ ॥ कामोयंस
मयञ्ज्ञात्वामाम्मोहयितुमिच्छति ॥ मनोमेस्ववशङ्कर्त्तुन्तन्नयामियमक्षयम्॥ ११६ ॥ एवव्विँचिन्त्यमानस्यनेत्रोद्भावितितेज
सा ॥ वर्द्धितोज्वलनोभूत्वाक्रोधन्नेत्रात्ससर्ज्जह ॥ ११७॥ तत्क्रोधन्निःसरिष्यन्तञ्जातवेदःस्वरूपिणम् ॥ ज्ञात्वाकामस्यता
न्बाणान्पौष्पचापनिषण्णकान्॥११८॥ शक्तिम्प्राणाँस्तथात्मानमाकृष्यापालयद्विधिः॥ उत्सारयामासतदावसन्तंसपिताम
हः ॥ ११९ ॥ निजशक्त्यातदाशम्भुक्रोधाद्रक्षन्मनोभवम्॥ अथाकाशगतादेवाःक्रुद्धन्दृष्ट्वामहेश्वरम् ॥ १२० ॥ प्रसीदजगता
न्नाथकामेक्रोधम्परित्यज्य ॥ त्वयायथापुरासृष्टःशम्भुरूपेणकर्म्मणा ॥ १२१ ॥ येनचायोजितङ्कर्म्मतत्करोतिमनोभवः ॥
तस्माच्चम्मदनेशम्भोक्रोधाग्निमुपसंहर ॥ १२२ ॥ प्रसीदसर्व्वभूतेशभक्त्यात्वाम्प्रणतावयम्॥ इतिस्मवदतान्तेषाममरा
णान्तदानलः ॥ १२३ ॥ ललाटचक्षुःसम्भूतोभस्माकार्षीन्मनोभवम् ॥ दग्ध्वाकामन्तदावह्निर्ज्ज्वालामालातिदीपितः

॥ २४ ॥ संस्तम्भितोथविधिनाहरङ्गन्तुंशशाकन ॥ महादेवोपितद्धस्ममनोभवशरीरजम् ॥ २५ ॥ आदायसर्व्वगात्रेषु
भूतिलेपन्तदाकरोत् ॥ लेपशेषाणिभस्मानिसमादायतदाहरः ॥ २६ ॥ सगणोन्तर्दधेकालीव्विँहायविधिसम्मते ॥ ब्रह्मा
क्रोधानलंशम्भोर्दहन्तंसकलान्सुरान् ॥ २७ ॥ वडवारूपिणञ्चक्रेदेवानाम्पुरतस्तदा ॥ वडवान्तान्तदादेवाःसौम्याञ्ज्वा
लामुखींशुभाम् ॥ २८ ॥ दृष्ट्वानिर्व्विघ्नमनसोबभूवुःपूर्व्वपीडिताः ॥ वडवान्तांसमादायतदाज्वालामुखीव्विँधिः ॥ २९ ॥
सागरम्प्रययौलोकहितायजगताम्पतिः ॥ गत्वाथसागरम्ब्रह्माप्रोवाचपरिपूजितः ॥ १३० ॥ यथावत्तेनविप्रेन्द्राःसमयञ्च
निवेदयन् ॥ अयङ्क्रोधोमहेशस्यवडवारूपधृक्तया ॥ १३१ ॥ ज्वालामुखस्सदाधार्य्योयावन्नविनयाम्यहम् ॥ यदात्वामहमाग
म्यवदामिसरिताम्पते ॥ १३२ ॥ तदात्वयापरित्याज्यःक्रोधोयव्वँडवामुखः ॥ भोजनम्भवतस्तोयमेतस्यतुभविष्यति
॥ ३३ ॥ यत्नादेवव्विँधार्य्योयय्यँथानोयातिचान्तरम् ॥ इत्युक्तोब्रह्मणासिन्धुरङ्गीचक्रेतदाक्रुधम् ॥ ३४ ॥ ग्रहीतुव्वँडवाव
क्त्रंशम्भोश्चाशक्यमम्बरम् ॥ ततः प्रविष्टोजलधौपावकोवडवामुखः ॥ ३५ ॥ वार्य्योघान्निर्दहन्सम्यग्ज्वालामालातिदीपि
तः ॥ यदाभवच्छम्भुनेत्राद्ददाहमदनन्तदा ॥ ३६ ॥ अभवत्सुमहाशब्दोयेनाकाशः प्रपूरितः ॥ तेनशब्देनमहताकामदाहेक्ष
णेनच ॥ ३७ ॥ सखीभ्यांसहभीताभूत्कालीशोकयुतातदा ॥ तेनशब्देनहिमवाँश्चकितोविस्मितस्तदा ॥ ३८ ॥ सुतामेव

जगामाशुगताङ्कालींहराश्रमम् ॥ तान्तत्रकालीन्तनयाम्भयशोकाकुलांशुभाम् ॥ ३९ ॥ रुदन्तींशम्भुविरहादाससादाच
लेश्वरः ॥ आसाद्यपाणिनातस्यामार्ज्जयन्नयनद्वयम् ॥ १४० ॥ माभैषीः कालिमारोदीरित्युक्तातान्तदाग्रहीत् ॥ क्रोडीकृ
त्यसुतान्तान्तुहिमवानचलेश्वरः ॥ ४१ ॥ स्वमालयमथानिन्येसान्त्वयामासचार्द्दिताम् ॥ अन्तर्हितेहरेकालीविरहात्तस्य
सन्ततम् ॥ ४२ ॥ निवसन्तीपितुर्ग्गेहेशुशोचचमुमोहच ॥ शैलाधिराजोप्यथमेनकापिमैनाकमुख्योपिसखीद्वयञ्च ॥४३॥
तांसान्त्वयाञ्चक्रुरदीनसत्वांहरञ्चिँसस्मारतथापिनोमा ॥ ४४ ॥ इतिकालिकापुराणेचतुश्चत्वारिंशोध्यायः ॥ ४४ ॥ ॥
मार्क्कण्डेयउवाच ॥ ॥ छ ॥ अथदेवमुनिर्य्यातोहिमवन्मन्दिरन्तदा ॥ नियोजितोबलभिदानारदः कामगः परम् ॥ १ ॥
सगतः पूजितस्तेनधरेशेनमहात्मना ॥ तंसमुत्सृज्यरहसिकालीन्तामाससादह ॥ २ ॥ आसाद्यकालींसमुनिः सम्बोध्यज्ञा
नशालिनीम् ॥ उवाचेदव्वँचस्तथ्यंसर्व्वेषाञ्जगतांहितम् ॥ ३ ॥ ॥ नारदउवाच ॥ ॥ शृणुकालिवचोमत्त्यंसत्यन्तदवधार
य ॥ सेवितः समहादेवस्त्वयेहतपसाविना ॥ ४ ॥ अनुरक्तोपितेनत्वाम्महादेवोविसृष्टवान् ॥ त्वाम्तेशङ्करोनान्यान्द्वितीयां
सङ्ग्रहीष्यति ॥ ५ ॥ त्वञ्चापिनान्यन्दयितङ्ग्रहीष्यसिविनेश्वरम् ॥ तस्मात्त्वन्तपसायुक्ताचिरमाराधयेश्वरम् ॥ ६ ॥ तप
सासंस्कृतान्त्वान्तुसद्वितीयाङ्करिष्यति ॥ मन्त्रोयन्तस्यसुभगेशृणुत्वय्यैनसोचिरात् ॥ ७ ॥ आराधितस्तेप्रत्यक्षोभवि

ष्यतिमहेश्वरः ॥ ओँनमःशिवायेतिचसर्व्वदाशङ्करप्रियः ॥ ८ ॥ चिन्तयन्तीतुतद्रूपन्नियमस्थाषडक्षरम् ॥ मन्त्रंजपत्वङ्गि
रिजेतेनतुष्टोभवेद्धरः ॥ ९ ॥ एवमुक्तातदाकालीनारदेनमहात्मना ॥ कर्तव्यमनुमेनेसाहितन्तथ्यञ्चतद्वचः ॥ १० ॥ अनु
मान्यतपस्तत्तुन्तदाकालीञ्चनारदः ॥ स्वर्गञ्जगामतस्याश्चनिश्चिताभून्मतिर्व्रते ॥ ११ ॥ अथयातेदेवमुनौकालीसासा
द्यमेनकाम् ॥ तपःश्रद्धांसमाचख्येचात्मनोहरसङ्गमे ॥ १२ ॥ काल्युवाच ॥ ॥ तपस्तप्तुङ्गमिष्यामिमातःप्राप्तुम्महे
श्वरम् ॥ अनुजानीहिमाङ्कन्तुन्तपसेद्यतपोवनम् ॥ १३ ॥ तपःकरणयत्नम्मेपितुरावेदयद्रुतम् ॥ यावन्नदह्येजननिभूतेश
विरहाग्निना ॥ १४ ॥ इतितस्यावचःश्रुत्वामेनकाशोककर्षिता ॥ आलिङ्ग्यस्वसुतामूचेमातपःकुरुवल्लभे॥ १५ ॥ मृदुदेहा
सिपुत्रित्वम्मातपोयाहिकर्क्कशम् ॥ तपःसोढुम्मुनेर्ग्गात्रंशक्तन्तेनकलेवरम् ॥ १६ ॥ वनवासश्चतेपुत्रिनेष्टःशत्रुगणैरपि ॥ त
स्मात्त्वंसम्परित्यज्यवनवासोद्भवन्तपः ॥ १७ ॥ आत्मनोह्यनुरूपेणतपस्तत्कुरुयद्धितम् ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥
मातुःसावचनंश्रुत्वागिरिजादीनमानसा ॥ १८ ॥ इत्यूचेचतदावाक्यन्तपोयत्नपराप्रसूम् ॥ मानिषेधयमाय्याँस्येतपसेद्यत
पोवनम् ॥ १९ ॥ प्रच्छन्नमपियास्यामिनानुज्ञाताप्यहन्त्वया ॥ ॥ मेनकोवाच ॥ ॥ गृहेषुदेवाःसततम्ब्रह्मविष्णुशिवादयः
॥ २० ॥ तस्माद्गृहेपुत्रिदेवानर्च्चयत्वय्यँथेप्सितान् ॥ स्त्रीणान्तपोवनगतिर्न्नश्रुतास्वामिनाविना ॥ २१ ॥ तस्मान्नयुज्यतेपु

त्रितपोयात्रावनम्प्रति ॥ यतोनिरस्तातपसेवनङ्गन्तुञ्चमेनया ॥ २२ ॥ उमेतितेनसोमेतिनामप्रापतदासती ॥ अवज्ञाय
तदामातुर्व्वचनंहिमवत्सुता ॥ २३ ॥ सखीभ्याञ्ज्ञापयामासपितरन्तपसोद्यमम् ॥ सतुज्ञात्वागिरिपतिस्तपसेचरितोद्यम
म् ॥ २४ ॥ दुहितुश्चानुमेनेचनातिहृष्टमनाइव ॥ सानुज्ञाप्यतदातातय्यँत्रदग्धोमनोभवः ॥ २५ ॥ शम्भुनाप्रययौतत्र
गङ्गावतरणम्प्रति ॥ गङ्गावतरणन्नामप्रस्थोहिमवतःसच ॥ २६ ॥ हरशून्योथददृशेकाल्यातच्चिन्तयातदा ॥ यत्रस्थित्वा
पुराशम्भुर्ध्यानवानभवद्भृशम् ॥ २७ ॥ तत्रक्षणन्तुसास्थित्वाबभूवविरहार्द्दिता ॥ हाहरेतिक्षणन्तत्ररोदमानागिरेःसुता
॥ २८ ॥ विललापातिदुःखार्त्ताचिन्ताशोकसमन्विता ॥ क्षणव्विँलम्ब्यसाकालीस्मृत्वापूर्व्वोद्भवन्तदा ॥ २९ ॥ हाहहर
स्यसामोहमवापकमलेक्षणा ॥ ततश्चिरेणसामोहन्धैर्य्यात्संस्तभ्यभामिनी ॥ ३० ॥ नियमायाभवत्तत्रदीक्षिताहिमवत्सु
ता ॥ प्रथमन्नियमस्तस्याबभूवफलभोजनम् ॥ ३१ ॥ चर्य्यापश्चात्तपाचिन्ताशाम्भवीशाम्भवोजपः ॥ यज्ञियैर्द्दारुभिःशुष्कै
श्चतुर्द्दिक्षुचतुष्कृतम् ॥ ३२ ॥ वह्निसंस्थापनङ्ग्रीष्मेतीव्रांशुस्तत्रपञ्चमः ॥ हस्तान्तरेचतुर्व्वह्नीन्कृत्वावैश्वानरेष्टिना ॥ ३३ ॥
तन्मध्यस्थासूर्य्यबिम्बव्वीक्षन्तीवल्कलांशुका ॥ ग्रीष्मन्निन्येवह्निमध्येशिशिरेतोयवासिनी ॥ ३४ ॥ प्रथमम्फलभोगेनद्विती
यन्तोयभोजनम् ॥ तृतीयन्तुस्वयम्पातिवृक्षपल्लवभोजनम् ॥ ३५ ॥ क्रमेणतूतदापर्ण्णन्निरस्यहिमवत्सुता ॥ निराहारव्रता

भूत्वातपश्चरणखिन्निका ॥ ३६ ॥ आहारेत्यक्तपर्ण्णाभूद्यस्माद्धिमवतः सुता ॥ तेनदेवैरपर्ण्णेतिकथितापृथिवीतले ॥ ३७ ॥
पश्चातपत्रतेनैवतोयानाञ्चप्रवेशनैः ॥ एकपादस्थितासातुवसन्तेहिमवत्सुता ॥ ३८ ॥ षडक्षरञ्जपन्तीसाचिरन्तेपेतपोम
हत् ॥ चीरवल्कलसव्वीताजटासङ्घातधारिणी ॥ ३९ ॥ कृशाङ्गीचिन्तनेशक्ताजिगायतपसामुनीन् ॥ तान्तपश्चरणेशक्तां
ररक्षशङ्करःस्वयम् ॥ ४० ॥ आप्यायतिस्मसतदाभयाद्रक्षतिहर्षितः ॥ एवन्तस्यास्तपस्यन्त्याश्चिन्तयन्त्यामहेश्वरम्
॥४१॥ त्रीणिवर्षसहस्राणिजग्मुः काल्यास्तपोवने ॥ षट्त्रिवर्षसहस्राणिसँस्कृतावीक्षणात्स्वयम् ॥ ४२ ॥ दैवेनविधिनादे
वीहरयोग्यातदाभवत् ॥ षट्त्रिवर्षसहस्रान्तेयत्रतेपेतपोहरः ॥ ४३ ॥ तत्रक्षणमथोषित्वाचिन्तयामासभामिनी ॥ नियम
स्थाम्महादेवः किम्माञ्जानातिनाधुना ॥४४ ॥ येनाहंसुचिरन्तेननानुज्ञातातपोरता ॥ लोकेनास्त्यत्रगिरिशः किन्तत्रमुनि
भिःस्तुतः ॥ ४५ ॥ सर्व्वज्ञः सर्व्वगोदेवोहरोदेवैर्न्निगद्यते ॥ ससर्व्वगस्तुसर्व्वज्ञः सर्व्वात्मासर्व्वहृद्गतः ॥ ४६ ॥ सर्व्वभूतिप्र
दोदेवः सर्व्वभावनभावनः ॥ सतीचमेनकामातायदिचाहव्वृँषध्वजे ॥ ४७ ॥ सानुरक्तानचान्यस्मिन्त्सप्रसीदतुशङ्करः ॥
यदिनारदवक्रोत्थोमन्त्रोयंस्यात्षडक्षरः ॥ ४८ ॥ यदिभक्त्यामयाजप्तंहरस्तेनप्रसीदतु ॥ सत्यय्येँयदितपस्तप्तंसत्यश्चारा
धितोहरः ॥ ४९ ॥ सत्यम्भवेद्यदितपोहरस्तेनप्रसीदतु ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ एवव्विँचिन्तयन्तीसायदातिष्ठद्

राश्रमे ॥ ५० ॥ अधोमुखीदीनवेषाजटावल्कलमण्डिता ॥ तदैवब्राह्मणः कश्चिद्ब्रह्मचारीधृतव्रतः ॥ ५१ ॥ कृष्णाजिनो
त्तरीयेणधृतदण्डकमण्डलुः ॥ ब्राह्म्याश्रियादीप्यमानःस्वर्णगौरःसुशोभनः ॥ ५२ ॥ जटाभिःपरिवीताभिरुद्रिक्तस्तनु
देहभृत् ॥ उपस्थितस्तदाकालींशम्भुर्ब्राह्मणरूपधृक् ॥ ५३ ॥ आसाद्यप्रथमङ्कालींसमाभाष्यतदाद्विजः ॥ ज्ञातुम्प्र
त्यक्षतोरागंश्रोतुमिच्छँश्चतद्वचः ॥ ५४ ॥ वाग्मीविचित्रवाक्येनपप्रच्छगिरिजान्तदा ॥ ॥ ब्राह्मणउवाच ॥ ॥ का
त्वङ्कस्यासिकल्याणिकिमर्थँविँजनेवने ॥ ५५ ॥ तपश्चरसिदुर्द्धर्षम्मुनिभिःप्रयतात्मभिः ॥ नबालात्वन्नापिवृद्धातरुणी
चातिशोभना ॥ ५६ ॥ कथम्पतिँविँनाभीक्ष्णन्तपश्चरसिसाम्प्रतम् ॥ किंव्वाँतपस्विनीभद्रेकस्यचित्सहचारिणी ॥ ५७ ॥
तपस्विनःसपुष्पादिसमाहर्त्तुङ्गतोन्यतः ॥ एतन्ममसमाचक्ष्वयदिगुह्यम्भवेन्नते ॥ ५८ ॥ यदितेहृदयेमन्युःकश्चिद्वस
तिसम्प्रति ॥ तदाचक्ष्वसमर्थोस्मितमहञ्चापिवारितुम् ॥ ५९ ॥ इत्युक्तातेनविप्रेणगिरिजाथनिजांसखीम् ॥ तस्यो
त्तरप्रदानायकटाक्षेणन्ययोजयत् ॥ ६० ॥ सासखीविजयातस्यावचनाद्ब्राह्मणन्तदा ॥ प्रोवाचेदय्यँथातथ्यव्वीँक्षन्तींगि
रिजामुखम् ॥ ६१ ॥ एतस्यागिरिराजस्यतनयेयन्द्विजोत्तम ॥ ख्याताचपार्व्वतीनाम्नाकालीतिचसुशोभना ॥ ६२ ॥
ऊचेयन्नचकेनापिशङ्करव्वँषभध्वजम् ॥ वाञ्छन्तीदयितन्तीव्रन्तपश्चरतिवैपतिम् ॥ ६३ ॥ त्रीणिवर्षसहस्राणितपस्तप

तिभामिनी ॥ नशङ्करोगिरिसुतामद्याप्यभ्युपपद्यते ॥ ६४॥ शङ्करोगिरिशोदेवःसर्व्वगःपरमेश्वरः ॥ इतिस्मगद्यतेदेवैर्म्मुनि
भिश्चतपोधनैः ॥ ६५॥ किमेनांसनजानातिकिंसानौनास्तिवागिरेः ॥ इतिचिन्ताविषण्णेयमद्यनोलभतेसुखम् ॥ ६६ ॥
अप्रार्थितस्त्वमनयादयसेयदिवासुखम् ॥ तदैनांशङ्करेणाद्यत्वंसङ्गमयसुव्रत ॥ ६७ ॥ इतितस्यावचः श्रुत्वाब्रह्मचारीतदा
द्विजः ॥ स्मयमानइदव्वाँक्यंहेलयोवाचपार्व्वतीम् ॥ ६८॥ ॥ ब्राह्मणउवाच॥ ॥ अमोघदर्शनश्चास्मिहरञ्चानयितुङ्क्षमः ॥
किन्त्वेकन्निगदाम्यद्यनिश्चितम्मन्मतंशृणु॥६९॥जानाम्यहम्महादेवन्तव्वँदामिशृणुष्वमे ॥ वृषध्वजोमहादेवोभूतिलेपीजटा
धरः ॥ ७० ॥ व्याघ्रचर्म्मांशुकश्चैकःसव्वींतोगजकृत्तिना ॥ कपालधारीसर्प्पौघैःसर्व्वगात्रेषुवेष्टितः ॥ ७१ ॥ विषदग्धगल
स्त्र्यक्षोविरूपाक्षोविभीषणः ॥ अव्यक्तजन्मासततङ्गृहभोग्यविवर्ज्जितः ॥७२॥ ज्ञातिभिर्ब्बान्धवैर्हीनोभक्ष्यभोज्यविवर्ज्जितः
॥ स्मशानवासीसततंसत्सङ्गपरिवर्ज्जितः ॥ ७३ ॥ गर्ज्जद्भिर्व्विकटैस्तीक्ष्णैर्भूतौघैःपरिवारितः ॥ शृङ्गाररसहीनश्चभा
र्य्यापुत्रविवर्ज्जितः ॥ ७४ ॥ केनवाकारणेनत्वम्भर्त्तारन्तंसमीहते ॥ पूर्व्वंश्रुतंमयाचैवतस्यापरमिदङ्कृतम् ॥ ७५ ॥ शृणुतेनि
गदाम्यद्ययदितेग्रद्धरोचते ॥ दक्षस्यदुहितासाध्वीसतीवृषभवाहनम्॥७६॥ वव्रेपतिम्पुरादैवात्सम्भोगपरिवर्ज्जितम् ॥ क
पालिजायेतिसतीदक्षेणपरिवर्ज्जिता ॥ ७७ ॥ यज्ञभागप्रदानायशम्भुश्चापिविवर्ज्जितः ॥ साथतेनापमानेनभृशंशोकाकु

लासती ॥ ७८॥ तत्याजस्वान्प्रियान्प्राणाँस्तयात्यक्तश्चशङ्करः ॥ त्वंस्त्रीरत्नन्तवपितारजानिखिलभूभृताम् ॥ ७९ ॥ तथा
विधम्पतिङ्कस्मादुग्रेणतपसेहसे ॥ देवेन्द्रोवाधनेशोवापवनोवाप्यपाम्पतिः ॥ ८० ॥ अग्निर्व्वान्यःसुरोवापिस्वर्व्वैद्यावश्वि
नावपि ॥ विद्याधरोवागन्धर्व्वोनागोवामानुषोथवा ॥ ८१ ॥ रूपयौवनसम्पन्नःसमस्तगुणसय्युँतः ॥ सतेयोग्यःपतिः श्री
मानुदारकुलसम्भवः ॥ ८२॥ येनत्वम्बहुरत्नौघपूरितेनर्वविस्तृते ॥ माल्यप्रवरसय्युँक्तेधूपचूर्णैःसुवासिते ॥ ८३ ॥ मृ
द्वास्तरणसय्युँक्तेविस्तृतेसुमनोहरे ॥ चारुप्रासादगर्भस्थेजाम्बूनदविचित्रिते ॥ ८४ ॥ शय्यातलेसमासाद्यसयोग्यस्ते
भवेत्पतिः ॥ एवञ्ज्ञात्वाद्यसुभगेयदिवाञ्छसिशङ्करम् ॥ ८५ ॥ किन्तेतपोभिःसुतरामहन्तय्योँजयेत्वया ॥ ॥ मार्क्कण्डे
यउवाच ॥ ॥ इतिश्रुत्वातदाकालीब्राह्मणस्योत्तरन्तदा ॥ ८६ ॥ मितन्तथ्यञ्जगादैनम्ब्राह्मणङ्कोपसय्युँता ॥ ॥ काल्यु
वाच ॥ ॥ नजानासिहरन्देवन्त्वञ्जानामीतिभाषसे ॥ ८७॥ बहिर्य्यद्दृश्यतेतत्तेकथितन्द्विजनन्दन ॥ यस्यभावन्नजानन्तिसे
न्द्राब्रह्मादयःसुराः ॥ ८८ ॥ तस्यत्वव्विँप्रतनयशिशुर्ज्ज्ञास्यसिकिम्भवम् ॥ यच्छ्रुतम्भवतानीचवदनाद्भाषितल्लँघु ॥ ८९ ॥
इतस्ततस्तुश्रुत्वैवभाषसेत्वन्नदृष्टवान् ॥ तस्मात्त्वत्तोवरन्नाहव्वाँञ्छयेनापिवापतिम् ॥ ९० ॥ अन्यद्वदनवत्त्वतोवाञ्छयेहर
सङ्गमम् ॥ इत्युक्तागिरिजाविप्रमवलोक्यसखीमुखम् ॥ ९१ ॥ इदमाहतदाकालीसंशयारूढचेतना ॥ महताचिन्तनेनेहत

१ तेइति त्वयेत्यर्थः कर्तुः शेषत्वविवक्षायांषष्ठी ।

पसाराधितोहरः॥९२॥तन्ममाग्रेविप्रसुतोनिन्दितुर्व्वाँक्यमुक्तवान्॥ तदहश्चापनेष्यामिस्तुतिवाक्येनसाम्प्रतम्॥९३॥महा
त्मनाश्चयोनिन्दांशृणोतिकुरुतेथवा॥तयोरागःसमम्पूर्व्वम्मय्यातातमुखाच्छ्रुतं ॥९४॥तस्मात्तदपनेष्येहन्तन्निषेधयविप्रकम्
॥इत्युक्त्वासासखीङ्कालीशम्भुसङ्गतमानसा॥९५॥ आगःसम्मार्जनायाशुहरंस्तोतुमुपाक्रमत्॥ काल्युवाच ॥ नमःशिवाय
शान्तायकारणत्रयहेतवे ॥ निवेदयामिचात्मानन्त्वङ्गतिःपरमेश्वर ॥ ९६ ॥ विज्ञानसौभाग्यसुहृद्गतायतेप्रपञ्चहीनायाहिरण्य
बाहवे ॥ नमोस्तुनारायणपद्मसम्भवप्रधानबीजायजगद्धितायते ॥९७॥ इतिस्तुवन्तीम्पुनरेवसद्विजस्तदावचःकिञ्चिदुदीरि
तुम्पुनः ॥ समीक्ष्यकालीमकरोत्सयत्नकम्बुद्धासमाचष्टसखीङ्गिरेःसुता ॥ ९८ ॥ अयन्द्विजःकिञ्चनवक्तुमिच्छत्युग्रंहरञ्चा
पिनसव्विँदानः ॥ निन्दन्नहिप्राणहरींहरस्यानिंदामहंश्रोतुमिहक्षमामि॥९९॥यावद्धूरिवचोऽस्याहन्नश्रृणोम्यधुनासखि ॥ग
च्छामितावद्दूरायसमुत्तिष्ठामिमत्प्रिये॥१००॥इत्युक्त्वासातयासख्यासहिताहिमवत्सुता॥ प्रतस्थेथसमुत्थायतमुत्सृज्यद्विजं
हठात्॥१॥अथशम्भुर्न्निजंरूपमास्थायहिमवत्सुताम् ॥ तंसमुत्सृज्यगच्छन्तींहरःस्मेरमुखोन्वयात्॥२॥अहंहरोमहादेवोमां
संस्तौषिनचाधुना॥सम्मुखीभवहेकालिसमाश्वासयशाङ्करि॥३॥ इत्युक्त्वासमहादेवोगच्छन्त्याःपुरतोगतः ॥प्रसार्य्यहस्तौ
काल्यास्तुगतिन्तस्याविरोधयन् ॥ सावीक्ष्यशम्भुवदनन्तत्क्षणादभवद्धठात्॥४॥ अधोमुखीतडिद्वातचकितेवगिरेःसुता॥म



१ आगः पापापराधयोः।

न्दाक्षम्प्रीति लज्जाभिःसाजडेवतदाभवत् ॥५॥ वक्तुञ्चनाशकत्किञ्चिद्विवक्षुरपिभाविनी॥मनोरथानांसिद्धयातुसुधाभिरिवपू
रितम् ॥६॥ शरीरमभवत्तस्यामुदापूर्णन्द्विजोत्तमाः ॥ षड्विंवर्षसहस्रैस्तुतपःक्लेशमविन्दत॥७॥यतङ्क्षणात्समुत्सृज्यसम्मोद
मुदिताभवत् ॥ ताञ्चवीक्ष्यतथाभूताम्प्रणयाद्वृषभध्वजः॥८॥ कामेनभस्मरूपेणगात्रस्थेनचमोहितः ॥अथताव्विँरहोद्रिक्तः
समेत्यवृषभध्वजः ॥ ९ ॥ सम्बोधयन्निदञ्चाटुवचनम्प्रोक्तवान्मुदा ॥ नतेसुन्दरिमाव्वँक्तुङ्किञ्चनापित्वमीहसे ॥ १० ॥
तपःक्लेशंस्मरन्तीकिम्महाङ्कुप्यसिसाम्प्रतम् ॥ अहञ्चपरितप्स्यामित्वामृतेसुभगेमम ॥११॥ समयाद्यत्समारब्धन्तपस्तत्तु
न्त्वयासमम् ॥ सानुरक्तोथसंस्कृत्यभविष्यामित्वयाप्रिये ॥ १२ ॥ अधुनासमतीतोमेयःकृतःसमयोमया ॥ तपसेभवती
चापितपसैवसुसंस्कृता ॥ १३ ॥ सञ्चिन्तनेनजप्येनतीव्रेणतपसातदा ॥ मूल्येनमहताक्रीतोदासोहम्मान्नियोजय ॥ १४ ॥
॥ त्वदङ्गानांसंस्करणेजटानाञ्चप्रसाधने ॥ प्रमुच्यवल्कलङ्गात्राच्चाव्वँशुकनिवेशने ॥ १५ ॥ हारनूपुरकेयूरकाञ्च्यादिपरि
धापने ॥ द्रुतन्नियोजयशुभेयादिस्नेहोस्तिमादृशि ॥ १६ ॥ निर्दग्धोयोमयाकामोभस्मरूपेणमत्तनौ ॥ स्थितोमाम्प्रति
कृत्येवत्वदग्रेदग्धुमिच्छति ॥ १७ ॥ तस्मादुद्धरमाङ्कामादग्नेरिवमनोहरे ॥ त्वदङ्गामृतदानेनप्रसीददयितेमम ॥ १८ ॥
इतिश्रीकालिकापुराणेपञ्चचत्वारिंशोध्यायः ॥४५॥ ॥मार्कण्डेयउवाच॥ ॥अथश्रुत्वावचःशम्भोर्गिरिजातीवहर्षिता ॥ मेने

प्राप्तन्तदाशम्भुंसुन्दरन्दायितम्पतिम्॥१॥अथप्राहतदाकालीसखीवक्त्रेणशङ्करम् ॥ यथासशृणुतेवाक्यंश्रोतुमिच्छँश्चशङ्करः
॥ २ ॥ नसन्धावतिभेदेनप्रवर्त्तन्तेत्रसज्जनाः॥मर्य्यादयाहरस्तन्मेपाणिङ्गृह्णातुशङ्करः॥३॥पितृदत्ताभवेत्कन्यातपोदत्ताभवे
न्नहि ॥तपसाचेत्प्रदत्ताहम्मान्तातश्चप्रदास्यति॥४॥तस्मात्सम्प्रार्थ्यपितरंहिमवन्तन्नगेश्वरम् ॥ वैवाहिकेनाविधिनापाणिङ्गृ
ह्णातुमेहरः॥५॥ ॥मार्कण्डेयउवाच॥ ॥ इत्युक्ताविररामाथकालीलज्जासमन्विता॥हरोपितद्वचः सत्यन्तथ्यय्योग्यन्तदाग्रही
त् ॥६॥ ततः ससगणः शम्भुस्तत्रवासन्तदाकरोत् ॥ गङ्गावतरणेसानौयथापूर्व्वन्तथाधुना ॥ ७ ॥ कालीपितुर्गृहय्याँतास
खीभिःपरिवारिता ॥ नालोकयन्तीसादीनागुरूणाव्वँदनंसती ॥ ८ ॥ एतस्मिन्नन्तरेसप्तमरीचिप्रमुखान्मुनीन् ॥ चिन्तया
मासशशिभृत्कालीम्प्रार्थयितुन्तदा ॥ ९ ॥ चिन्तिताः सप्तमुनयस्तत्क्षणान्मदनारिणा ॥ आकृष्टाइवकेनापितत्सकाशमुपा
गताः ॥ १० ॥ तान्मुनीन्ददृशेशम्भुः सप्ताग्नीनिवदीपितान् ॥ अरुन्धतीव्वँशिष्ठस्यसकाशेददृशेसतीम् ॥ ११ ॥ अरुन्ध
तीन्ततोदृष्ट्वावशिष्ठस्यसमीपतः ॥ मेनेयोषिद्गृहन्धर्म्म्यम्मुनिभिश्चाप्यवर्जितम् ॥ १२ ॥ ततस्तेमुनयः सर्व्वेसम्पूज्यवृषभ
ध्वजम्॥ इदमूचुःप्रहर्षेणस्मरणाकर्षिताःप्रियम्॥१३॥ ॥ऋषयऊचुः॥ ॥ यत्प्रत्यक्षन्दृश्यतेशुद्धरूपश्चन्द्रप्रख्यश्चन्द्रखण्डो
पशोभि ॥ अन्तःप्रज्ञम्भावितन्तन्मुनीनाम्भाग्यन्दृष्टम्भागधेयेनमुक्तैः ॥ १४ ॥ प्रज्ञातन्त्रन्ध्यानतन्त्रम्पुरस्तान्नित्यन्ध्येय

१ ध्यानयन्त्रंध्यानयुक्तंध्यानगम्यमितिवापाठः।

ध्यायिनांस्वप्रकाशम् ॥ पुञ्जीभूतम्बाह्यतत्वेनशश्वद्योगप्राप्यन्धामशम्भोरुदारम् ॥ १५ ॥ दृष्ट्वायस्यैवाग्रभागंसनेत्र
न्त्राणायस्याद्दर्शनंसूर्य्यतुल्यम् ॥ तद्वामेदंस्थानसर्व्वस्यनित्यम्भक्त्यास्तुल्यन्तन्नुमः शम्भुदेहम् ॥ १६ ॥ प्रकाशतेयः प्रथ
मादिभागतः स्थितः सवामेयइहैवनेता ॥ सोस्माकमस्तुप्रथमंस्वसिद्ध्यैहरस्यशक्त्याविधृतोललाटे ॥ १७॥ यःप्रधाना
त्मकः सत्वरजोभ्यान्तमसान्वितः ॥ पुरुषः सर्व्वजगतांसहरोनः प्रसीदतु ॥ १८ ॥इतिसंस्तुत्यदेवेशम्मुनयोविनयानताः ॥
ऊचुः किमर्थम्भवतास्मृतास्तन्नोनिगद्यताम् ॥ १९ ॥ तेषान्तद्वचनंश्रुत्वाशङ्करः प्रहसन्निव ॥ जगादतान्मुनीन्सर्व्वाना
भाष्यचपृथक्पृथक् ॥ २० ॥ ॥ ईश्वरउवाच ॥ ॥ हितायसर्व्वजगतांसम्भोगायात्मनस्तथा ॥दारान्ग्रहीतुमिच्छामित
थासन्तानवृद्धये ॥ २१ ॥ सहायन्तत्रकुर्व्वन्तुभवन्तोममसाम्प्रतम् ॥ मदर्थेचततः कालीर्य्याँचन्तान्तुहिनाचलम् ॥ २२ ॥
महतातपसाकालीमाम्पतिल्लँघुविन्दताम् ॥ किन्तुग्रहिष्येविधिनातस्माद्याचन्तुतङ्गिरिम् ॥ २३ ॥ यथायथास्वयङ्कालीं
शैलोदातुंसमुत्सहेत् ॥ तथातथाविदध्वंहियूयर्व्वाँग्विभवान्विताः ॥ २४ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ हरंसम्बोध्यमुन
योप्यगच्छन्गिरिराङ्गृहम् ॥ तेनप्रपूजितास्तेतुप्रोचुस्तम्मुनयोगिरिम् ॥ २५ ॥ यश्चन्द्रशेखरोदेवोदेवदेवश्चयोमतः ॥
शापानुग्रहणेशक्तोयएकोजगताम्पतिः ॥ २६ ॥ यःसंहरतिसर्व्वाणिजगन्तिप्रलयोद्भवे ॥ योविभूतिप्रदोभक्तेनानारू

पोमनोहरः ॥ २७ ॥ सतेदुहितरङ्कालीम्भार्य्यामादातुमिच्छति ॥ यदिपश्यसित्वय्यँयोग्यव्वँरन्तन्दुहितुःसमम् ॥ २८ ॥
तदाप्रयच्छतनयाङ्कालींशशिभृतेगिरे ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ इत्युक्तस्तैर्गिरिपतिश्चिरंस्वहृदयस्थितम् ॥२९॥
दुहितुश्चप्रियञ्ज्ञात्वाप्राप्यसद्वचनान्मुदम् ॥ आहचेदम्प्रकाशेनयुष्माभिस्त्वहमागतैः ॥ ३० ॥ पावितोमुनिशा
र्द्दूलैःपूरितश्चमनोरथः ॥ दास्यामिशम्भवेपुत्रीय्युँष्माभिःप्रार्थितस्त्वहम् ॥ ३१ ॥ पूर्व्वमेवतपस्तस्वातयेशःपतिरीहि
तः ॥ धातुर्न्नियोजनमिदङ्कोन्यथाकर्त्तुमुत्सहेत् ॥ ३२ ॥ कोन्यःप्रार्थयितुंशक्तःसुताम्ममविनाहरात् ॥ हरेणावगृहीतायाता
मन्यःकःसमुत्सहेत् ॥ ३३ ॥ हरङ्गृहीत्वामनसानान्यंसापीहवाञ्छति ॥ इत्युक्त्वामेनयासार्द्धंसुतान्दान्तुश्चशम्भवे ॥ ३४ ॥
अङ्गीकृत्यविसृष्टास्तेप्यनुप्रापुर्म्महेश्वरम् ॥ तेगत्वामुनयःसर्व्वेमरीचिप्रमुखाद्विजाः ॥ ३५ ॥ शैलराजोयदाचष्टतद्बुचुर्म्मदना
रये ॥ हिमवाँस्तनयान्दातुन्तुभ्यमुत्सहतेहर ॥ ३६ ॥ यदिदानीन्त्वयाकर्त्तुंय्युज्यतेक्रियतान्तुतत् ॥ अस्माँश्चाप्यनुजानीहि
हरगन्तुन्निजास्पदम् ॥ ३७ ॥ सिद्धञ्ज्ञात्वाहरःसाध्यम्मुदितस्तान्विसृष्टवान् ॥ यथायोग्यंसमाभाष्यक्रमादेकैकशोमुनीन्
॥ ३८ ॥ कालीविवाहावसरेयूयमायातमाम्प्रति ॥ इतितेवैहरेणोक्तम्प्रतिश्रुत्यर्षयोययुः ॥ ३९ ॥ अथान्योन्यप्रियतयाकृ
त्वाकृत्वागतागतम् ॥ समयङ्कारयामासविवाहायहरोगिरिम् ॥ ४० ॥ माधवेमासिपञ्चम्यांसितपक्षेगुरोर्द्दिने ॥ चन्द्रेचो

त्तरफल्गुन्याम्भरण्यादौस्थितेरवौ ॥ ४१ ॥ आगतामुनयस्तत्रमरीचिप्रमुखामुहुः ॥ हरेणचिन्तिताःसर्व्वेतथाब्रह्मादयःसु
राः ॥ ४२ ॥ तथाचसर्व्वेदिक्पालामुनयश्चतपोधनाः ॥ शच्यासहतथाशक्रोब्रह्माण्याद्यास्तुमातरः ॥ ४३ ॥ नारदश्चगत
स्तत्रदेवर्षिर्ब्रह्मणःसुतः ॥ एतैःपरिचरैःसार्द्धङ्गणैराप्यायितःस्वकैः ॥ ४४ ॥ वैवाहिकेनविधिनागिरिपुत्रींहरोग्रहीत् ॥
विवाहेगिरिजाशम्भोःसर्प्पायेष्टौतनौस्थिताः ॥ ४५॥ तेजाम्बूनदसन्नद्धाअलङ्कारास्तदाभवन् ॥ द्विभुजोभून्महादेवोजटाः
केशत्वमागताः ॥ ४६ ॥ शिरःस्थितश्चन्द्रखण्डःसोर्च्चिषाज्वलितोभवत् ॥ ललाटनेत्रमभवत्तदारत्नमहार्घकम् ॥ ४७ ॥ वि
चित्रवसनव्याँघ्रकृत्तिरासीत्तदाद्विजाः ॥ विभूतिर्लेपोस्यस्याभूत्सुगन्धिमलयोद्भवः ॥ ४८ ॥ गौररूपोहरस्तत्रबभूवाद्भुतद
र्शनः ॥ ततोदेवाःसगन्धर्व्वाःसिद्धविद्याधरोरगाः ॥ ४९ ॥ विस्मयम्परमञ्जग्मुर्हरन्दृष्ट्वातथाविधम्॥ हिमवान्मुदितश्चासी
त्सहपुत्रैश्चमेनया ॥ ५० ॥ ज्ञातयश्चास्यमुमुदुर्हरन्दृष्ट्वातथाविधम् ॥ इदम्ब्रह्मातत्रजगौहरन्दृष्ट्वामनोहरम् ॥ ५१ ॥ सर्व्वं
शिवकरय्यँस्मात्सुवेशमभवत्सुराः ॥ तस्माच्छिवोयल्लोँकेषुनामाख्यातोधिकःशिवः ॥ ५२ ॥ महेश्वरमुमायुक्तमीदृशय्यँः
स्मरेद्वदा ॥ सततन्तस्यकल्याणव्वाँञ्छितञ्चभविष्यति ॥५३॥ एवङ्कालीमहामायायोगनिद्राजगत्प्रसूः ॥ पूर्व्वन्दाक्षायणी
भूत्वापश्चाद्द्रिरिसुताभवत् ॥५४॥ स्वयंसमर्थापिसतीकालीसम्मोहितुंहरम् ॥ तथाप्युग्रन्तपस्तेपेहितायजगतांशिवा॥५५॥

एवंसम्मोहयामासकालिकाचन्द्रशेखरम् ॥ इत्येतत्कथितंसर्व्वन्त्यक्तदेहासतीयथा ॥ ५६ ॥ हिमवत्तनयाभूत्वापुनःप्रापमहे
श्वरम् ॥ इदय्यँःकीर्तयेत्पुण्यङ्कालिकाचरितन्द्विजाः ॥५७॥ नाधयोव्याधयस्तस्यदीर्घायुःसचजायते ॥ इदम्पवित्रम्परम
मिदङ्कल्याणवर्द्धनम् ॥ ५८ ॥ श्रुत्वापिसकृदेवेदंशिवलोकायगच्छति ॥ यःश्राद्धेश्रावयेद्विप्रान्कालिकाचरितम्महत् ॥ ५९ ॥
पितरस्तस्यकैवल्यमाप्नुवन्तिनसंशयः ॥ यःश्रावयेद्ब्राह्मणानांसन्निधौवासभागतः ॥ ६० ॥ तत्रस्वयंहरोगत्वाशृणोति
सहमायया ॥ इतिवःकथितम्पुण्यंसर्व्वपापप्रणाशनम् ॥ ६१ ॥ युष्मभ्यंरोचतेचान्यद्यत्तत्पृच्छन्तुसत्तमाः ॥ ६२ ॥ इति
श्रीकालिकापुराणेकालीहरसमागमोनामषट्चत्वारिंशतमोध्यायः ॥ ४६ ॥ ॥ ऋषयऊचुः ॥ ॥ विचित्रमिदमा
ख्यातम्ब्रह्मन्कालीहरागमम् ॥ पुण्यम्पापहरन्नित्यंश्रुतिसौख्यप्रदव्वँरम् ॥ १ ॥ भूयःकथयशर्व्वस्यकालीतन्वर्धमुत्तमम् ॥
कथञ्जहारगौरीवाकथम्भूताथकालिका ॥ २ ॥ केनवाकारणेनाशुकृष्णागौरीत्वमागता ॥ तन्नःकथयतत्वेनमुनिश्रेष्ठद्विजो
त्तम ॥ ३ ॥ मार्क्कंडेयउवाच ॥ ॥ इदन्तुमहदाख्यानङ्कथयिष्यामिवोधुना ॥ महर्षयस्तच्छृण्वन्तुतत्वेनशुभदम्पर
म् ॥ ४ ॥ एतदौर्व्वम्पुराराजासगरःपृष्टवान्मुनिम् ॥ सतय्यँथासमाचष्टतद्बोधनिगदाम्यहम् ॥ ५ ॥ पुराभूत्सोमवंशे
चसगरोनामपार्थिवः ॥ सश्रीमान्बलवान्दक्षःसर्व्वशास्त्रार्थपारगः ॥ ६ ॥ सोभूदेकरथेनैवजित्वासर्वान्महीभुजः ॥ सा

र्व्वंभौमोनरपतिःसर्व्वराजगुणैर्य्युतः ॥ ७ ॥ तम्प्राप्तराज्यंराजानंसागरम्पार्थिवोत्तमम् ॥ सभाजयितुमत्यर्थम्मुन
यःसमुपागताः ॥ ८ ॥ प्राच्योदीच्यामहात्मानोदाक्षिणात्यास्तथोत्तराः ॥ मुनयोब्राह्मणाश्चैवन्नृपन्द्रष्टुंसमागमन्
॥ ९ ॥ आगतेष्वथसर्व्वेषुमहात्माज्वलनोपमः ॥ और्व्वोनाममुनिःश्रीमानागतोनन्दितुन्नृपम् ॥ १० ॥ तमागत
म्मुनिन्दृष्ट्वाज्वलन्तमिवपावकम् ॥ सपर्य्ययामहत्यातुसगरस्तमपूजयत् ॥ ११ ॥ पाद्यमाचमनीयञ्चदत्वैवार्घपुरोग
मम् ॥ निवेशयामासचतम्मुनिश्रेष्ठंव्वरासने ॥ १२ ॥ उवाचचमहात्मानमौर्व्वंससगरोनृपः ॥ प्रणम्यचयथायोग्यङ्कुश
लन्तइतिद्विजम् ॥ १३ ॥ सचप्राहमुनिश्रेष्ठोनरराजसदामम ॥ सर्व्वत्रकुशलन्त्वान्तुद्रष्टुङ्कुशलमुत्सहे ॥ १४ ॥ त्वत्तःको
न्योस्तिकुशलीपृथिव्यांसर्व्वराजसु ॥ यएकःसञ्जिगायाशुभवान्सकलपार्थिवान् ॥ १५ ॥ कुशलव्वँर्द्धतान्नित्यन्तवराज
वरोत्तम ॥ यथानीत्यासदाचारैः पृथिवींसाधिभूपते ॥ १६ ॥ तववृद्धौजगद्वृद्धिर्व्वृद्धौचेष्टान्ततःकुरु ॥ शुभ्रांशुवृद्धौसत
तंसागरस्येववर्द्धनम् ॥ १७॥ प्रथमंसद्गुणैरात्माक्रियतान्नृपयोजनम् ॥ ततः स्वभार्य्यामहिषीक्रियतान्तद्गुणैर्य्युता ॥ १८ ॥
नित्यासय्यँोजिताचेत्स्याद्वनितास्वयमेवहि ॥ स्वगुणेषुप्रवेक्ष्यन्तीमहत्यपिधृतव्रता ॥ १९ ॥ श्रूयतेहिमवत्पुत्रीशम्भुस
ङ्गतमानसा ॥ क्रियाभ्युपायैर्ब्बहुभिःशम्भुनासाप्रयोजिता ॥ २० ॥ ततोतिमहताप्रेम्णाशङ्करस्याथपार्व्वती ॥ शरीरमर्द्धम

१ आत्मनइत्यर्थः ।

हरत्तस्यैवानुमतेसती॥ २१॥अर्द्धनारीश्वरस्तेनतदाप्रभृतिशङ्करः॥अभवन्नृपशार्दूलनान्याम्भार्य्याङ्क्हीवान् ॥ २२ ॥ तस्मा
त्त्वमपिराजेन्द्रस्वजायामात्मनोत्तरे॥गुणैःसय्यौजयलघुसय्यौजयततःसुतम्॥२३॥ ॥मार्कण्डेयउवाच॥ ॥ इत्यौर्वेभाषि
तंश्रुत्वासगरोपिमुदान्वितः॥ इदम्मुनिमपृच्छत्सनृपतिःस्मितसन्ततः ॥२४॥ ॥ सगरउवाच ॥ ॥ कथंसागिरिजादेवीका
यार्द्धमहरत्सती ॥ शङ्करस्यद्विजश्रेष्ठतदहंश्रोतुमुत्सहे ॥२५॥ नीत्यायथावायोक्तव्यास्वात्माभार्य्यासुतोऽथवा ॥ तान्नीतिञ्च
सदाचारसंहितांश्रोतुमुत्सहे ॥ २६॥ राजनीतिंसतान्नीतिमन्येषाञ्चकृतात्मनाम् ॥पृथक्पृथक्छ्रोतुमिच्छुरहन्त्वान्नाथयेद्विज
॥ २७॥ यदिगुह्यमिदम्ब्रह्मन्नतदाश्रोतुमुत्सहे ॥ तथानाज्ञापयामित्वांश्रोतुमिच्छुश्चतत्समम् ॥ २८ ॥ कृपयाकथनीयञ्चे
त्तदाकथयतन्मुने ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इत्येवंसगरेणोक्तऔर्व्वोपिद्विजसत्तमः॥ २९ ॥ प्रत्युवाचमहात्मानङ्क
पालुस्तत्रभूपतौ॥ ॥और्व्वउवाच ॥ ॥ शृणुराजन्प्रवक्ष्यामियद्यत्पृष्टमिहत्वया ॥३०॥ यथाहरस्यतन्वर्द्धम्भूभृत्पुत्रापुराह
रत् ॥ यथानीतिस्त्वयाकार्य्यायत्रयत्रनृपोत्तम ॥ ३१ ॥ सर्व्वेषाञ्चसदाचारङ्क्रमाद्वक्ष्यामितच्छृणु ॥ यदोढाहिमवत्पुत्रीशङ्क
रेणमहात्मना ॥ ३२ ॥ कियन्तंसतदाकालन्तत्रनिन्येसहोमया ॥ रममाणस्तयासार्द्धंसानौकुञ्जेदरीषुच ॥ ३३ ॥ विजहार
चिरन्तत्रपार्व्वतीम्मोदयन्हरः ॥ अथकालेतुसम्प्राप्तेशम्भुःकैलासपर्व्वतम् ॥ ३४ ॥ सगणोभार्य्ययासार्द्धमगच्छत्त्रिदिवो

पमम् ॥ सतयाक्रीडमानश्चत्यक्तध्यानात्मचिन्तनः ॥ ३५ ॥ तद्वक्त्रचन्द्रेनेत्राणिचकोरानिवचाकरोत् ॥ पुष्पाणिक्वचि
दाहृत्यगिरिजाम्प्रतिशङ्करः ॥ ३६ ॥ सर्व्वाङ्गसङ्गिनीम्मालाव्विँदधेतिमनोहराम् ॥ कदाचिदादर्शतलेयुगपच्चात्मनोमुखम्
॥ ३७ ॥ मुखन्तथैवापर्ण्णायावीक्षाञ्चक्रेवृषध्वजः ॥ कदाचिन्मृगनाभीनाव्विँलेपैर्ग्गन्धपत्रकम् ॥ ३८ ॥ तस्याघनस्तनयु
गेविलिलेखस्मरान्तकः ॥ गन्धसारविलेपेनतिलकान्यम्बिकातनौ ॥ ३९ ॥ ललाटेचाकरोच्चारुचन्द्रवद्बनसन्धिषु ॥ उमा
निर्य्यासससंसक्तकेशपाशेषुचित्रकम् ॥ ४० ॥ चन्दनागुरुकस्तूरीकुङ्कुमैस्सविलेपनैः ॥ चकारयेनतस्यास्तुकेशपाशोव्यरा
जत ॥ ४१ ॥ नर्त्तनायावकीर्ण्णस्यशिखिपुच्छस्यसाम्यधृक् ॥ जाम्बूनदमयाञ्छुद्धान्कुण्डलाद्यान्मनोहरान् ॥ ४२ ॥ अल
ङ्कारानुमादेहेसमकार्षीद्वृषध्वजः ॥ तैर्ज्जाम्बूनदसम्भूतैर्य्योजितैर्ग्गिरिजातनुः ॥ ४३ ॥ विभातिजलदापूर्ण्णेकालिकेवतडिद्गणैः
॥ सर्व्वैर्द्दिव्यैरलङ्कारैर्न्नानारत्नैःसदंशुकैः ॥ ४४ ॥ सम्पूर्ण्णमण्डिताकालीसाद्वयम्प्रकृतेर्द्दधौ ॥ एवंसदासानुरागस्तस्यांशम्भुर्ज्ज
गत्पतिः ॥ ४५ ॥ जगद्धितायचिक्रीडकाल्यादयितयासह ॥ कालीचजगताम्मातामहामायाजगन्मयी ॥ ४६ ॥ योगनिद्रा
जगद्बुद्धिर्व्विद्याविद्यात्मिकाखिला ॥ प्रकृतिःपरमामूर्त्तिःसर्ग्गान्तस्थितिकारिणी ॥ ४७ ॥ सम्मोह्यशङ्करय्यँत्नाज्जगताञ्चहितै
षिणी ॥ रेमेतेनसमन्देवीचन्द्रिकेवसुधांशुना ॥ ४८ ॥ अथैकदास्मरहरःकैलासाग्रेसहोमया ॥ रममाणोमुदायुक्तोददर्शाप्सरसः

शुभाः ॥४९॥ रूपयौवनसम्पन्नाः सर्व्वालक्षणसय्युँताः ॥ तासाम्मध्यगतावेश्याउर्व्वशीचमनोहरा ॥ ५० ॥ ताः सर्व्वारक्त
गौराङ्ग्यः सर्व्वालङ्कारभूषिताः ॥ मुनीनाञ्चमनोत्यर्थंशक्तामोहयितुंहठात् ॥ ५१ ॥ ताः प्रणम्यहरन्दृष्ट्वागिरिजाञ्चमनोरमाम्
॥ अग्रेप्राञ्जलयस्तस्थुस्तद्भीतिनतमस्तकाः ॥ ५२ ॥ अथप्राहतदाभर्ग्गः पार्व्वतीमिदमद्भुतम् ॥ तासांसमक्षन्तस्यान्तुभा
वितंस्याद्यदप्रियम् ॥ ५३ ॥ कालिभिन्नाञ्जनश्यामेउर्व्वश्याद्यप्सरोगणैः ॥ त्वयेहस्त्रीस्वभावेनसल्लाँपः क्रियतामिति ॥
॥ ५४ ॥ तच्छ्रुत्वावचनन्तस्ययथायोग्यञ्चसोर्व्वशी ॥ अप्सरसःसमाभाष्यविसृष्टागिरिजातया ॥ ५५ ॥ अथसाक्रो
धवशगापार्व्वतीभर्ग्गभाषितात् ॥ कालिभिन्नाञ्जनश्यामेत्युदितात्यभवत्क्षणात् ॥ ५६ ॥ साचाप्सरसाम्पुरतोवर्णोद्दे
शविकत्थनम् ॥ नसेहेमन्युनायुक्तागिरिजेन्दुकलाभृतः ॥ ५७॥ अथसारोषसय्युँक्तात्यक्त्वावृषभवाहनम् ॥ अपह्नुतेशै
लसानौरोषापह्नुतिमागता ॥ ५८ ॥ मार्ग्गमाणोथविरहव्याकुलोवृषवाहनः ॥ नाससादकियत्कालम्पार्व्वतीम्पर्व्वतोत्तमे ॥
॥ ५९ ॥ विरहव्याकुलंज्ञात्वास्वयंसापार्व्वतीहरम् ॥ आत्मानन्दर्शयामासगिरिसानावपह्नुते ॥ ६० ॥ तामासाद्यततः
शम्भुःकिमर्थंमभजःप्रिये ॥ मानम्मनोनुदन्देविविशीर्णइवचाब्रवीत् ॥ ६१ ॥ भर्त्तुरागःपुरन्ध्रीणाम्मानग्रहणकारणम् ॥ त
द्विनाग्रहणात्तस्यभीरुप्राप्नोतिवाच्यताम् ॥ ६२ ॥ तस्मात्किमर्थंमकरोरोषंत्वञ्जलजानने ॥ तदाचक्ष्वद्रुतङ्कान्तेमनोमेनप्र

सीदति ॥ ६३ ॥ इत्युक्त्वाशङ्करोदेवीन्तामालिङ्गितुमुद्यतः ॥ कालीतव्वाँरयामासवचनञ्चाब्रवीदिदम् ॥ ६४ ॥ नदृष्टपूर्व्वाकिमहय्यँनभिन्नाञ्जनोपमा ॥ क्रियतेमयिभूतेशभवताप्सरसाम्पुरः ॥ ६५ ॥ जातिहीनव्वँत्तिहीनंरूपहीनमदक्षिणम् ॥ हीनाङ्गमतिरिक्ताङ्गन्तेनदोषेणनाक्षिपेत् ॥ ६६ ॥ इतिब्रह्मापुराप्राह वेदौघार्थविनिश्चयम् ॥ तञ्चावमन्यभवतापरिहासोभ्यभाष्यत ॥ ६७ ॥ यावन्नमेशरीरस्यपवित्रीस्वर्णगौरता ॥ नसमेष्येत्वयातावदितिसत्यम्ब्रवीमिते ॥ ६८ ॥ शरीरगौरतांशम्भोनसमेष्येत्वयाविना ॥ तत्रमेशृणुसन्धायआत्मनःशिरसाशपे ॥ ६९ ॥ इत्युक्त्वासातदादेवीतस्यैवपुरतोययौ ॥ महाकोषीप्रपाताख्यंहिमवत्सानुमुत्तमम् ॥ ७० ॥ महादेवोपितम्भाव्यञ्ज्ञानेनकृतनिश्चयम् ॥ अर्थञ्ज्ञात्वातदापर्णीसर्व्वज्ञोनाप्यवारयत् ॥ ७१ ॥ सागत्वापूर्व्ववत्तत्रशम्भुसङ्गतमानसा ॥ शतमाराधयामासवर्षाणिवृषभध्वजम् ॥ ७२ ॥ एकम्पादंसमुत्क्षिप्यवामेनाक्रम्यसाक्षितिम् ॥ उत्तराभिमुखीभूत्वानिराहारानिरन्तरम् ॥ ७३ ॥ वैयाघ्रचर्म्मवसनासोर्द्ध्वमूर्द्धाननासती ॥ ज्योतिर्म्मयम्परंशान्तंशिवंशिवकरव्वँरम् ॥ ७४ ॥ आत्मस्वरूपतत्त्वज्ञातत्त्वेनाराधयद्धरम् ॥ ताञ्चिन्तयन्तीम्परमन्निश्चलान्तत्त्वमानसाम् ॥ ७५ ॥ मेनेमुनिगणःस्थाणुर्य्योनजानातितत्त्वतः ॥ एवन्तस्यास्तपस्यन्त्याजग्मुर्व्वर्षाणिवैशतम् ॥ ७६ ॥ अन्येषाञ्चयथाशश्वदेकन्नृपतिसत्तम ॥ ततस्तांशतवर्षान्तेशङ्करोयोगतत्परः ॥ ७७ ॥ आत्मानन्दर्शयामासक्रमा

देकंससंत्रपम् ॥ प्रथमन्दर्शयामासब्रह्माणञ्चहरिन्ततः ॥ ७८ ॥ ततस्तुशाम्भवन्देहन्ततस्तेषामथैकताम् ॥ ज्योतिर्म्मयत्वंशुद्ध
त्वंसर्व्वेषांहेतुतान्तथा ॥ ७९ ॥ ततस्तुशम्भुरूपंसदर्शयामासशङ्करः ॥ योगनिद्राम्महामायाय्योंगिनीङ्कालिकाम्बिकाम् ॥ ८० ॥
प्रथमन्दर्शयित्वातुतस्याःप्रकृतिरूपताम् ॥ पश्चात्सापार्व्वतीत्येवङ्कमात्तस्याअदर्शयत् ॥ ८१ ॥ तपसासम्भृतेनाशुज्ञानमासा
द्यपार्व्वती ॥ अन्तर्दृष्ट्याबहिर्दृष्ट्यातत्त्वञ्ज्ञात्वायथातथम् ॥ ८२ ॥ शम्भुञ्जगन्मयम्मेनेतथात्मानञ्जगन्मयीम् ॥ ब्रह्माविष्णुर्हर
श्चापिततःसर्व्वमिदञ्जगत् ॥ ८३ ॥ अहंसमस्तप्रकृतिर्य्योगनिद्रातथासती ॥ इतिध्यानेनसादेवीप्राप्यध्यानन्तदात्यजत्
॥ ८४ ॥ उन्मील्यनयनद्वन्द्वम्बहिःशम्भुन्ददर्शच ॥ सादृष्ट्वाशङ्करन्देवन्देवदेवमुमापतिम् ॥ ८५ ॥ तुष्टाववाग्भिरिष्टाभिर्य्यमि
नर्य्योगतत्परम् ॥ ॥ पार्व्वत्युवाच ॥ ॥ नमस्तेजगतान्नाथनमस्तेकेशवाव्यय ॥ ८६ ॥ प्रधानपुरुषातीतकारणत्रयकारण ॥
योगमोहमनोरागधर्म्माधर्म्ममयस्तथा ॥ ८७ ॥ विद्याऽविद्यास्वरूपश्चशाम्भवःकायएषते ॥ त्वन्निःश्रेयःश्रेयसायुज्य
मानोदृश्योऽदृश्योयोगमूर्त्तिर्म्मनीषी ॥ ८८ ॥ सम्यक्छ्रद्धापौरुषेतत्त्वरूपन्त्वव्वैज्योतिःशान्तिरूपम्पुरस्तात् ॥ ब्रह्माविष्णु
स्त्वंहरस्त्वम्महेन्द्रः सूर्य्यः सोमोवायुरग्निर्द्धनेशः ॥ ८९ ॥ त्वन्तोयेशःशमनोराक्षसश्चशेषस्त्वत्तोभिद्यतेकोपिनास्मिन् ॥ त्व
म्भूमिर्द्यौर्द्युसदाश्चापिपन्थास्त्वंस्थावरोजङ्गमोभूर्ज्जलस्थः ॥ ९० ॥ ज्ञानञ्ज्ञेयन्ध्यानगम्यञ्चतत्त्वम्परात्परव्यँक्तरूपम्परे

षाम् ॥ त्वम्पूरुषः परमात्माप्रधानन्त्वंहिज्यायानागमोज्ञानगम्यः ॥ ९१ ॥ भावः कृत्यम्पञ्चरूपासमस्तैरसाध्यस्तेगोचरा
स्तद्भवाये ॥ कीर्त्तिः कीर्त्यस्तुत्यरूपोस्तुतिश्चद्रष्टादृश्यः स्थैर्य्यधृक्स्थावरश्च ॥ ९२ ॥ नित्योनित्योमुक्तयोगोवियोगोदाना
दानेभेदसामप्रयोगः ॥ नीतिर्न्नेयोदीक्षितोदक्षिणाश्चसारात्सारः सर्व्वंधाताविधेयः ॥९३ ॥ आर्य्योनार्योरूपधृग्रूपहीनोदि
व्योदेवोमानुषोमानुषश्च ॥ सृज्यः स्रष्टापालकः पाल्यरूपश्चेताचेयोनोर्म्मियुक्तस्तथोर्म्मिः ॥९४॥विद्याविद्यावेदवादैकरूपो
रूपारूपस्तीक्ष्णसौम्यैकरूपः ॥ भावाभावःशोभनःशुद्धरूपीशश्वद्दान्तःशान्तिरुग्रामुनीनाम् ॥ ९५॥ द्वन्द्वोऽद्वन्द्वः सर्व्व
गोसर्व्वगश्चभ्रान्तोभ्रान्तःसिद्धसिद्धिप्रदश्चः॥एकस्थस्त्वंसर्व्वगोप्तासुदेहोनिर्देहस्त्वन्देहएकः सुराणाम् ॥९६॥स्थूलःसूक्ष्मो
निर्व्विकारःशरीरीविश्वात्मात्वन्नास्तिभिन्नोभवत्तः ॥ कार्य्याकार्य्येयस्यरूपेसमस्तेव्याप्याव्याप्येभागहीनोतिपूर्णः ॥९७॥
योगज्ञानस्थात्मकंयस्यनित्यंरूपर्य्यंस्यश्रीदतस्मैनमस्ते ॥ प्रधानपुंसोरपियोविधाताय: कालरूपीपुरुषः परेशः ॥ ९८ ॥
तमीशमुग्रव्वँरदव्वँरेण्यन्नमामिचिन्नीतिवितानकन्त्वाम् ॥ अक्षयोयोव्ययः साक्षीक्षेत्रज्ञः क्षेत्रधृग्वरः॥९९॥तस्मैनमस्तेवि
श्वात्मन्वृषध्वजमहेश्वर ॥ ज्ञानामृतविनिस्यन्दियस्यविच्चन्द्रमाः सदा ॥ १०० ॥ तद्रूपम्मेकथञ्ज्ञेयम्भक्तिमात्रन्नमोस्तुते
॥॥ और्व्वउवाच ॥॥ इतिस्तुतोमहादेवः सर्व्वभूतानुकम्पकः॥ १॥प्रसन्नवदनः प्राहपार्व्वतीम्प्रतिहर्षयन्॥ईश्वरउवाच॥ श्री

तोस्मिदेविभद्रन्तेवरव्वँरयवाञ्छितम्॥२॥तपसाप्यायितश्चाहन्त्वयाब्रह्मातथाहरिः॥तपसात्वत्समोनास्तिशीलेनचगुणेनच
॥ ३ ॥ त्वाव्विँनानहितृप्यामिप्रियेकुरुयथेप्सितम् ॥ ततः सामोहिताप्राहमाययाहिमवत्सुता ॥ ४ ॥ जाम्बूनदाभगौरोमेदे
होभवतुसाम्प्रतम् ॥ अनन्यकान्तस्त्वञ्चापिभूयामत्तोविनाहर ॥ ५ ॥ एवमुक्तोमहादेवःपार्व्वत्यापार्वतीन्ततः ॥ आकाशग
ङ्गातायौघेमज्जयामासभामिनीम् ॥ ६ ॥सानिमज्ज्यसमुत्तीर्णाविद्युद्गौरीव्यजायत ॥ सिताम्भोमध्यगादेवीशारदाभ्रेतडिद्य
था॥७॥शम्भुश्चाङ्गीचकाराशुनाहन्त्वत्तोविनाप्रिये॥मनसापिग्रहीष्यामिनान्यांसत्यम्ब्रवीमिते॥८॥ ॥ और्व्वउवाच ॥ ॥ अ
थतोयात्समुत्तीर्णापार्व्वतीमोदसय्युँता ॥ तपःक्लेशपरित्यक्ताचन्द्रिकेवविधोर्य्यथा ॥ ९ ॥ अथताम्पार्व्वतीन्देवीमादायवृष
भध्वजः ॥ जगामशैलङ्कैलासंस्वमाश्रमपदल्लँघु ॥ १० ॥ तदागत्वाहरोदेवीमधिवास्यविभूष्यच ॥ पूर्व्ववन्मोदयामास
नर्म्महासकथादिभिः ॥ ११ ॥सापिसौवर्णगौराङ्गीवीक्ष्यरूपम्मनोहरम् ॥ गृहीतसमयंशम्भुम्प्राप्यातीवमुमोदह ॥ १२ ॥एव
न्तयोस्तुशिवयोरन्योन्यरममाणयोः ॥ जगामसुचिरङ्कालङ्कैलासेपर्व्वतोत्तमे ॥ १३ ॥ अथैकदामहादेघसमीपेहिमवत्सु
ता ॥ आसीनाददृशेतस्यस्वाञ्छायामुरसिस्थिताम् ॥ १४ ॥ स्फटिकाभ्रसमेस्वच्छेहदिशम्भोर्मनोहरे ॥ योगिज्ञानादर्श
तलेचार्व्वङ्गीम्प्रतिबिम्बिताम् ॥ १५ ॥ आत्मच्छायाङ्गिरिसुतावामभागेमनोहरे ॥ ददर्शवनितारूपांस्मितवक्राम्मनोहरा

म् ॥ १६ ॥ भ्रान्त्यादृष्ट्याथपार्वत्यास्तदाज्ञानमजायत ॥ कृतसत्योपिगिरिशः किमन्याव्वँनितान्दधौ ॥ १७ ॥ माय
यास्थापिताङ्गात्रेवीक्षन्तीङ्कुटिलञ्चमाम् ॥ इतितस्यास्तदावक्त्रम्मलिनम्भ्रुकुटीयुतम् ॥ १८ ॥ बभूववृषकेतुश्चश्यामउत्पा[1]
तकोयथा ॥ सादृष्ट्वाथतदाछायाव्विँष्णुमायाविमोहिता ॥ १९ ॥ अपह्नुतङ्गिरेःशृङ्गम्मानाद्रोषाद्विवेशह ॥ अथताम्मार्ग्ग
माणस्तुशङ्करोविरहाकुलः ॥ १२० ॥ चिरादपह्नुतान्देवीमाससादततोहरः ॥ तामासाद्यमहादेवोविवर्णवदनाम्प्रियाम्
॥२१ ॥ उवाचरोषणेहेतुञ्ज्ञातुमिच्छुर्य्यथातथम् ॥ ॥ईश्वरउवाच ॥ ॥ किमर्थन्त्वव्वँरारोहेमत्यकुप्यसिकोपने ॥ २२ ॥
रोषहेतुमहव्वँकुन्तवेच्छामीहवल्लभे ॥ नतुभ्यमपराध्यामिवाचावामनसाथवा ॥ २३ ॥ कायेनवाकथङ्कोपङ्कर्त्तुमर्हसिभा
मिनि ॥ ॥देव्युवाच ॥ ॥ समयेनमयापूर्व्वन्तयासम्प्रार्थितोभवान् ॥ २४ ॥ कथन्तम्परिहायत्वमन्याम्भार्यांसमीहसे ॥
प्रत्यक्षेणमयादृष्टातवहृद्यन्तरेहर ॥ २५ ॥ चार्व्वङ्गीवनिताकाचित्तोयनिर्य्यातभस्मनि ॥ भवान्सर्व्वज्ञानमयःसर्व्वगः
परमेश्वरः ॥ २६ ॥ तोषितोमेतपोव्रातैर्न्नतुष्टस्त्वम्महेश्वर ॥ तस्मादहन्तपस्तप्तुंशश्वद्गन्तुंसमुत्सहे ॥ २७ ॥ अनुजानी
हिमांशम्भोमाविलम्बव्वँथाकृथाः ॥ इतिश्रुत्वावचस्तस्याःस्मितविस्तारिताननः ॥ २८ ॥ शङ्करःपार्व्वतीम्प्राहस
न्दिग्धमिवभामिनीम् ॥ ॥ईश्वरउवाच ॥ ॥ नाहमन्यांस्त्रियव्वँोढानाहंसमयभेदकः ॥ २९ ॥ तवमिथ्यामतिर्य्याता

१ उत्पतति अकस्मादागच्छतीत्युत्पातकः ।

मुग्धेमूढतयाधुना ॥ त्वमिच्छसियदिश्रोतुन्तत्रहेतुञ्चपार्वति ॥ १३० ॥ तदहङ्कथयेतत्वम्मानम्मानिनिमाकृथाः ॥ ममवक्ष
सिविस्तीर्णेदर्प्पणस्वच्छभासिनि ॥ ३१ ॥ तवैववपुषश्छायाबिम्बितालोकितात्वया ॥ इदानीमेवबुध्यस्वत्वामृतेनास्ति
सामयि ॥ ३२ ॥ नात्रमानस्त्वयाकार्योहृदयान्तरसंस्थिते ॥ ॥ देव्युवाच ॥ ॥ मयिस्थितायाच्छायास्तिमामृतेनास्तिसापु
नः ॥ ३३ ॥ कथमेतन्मयाज्ञेयन्तन्मेवदवृषध्वज ॥ ॥ ईश्वरउवाच ॥ ॥ गवाक्षाभ्यन्तरेस्थित्वातज्जालेनमनोहरे ॥ ३४ ॥
पश्यतोयौघनिर्य्यातभूतिलेपमुरोमम ॥ तथात्वम्मण्डितन्देहव्वीक्ष्यादर्शतलेपुनः ॥ ३५ ॥ मद्धृदासन्नमासाद्यतादक्छाया
व्विँलोकय ॥ यथाद्रक्ष्यसिदेहेस्वन्तत्कुरुत्वन्तथामम ॥ ३६ ॥ आलोकयनिजाञ्छायान्त्वाव्विँनानास्तितत्पुनः ॥ त्वमेवज्ञा
स्यसिच्छायाम्मद्वक्षसिमनोहरे ॥ ३७॥ ज्ञात्वाविसृज्यमानन्तुमान्त्वञ्चाप्युपपत्स्यसि ॥ ॥ और्व्वउवाच ॥ ॥ एवमुक्ता
हरेणाथपार्व्वतीन्दुकलाभृतः ॥ ३८ ॥ तोयैर्न्निर्द्धाव्यहृदयंस्वाञ्छायाम्पुनरैक्षत ॥ दृष्ट्वादर्शतलेवक्त्रन्निजन्देहञ्चपार्वती ॥
॥ ३९ ॥ आलोकयामासतदाशश्वच्छङ्करवक्षसि ॥ यथासाकुरुतेदेवीकापत्यन्नेत्रविभ्रमम् ॥ १४० ॥ तथासाकुरुतेच्छाया
करकम्पादिकन्तथा ॥ ततः पुनर्ग्गवाक्षस्यजालेस्थित्वाहिमाद्रिजा ॥ ४१ ॥ तथाव्यलोकयच्छम्भोर्हृदयव्वीतभूतिकम् ॥ त
यातत्रतुपार्व्वत्यावृषभध्वजवक्षसि ॥ ४२ ॥ नकापिदृष्टावनितादृष्टञ्चालस्यमण्डलम् ॥ एवम्बहुविधैर्देवीतदोपायैस्त

थेतरैः ॥ ४३ ॥ निर्य्यातसंशयाभूत्वालज्जाम्प्रापवराङ्गना ॥ ताल्लँज्जिताङ्गिरिसुतामीषद्भीतामधोमुखीम् ॥ ४४ ॥ शम्भु
रालिङ्ग्यपाणिभ्याम्मुखञ्चास्याश्चुचुम्बच ॥ सतामाहमहादेवोदेवीमाश्वासयन्मुहुः ॥ ४५ ॥ माव्रीडस्वमहाभागेभ्रान्तिः
कस्यनजायते ॥ मानस्त्वयिवरस्त्रीभिःकार्यःप्रेमकरोयतः ॥ ४६ ॥ त्वयापिविरलःकार्य्योमानोदेविनसर्व्वदा ॥ इत्युक्ता
देवदेवेनमैनाकसहजाम्बिका ॥ ४७ ॥ शङ्करम्प्रणयात्प्राहसूनृतम्मधुरव्वँचः ॥ ॥ देव्युवाच ॥ ॥ यथातवाहंसततञ्छायेवा
नुगताहर ॥ ४८ ॥ भवेयंसाहचर्य्येणतथामाङ्कर्तुंमर्हसि ॥ सर्व्वगात्रेणसंस्पर्शन्नित्यालिङ्गनविभ्रमम् ॥ ४९॥ अहमिच्छा
मिभवतस्तत्त्वञ्चेत्कर्तुंमर्हसि॥ ॥ भगवानुवाच ॥ ॥१५०॥ रोचतेतन्ममाप्येषयत्त्वमिच्छसिभामिनि ॥तत्रोपायमहव्वँक्ष्ये
यदिशक्नोषितङ्कुरु ॥ ५१ ॥ अर्धम्ममगृहाणत्वंशरीरस्यमनोहरे ॥ अर्द्धम्भवतुमेनारीतथैवार्द्धम्पुमानिति ॥ ५२ ॥
यदित्वन्नहिशक्नोषिकर्तुंन्तन्वर्द्धमीदृशम् ॥ तदाहन्तेहरिष्यामिशरीरार्द्धव्वँरानने ॥ ५३ ॥ तवैवार्द्धन्तथानारीह्यर्द्धम्भवतुपू
रुषः ॥ विद्यतेतत्रशक्तिर्म्मेत्वमनुज्ञातुमर्हसि ॥ ५४ ॥ ॥ देव्युवाच ॥ ॥ तवैवाहंहरिष्यामिशरीरार्द्धव्वृँषध्वज ॥
किन्त्वहन्त्वेकमिच्छामितच्चेत्त्वङ्कर्तुंमिच्छसि ॥ ५५ ॥ यदाहमर्द्धम्भवतोभूत्वातिष्ठामितावता ॥ त्यजाम्यहद्व्यँदातेर्धं
सम्पूर्णंस्यात्तदाद्वयम् ॥ ५६ ॥इत्यर्द्धभागहरणम्भवेद्यदियथेप्सितम् ॥ तवैवाहन्तदाशम्भोशरीरार्द्धंहराम्यहम् ॥ ५७॥

॥ ईश्वरउवाच ॥ ॥ एवमस्तुभवेन्नित्यय्यँथार्द्धंहर्त्तुमर्हसि ॥ शरीरस्यार्द्धंहरणम्भूयस्तवयथेप्सितम् ॥ ५८ ॥ और्व्वउवाच ॥
अथगौरीतदापूर्व्वमनुभूतन्तपःस्थितौ ॥ योगनिद्रास्वरूपन्तदात्मनोचिन्तयद्धिया ॥ हरम्प्रणम्यप्रथमम्ब्रह्माणञ्चततः पर
म् ॥ ५९ ॥ ततस्त्रिजगतामीशंहरिन्नारायणम्प्रभुम् ॥ चिन्तयित्वातदातेषामेकतांसाजगन्मयी ॥ १६० ॥ आत्मानय्यो
गनिद्राञ्चचिन्तयित्वातपस्विनी ॥ ६१ ॥ दक्षिणेस्वशरीरस्यभागार्द्धंशशभृत्कृतः ॥ शरीरस्यतदावाममतिप्रेम्णानिजंहरे
॥ ६२ ॥ हरोपिस्वशरीरार्द्धङ्गौरीकायेतदास्वयम् ॥ प्रेम्णान्यवेशयत्तस्याश्चिकीर्षुः प्रियमद्भुतम् ॥ ६३ ॥ अथस्थित्वा
तदाभर्गःकाल्यासहचिरन्तदा ॥ परित्यज्यशरीरार्द्धम्पृथगेवबभौरुचा ॥ ६४ ॥ कालीभूत्वास्ववर्णगौरीशरीरार्द्धञ्चशङ्करम् ॥
प्राप्तमोदातदात्मानंसन्तुष्टाचजगन्मयी ॥ ६५ ॥ एवय्यँदाशरीरार्द्धमादायपरमेश्वरी ॥ हरस्यतिष्ठतितदाराजतेतीवशोभ
ना ॥ ६६ ॥ अर्द्धन्धम्मिल्लसय्युँक्तञ्जटाजूटार्द्धयोजितम् ॥ एकस्मिञ्छ्रवणेभोगीभोगेजाम्बूनदार्च्चितम् ॥ ६७ ॥ कुण्डलं
श्रवणेन्यस्मिञ्छीर्षेतस्याव्यराजत ॥ अर्द्धम्मृगाक्षिचान्यार्द्धव्वृँषभाक्षिव्यजायत ॥ ६८ ॥ अर्द्धंस्थूलनसञ्चारुतिलपुष्पन
सम्परम् ॥ दीर्घश्मश्रुतथैवार्द्धमर्द्धश्मश्रुविवर्ज्जितम् ॥ ६९ ॥ आरक्तचारुदशनंरक्तौष्ठमेकतस्तथा ॥ अपरंशुक्लविपुलन्दी
र्घाकृतिरदम्परम् ॥ १७० ॥ अर्द्धनीलगलञ्चार्द्धमपरंहारसय्युँतम् ॥ अर्द्धङ्कङ्कणकेयूरयुक्तबाहुतथापरम् ॥ ७१ ॥ नाग

केयूरसय्युँक्तंस्थूलबाहुनिरूर्म्मिकम् ॥ अर्द्धव्विँलोलसुभुजङ्गरिहस्तभुजम्परम् ॥ ७२॥ एकत्रसोर्मिकांशाखाकरस्यान्य त्रताम्विना ॥ एकस्तनन्तुहृदयंरोमावल्यर्द्धसय्युँतम् ॥ ७३ ॥ रम्भास्तम्भसमानोरुसुपार्ष्णिमृदुपादकम् ॥ एकन्त थापरंस्थूलंसंहतोरुपदाम्बुजम् ॥ ७४ ॥ एकञ्चारुमृदुस्थूलजघनंसुमनोहरम् ॥ तथापरन्दृढकटिसंहतोर्द्ध्वपदान्वयम् ॥ ७५॥ एकंव्वैयाघ्रचर्म्मौघयुक्तम्भूतिविलेपनम् ॥ अपरम्मृदुकौशेयवसनञ्चन्दनोक्षितम् ॥ ७६ ॥ एवमर्द्धंतथाजातं य्यौषिल्लक्षणसय्युँतम् ॥ अपरम्बलवद्भूरिसुगूढम्पुरुषाकृति ॥ ७७ ॥ एवमर्द्धंस्मररिपोर्ज्जहारगिरिजासती ॥ हिताय सर्व्वजगताङ्कालिकाकालिकोपमा ॥ ७८ ॥ तस्याः शरीरंराजेन्द्रहरतन्वर्द्धसय्युँतम् ॥ येनोपमेयन्तन्नास्तिमार्ग्गितम्भु वनत्रये ॥ ७९ ॥ सन्तानः पारिजातोवाएकान्तविशदस्तरुः ॥ अमोघयायथावल्ल्यातौचापियथतुर्न्नहि ॥ १८० ॥ बहु धाचपृथक्त्वेनतौरेमातेनरेश्वर ॥ अर्द्धनारीश्वरोभूत्वासतुरेमेकदाचन ॥ ८१ ॥ इतियद्यपिभूतेशः स्वयंशक्तोतिकालिका म् ॥ गौरीङ्कर्तुन्तदासर्व्वम्भूतकारणकारणः ॥ ८२ ॥ तथापिताङ्गिरिसुतांसय्योँज्यविविधैः पुरा ॥ तपस्ययोजयद्देवः क्रियोपायैरनेकशः ॥ ८३ ॥ तपोनिर्द्धूतसर्व्वाङ्गीम्पश्चाद्गौरीमथाकरोत् ॥ अर्द्धञ्चप्रददौतस्यैशरीरस्यमहेश्वरः ॥ ८४ ॥ नैवास्यतत्वञ्जानन्तिशक्राद्याः सकलाः सुराः ॥ शरीरार्द्धप्रदानस्यतपसेयोजनस्यच ॥ ८५ ॥ एतस्यतत्वञ्जानन्तिमहा

१ अंगुलीयकरहितम् । २ ऊर्मिकाअंगुलीयकमूतत्सहितम् अंगुलीयकमूर्म्मिकाद्वयम ८ ॥

त्मानोमहाबलाः ॥ नन्दीभृङ्गीमहाकालीवेतालोभैरवस्तथा ॥ ८६ ॥ अङ्गभूतामहेशस्यवीतभीतास्तपोधनाः ॥ येमानु
षशरीरेणप्रापिरेतपसोबलात् ॥ ८७ ॥ गणानामाधिपत्यन्तुतेजानन्तिहरम्परम् ॥ एवंसदात्वयायोज्याःसानुगान्नृपसत्त
म ॥ ८८ ॥ वनिताः सत्क्रियोपायैस्ततोभद्रमवाप्स्यसि ॥ यइदंशृणुयान्नित्यमद्भुतम्पुण्यदायकम् ॥ ८९ ॥ शिवयोः
प्रीतिकरणंशरीरार्द्धग्रहन्तथा ॥ गौरीत्वसाधनञ्चैवकालिकायाःशुभावहम् ॥ १९० ॥ नतस्यविघ्नाजायन्तेसचपुण्यतमो
मतः ॥ दीर्घायुःससुखीभूयात्पुत्रपौत्रसमन्वितः ॥ ९१ ॥ सततम्परिशृण्वानःशिवयोश्चरितम्महत् ॥ शिवलोकमवा
प्नोतिसुचिरंशिववल्लभः ॥ १९२ ॥ इतिश्रीकालिकापुराणेअर्द्धनारीश्वरचरितंसप्तचत्वारिंशोध्यायः ॥ ४७ ॥ ॥छ॥ ॥
॥ सगरउवाच ॥ ॥ कोसौभैरवनामाभूत्कोवावेतालसञ्ज्ञकः ॥ कथव्वाँतौशरीरेणमानुषेणगणाधिपौ ॥ १ ॥ अभूतान्द्वि
जशार्दूलतन्मेवदमहामुने ॥ जानामिनन्दिनव्विँप्रसहायंशशभृद्धृतः ॥ २ ॥ यथाभवद्गणाध्यक्षस्तन्नारदमुखाच्छ्रुतम् ॥ यथा
भृङ्गिमहाकालौविश्रुतौहिहरात्मजौ ॥ ३ ॥ कथव्वाँतौसमुत्पन्नौत्वत्तःश्रोतुंसमुत्सहे ॥ योसौशरभरूपस्यमहादेवस्यवैपुरा
॥ ४ ॥ कायभागःश्रुतःपूर्व्वंसमहाभैरवाह्वयः ॥ सएवकिम्भैरवाख्यःकिव्वाँन्योद्विजसत्तम ॥ ५ ॥ वेत्तुन्तत्वेनतत्सर्व्वमिच्छा
मिद्विजसत्तम ॥ कस्यवातनयौभूत्वागणाध्यक्षत्वमागतौ ॥ ६ ॥ तच्चापिकथयस्वाद्ययथातौवानराननौ ॥ और्व्वउवाच ॥

शृणुराजन्प्रवक्ष्यामिमहाकालस्यभृङ्गिणः ॥ ७ ॥ भैरवस्यापिचरितव्वैतालस्यमहात्मनः ॥ योसौभृङ्गीहरसुतोमहाकालो
पिभर्ग्गजः ॥८॥तावेवगौरीशापेनसम्भूयनरयोनिजौ॥वेतालभैरवौजातौपृथिव्यान्नृपवेश्मनि॥९॥यथाभृङ्गिमहाकालावुत्प
न्नौप्राक्तथाशृणु ॥योसौमहाभैरवाख्यःसकायःशरभोहरः॥१०॥भैरवःपृथगेवायङ्गणाध्यक्षोहरात्मजः॥ऊढायांहिमवत्पुत्र्या
म्भर्ग्गेणसुमहात्मना ॥ ११ ॥ तारकस्यवधार्थायदेवैःशक्रपुरोगमैः ॥ स्तुतिभिर्न्नतिभिःशम्भुंसन्ततिर्य्याचितापुरा ॥ १२ ॥
सयाचितोदेवगणैर्भगवान्वृषभध्वजः ॥ महामैथुनमारेभेसन्तानायोमयासह ॥ १३ ॥ आरब्धेमैथुनेतेननरवर्षेणवैययुः ॥
द्वात्रिंशद्वत्सराराजन्क्षणवच्चन्द्रधारिणः ॥ १४ ॥ समहामैथुनङ्कुर्व्वंस्तृप्तिन्नापमहेश्वरः ॥ नाप्यस्यप्रच्युतन्तेजोनतृप्ति
म्प्रापपार्व्वती ॥ १५ ॥ तन्महासङ्गसमयेचकम्पेवसुधास्फुटम् ॥ आकुलाःसकलादेवाःस्युःस्वर्ग्गस्थाश्चयेपरे ॥ १६ ॥
सर्व्वञ्जगत्तदाभूतमाकुलंशिवयोस्तयोः ॥ ततोनिवृत्तिजातेनमहामैथुनकर्म्मणा ॥ १७ ॥ अथसेन्द्राःसुराःसर्व्वेब्रह्माणञ्ज
गताम्पतिम् ॥ शरण्यंशरणञ्जग्मुर्भीताःशङ्करकेलिभिः ॥ १८ ॥ तेसम्भूयाथधातारम्प्रणम्यचसुरोत्तमाः ॥ आकुलंस
र्व्वमाचख्युर्हरमैथुनकर्म्मणा ॥ १९ ॥ ततःसर्व्वान्देवगणान्पश्चात्कृत्वैववृत्रहा ॥ स्वयमाहविधातारन्तत्कालभयभाषितम्
॥ २० ॥ ॥इन्द्रउवाच॥ ॥ आकुलाःसकलालोकाहरमैथुनकर्म्मणा ॥ अहम्महद्भयम्प्राप्यशरणन्त्वामिहागतः ॥ २१ ॥

एवम्भूतेसङ्गमेचशङ्करस्योमयासह॥ यःपुत्रोजायतेब्रह्मन्त्समामभिभविष्यति॥२२॥ तत्क्रियादर्शनादेवसूत्पन्नादपितत्सु
तात्॥भयम्मेजायतेब्रह्मँस्तारकादपिचाधिकम्॥२३॥तस्मादेवंत्वव्विँधेहितत्सुतोमांसुरान्यथा॥नबाधेततथायत्नात्तारया
स्मान्महाभयात्॥२४॥ ॥ब्रह्मोवाच॥ ॥उमायाञ्जायतेपुत्रोयदिशङ्करतेजसा॥अशक्यःसर्व्वलोकेससेन्द्रैरपिसुरासुरैः
॥२५॥तस्माद्धरोयथोमायान्नप्रसूतोभविष्यति॥तथाहंसव्विँधास्यामिगत्वादेवैर्हरान्तिकम्॥२६॥तारकस्यविघातश्चय
थास्याद्धरतेजसा॥तच्चाप्यहङ्करिष्यामित्व्येतुतेमानसोज्वरः॥२७॥इत्युक्त्वासहदेवौघैःकैलासाद्रिम्प्रजापतिः॥ जगामरेमे
गिरिशोगिरिपुत्र्यासमम्भृशम्॥२८॥ तत्रगत्वामहादेवम्ब्रह्मालोकपितामहः॥ सर्व्वैःसुरगणैःसार्द्धन्तुष्टाववृषभध्वजम्
॥२९॥ देवाऊचुः॥ प्रीतयेयस्यनरतिर्न्नकामोयन्मनोभवः॥ नयस्यजन्मनोहेतुस्तस्मैतुभ्यन्नमोनमः॥३०॥यस्यलोकहिता
यैवजातोजायापरिग्रहः॥त्र्यम्बकायनमस्तस्मैसशिवोनःप्रसीदतु॥३१॥ यम्मन्मथव्विँनादेवंशृङ्गाराद्याविशन्तिच॥ स्वब
लेनैवतन्देवन्त्वाव्वँयम्प्रणताहरम्॥३२॥ हिरण्यरेताःस्वर्णाभोयोहिरण्यभुजाह्वयः॥ सत्वंसर्ग्गंहरोदेवोनित्यन्नोभिप्रसीदतु
॥३३॥ जगन्मयीयोगनिद्राविष्णुमायाबलीयसी॥ यस्याभवत्स्वयञ्जायातस्मैतुभ्यन्नमोनमः॥ ३४॥ पञ्चभूतमयय्यँस्यप
ञ्चशीर्षव्विँराजते॥ तम्पञ्चवदनन्देवम्भक्त्यात्वाम्प्रणमामहे॥३५॥सद्योजातमघोरञ्चवामदेवमुमापतिम्॥ ईशानम्प्रण

मामोद्यन्तत्पुरुषमाहवै ॥ ३६ ॥ योसतामशिवोनित्यय्यौवाभक्तिमतांशिवः ॥ शिवाशिवस्वरूपायनमस्तस्मैशिवायते ॥
३७ ॥ रूपैस्त्रिभिर्य्यःस्थितिसृष्टिनाशंव्विष्णवात्मभूःशम्भुरितिप्रसिद्धैः॥करोतिशश्वज्जगतान्नमस्तंशिवव्विरूपाक्षममुंशिवे
शम् ॥ ३८ ॥ यःशूलखट्वांगमृगाङ्कधारीयोगोध्वजःशक्तिमान्पञ्चरूपी ॥ तस्मैतुभ्यञ्जातवेदःप्रभायभूयोभूयोनोनमःशङ्क
राय॥ ३९ ॥ब्रह्मार्च्चिष्मान्भोगभृद्दैत्यहन्तायन्तायोधावीतगर्भोजगत्याः ॥ सत्वंस्तुतोनःप्रसीदत्वनन्तोनित्योद्रेकीमुक्तरूपः
प्रधानः ॥ ४० ॥ परब्रह्मरूपीनियतैकमुक्तःपरज्योतिरूपीनियतस्त्वनन्तः ॥ परःपाररूपीनियतात्मभागीसनोभर्ग्गरूपी
गिरिशोस्तुभूत्यै ॥ ४१ ॥ उमापतिम्महामायम्महादेवञ्जगत्पतिम् ॥ शिवंशिवकरंशान्तन्नमामःसप्रसीदतु ॥ ४२ ॥ इ
तिस्तुतोमहादेवःशक्राद्यैस्त्रिदशैःस्वयम् ॥ उमासङ्गम्परित्यज्यभर्ग्गोगाच्चिदिवौकसः ॥४३ ॥ येनभावेनसतदामहामैथुनत
त्परः ॥ आसीत्तेनैवभावेनब्रह्मादीनाससादह ॥ ४४ ॥ अथतान्ससुरान्प्राहमहादेवस्त्वरन्निव ॥ किमर्थमागतायूयन्तन्मे
वदतनिर्ज्जराः ॥४५॥ तमूचुस्त्रिदशाःसर्व्वेब्रह्मशक्रपुरोगमाः ॥ त्वन्महामैथुनाद्भर्ग्गव्याकुलंसकलञ्जगत् ॥ ४६ ॥ पृथि
वीकम्पतेतीवसशैलवनकानना ॥ सागराःक्षुभिताःसर्व्वेनद्यानद्यश्चशङ्कर ॥ ४७॥ देवाश्चसर्व्वेदिक्पालानशान्तिम्प्राप्नु
वन्तिवै ॥ तस्मात्त्वंसर्व्वलोकेशसकलाननुकम्पय ॥ ४८ ॥ त्यक्तामहामैथुनन्तुरतिमात्रन्नियोजय ॥ एतच्छ्रुत्वावचस्त

स्यब्रह्मणाःपरमात्मनः ॥ ४९ ॥ उवाचशङ्करोदेवोनातिहृष्टमनाइव ॥ ॥ ईश्वरउवाच ॥ ॥ इयम्प्रवृत्तिर्भवतांशिवाया
मरसत्तमाः ॥ ५० ॥ त्यक्तेमहामैथुनेतुरतिमात्रप्रयोजिते ॥ नोमायाम्भवितापुत्रस्तदर्थमयमुद्यमः ॥ ५१ ॥ उमाशरीरजः
पुत्रोयोभवेन्ममतेजसा ॥ सएवतारपून्हत्वात्रिदशान्वर्द्धयिष्यति ॥ ५२ ॥ तस्मान्महामैथुनेमेवीतभीताःसुरोत्तमाः ॥ स्वं
स्वंस्थानम्प्रगच्छन्तुअहन्तदनुचिन्तये ॥ ५३ ॥ ॥ देवाऊचुः ॥ ॥ उमाशरीरजःपुत्रोयथानभविताहर ॥ तथाकुरुजगन्नाथ
तन्महामैथुनन्त्यज ॥ ५४ ॥ ॥ ईश्वरउवाच ॥ ॥ रतिमात्रेणनोमायाम्मत्पुत्रःसम्भविष्यति ॥ महामैथुनसन्त्यागात्स्याद्
पुत्रीतुपार्व्वती ॥ ५५ ॥ तस्मादहन्तुदेवानाव्वँवनाद्ब्रह्मणस्तथा ॥ त्यक्ष्येमहामैथुनन्तुकिन्त्वेकङ्कुरुतामराः ॥ ५६ ॥ ये
नमेप्रसृतन्तेजोमहामैथुनकारणात् ॥ धार्य्यन्तेजस्विनन्देवमानयन्त्वमरास्तुतम् ॥ ५७ ॥ योनिःकम्पोनिर्व्विकारोभूत्वा
तेजोग्रहीष्यति ॥ तम्मेवदन्तुत्रिदशास्त्यक्ष्येतेजःशरीरजम् ॥ ५८ ॥ ॥और्व्वउवाच ॥ ॥ वृषध्वजवचःश्रुत्वादेवाब्रह्मपुरो
गमाः ॥ हरतेजोग्रहायाथवीतिहोत्रंययुर्द्धिया ॥ ५९ ॥ अथब्रह्माणमामन्त्र्यतथानुज्ञाप्यपावकम् ॥ सेन्द्रादेवगणाःसर्व्वेहरमू
चुरिदव्वँचः ॥ ६० ॥ ॥ देवाऊचुः ॥ ॥ एषवैश्वानरःश्रीमान्भूरितेजोमयोबली ॥ महामैथुनबीजन्तुत्वत्तेजःसङ्ग्रहीष्यति
॥ ६१ ॥ इत्युक्त्वात्रिदशाःसर्व्वेवीतिहोत्रम्पुरःस्थितम् ॥ तस्मैनिदेशयामासुःशम्भवेसर्व्वहेतवे ॥ ६२ ॥ ततःषडङ्गंस्वरेतो

ण्यादितेदहनानने ॥ उत्ससर्ज्जमहाबाहुर्म्महामैथुनकारणम् ॥ ६३ ॥ अग्नावुत्सृज्यमानस्यतेजसःशशभृत्कृतः ॥ अणुद्व
यमतिस्वल्पङ्गिरिप्रस्थेपपातह ॥ ६४ ॥ तयोस्तुकणयोःसद्यःसम्भूतौशङ्करात्मजौ ॥ एकोभृङ्गसमःकृष्णोभिन्नाञ्जननिभो
परः ॥ ६५ ॥ भृङ्गाभस्यतदाब्रह्मानामभृङ्गीतिचाकरोत् ॥ महाकृष्णैकरूपस्यमहाकालेतिलोकभृत् ॥ ६६ ॥ ततस्तौ
पालयामासशङ्करःप्रमथोत्करैः ॥ अपर्णयाचापितथाक्रमात्तावतिवर्द्धितौ ॥ ६७ ॥ प्रवृद्धौतौमहात्मानौहरोमाप्रतिपा
लितौ ॥ क्रमाद्गणेशौकृत्वातौहरोद्वारिन्ययोजयत् ॥ ६८ ॥ ॥ सगरउवाच ॥ ॥ उत्सृष्टमग्नौयत्तेजस्तत्किंवृत्तन्द्विजोत्त
म ॥ तदप्यहंश्रोतुमिच्छुःसङ्क्षेपात्तद्वदस्वमे ॥ ६९ ॥ ॥ और्व्वउवाच ॥ ॥ अग्नावुत्सृज्यतेजांसितावत्काल
वृषध्वजः ॥ आकाशगङ्गामुद्दिश्यदेवानिदमुवाचह ॥ ७० ॥ एतत्तेजोदुराधर्षंस्त्रीभिरन्यैःसुरोत्तमाः ॥ योगनिद्रामृतेदेवीं
शैलपुत्रीमृतेथवा ॥ ७१ ॥ तस्मादहम्प्रवक्ष्यामियथेदन्तेजसासुतः ॥ यत्रवाभवितादेवोयाचवातद्वहोष्यति ॥ ७२ ॥
इयन्त्वाकाशगागङ्गाशैलराजसुतापरा ॥ उमायाभगिनीज्येष्ठाततोपत्यंहुताशनात् ॥ ७३ ॥ जनिष्यत्यात्मवीर्य्येणतेज
सानुपमद्युतिः ॥ भविष्यतिसवःश्रीमान्सेनापतिररिन्दमः ॥ ७४ ॥ सतारकव्वःपुरतोविजेष्यतिशिखिध्वजः ॥ अमो
घयामहाशक्त्यामयैवप्रतिवर्द्धितः ॥ ७५ ॥ इत्युक्त्वासमहादेवोविसृज्यसकलान्सुरान् ॥ पार्व्वतीमभिसम्मन्त्र्यशौचार्थं

गतवाँस्तदा ॥ ७६ ॥ पार्व्वतीवचनंश्रुत्वादेवानामप्रियंसती ॥ ७७ ॥ चुकोपत्रिदशौघायपुत्राशापरिवर्जिता ॥ म
न्युनादह्यमानेवस्फुरदोष्ठाधरातदा ॥ ७८ ॥ इदमाहसुरान्दृष्ट्वाहरश्चत्यक्तमैथुनम् ॥ ॥ देव्युवाच ॥ ॥ यस्मा
द्वियोजितःशम्भुर्य्युष्माभिर्म्ममैथुने ॥ ७९ ॥ अजातपुत्राचकृतावारस्त्रीवाहमर्दिता ॥ तस्मात्सर्व्वसुरगणाअद्यावधिनिर
न्तरम् ॥ १८० ॥ महामैथुनविभ्रष्टाभवन्तुनिजयोषिति ॥ तेषामपितथापुत्रानजनिष्यन्तिमेयथा ॥ ८१ ॥ भार्याश्च
सन्त्वपत्येनहीनादेव्योवराङ्गनाः ॥ यथाहम्परितप्यामिपुत्राशापरिवर्जिता ॥ ८२ ॥ तथासन्तुसमस्तास्तादेव्यःपुत्राश
याच्युताः ॥ और्व्वउवाच ॥ एवंसुरान्गिरिसुताशशापकुपिताभृशम् ॥ ८३ ॥ तत्कालावधिनस्वर्गेजायन्तेदेवपुत्रकाः ॥ नाद्यापि
सम्प्रजायन्तेपुत्रास्तान्सुसुधाशिनाम् ॥ ८४ ॥ दहनोऽपितथाकालेप्राप्तेगङ्गोदरेस्वयम् ॥ रेतःसङ्क्रामयामासशाम्भवंस्वर्ण
सन्निभम् ॥ ८५ ॥ सातेनरेतसादेवीसर्व्वलक्षणसंयुतम् ॥ पूर्णकालेथसुषुवेपुत्रयुग्मम्मनोहरम् ॥ ८६ ॥ एकःस्कन्दो
विशाखाख्योद्वितीयश्चारुरूपधृक् ॥ शक्तिद्वयधरौद्वौतौतेजःकान्तिविवर्द्धितौ ॥ ८७ ॥ तावेकत्वञ्जगामाशुविशाखःस्कं
न्दएवच ॥ शिशुश्चाप्यभवद्यातोयथान्यस्यसुतस्तथा ॥ ८८ ॥ ततस्तन्तनयञ्ज्ञातन्तथादृष्ट्वातिविस्मिता ॥ मध्येशरव
नस्याशुगङ्गातंव्यसृजद्धठात् ॥ ८९ ॥ विसृज्यगर्भन्तङ्गङ्गाबहुलायैस्वयन्तदा ॥ गर्भवृत्तान्तमाचख्यौजातश्चविसृजद्यथा

॥ १० ॥ तच्छ्रुत्वाबहुलाज्ञात्वामहादेवतनूद्भवम् ॥ परिगृह्यसुतन्तन्तुपालयामासकृत्तिका ॥ ११ ॥ उमायाःशङ्करस्या
पिविज्ञाप्यानुमतेतयोः ॥ ततोनीत्वाददौदेव्यैतम्पुत्रमरिमर्द्दनम् ॥ १२ ॥ सोतिवृद्धःशक्तिधरोमहाबलपराक्रमः ॥ वर्द्धितःश
ङ्करेणाशुदेवसेनाधिपोभवत् ॥ १३ ॥ ततःसुरारिंसगणन्तारकल्लोकतारकम् ॥ शक्तिहस्तोहरसुतःप्रममाथमहाबलम् ॥
॥ १४ ॥ एवमग्नौसमुत्सृष्टन्तेजोभर्गेणसङ्गतम् ॥ यथावृत्तन्तथातेद्यकथितन्नृपसत्तम ॥ १५ ॥ साम्प्रतम्प्रस्तुतंश्रव्यम्म
हाकालस्यभृङ्गिणः ॥ वृत्तान्तंशृणुराजेन्द्रतौभूतौमनुजौयथा ॥ १६ ॥ ॥ इतिकालिकापुराणेष्टचत्वारिंशोध्यायः ॥ ४८ ॥
॥ और्व्वउवाच ॥ ॥ हरोयावज्जगत्यर्थेदेववर्गैःप्रसादितः ॥ तावन्महामैथुनेनहीनोभूद्गुमयासह ॥ १ ॥ वर्त्तेतेरतिमात्रे
णस्वेच्छांसम्पूरयन्त्सदा॥यथामनोरथन्देव्याःसततम्पूरयन्मृडः॥२॥ अथैकदोमयासार्द्धंनिगूढेरतिमन्दिरे॥नर्म्माकरोन्महा
देवोमोदयुक्तोरतिप्रियः ॥ ३ ॥ यदासानर्म्मणेयातागौरीस्मरहरान्तिकम् ॥ तदाभृङ्गिमहाकालौद्वाःस्थौद्वारिप्रतिष्ठितौ॥४॥
नर्म्मावसानेसादेवीमुक्तधम्मिल्लबन्धना ॥ बन्धहीनञ्चलद्गात्राद्वस्त्रमालम्ब्यपाणिना॥५॥ व्यस्तहारागन्धपुष्पैराकुलैर्न्नातिशो
भना॥विलुप्तकुङ्कुमादष्टदशनच्छदविभ्रमा ॥ ६ ॥ निःसृतारतिसङ्केलिनिलयाज्जलजानना ॥ ईषदाघूर्णनयनानिचितास्वे
दबिन्दुभिः ॥ ७ ॥ तान्निःसरन्तींसदनात्तथाभूतामनिन्दिताम् ॥ अयोग्यावीक्षितुञ्चान्यैर्वृषध्वजमृतेपतिम् ॥ ८ ॥ दद

र्शतुर्म्महात्मानौनातिहृष्टात्ममानसौ ॥ भृङ्गीचापिमहाकालःप्राप्तकालश्चुकोपतुः ॥ ९ ॥ दृष्ट्वाताम्मातरन्दीनौतथाभूतावधो
मुखौ ॥ चिन्ताञ्चजग्मतुस्तीव्रान्निःशश्वसतुरुत्तमौ ॥ १० ॥ तौपश्यन्तौतदादेवोददर्शहिमवत्सुता ॥ चुकोपचतदापर्ण्णावा
क्यञ्चैतदुवाचह ॥ ११ ॥ एवम्भूताञ्चमाङ्कस्मादसम्बद्धावपश्यताम् ॥ भवन्तौतनयौशुद्धौन्हीमर्य्यादाविवर्जितौ ॥ १२ ॥
यस्मादिमाममर्य्यादाम्भवन्तौनिरपत्रपौ ॥ अकुर्व्वतान्ततोभूयाद्भवतोर्ज्जन्ममानुषे ॥ १३ ॥ मानुषीय्यौनिमासाद्यमद
वेक्षणदोषतः ॥ भविष्यतोभवन्तौतुशाखामृगमुखौभुवि ॥ १४ ॥ इतितावुमयाशप्तौहरपुत्रौमहामती ॥ भृङ्गीचैवमहाका
लःस्वमातुरन्तिकन्तदा ॥ १५॥ तौप्राप्तदुःखौतुतदादुर्म्मनस्कौहरात्मजौ ॥ शापन्तस्यानसेहातेप्रोचतुश्चेदमद्रिजाम् ॥ १६ ॥
अनागसौसदैवावाम्भवत्याहिमवत्सुते ॥ कथंशप्तौत्वयामातर्हठादेवम्प्रकोपिता ॥ १७ ॥ नियोजितौयथाद्वारिमहेशेनत्व
यासह ॥ तथानियोगङ्कुर्व्वन्तौतष्ठावोद्वारिसर्व्वतौ ॥ १८ ॥ हठान्निःसरणङ्कहात्तवैवनहियुज्यते ॥ आगच्छन्त्याभवत्या
तुदृष्टावावांसुसर्व्वतौ ॥ १९ ॥ तस्मान्निरर्थकःकोपःकोदोषस्तत्रचावयोः ॥ तस्मात्तत्रप्रतीकारंशृणुमातरनिन्दिते ॥ २० ॥
त्वम्मानुषीक्षितौभूयाहरोभवतुमानुषः ॥ मानुषस्यहरस्याथजायायांहरतेजसा ॥ २१ ॥ भवत्याश्चापिमानुष्याभविष्या
वस्तथोदरे ॥ यदिसत्यंहरसुतावावाम्वैदिनिरागसौ ॥ २२ ॥ तदावयोरिदव्वाक्यंसत्यमस्तुगिरेःसुते ॥ इत्यन्योन्यमथोशा

पन्दत्वादत्वासुदारुणम् ॥ २३ ॥ विविशुर्नृपशार्दूलगौरीहरसुतौचतौ ॥ अथकालेऽव्यतीतेतुसर्व्वज्ञोवृषभध्वजः ॥ २४ ॥
तद्भाविकर्म्मज्ञात्वैवमानुषोप्यभवत्स्वयम् ।ब्रह्मणोदक्षिणाङ्गुष्ठाद्दक्षोब्रह्मसुतोभवत् ॥ २५ ॥ अदितिस्तत्सुताजातातत:पू
षाह्वयोभवत् ॥ पूष्णःपुत्रोभवत्पौष्यःसर्व्वशास्त्रार्थपारगः ॥ २६ ॥ यस्यतुल्योनृपोभूमौनभूतोनभविष्यति॥सपुत्रहीनो
राजाभूत्पौष्योनृपतिसत्तमः॥२७॥शेषेवयसिसम्प्राप्तेभार्याभिस्तिसृभिःसह ॥पौष्यःपरमयाभक्त्याब्रह्माणम्पर्य्यतोषयत्
॥२८॥तस्यप्रसन्नोभगवान्ब्रह्मालोकपितामहः॥तमुवाचचराजानङ्किमिच्छसिवदस्वमे ॥२९॥ प्रसन्नोस्मिनृपश्रेष्ठप्रदास्या
मियथेप्सितम् ॥ यदिष्टंतवजायानान्तद्वदिष्यसिसाम्प्रतम् ॥३०॥ ॥ पौष्यउवाच ॥ ॥ हिरण्यगर्भपुत्रोहम्पुत्रार्थीत्वामुपा
स्महे ॥ त्वयिप्रसन्नेपुत्रोमेभूयाल्लक्षणसंयुतः ॥३१॥ एतदर्थंसभार्य्योहम्भक्त्यात्वांसमुपस्थितः ॥ यथामेजायतेपुत्रस्तथा
कुरुजगत्पते॥३२॥ पुन्नाम्नोनरकात्पुत्रस्त्रायतेपितरम्प्रभूम् ॥ अतस्तस्माद्भयम्ब्रह्मँस्त्वन्नाशयितुमर्हसि॥३३॥ ब्रह्मोवाच ॥
शृणुपौष्ययथाभावीपुत्रस्तवकुलोद्वहः ॥ तदहन्तेवदाम्यद्यभार्य्याभिस्तत्समाचर ॥ ३४ ॥ इदम्फलङ्गृहाणत्वम्मयादत्तन्नृपो
त्तम ॥अजीर्णम्बहुलेकालेप्राप्तेपिसुरसंसदा ॥३५॥ फलमेतत्समादाययावत्सर्व्वँत्सरत्रयम् ॥ आराधयमहादेवंसप्रसन्नोभ
विष्यति ॥३६॥ यथासम्भाषतेभर्ग्गःफलमेतत्तथाभवान् ॥ करिष्यतिफलंराजन्भार्य्याभिस्तिसृभिःसह॥३७॥ ततस्तेलक्ष

णोपेतस्तनयःकुलवर्द्धनः ॥ भविष्यतिस्ववंशस्ताचक्रवर्त्तीवसुन्धराम् ॥ ३८॥ इत्युक्त्वाप्रययौब्रह्माराजापिसहभीरुभिः ॥
हरय्यँष्टुंसमारेभेभक्त्यापरमयायुतः ॥ ३९ ॥ निराशोःमय्यँताहारःकदाचित्फलभोजनः ॥ दृषद्वतीनदीतीरेफलंसंस्था
प्यचाग्रतः ॥ ४० ॥ पुष्पार्घदीपधूपैश्चवृषध्वजमतर्प्पयत् ॥ सतुवर्षत्रयेतीतेमहादेवोजगत्पतिः ॥ ४१ ॥ पौष्यस्यनृपतेःस
म्यक्प्रससादार्थसिद्धये ॥ प्रसन्नःप्राहनृपतिम्महादेवोहसन्निव ॥४२॥ उपाससेकिमर्थम्मान्तन्मेवददामिते॥ ॥पौष्यउवा
च ॥ ॥ अपुत्रोहम्पुत्रकामस्तच्छृणुष्ववृषध्वज ॥४३॥ यथाहम्पुत्रवान्वैस्यांवृषध्वजतथाकुरु ॥ इतिसन्यगदद्राजाभार्य्या
भिःसहहर्षितः ॥ ४४ ॥ प्रणम्यस्तुतिपूर्व्वेणभक्तिनम्रात्ममानसः ॥ ततःपुत्रार्थिनम्भूपम्प्रसन्नोवृषभध्वजः ॥ ४५ ॥ ब्र
ह्मदत्तफलंहस्तेकृत्वेदन्तमुवाचह ॥ ॥ ईश्वरउवाच ॥ ॥ इदम्फलम्ब्रह्मदत्तव्विभज्यनृपतेत्रिधा ॥ ४६ ॥ भोजयेथाःस्वजा
यास्त्वम्प्रहृष्टःसुस्थमानसः ॥ ततःप्रवृत्तेभवतएतासुऋतुसङ्गमे ॥४७॥ आधास्यन्तितुगर्भांस्तुभार्य्यास्तेयुगपन्नृप॥काले
प्राप्तेचयुगत्प्रसवोयोषितान्तव ॥ ४८ ॥ भविष्यतिनृपश्रेष्ठतत्रेत्थन्त्वङ्करिष्यसि ॥ एकस्याजठरेशीर्षभागस्तेसम्भविष्यति
॥४९॥अपरस्यास्तदाकुक्षेर्म्मध्यभागोभविष्यति॥अधोनाभ्यास्तुयोभागस्सोपरस्याम्भविष्यति ॥५०॥तच्चखण्डत्रयम्भूप
यथास्थानम्पृथक्पृथक् ॥ योजयिष्यसिपश्चात्तेपुत्रएकोभविष्यति ॥५१॥ तस्यशीर्षेचन्द्ररेखासहजासम्भविष्यति ॥ तेनैव

नाम्नासख्यातिङ्गमिष्यतिचभूतले ॥ इत्युक्त्वासमहादेवस्तासाङ्गर्भान्स्वयन्तदा ॥ ५२ ॥ संस्कर्त्तुंआह्नवीतोयमात्मवासाय
वैन्यधात् ॥ ततःफलेस्वयन्देवःप्रविवेशवृषध्वजः ॥ ५३ ॥ तत्क्षणात्तफलम्भूतन्त्रिभागंस्वयमेवहि ॥ पौष्यस्तत्फलमा
दायमुदितःसहभार्य्यया ॥५४॥ प्रययौमन्दिरंहृष्टोअनुज्ञाप्यवृषध्वजम् ॥ ततःसमुचितेकालेप्राप्तेताभिस्तुभक्षितम्॥५५॥
तत्फलन्नृपशार्दूलगर्भाश्चाप्याहिताःशुभाः॥सम्पूर्णेगर्भकालेतुगर्भेभ्यःसमजायत ॥५६ ॥ खण्डत्रयम्पृथग्राजन्यथाभ
गर्गेणभाषितम् ॥ तच्चखण्डत्रयम्पौष्योयथास्थानन्नियोज्यच ॥ ५७॥ एकपिण्डञ्चकाराशुतत्रपुत्रोऽव्यजायत ॥ तस्यशीर्षे
तदाराजन्सहजेन्दुकलाशुभा ॥ ५८ ॥ विरराजयथाखस्थाशरत्कालेकलाविधोः ॥ तंसर्व्वलक्षणोपेतम्पीनोरस्कंसुनासि
कम् ॥५९ ॥ सिंहग्रीवव्विँशालाक्षन्दीर्घायतभुजन्तदा ॥ दृष्ट्वापौष्योथभार्य्याभिस्तिसृभिःसहसम्मुदम् ॥ १६० ॥ लेभेद
रिद्रःसत्कोषंप्राप्यैवविपुलन्ततः ॥ तस्यनामाकरोद्राजाब्राह्मणैःस्वैःपुरोहितैः ॥ ६१ ॥ चन्द्रशेखरइत्येवकान्त्याचन्द्रम
सःसमः ॥ ववृधेसमहाभागःप्रत्यहञ्चन्द्रवत्सुतः ॥ ६२ ॥ कलाभिरिवतेजस्वीशरदीवनिशाकरः ॥ एवन्तिसृणामम्बाना
ङ्गर्भेजातोयतोहरः ॥ ६३ ॥ अतस्त्र्यम्बकनामाभूत्प्रथितोलोकवेदयोः ॥ सराजपुत्रःकौमारीमवस्थाम्प्रापयत्तदा ॥ ६४ ॥
सर्व्वशास्त्रार्थतत्त्वज्ञोविष्णोस्तुल्योबभूवह ॥ बलेवीर्य्येप्रहरणेशास्त्रेशीलेचतत्समः॥६५॥नान्योभून्नृपशार्दूलनोवाभूमौभवि

ष्यति ॥ अभिषिच्याथतंराज्येकुमारंबलवत्तरम् ॥६६॥दशपञ्चैकवर्षीयंसर्व्वंराजगुणैर्य्युतम् ॥ तिसृभिःसहभार्य्याभिर्व्वनम्पौ
ष्योविवेशह ॥ ६७ ॥ वृद्धोचितक्रियाङ्कर्त्तुंराजापरमधार्मिकः ॥ गतेपितरिराजासवनवासम्महाबलः ॥६८॥ सर्व्वाङ्क्षितिर्व्वं
शेचक्रेसोमात्यैश्चन्द्रशेखरः ॥ सार्व्वभौमोनृपोभूत्वाराजभिःपरिसेवितः ॥६९॥ अमरैरिवदेवेन्द्रोविजहारश्रियायुतः ॥ एव
म्पौष्यसुतोभूत्वात्र्यम्बकःपुण्यनिर्व्वृतः ॥ १७० ॥ ब्रह्मावर्त्ताह्वयेरम्येकरवीराह्वयेपुरे ॥ दृषद्वतीनदीतीरेराजाभूत्वामुमोदह
॥ ७१ ॥ अथैकदासपितरव्वँनवासगतंस्वयम् ॥ मातृश्चापिनृपश्रेष्ठद्रष्टुकामोभवन्नृपः ॥ ७२ ॥ सएकस्यन्दनेनैवएका
कीचन्द्रशेखरः ॥ विपुलन्धनुरादायसम्मार्ग्गेणगणन्तदा ॥ ७३ ॥ तपावनम्पुण्यमयव्विँषयान्तेव्यवस्थितम् ॥ आससा
ददिदृक्षुःसतातव्वृँद्धंसमातृकम् ॥ ७४ ॥ सगच्छन्पितुरभ्याशन्नृपतिश्चन्द्रशेखरः ॥ ददर्शनमुचन्नामतपस्यन्तम्महामुनिम्
॥ ७५ ॥ कृष्णाजिनोत्तरीयेणसव्वीतंसूर्य्यसन्निभम् ॥ ऊर्ध्वगाभिर्ज्जटाभिश्चसय्युँतन्ध्यानिनङ्कृशम् ॥७६ ॥ तपसाद्योति
ततनुन्निश्चलङ्कुशजासनम् ॥ तन्दृष्ट्वादूरतोवीरोरथोपस्थादवातरत् ॥ ७७ ॥ उपतस्थेचविप्रेन्द्रव्विँनयानतकन्धरः ॥ प्रण
नाममुनिन्तञ्चवाक्यमेतदुदीरयन् ॥ ७८ ॥ पौष्यस्यतनयोब्रह्मन्नाम्नाहञ्चन्द्रशेखरः ॥ प्रणमामिमहाभक्त्याभवन्तम्मुनिस
त्तमम् ॥ ७९ ॥ इत्युक्त्वाप्राञ्जलिस्तस्थौमुनेस्तस्याग्रतोनृपः ॥ नमुचस्यमुखव्वीँक्ष्यभक्तिनम्रात्ममानसः ॥ १८० ॥ पू

र्व्वमेवयदाराजाप्राविशत्तपसेवनम् ॥ तदैवसहभार्य्याभिस्तम्मुनिम्प्रत्यपूजयत् ॥ ८१ ॥ चिरमाराध्यनमुचम्पौष्यःपरमप
ण्डितः ॥ प्रसादयामासमुनिम्पुत्रार्थेसूनृताक्षरैः ॥ ८२ ॥ विषयान्तेतपःकुर्व्वन्मुनिश्रेष्ठेहतिष्ठसि ॥ एकन्तुप्रार्थयेत्वत्तोय
दिमान्दयसेमुने ॥ ८३ ॥ शिशुर्म्मेतनयोराजाचन्द्रशेखरसञ्ज्ञकः ॥ सहजेन्दुकलायुक्तोबालभावाच्चचञ्चलः ॥ ८४ ॥ सचे
त्त्वन्तमासाद्यकदाचिदपराध्यति ॥ तदाक्षमिष्यसिमुनेमयैतत्प्रार्थितन्त्वयि ॥ ८५ ॥ पौष्यस्यवचनंश्रुत्वामुनिश्चाङ्गीचका
रह ॥ दृष्ट्वातत्तनयव्विँप्रःपौष्यवाक्यमथास्मरत् ॥ ८६ ॥ स्मृत्वाग्रतःस्थितन्नम्रंसुचिरञ्चन्द्रशेखरम् ॥ इदम्प्रोवाचसमुनिर्द्द
यावान्नमुचाह्वयः ॥ ८७ ॥ विनयेनाद्यतुष्टोस्मिभवतश्चन्द्रशेखर ॥ वरव्वँरयदास्यामिवाञ्छितम्मेमहत्तरम् ॥ ८८ ॥ तस्य
श्रुत्वाततोवाक्यन्नृपतिश्चन्द्रशेखरः ॥ पुनःप्रणम्यनमुचमिदमाहातिसूनृतम् ॥ ८९ ॥ कायेनमनसावाचायदत्यर्थन्द्विजोत्त
म ॥ तत्सर्व्वव्विँषयेमेस्तित्वादृशायस्यदक्षिणाः ॥ १९०॥ मनोगतम्मेदुष्प्रापव्वाँञ्छनीयन्नविद्यते ॥ तदेववरणीमम्मेयद्ददा
तिस्वयम्भवान् ॥९१ ॥ ॥ नमुचउवाच ॥ ॥ त्वंसप्तदशवर्षाणाम्प्रान्तेसव्वँत्सरेपरे ॥ भविष्यसिनृपश्रेष्ठवररामापतिःस्वयम्
॥ ९२ ॥ यथागिरिसुताशम्भोर्य्यथालक्ष्मोर्ग्गदाभृतः ॥ यथासुरेशस्यशचीतथातेपिभविष्यति ॥ ९३ ॥ इत्युक्त्वासमुनि
र्भूपन्नमुचस्तपसान्निधिः ॥ विसर्ज्जयामासतदासचापिमुदितोययौ ॥ ९४ ॥ सगत्वापितरंप्राप्यमातॄंश्चचन्द्रशेखरः ॥ अपू

जयद्यथार्हन्तुतैरप्याश्वासितःसुतः ॥ ९५॥ अथागतोन्नृपःस्वीयाङ्करवीरपुरीम्प्रति ॥ मुदितःसचिवैःसार्द्धरमेदेवेन्द्रसन्निभः
॥९६॥ इतिकालिकापुराणेनवचत्वारिंशत्तमोध्यायः ॥४९॥ और्व्वउवाच ॥ अवतीर्णेमहादेवेपौष्यजायासुखेच्छया ॥ मानुषे
णप्रमाणेनगतेसव्वँत्सरत्रये ॥ १ ॥ गिरिजापिककुत्स्थस्यराज्ञोभार्य्यास्वजायत ॥ मेनकायार्य्यँथापूर्व्वंस्वेच्छयापरमेश्वरी
॥ २ ॥ अथार्य्यावर्त्तविषयेब्रह्मण्यःशूरसत्तमः ॥ इक्ष्वाकुवंशजोराजाककुत्स्थोनामधार्मिकः ॥ ३ ॥ भोगवत्याह्वयायान्तु
पुर्य्यांरिपुनिषूदनः ॥ सर्व्वलक्षणसम्पन्नोभूपालगुणसर्य्युतः ॥ ४ ॥ तस्यभार्य्यामहाभागाभर्ग्गदेवस्यपुत्रिका ॥ सा
मनोन्मथिनीनाम्नापूजितापतिवल्लभा ॥ ५ ॥ तस्याःपुत्रशतञ्जज्ञेदेवगर्भाभमच्युतम् ॥ बलवीर्य्यसमायुक्तङ्ककुत्स्थ
नृपसत्तमात् ॥ ६ ॥ पुत्रीनविद्यतेतस्यास्तदर्थंसागृहान्तरे ॥ निभृतंस्थण्डिलङ्कृत्वाचण्डिकांसमपूजयत् ॥ ७॥ पूज्य
मानामहादेवीचण्डिकाराजभार्य्यया ॥ प्रसन्नासात्रिभिर्वर्षैस्तांस्वप्नेचाब्रवीदिदम् ॥८॥ योषिल्लक्षणसम्पन्नासार्वभौमस्यभा
मिनी ॥ नक्षत्रमालयायुक्तापुत्रीतवभविष्यति ॥९॥ सापिस्वप्नेवरम्प्राप्यमुदिताभून्नृपाङ्गना ॥ पार्व्वत्यपिस्वयन्तस्यागर्भे
कालेविवेशह ॥ १० ॥ सामनोन्मथिनीदेवीप्रवृत्तेभानुसङ्क्रमे ॥ गर्भन्दधौमहासत्त्वञ्चन्द्रिकेवामृतोत्करम् ॥ ११ ॥ सम्पू
र्णेतुततःकालेप्राप्तेनक्षत्रमालिनीम् ॥ सामनोन्मथिनीदेवीसुषुवेतनयांशुभाम् ॥ १२ ॥ तान्दृष्ट्वाहारसर्य्युँक्तांशरज्ज्योत्स्नोप

मांशुभाम् ॥ ककुत्स्थोभार्य्ययासार्द्धमत्यर्थमुदितोभवत् ॥ १३ ॥ सहजेनाथहारेणभूषितातुककुत्स्थजा ॥ ववृधेमन्दिरेतस्य
वर्षास्विवसुरापगा ॥ १४ ॥ तेनैवहारचिह्नेनतस्यास्तारावतीतिवै ॥ नामाकरोत्पिताकालेयथोक्तेनृपसत्तम ॥ १५ ॥ काल
क्रमेणसाबाल्यव्व्यँतीतावरवर्णिनी ॥ मञ्जुलय्यौँवनोद्भेदम्प्रापश्रीरिवमाधवे ॥ १६ ॥ साश्रियाश्रियमन्वेतिशौचेनाथस
तीशुभा॥सुशीलांशीलचरितैःस्वरूपेणचपार्व्वतीम्॥१७॥तस्यास्तुयौवनोद्भेदन्दृष्ट्वाराजासुतैःसह॥ककुत्स्थःकारयामासस
मयेऽथस्वयम्वरम् ॥ १८ ॥ माघवेमासिसम्प्राप्तेचन्द्रवृद्धौशुभेदिने ॥ स्वयवँरसभाञ्चक्रेतारावत्याःपितासुतैः ॥ १९ ॥
वार्त्तिकास्तुँबहून्राजावडवाभिक्रमेणवै ॥ तूर्णम्प्रस्थापयामासनानादेशनृपान्प्रति ॥ २० ॥ तेराजानस्तदाश्रुत्वावार्त्ताँव्वैवा
र्त्तिकाननात् ॥ तूर्णमेवसमाजग्मुस्तारावत्याःस्वयव्वँरम् ॥ २१॥ तंश्रुत्वापौष्यतनयश्चतुरङ्गबलैर्य्युतः ॥ स्वयव्वँरञ्जगामा
शुदिव्यालङ्कारसय्युँतः॥२२॥तत्रगत्वानृपश्रेष्ठाःककुत्स्थेनविनिर्म्मिते ॥ स्वयव्वँरसभामध्येयथायोग्यमुपस्थिताः॥२३॥
आसीनेष्वथभूपेषुककुत्स्थस्तनयांस्वकाम् ॥शुभेमुहूर्त्तेसम्प्राप्तेसभान्नेतुम्मनोकरोत्॥२४॥एतस्मिन्नन्तरेराज्ञः कुमारीवर
वर्णिनी॥वृद्धान्धात्रीन्निजांसम्यक्सम्पूर्णज्ञानशालिनीम् ॥२५॥स्वयव्वँरसभान्द्रष्टुम्प्राहिणोत्सदसम्प्रति॥उवाचचतदाधा
त्रींराजपुत्रीसुमङ्गलाम्॥२६॥स्वयव्वँरसभाङ्गत्वाचारुरूपंसुलक्षणम् ॥ नृपन्निरूप्यभोधात्रिसमक्षम्मेनिवेदय ॥ २७॥ त

स्मातर्म्ममकल्याणंसौभाग्यमपिवाञ्छसि ॥यथासौभाग्यदः स्वामीममस्यात्त्वन्तथाकुरु॥२८॥एवन्ताम्प्रेषयित्वाथधात्री
नृपतिपुत्रिका ॥ सामनोन्मथिनीयत्रप्राराधयतिचण्डिकाम् ॥ २९ ॥ तत्रप्रायान्महाभागाशुभातारावतीतदा ॥तत्रगत्वा
महादेवीम्प्रणम्यकालिकाह्वयाम् ॥ ३० ॥ मानुषेणाथभावेनताञ्ज्ञात्वात्मानमात्मना ॥ प्रणनाममहाभक्त्यावाक्यञ्चैतदुवा
चह ॥ ३१॥ प्रणमामिमहामायांय्योगनिद्राञ्जगन्मयीम् ॥ सामेप्रसीदताङ्गौरीचण्डिकाभक्तवत्सला ॥ ३२॥ यदिसत्यञ्जन
न्यामेमदर्थेत्वम्प्रपूजिता॥तेनसत्येनसुभगःपतिर्म्ममनृपोत्तमः॥३३॥स्वयव्वँरेद्यभवतुप्रसीदहरवल्लभे ॥इतितस्यावचःश्रु
त्वाचण्डिकाहरमोहिनी॥३४॥मोहयन्तीनृपसुताय्यँथात्मानन्नवेत्तिच ॥ तथाप्राहादृश्यमूर्तिरिदंसासूनृतव्वँचः॥३५॥ देव्यु
वाच॥ ॥ पौष्यस्यतनयोयोसौनाम्नाभूच्चन्द्रशेखरः ॥ समनोहररूपस्तेप्रियः स्वामीभविष्यति॥३६॥तमिन्दुकलयाशीर्षेचि
ह्नितन्नृपसत्तमम् ॥ वरयस्ववरारोहे पार्व्वतीववृषध्वजम्॥३७॥इत्युक्त्वाविरराामाशुपार्व्वतीनृपपुत्रिकाम् ॥सापिनत्वातथादृ
श्याहर्षोत्फुल्लविलोचना ३८॥जगाममङ्गलगृहञ्जनन्यायत्रवासिता ॥अथाजगामसाधात्रीनिरूप्यसदृशम्पतिम्॥३९॥तारा
वत्यास्तदाचष्टरहस्यन्नृपसत्तम॥दृष्ट्वातामग्रतोधात्रीम्प्रहृष्टानृपतेः सुता॥४०॥ पप्रच्छनिभृतङ्कोदृक्कोवादृष्टस्त्वयानृपः॥ सा
प्राहधात्रीवचनात्तवभूपाविलोकिताः॥४१॥चारुरूपाःकुलीनाश्चशास्त्रेशस्त्रेचपारगाः ॥ तेषामहन्नशक्नोमिप्रवक्तुंसुबहून्गुणा

न् ॥४२॥ येषुमेरोचतेताँस्तुकथयामिशुभप्रभे ॥ चारुरूपामयातेषुचत्वारःपुरुषाःशुभे ॥ ४३॥ दृष्टास्तत्रापिनासत्यौदेवौ द्वावपरौनरौ॥देवयोः कथनेकृत्यङ्किञ्चिन्नापिनविद्यते॥४४॥यौपुनः पृथिवीपालौतयोरेकः सदारकः ॥ नाम्नासर्व्वाङ्गकल्याणोथापरश्चन्द्रशेखरः ॥ ४५॥ नासत्ययोरेतयोस्तुविशेषोनास्तिकश्चन ॥ रूपेशरीरसौभाग्येसर्वेचातिमनोहराः ॥ ४६ ॥ नृपौपुनर्म्महासत्वौसिंहस्कन्धौमहाभुजौ ॥ आरक्तपाणिनयनमुखपादकरोद्भवौ॥४७॥ पीनोरस्कौविशालाक्षौलग्नभ्रूयुगलावुभौ ॥ सर्वलक्षणसम्पूर्णौदेवालङ्कारमण्डितौ ॥४८॥ तयोरपिवयस्थत्वात्प्रशस्तश्चन्द्रशेखरः॥सुशीलःसूनृतवचाःशास्त्रेशस्त्रेचसम्मतः ॥४९॥ ईषदुद्भिन्नरोम्णातुनीलेनचारुनिर्म्मलम् ॥ राजतेवदनन्तस्यलक्ष्मणेवनिशाकरः ॥५०॥ दीप्तमत्यापिकलयाराजतेसनिशापतेः ॥ सहजेनशिरःस्थेनसाक्षात्सचन्द्रशेखरः ॥ ५१॥ सएवतेपतिर्य्योग्यश्चिह्नेनानेनसुन्दरि ॥ तन्वर्व्वँरयराजानन्तवयोग्यंशुभोदयम्॥५२॥धात्र्याश्चैवर्व्वँचःश्रुत्वाराजपुत्रीजगादताम्॥मत्पार्श्वचारिणीभूत्वानिदेशयनृपोत्तमम् ॥ ५३ ॥ धात्रिस्वयर्व्वँरसभाप्रवेशसमयेमम ॥तयोरायात्तदाराजात्वन्योन्यम्भाषमाणयोः ॥ ५४ ॥ सुतांस्वयर्व्वँरसभान्नेत्तुङ्कालेशुभोदये॥स्वयन्तदाककुत्स्थस्तुसुतायामङ्गलालये ॥५५॥आसाद्यपुत्रीन्दयिताय्यैँयोषिद्भिःकृतमङ्गलाम् ॥ माल्यंसुगन्धिपुष्पाणाङ्करेणादायतत्करे ॥ ५६ ॥ दत्वाचेदमुवाचाशुप्रापयन्मङ्गलालयात् ॥ प्रविश्यसमितौमातर्म्माल्ये

१ मातः हेवरपार्च्छिदेः क्वचित्तूयातेतिपाठः।

नान्येनसत्तमम् ॥ ५७ ॥ यन्त्वमिच्छसिराजानन्द्विजर्व्वाँतव्वँरिष्यसि ॥ एवमुक्ताशिबिकयास्वातैव्वृद्धैश्चपूरुषैः ॥ ५८ ॥ प्र
वेशयामाससुताङ्ककुत्स्थःसमितिम्मुदा ॥ तामागतांसभान्दृष्ट्वाशक्राद्यास्त्रिदशास्तदा ॥ ५९ ॥ अन्येदिक्पतयश्चापिसभा
न्तत्क्षणमागताः ॥ सावतीर्य्यतदावाप्ययानात्तारावतीमुदा ॥ ६० ॥ धात्र्याचानुगयायुक्ताव्यचरत्सदसोन्तरे ॥ सभाम
ध्येचिरंसातुविहृत्यवरवर्णिनी ॥ ६१ ॥ आवित्वान्नियतेय्योगाच्चण्डिकायाःप्रसादतः ॥ तयोःसमत्वादेकत्वात्तयाधात्र्याविबो
धिता ॥ ६२ ॥ गतिखेदजघर्म्माम्भःकणिकानिचितानना ॥ पतिम्पूर्व्वतरम्पुत्रीराज्ञस्तारावतीसती ॥ ६३ ॥ स्वयंसापार्व्वतीदे
वीवव्रेचचन्द्रशेखरम् ॥ वृतन्दृष्ट्वातदातन्तुब्राह्मणाःसामगीतिभिः ॥ ६४ ॥ तयोर्व्वैवाहिकञ्चक्रुर्म्मङ्गल्यँतमानसाः ॥ वैतालि
कागायनाश्चतथातौर्य्यत्रिकान्नृप ॥ ६५ ॥ प्रशंसन्तिस्मगायन्तिवादयन्तिचकौतुकात् ॥ सर्व्वेचत्रिदशामोदमवापुश्चन्द्रशे
खरे ॥ ६६ ॥ तारावत्यावृतेचाथककुत्स्थोप्यतिहर्षितः ॥ वृतन्तव्वीक्ष्ययेभूपाःसुबाहुप्रमुखाःपरे ॥ ६७ ॥ रुष्टास्तान्वारया
माससमितौचन्द्रशेखरः ॥ ततोयातेषुदेवेषुत्रिदिवम्प्रतिस्वेच्छया ॥ ६८ ॥ भूपेषुचप्रयातेषुककुत्स्थेनार्च्चितेषुच ॥ वैवाहिकेन
विधिनासराजाचन्द्रशेखरः ॥ ६९ ॥ तारावतीन्तदाभार्य्याङ्ककुत्स्थानुमतेपुनः ॥ संस्कृत्यज्ञापयामासदेवेभ्योवैदिकैर्म्मखैः
॥ ७० ॥ पाणिग्रहणसंस्कारान्कृत्वातांसहचारिणीम् ॥ करवीरपुरायाशुप्रययौचन्द्रशेखरः ॥ ७१ ॥ द्वाविंशत्तुसहस्राणिदा

सीनाम्प्रददौपुनः ॥ ककुत्स्थाख्योविपट्टतयेतस्मिन्नुद्वाहकर्म्मणि ॥ ७२ ॥ गवांषष्टिसहस्राणिसौरभीणान्तथैवच ॥ दुहि
त्रेप्रददौदायन्दासान्दासीप्रमाणतः ॥ ७३ ॥ अपरायानिजापुत्रीककुत्स्थाख्यस्यभूपतेः ॥ नाम्नाचित्राङ्गदाख्यातारूपैस्ता
रावतीसमा ॥७४॥ दासीनामधिपाभूत्वास्वयञ्चानुययौतदा ॥ तारावतीम्भूपसुताञ्ज्येष्ठांस्वाम्भगिनींशुभाम्॥७५॥ तान्दा
सान्सुसमादायककुत्स्थतनयोमहान् ॥ ज्येष्ठोविश्वावसुर्न्नामगच्छन्तश्चन्द्रशेखरम् ॥७६॥ तारावत्याचसहितंस्यन्दनेनाशु
गामिना॥ धीमाननुययौपश्चात्करवीरपुरम्प्रति ॥७७॥ तारावत्यासमंराजापौष्यजश्चन्द्रशेखरः ॥ करवीरपुरेरम्येरेमेनृपति
शेखरः ॥ ७८ ॥ इतिस्वयम्महादेवोमानुषींय्योनिमाश्रितः ॥ पार्व्वतीचस्वयञ्जातानरयोनिमनिन्दिता ॥ ७९ ॥ तथाभृ
ङ्गीमहाकालएतयोरभवत्सुतः ॥तथात्वंशृणुराजेन्द्रकथयामिसमुद्भवम् ॥८०॥ ॥ इतिकालिकापुराणेपञ्चाशत्तमोध्यायः
॥ ५० ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ अथकालेव्यतीतेतुककुत्स्थतनयासती ॥ विधातुमार्त्तवंस्नानय्योंषिद्भिःपरिवारिता
॥ १ ॥ शीतामलजलांद्द्यान्नदीम्प्रासादृषद्वतीम् ॥ प्रभिन्नाञ्जनसङ्काशाङ्कलुषध्वंसकोविदाम् ॥ २ ॥ कृतस्नानामनुत्तीर्णाम
र्द्धमग्नाम्महासतीम् ॥ ददर्शस्वर्णगौराङ्गीङ्कापोतोमुनिसत्तमः ॥ ३ ॥ कापोतव्वँपुरास्थायप्राणिनाव्वँधशङ्कया ॥ विचचारय
तः पूर्व्वङ्कापोतस्तेनसस्मृतः ॥ ४ ॥ तान्दृष्ट्वाहेमगर्भाभाञ्चन्द्रिकांशारदीमिव ॥ कापोतःकामयामासकामबाणार्दितोभृश

म् ॥ ५ ॥ कामाग्निपरितप्तःसककुत्स्थतनयाम्मुनिः ॥ अभिगम्याथकल्याणीमिदव्वँचनमब्रवीत् ॥ ६ ॥ कात्वङ्कस्यासि
वनितापुत्रीवाकस्यसुन्दरि ॥ कस्मात्समागतावात्वमुपांशुतटिनीजलम् ॥ ७ ॥ रूपन्तेसौम्यमाह्लादिपूर्णचन्द्रनिभम्मुख
म् ॥ तिलपुष्पप्रतीकाशन्नासिकायुगलन्तव ॥ ८ ॥ वातकम्पितनीलाब्जसदृशेलोचनेतव ॥ बाहूमनोहरौवृत्तौमृणालमृदु
लायतौ ॥ ९ ॥ ऊरूगजकरप्रख्यौमध्यव्वेँदिविलग्नकम् ॥ ईदृशेनतुरूपेणनत्वम्मानुषभामिनी ॥ १० ॥ देवीवादानवी
वात्वमप्सरोगुणशालिनी ॥ अथवाभाग्यभोगायश्रीस्त्वन्नारीत्वमागता ॥ ११ ॥ अपर्णावाशचीवात्वन्तन्मेवदमनोहरे ॥
और्व्वउवाच ॥ इतिवाक्यम्मुनेःश्रुत्वाजलादुत्तीर्य्यभामिनी ॥ १२ ॥ प्रणम्यतम्मुनिन्नम्रावचनञ्चेदमब्रवीत् ॥ अहन्तारा
वतीनाम्नाककुत्स्थस्यसुतासती ॥ १३ ॥ चन्द्रशेखरभूपस्यभार्य्याञ्जानीहिमाम्मुने ॥ नाहन्देवीनगन्धर्व्वीनयक्षीनचरा
क्षसी ॥ १४ ॥ मानुष्यहन्नृपसुताचारित्रव्रतधारिणी ॥ ॥ कापोतउवाच ॥ ॥ त्वान्दृष्ट्वामांस्वयङ्कामःसङ्गतःसङ्गमायते ॥ १५ ॥
पीडितश्चातितेनाहन्त्वयाशक्तयासमक्षया ॥ स्मरसागरकल्लोलपतितम्मान्निराकुलम् ॥ १६ ॥ त्वदूरुतारणात्त्राहिनूनं
न्त्वंमृदुभाषिणी ॥ मत्तःपुत्रद्वयञ्चारुरूपलक्षणसय्युँतम् ॥ १७ ॥ भविष्यतिमहाभागबलवीर्य्ययुतम्महत् ॥ कापोतस्यवचःश्रु
त्वाभयदुःखसमाकुला ॥ १८ ॥ जगादगद्गदव्वाँक्यव्वाँग्मिन्यथककुत्स्थजा ॥ वाक्यमन्यन्मयाकार्य्यन्नकार्यमतिनिन्दितम् ॥

॥ १९ ॥ तस्मान्मावदमामित्थम्प्रणम्यत्वाम्प्रसादये ॥ तवापिनैतद्योग्यंस्यान्मुनेरिहतपोधन ॥ २० ॥ तपःक्षयकरङ्ग
त्वंसतीत्वभ्रंशकम्मम ॥ ॥ कापोतउवाच ॥ ॥ तपोव्ययोवाचान्यद्वादूषणन्तन्ममास्त्विह ॥ २१ ॥तथापित्वामह
न्त्यक्तुन्नेच्छामिसुरतौशुभे॥अवश्यम्ममकामेभ्यस्त्राणङ्कर्त्तुमिहार्हसि॥२२॥ अन्यथाकामदग्धोहन्त्वयात्यक्तोमनोहरे॥भवतो
श्चकरिष्यामिशापदग्धांसबान्धवाम् ॥ २३ ॥ ततस्तद्वचनंश्रुत्वादेवीतारावतीतदा ॥ ऋषिशापभयात्साध्वीनकिञ्चिच्चोत्त
रन्ददौ ॥ २४ ॥ सम्भाषयेहंस्वसखीरिहतिष्ठमहामुने ॥ एवमुक्त्वातदादेवीदासीनाम्मध्यमागता ॥ २५ ॥ चित्राङ्गदांस
माहूयवचनञ्चेदमब्रवीत् ॥ चित्राङ्गदेमुनिरसौमाञ्चैवकामयतेभृशम् ॥ २६ ॥ किङ्करिष्येसतीभावान्नभ्रष्टास्यामहङ्कथम् ॥
पतिम्बन्धूंश्चकापोतःसद्यःशापाग्निनादहेत् ॥ २७ ॥ नाहम्मुनिङ्कामयेचेत्संशयेपतितात्वहम् ॥ ततश्चित्राङ्गदाप्राहमाभै
स्त्वंसत्यभाषिणि ॥ २८ ॥ तत्रोपायमहंवक्ष्येयत्कृत्वात्वम्प्रमोक्ष्यसे ॥ नजहातिमुनिश्चेत्त्वान्दासीमेकाम्मनोहराम् ॥२९॥
सुभूषणैर्भूषयित्वामुनयेत्वन्नियोजय ॥ कामातुरोमुनिर्मोहात्कपणोज्ञास्यतेनहि ॥ ३० ॥ दासींत्वद्भूषणाच्छन्नाञ्ज्यो
त्स्नाच्छन्नाम्मृगीमिव ॥ एवङ्कुरुमहाभागेमात्वञ्चिन्ताङ्कुरुशुभे ॥ ३१ ॥ त्वञ्चेत्सतीतिनियतन्नज्ञास्यतितदामुनिः ॥ तत
स्तारावतीप्राहतांरूपगुणशालिनीम् ॥ ३२ ॥ चित्राङ्गदाम्भूपपुत्रींशश्वद्विनयसूनृताम् ॥ त्वमेवगच्छभगिनिकापोताख्यम

निन्दिते ॥ ३३ ॥ मद्भूषणैर्भूषयित्वास्वशरीरम्मनस्विनि ॥ अन्याम्प्रस्थापिताव्विँप्रःसम्बुध्यक्रोधवह्निना ॥ ३४ ॥ ध
क्ष्यत्यवश्यंसकुलाम्मान्तस्माद्गच्छसुन्दरि ॥ त्वम्मत्समासर्व्वगुणैः सर्व्वभूषणभूषिता ॥ ३५ ॥ मुनिंसङ्गमयस्वाद्यरक्षमां
सकुलांशुभे ॥ ततस्तस्यावचःश्रुत्वाविनयञ्चसकातरम् ॥ ३६ ॥ तूष्णीम्भूत्वाक्षणन्तस्थौनातिहृष्टमनाइव ॥ जगादचम
हाभागाञ्चित्राङ्गदाककुत्स्थजाम् ॥ ३७ ॥ करिष्येवचनन्तेद्यसमयेमांस्मरिष्यसि ॥ मदर्थेपितरञ्चेमम्भूपञ्चचन्द्रशेखरम् ॥
॥ ३८ ॥ आश्वासयिष्यसितथासमस्तञ्चसखीगणान् ॥ एवमुक्त्वाभूषणानितारावत्याःपिधायसा ॥ ३९ ॥ चित्राङ्गदा
जगामाशुमुनेःकामोत्सवायच ॥ तारावतीतदादीनावस्त्रालङ्कारवर्ज्जिता ॥ ४० ॥ दासीमध्यगताभूत्वातामेवानुययौप्रि
याम् ॥ तामायान्तीन्ततोदृष्ट्वाकापोतःकाममोहितः ॥ ४१ ॥ मुनीनाम्परजायासुसस्मारसङ्गमन्तदा ॥ प्रम्लोचाकामितापू
र्व्वंव्वँतण्डस्यसुतेनवै ॥ ४२ ॥ यथावाकामितापद्मामरद्वाजेनधीमता ॥ तथाहङ्कामयिष्यामिसाम्प्रतव्वँरवर्णिनीं ॥ ४३ ॥
पश्चात्तपोबलात्तद्वज्जायापापाद्विमोक्षये ॥ इतिचिन्तयतस्तस्यतदाचित्राङ्गदाशुभा ॥ ४४ ॥ समेत्यतम्मुनिंल्लँज्जायुक्ताचैषा
हकिञ्चन ॥ तामासाद्यमहाभागःकापोतोमुनिसत्तमः ॥ ४५ ॥ शृङ्गारवेषभावायमदनम्मनसास्मरत् ॥ स्मृतमात्रोथमदनःस्व
यमेत्यमहामुनिम् ॥ ४६ ॥ गन्धमाल्यैःसुवासोभिरध्युवासातिहर्षितः ॥ तेनाधिवासितोविप्रःकापोतश्चारुरूपधृक् ॥ ४७ ॥

जज्वालतेजसाचापिद्वितीयइवभास्करः ॥ मनोहरन्तथादृष्ट्वाकापोतम्मदनोपमम् ॥ ४८ ॥ तारावतीमृतेसर्व्वाःसकामाश्चा
भवन्स्त्रियः ॥ तारावतीमुनिन्दृष्ट्वासुन्दरम्मदनोपमम् ॥४९॥ विस्मयम्परमञ्जातामुनिङ्काममममन्यत ॥ अथचित्राङ्गदाव्विँ
प्रःकामुकःकामसङ्गमे ॥५०॥ तदानियोजयामाससुप्रीतश्चाभवत्क्षणात् ॥ ततस्तस्यांसमुत्पन्नंसद्योजातंसुतद्वयम् ॥५१॥
देवगर्भोपमन्दीप्तज्ज्वलनार्कसमप्रभम् ॥ जातेसुतद्वयेतान्तुमुनिःसम्मृज्यपाणिना ॥ ५२ ॥ निनायपूर्व्ववद्भावव्वँचन
श्चेदमब्रवीत् ॥ मत्सङ्गमेकियत्कालम्प्रियेतिष्ठशुभानने ॥ ५३ ॥ ममेच्छयायास्यसित्वम्भयन्तेनास्तिराजतः ॥ एवमस्त्वि
तिसाप्राहऋषिशापभयात्सती ॥ ५४ ॥ ततोविसर्जयामासमुनिरन्याश्चयोषितः ॥ ततस्तारावतीदेवीदासीभिः परिवा
रिता ॥ ५५ ॥ भगिनीमनुशोचन्तीजगामभवनन्निजम् ॥ गत्वातंसर्व्ववृत्तान्तङ्कापोतकृतमद्भुतम् ॥ ५६ ॥ ब्रह्मावर्त्ताधिपा
याशुशशंसाथककुत्स्थजा ॥ सश्रुत्वानृपशार्दूलः क्षणमात्रव्विँचिन्त्यच ॥ ५७ ॥ चित्राङ्गदायाः साहाय्यङ्कापोतानुमते
ऽकरोत् ॥ कापोतोपितदातस्याञ्जातयोः सुतयोस्तयोः ॥ ५८ ॥ यथोक्तेनाथविधिनासंस्कारमकरोत्तदा ॥ सगरउवाच ॥
चित्राङ्गदाकथम्पुत्रीककुत्स्थस्याभवत्तदा ॥ ५९ ॥ तदहंश्रोतुमिच्छामिकथयस्वद्विजोत्तम ॥ और्व्वउवाच ॥ एकदातुककु
त्स्थोसौहिमवन्तम्महागिरिम् ॥ ६० ॥ मृगयायैजगामाथमृगाश्चापिनिपातिताः ॥ लम्बन्तींसुरलोकात्तुभूमिम्प्राततदोर्व्व

शीम् ॥ ६१ ॥ विश्रामायोपविष्टस्तुसानौवेश्यान्ददर्शह ॥ तामासाद्यमहाराजः कामबाणप्रपीडितः ॥ ६२ ॥ अवती
र्णाङ्गिरौशश्वदङ्गसङ्गमयाचत ॥ साज्ञात्वानृपशार्दूलङ्ककुत्स्थंशक्रसन्निभम् ॥ ६३ ॥ उर्व्वशीरमयामासगिरिकुञ्जेयथेप्सि
तम् ॥ ततोराज्ञः ककुत्स्थस्यस्वर्व्वेश्यायान्तदासुता ॥ ६४ ॥ अभवन्नृपशार्दूलात्सद्योजातामनोहरा ॥ अथकामेनसन्तु
ष्टङ्ककुत्स्थंसातदोर्व्वशी ॥६५॥ यथेष्टदेशव्विज्ञाप्यगन्तुमैच्छदनिन्दिता ॥ तामाहराजातनयाम्परित्यज्यकथंशुभे ॥ ६६ ॥
गन्तुमिच्छसिचार्व्वङ्गिसुतामेनान्तुपालय ॥साप्राहाहंस्वर्ग्गणिकामयिकस्यनचाभवत्॥६७॥ तनयस्तनयावापिसद्योजाता
नृपात्मजा ॥ स्वतेजसाशरीरस्यविकारोमेनविद्यते ॥ ६८ ॥ सुताश्चापिनपाल्यन्तेवेश्याभावात्स्वभावतः ॥ दयास्तियदि
तेपुत्र्यान्नीत्वैनाव्वर्द्धयस्वयम् ॥ ६९ ॥ गन्तुंमामनुजानीहिसत्यमेतद्ब्रवीमिते ॥ इत्युक्त्वासाजगामाशुयथेष्टंसोर्व्वशीनृपः
॥ ७० ॥ पुत्रीन्तांसमुपादायनगरंस्वव्विवेशह ॥ तस्याश्चित्राङ्गदानामसचकारनृपः स्वयम् ॥ ७१ ॥ मनोन्मथिन्यैचादा
त्ताम्भार्य्यायैपुत्रिकांशुभाम् ॥ इदञ्चवचनन्देवीन्तदाप्राहनृपोत्तमः ॥ ७२ ॥ देविपुत्रीममेयन्त्वमेनाम्पालयसद्गुणाम् ॥
मयानीतांशैलजाताम्माहेलाङ्कर्त्तुमर्हसि ॥ ७३ ॥ इत्युक्ताराजपुत्रीसापालनेचाकरोन्मतिम् ॥ भर्तुराज्ञाम्पुरस्कृत्यनान्यात्कि
ञ्चिदुवाचह ॥ ७४ ॥ साचैकदाबाल्यभावादष्टावक्रम्महामुनिम् ॥ व्रजन्तंजिह्ममेवाशुजहासोपजहासच ॥ ७५ ॥ सचुको

पमुनिस्तस्यैशापम्परमदारुणम् ॥ ददौदासीस्ववंशस्यभवितेतिककुत्स्थजे ॥ ७६ ॥ दासीभूत्वास्ववंशस्यत्व्यनूढैव
सुतद्वयम् ॥ जनयिष्यसिपापिष्ठेततोभद्रमवाप्स्यसि ॥ ७७ ॥ एवङ्ककुत्स्थतनयाजाताचित्राङ्गदानृप ॥ दासीचभूता
सातेनतारावत्यानिवासिता ॥ ७८ ॥ अनूढाप्यलभत्पुत्रयुग्मम्मुनिवराच्छुभा ॥ तौचपुत्रौमहाभागौमहाकार्य्यङ्क
रिष्यतः ॥ ७९ ॥ इतितेकथितंराजन्यथाचित्राङ्गदाभवत् ॥ ककुत्स्थस्यसुतासाध्वीप्रस्तुतंशृणुसाम्प्रतम् ॥ ८० ॥
इतिकालिकापुराणेएकपञ्चाशत्तमोध्यायः॥ ५१ ॥ ॥ छ ॥ ॥ और्व्वउवाच ॥ ॥ अथकालेव्यतीतेतुपुनस्ता
रावतीशुभा ॥ आर्त्तवव्विँहितंस्नानन्नदीम्प्रासादपद्वतीम् ॥ १ ॥ दासीसहस्त्रैःसय्युँक्तानानालङ्कारमण्डिता ॥ रम्भादि
भिर्य्यथेन्द्राणीतथासाप्रत्यदृश्यत ॥ २ ॥ सावतीर्णाजलेदेवीगौराङ्गीतडिदुज्ज्वला ॥ नदीमुज्ज्वलयामासभिन्नाञ्जनस
माम्भसम् ॥ ३ ॥ स्थलीङ्काचमयींस्वच्छाङ्काञ्चनीप्रतिमायथा ॥ स्वभासाज्वलयामासप्रतिबिम्बेनसातथा ॥ ४ ॥
अथताम्पुनरेवाथकापोतोमुनिसत्तमः ॥ आनाभिमग्नान्तोयौघैर्द्ददर्शसुमनोहराम् ॥ ५ ॥ दृष्ट्वातामथपप्रच्छतदाचित्रा
ङ्गदाम्मुनिः ॥ केयञ्जलेदृषद्वत्याअवतीर्णासखीशतैः॥ ६ ॥ श्रियाज्वलन्तीश्रीतुल्याकिमपर्णागिरेःसुता ॥ अतीवभ्राज
तेरूपैर्न्नसंस्तौषिचताङ्किमु ॥ ७ ॥ अथतस्यवचःश्रुत्वामुनेश्चित्राङ्गदातदा ॥ ऋषिशापभयात्साध्वीसंस्तौमीति।दाब्रवी

त् ॥ ८ ॥ इयन्तारावतीनामककुत्स्थस्यसुतासती ॥ चन्द्रशेखरभूपालभार्यातिदयिताशुभा ॥ ९ ॥ एषात्वयाकामिता
तुकामार्थम्पूर्वंतोमुने ॥ स्वालङ्कारैरलङ्कृत्यमान्दत्वानेगृहङ्गता ॥ १० ॥ सेयम्पुनर्नदींस्नातुम्भगिनीमेसमागता ॥ ज्येष्ठा
न्तान्तुमुनेवक्तुन्नतेकिञ्चिन्नयुज्यते ॥ ११ ॥ त्वमत्रतिष्ठविप्रेन्द्रज्येष्ठान्ताम्भगिनीम्प्रियाम् ॥ समाभाष्यसमेष्येत्वामनुंजा
नासिचेद्गतौ ॥ १२ ॥ इतिश्रुत्वावचस्तस्यामुनिःस्नेहेनवञ्चनाम् ॥ ताराकृत्याकृताम्पूर्वम्मुनिस्तस्यैचुकोपह ॥ १३ ॥ इयम्पा
पीयसीरामावञ्चनामकरोन्मयि ॥ तस्याःसङ्कालनञ्चाहङ्करिष्याम्यद्यनिश्चितम् ॥ १४ ॥ इत्युक्त्वासतयासार्द्धम्मुनिश्चि
त्राङ्गदाख्यया ॥ जगामयत्रसादेवीस्थितातारावतीशुभा ॥ १५ ॥ गत्वातान्तुसमासाद्यकापोतोमुनिसत्तमः ॥ इदन्तारा
वतीम्प्राहकुपितःप्रहसन्निव ॥ १६ ॥ कामार्थम्प्रार्थितापूर्वन्त्वम्मयाच्छद्मनात्वया ॥ वञ्चितोस्मिदुराधर्षेफलन्तस्यसमाप्नु
हि ॥ १७ ॥ ममापिपुरतःपापेत्वंसतीतिविकत्थसे ॥ सतीत्वम्भ्रंशकम्मात्त्वन्नैवङ्कामितवत्यसि ॥ १८ ॥ तस्माद्बीभत्सवेष
स्त्वाङ्कपालीपलितोहरः ॥ विरूपोधनहीनश्चकामयिष्यतिवैहठात् ॥ १९ ॥ सद्योजातम्पुत्रयुगंसश्रीकंवाँनराननम् ॥ भवि
ष्यतिचतेपापेत्वेकाब्दाभ्यन्तरेधुना ॥ २० ॥ एतच्छ्रुत्वामुनेर्वाक्यम्प्राहतारावतीमुनिम् ॥ कोपाद्भयाच्चसादेवीस्फुरदोष्ठपुटा
तदा ॥ २१ ॥ यदिसापूजयित्वातुचण्डिकांप्रापमाम्प्रसूः ॥ यद्यहव्व्रँतिनोनित्यम्भूपतौचन्द्रशेखरे ॥ २२ ॥ ककुत्स्थस्यसु

१६२

तासत्यर्थ्यँद्यहन्द्विजसत्तम ॥ तेनसत्येनमेदेवान्नान्योमाङ्क्रामयिष्यति ॥२३॥ यदिसत्यम्महादेवोनित्यमाराध्यतेमया ॥ तेन
सत्येनमेदेवादाराध्याच्चन्द्रशेखरात् ॥ २४ ॥ स्वप्नेपिमुनिशार्दूलनान्योमाङ्क्रामयिष्यति ॥ इत्युक्तासामुनिन्नत्वास्वामिवि
न्यस्तमानसा ॥ २५ ॥ ययौतारावतीदेवीस्वस्थानमितिभाविनी ॥ तस्याङ्गतायान्देव्यान्तुचिन्तयामासताम्मुनिः ॥ २६ ॥
ममैवपुरतश्चैषानिर्भीतातिप्रगल्भते ॥ अत्रान्तर्विनिगूढन्तुबीजंशुद्धम्भविष्यति ॥ २७॥ एवंविंचिन्त्यसमुनिर्ध्यानसंयु
क्तमानसः ॥ दिव्यज्ञानपरोभूत्वासर्व्ववृत्तान्तमाददे ॥ २८ ॥ यथाभृङ्गिमहाकालौदेव्याशप्तौसुतावुभौ ॥ प्रतिशापर्य्यँथा
तौतुददतुःपार्व्वतींहरम् ॥ २९ ॥ यथावतीर्णौमानुष्ययोनौतौतुयदर्थतः ॥ चित्राङ्गदायथाजातायदर्थन्देवकन्यका ॥ ३० ॥
दिव्यज्ञानेनतज्ज्ञात्वामुनिःकिञ्चननाकरोत् ॥ चित्राङ्गदामादरेणसमादायमुनिस्ततः ॥ ३१ ॥ स्वस्थानङ्गतवान्विप्रःपूज
यामासताम्मुनिः ॥ तारावतीचतत्सर्व्वञ्चन्द्रशेखरभूपतेः ॥ ३२ ॥ वृत्तान्तम्मुनिशापस्यकथयामासभामिनी ॥ तत्सर्व्वम्पौ
ष्यजोराजास्वगतश्चिन्तयायुतः ॥ ३३॥ आश्वास्यदयिताम्भार्य्याम्माभैर्द्देवीतिसोचिरात् ॥ सततंसेवयापत्युर्द्धर्म्मार्थपरिसे
वनैः ॥ ३४ ॥ वर्ज्जनादप्रशस्तानाम्मुनिशापोपनीयते ॥ तस्मात्त्वन्देविसुभगेचारित्रव्रतधारिणी ॥ ३५ ॥ कल्याणभागिनी
नित्यन्नापदंसमवाप्स्यसि ॥ एवमुक्तासराजातुकरवीरपुराधिपः ॥ ३६ ॥ प्रासादङ्कारयामासउच्चैरभ्रांशकम्बहु ॥ उच्चैश्च

तुःशतव्व्यामन्त्रिंशद्योजनविस्तृतम् ॥ ३७ ॥ रत्नस्फटिकभूम्यन्तःखचितंरत्नकर्ब्बुरैः ॥ वैदूर्य्यपटलैःशुभ्रैश्छादितंसुमनोह
रम् ॥ ३८ ॥ स्वर्णरत्नतुलास्तम्भव्विश्वकर्म्मविनिर्म्मितम् ॥ रक्षार्थङ्कारयामासतारावत्याःप्रियङ्करम् ॥ ३९॥ रत्नसोपानस
य्युँक्तव्वैदूर्य्यवलभीयुतम् ॥ सौवर्णनीपसम्बद्धसुधर्म्मासदृशङ्गुणैः ॥४० ॥ तस्यांसमस्तभोग्यानिस्वादूनिचमृदूनिच ॥ आ
प्तैरासादयामासपुरुषैश्चन्द्रशेखरः ॥ ४१ ॥ ततस्तारावतीन्देवीमादायचन्द्रशेखरः ॥नित्यम्प्रासादपृष्ठन्तमारुह्यरमतेनृपः
॥ ४२ ॥ एवंसव्वत्सरव्यावदन्यैरप्राप्यवेश्मनि ॥ आप्तैरधिष्ठितद्वारितान्देवींसमरक्षत ॥ ४३ ॥ एकदातुविमानेनकरवीराधि
पेनतु ॥ उच्चैःप्रासादमारुह्यस्थितातारावतीसदा ॥ चिन्तयन्तीनृपन्तन्तुदयितञ्चन्द्रशेखरम्॥४४॥तत्पदैन्यस्तमनसासावि
त्रीवपतिव्रता ॥ आराध्यचमहादेवम्पार्वत्यासहितन्तदा ॥ ४५ ॥ इष्टान्देवीञ्चसादेवीचिन्तयन्तीसमचरस्थिता ॥ तत्रसाचि
न्तयन्तीतुत्र्यम्बकञ्चन्द्रशेखरम् ॥ ४६ ॥ विवेदभेदन्नतयोश्चन्द्रशेखरयोर्द्वयोः ॥ एवम्प्रासादपृष्ठेतुस्थितातारावतीसती ॥
॥ ४७ ॥ सुधर्म्मामध्यगादेवीशक्रश्रीरिवभूषिता ॥ अथोमयासमन्देवोवियतश्चन्द्रशेखरः ॥४८॥ आजगामतदागच्छन्प्रा
सादम्प्रतितन्नृप ॥ ददृशेसूत्तरन्तीसाउमायाःसदृशीगुणैः॥४९॥ सर्व्वलक्षणसम्पूर्णामाधवस्येवमाधवी॥तान्दृष्ट्वान्यगदद्देवो
गौरीव्वृषभकेतनः ॥ ५० ॥स्मितप्रसन्नवदनःप्रहसन्निवभामिनीम् ॥ ईश्वरउवाच ॥ इयन्तेमानुषीमूर्त्तिःप्रियेतारावतीति

या ॥ ५१ ॥ भृङ्गीमहाकालयोस्तेजन्मनेविहितास्वयम् ॥ त्वत्तोह्यनन्यकान्तोहन्नान्याङ्गन्तुमिहोत्सहे ॥ ५२ ॥ त्वमिदानींस्वयञ्चा
स्याम्मूर्त्याम्प्रविशभामिनि ॥ ततउत्पादयिष्यामिमहाकालञ्चभृंगिणम् ॥ ५३ ॥ देव्युवाच ॥ ममैवमानुषीमूर्त्तिरस्यांवृषभ
केतन ॥ विशामितेत्रवचनादुत्पादयसुतद्वयम् ॥ ५४ ॥ ममभृङ्गिमहाकालकापोतानाञ्चशापतः ॥ एवम्मोक्षोभवेद्भर्ग्गत
स्मात्त्वङ्कुरुमत्प्रियम् ॥ ५५ ॥ और्व्वउवाच ॥ प्रविवेशततोदेवीस्वयन्तारावतीतनौ ॥ महादेवोऽपितस्यान्तुकामार्थंसमु
पस्थितः ॥ ५६ ॥ ततःसापर्णयाविष्टादेवीतारावतीसती ॥ कामयानम्महादेवंस्वयमेवाभजन्मुदा ॥ ५७ ॥ तस्मिन्कालेभ
वद्भर्ग्गःकपालीचास्थिमाल्यधृक् ॥ बीभत्सवेशोदुर्ग्गन्धःपलितोऽतिविरूपधृक् ॥ ५८ ॥ कामावसानेतस्यान्तुसद्योजातंसु
तद्वयम् ॥ अभवन्नृपशार्दूलतथाशाखामृगाननम् ॥ ५९ ॥ तद्देहान्निःसृतापर्णाजातयोःसुतयोस्तयोः ॥ मोहयित्वायथा
त्मानन्नजानातिककुत्स्थजा ॥ ६० ॥ अहङ्गौरीतथाभर्ग्गोभावेनमानुषेणतु ॥ अथतारावतीदेवीसुतौदृष्ट्वाक्षितिस्थितौ
॥ ६१ ॥ पातिव्रत्यात्परिभ्रष्टाआत्मानंवीक्ष्यभाविनी ॥ तथाबीभत्सवेशन्तुहरन्दृष्ट्वाग्रतःस्थितम् ॥ ६२ ॥ मुनिशापन्तदामे
नेप्राप्तङ्कालान्तकोपमम् ॥ इतिशोकविमूढाचनिनिन्दचसतीव्रतम् ॥ ६३ ॥ इदञ्चोवाचतंवीक्ष्यमहादेवन्त्रिशूलिनम् ॥
मुनिव्रतादपिवरन्नारीणाञ्चसतीव्रतम् ॥ ६४ ॥ इतिस्मसततन्धीराव्याहरन्तिपुराविदः ॥ नतत्सत्यमहम्मन्येयत्प्रवृत्त

म्ममेदृशम् ॥ ६५ ॥ इत्युक्त्वासातदादेवीशुशोचचमुमोहच ॥ तामाहाथमहादेवोमाकार्षीस्त्वव्वैरानने ॥ ६६ ॥ शोकं
सतीव्रतश्चापिमानिन्दत्वंसुचेतने ॥ कापोतेनयदाशप्तात्वन्तदैवतदग्रतः ॥ ६७ ॥ उक्तवत्यसिदीर्घाक्षियत्तद्भूतन्तवाधु
ना ॥ यदिसत्यम्महादेवोनित्यमाराध्यतेमया ॥ ६८ ॥ तेनसत्येनमेदेवादाराध्याच्चन्द्रशेखरात् ॥ स्वप्नेपिमुनिशार्दूलनान्यो
माक्रामयिष्यति ॥ ६९ ॥ सोहमेवमहादेवआराध्यश्चन्द्रशेखरः ॥ त्वम्मयाकामिताचापिमाकार्षीःशोकमङ्गने ॥ ७० ॥
इत्युक्त्वासमहादेवस्तत्रैवान्तरधीयत ॥ माययामोहितादेवीतत्रतारावतीसती ॥ ७१ ॥ भूमौमलिनवेशेनमन्युनासमुपावि
शत् ॥ सुतौचपतितौभूमौसादेवीनासभाजयत् ॥ ७२ ॥ भर्त्तुरागमनंशश्वत्काङ्क्षन्तीभर्ग्गभाषितम् ॥ नरराजगृहेचापिमुक्तके
शीतथास्थिता ॥ ७३ ॥ अथक्षणान्महाभागःसराजाचन्द्रशेखरः ॥ प्रासादपृष्ठमागच्छद्दृष्टुन्तारावतीन्तदा ॥ ७४ ॥ सतंप्रा
सादमारुह्यजायान्तारावतीन्तदा ॥ ददर्शपतिताम्भूमौमुक्तकेशीन्निरुत्सवाम् ॥ श्यामाननांश्वसन्तीञ्चसत्यगर्हणतत्पराम्
॥ ७५ ॥ सुतौचपतितौभूमौसूर्याचन्द्रसमौतदा ॥ वानरास्यौसदद्दशेपदक्षोभव्वृषस्यच ॥ ७६ ॥ इतिसर्वमवेक्ष्याथस
राजाचन्द्रशेखरः ॥ भीतश्चविस्मितश्चैवभार्य्याम्पप्रच्छसम्भ्रमात् ॥ ७७ ॥ किङ्किन्तारावतितवप्रवृत्तन्निर्ज्जनेगृहे ॥ को
वाधर्षितवाँस्त्वांहिशिवासिंहवधूमिव ॥ ७८ ॥ कस्यवापृथुकावेतौप्रोद्दीप्तौवानराननौ ॥ तन्मेद्रुतंसमाचक्ष्वकोवात्वाङ्का

हिमवतोगिरेः ॥ तस्याङ्गतायाम्पार्व्वत्यांशङ्करोविरहार्द्दितः ॥ १०७ ॥ कैलासाद्रिम्परित्यज्यमेरुपृष्ठन्तदाययौ ॥ तत्रा
पिशर्म्मनोलेभेपार्व्वत्याचविनाकृतः ॥ १०८ ॥ मोहितःकामदेवेनतथावैयोगनिद्रया ॥ अथैकदामेरुपृष्ठेचरन्तींसुमनोहरा
म् ॥ १०९ ॥ सावित्रीन्ददृशेशम्भुःपार्व्वत्याःसदृशीङ्गुणैः ॥ तान्दृष्ट्वामदनाविष्टःपार्व्वत्याविरहार्द्दितः ॥ ११० ॥ अवि
द्ययासमाविष्टोबभूवप्राकृतोयथा ॥ अथताम्पार्व्वतीभ्रान्त्याचरन्तीमन्वधावत ॥ १११ ॥ एहिमाम्पार्व्वतिशुभेभवद्वि
रहपीडितम् ॥ प्रहरत्येषमाङ्कामःपूर्व्ववैरमनुस्मरन् ॥ ११२ ॥ ममतत्रप्रतीकारङ्कुरुसम्प्रतिवल्लभे ॥ इत्युक्त्वाविमु
खीर्य्यान्तींसावित्रीव्वृँषभध्वजः ॥ ११३ ॥ स्कन्धेहस्तेनपस्पर्शसाचुकोपततोभृशम् ॥ अथसासम्मुखीभूत्वासावित्र्य
तिपतिव्रता ॥ ११४ ॥ इदमाहमहादेवङ्गर्हयन्तोवृषध्वजम् ॥ किन्त्वम्पशुपतेमूर्खमानुषःप्राकृतोयथा ॥ ११५ ॥
निरस्यकलहैर्भार्य्यामनुनेतुमिहार्हसि ॥ विमूढचेतनःकामैर्न्नसंस्तौषिपरस्त्रियम् ॥ ११६ ॥ असंस्तुत्वापिसंस्प्रष्टुम्माहृ
शीय्युँज्यतेतव ॥ किमहम्पार्व्वतीमूढयेनमत्स्कन्धदेशतः ॥ ११७ ॥ हस्तन्ददास्यविज्ञायसावित्रीव्विँद्धिमांसतीम् ॥
यस्मान्मानुषवन्मान्त्वमनुजानीहिवर्व्वर ॥ ११८ ॥ तस्मात्त्वम्मानुषीयोन्यांसुरतंसव्विँधास्यसि ॥ गौरीमृतेनान्यका
न्तस्त्वमन्यान्तुसमीहसे ॥ ११९ ॥ तस्यैतत्फलितम्भर्ग्गगच्छमान्त्वम्परित्यज ॥ इत्युक्त्वासागतादेवीस्वमाश्रमपदंसती

मितोपरः ॥ ७९ ॥ ॥ और्व्वउवाच ॥ ॥ एवमुक्तातुभूपेनतदातारावतीसती ॥ वृत्तान्तङ्कथयामाससकलञ्चन्द्रशेखरे ॥ ८० ॥
यथासमागतोभर्ग्गउत्तरञ्चयथोक्तवान् ॥ तत्सर्व्वङ्कथयामासबाष्पकण्ठासगद्गदा ॥ ८१ ॥ तस्यास्तद्वचनंश्रुत्वाचिन्तयँ
श्चन्द्रशेखरः ॥ किव्वृँत्तमितिविज्ञातुम्भूतलेसमुपाविशत् ॥ ८२ ॥ स्वगतश्चिन्तयन्राजाचकारेमाव्विँचारणाम् ॥ अनन्यका
न्तोगिरिशःसनान्याम्पार्व्वतीमृते ॥ ८३ ॥ कामयिष्यतितस्मात्सनभर्ग्गःपरमेश्वरः ॥ ऋषिशापोहिबलवाँस्तच्छापादे
वराक्षसः ॥ ८४ ॥ कोपिमायाबलोपेतःशङ्करच्छद्मनागतः ॥ एषासतीप्रियाभार्य्याराक्षसेनापिदूषिता ॥ ८५ ॥ कथ
ञ्चेयम्मयाग्राह्यापूर्व्ववत्सर्व्वकर्म्मसु ॥ एतौचतनयौतस्यसद्योजातौचराक्षसौ ॥ ८६ ॥ अन्यथावाकथम्भूतौशाखामृगमु
खौसुतौ ॥ एवञ्चिन्तयतस्तस्यदेवीववि नियोजिता ॥ ८७ ॥ सरस्वतीवियत्स्थातुराजानमितिचाब्रवीत् ॥ नत्वयासं
शयःकार्यस्तारावत्यान्नृपोत्तम ॥ ८८ ॥ सत्यमेवमहादेवोभार्य्यान्तवसमेयिवान् ॥ एतौचतनयौतस्यराजँस्त्वम्परिपाल
य ॥ ८९ ॥ योन्यस्तेसंशयोत्रास्तिनारदस्तव्विँनेष्यति ॥ इत्युक्त्वाविररामाशुवाग्देवीप्रियवादिनी ॥ ९० ॥ जातसम्प्रत्य
योराजाभार्य्यामाश्वासयत्तदा ॥ सुतौतुदेवदेवस्यसंस्कृत्यविधिनातदा ॥ ९१ ॥ पालयामासनृपतिराकांक्षन्नारदागमम् ॥
अथाजगामदेवर्षिर्न्नारदस्तस्यमन्दिरम् ॥ ९२ ॥ पूजाभिर्ब्बहुभिस्तन्तुप्रत्यगृह्णात्सभूपतिः ॥ पूजयित्वायथान्यायन्ताराव

त्यासमन्नृपः ॥ ९३ ॥ उच्चैःप्रासादमतुलंसुरेशभवनोपमम् ॥ आरोहयामासतदातम्मुनिश्चन्द्रशेखरः ॥ ९४ ॥ तत्रोपांशु
तदाराजासभार्यश्चन्द्रशेखरः ॥ पूर्व्वप्रवृत्तवृत्तान्तमपृच्छच्चन्द्रशेखरः ॥ ९५ ॥ पूतोस्म्यनुगृहीतोस्मिभवताब्रह्मसूनु
ना ॥ अन्तर्ब्बहिश्चविप्रेन्द्रतुङ्गप्रासादगामिना ॥ एकम्मेसंशयम्ब्रह्मंश्छेत्तुमर्हसिसद्व्रतम् ॥ ९६ ॥ त्वदन्यःसंशयस्यास्य
छेत्तानैवास्तिकुत्रचित् ॥ ऋषिशापेनभार्य्येयम्ममतारावतीसती ॥ ९७॥ बीभत्सवेशाकृतिनाधर्षिताकृत्तिवाससा ॥ तस्यात्म
जौसमुत्पन्नौसद्योजाताविमौपुनः ॥ ९८ ॥ तत्रमेसंशयःशश्वन्नित्यश्चित्तेप्रवर्त्तते ॥ अनन्यकान्तोगिरिशोगिरिजाम्पार्व्व
तीमृते ॥ ९९ ॥ कथंसङ्गमयामासमानुषींहीनजन्मजाम् ॥ कथमुत्पादयामासमनुष्यौतनयौस्वकौ ॥ १०० ॥ एतत्सर्व्वं
समाचक्ष्वयदिगुह्यन्नतेभवेत् ॥ ॥ और्व्वउवाच ॥ ॥ इतिपृष्टःसतुमुनिश्चन्द्रशेखरभूभृता ॥१०१ ॥ कथयामासतत्सर्व्वन्ना
रदोमुनिसत्तमः ॥ यथाभृङ्गिमहाकालौसमुत्पन्नौपुरातनौ ॥१०२॥ यथाशप्तौचपार्व्वत्यातौचोदाहरताय्यँथा ॥ यथापौष्य
सुतोजातोभर्ग्गःसचन्द्रशेखरः ॥ १०३ ॥ तारावतीककुत्स्थस्यगृहेगौरीयथाभवत् ॥ तत्सर्व्वङ्कथयामासनारदश्चन्द्रशेखरे
॥ १०४ ॥ इदञ्चपरमाख्यानङ्कथयामासनारदः ॥ ॥नारदउवाच॥ ॥व्याजहारयदापर्णाङ्कालोतिवृषभध्वजः ॥ १०५ ॥
तदोमातपसेयातावपुर्ग्गौरत्वकांक्षया ॥ अमर्षयुक्तावचनाच्छङ्करस्यगिरेःसुता ॥ १०६ ॥ विनीयमानाभर्ग्गेणसानुं

॥ १२० ॥ लज्जाविस्मयसंयुक्तोहरोप्यायान्निजास्पदम् ॥ अतोयम्मानुषीयोनौसुरतंशङ्करोकरोत् ॥ १२१ ॥ तस्मान्निःसं
शयंराजन्निमान्तारावतींसतीम् ॥ दयस्वतनयावेतौभर्गस्यप्रतिपालय ॥ १२२ ॥ और्व्वउवाच ॥ततःसराजाश्रुत्वैवनारद
स्यमुखात्तदा ॥ आत्मनःशम्भुरूपत्वङ्गौरीतारावतीतिच ॥ १२३॥ मनुष्ययोनावुत्पन्नावुमावृषभकेतनौ ॥ श्रुत्वातिहर्षितो
राजाविस्मितोनारदम्पुनः ॥ १२४ ॥ पप्रच्छमुनिशार्द्दूलंविज्ञातुमितिचात्मनः ॥ शङ्करत्वञ्चगौरीत्वन्तारावत्याःसमक्षतः ॥
॥ १२५ ॥ यथाहन्तन्नपश्यामितन्माञ्ज्ञापयनिश्चितम् ॥ नारदउवाच ॥ अङ्केतारावतीङ्कृत्वाअक्षिणीत्वन्निमीलय ॥ १२६ ॥
क्षणन्तारावतीचापिनिमीलयतुचक्षुषी ॥ निमील्यपश्चाद्राजेन्द्रउन्मीलयततोद्रुतम् ॥ १२७॥ ततस्तेशाम्भवञ्ज्ञानंरूपञ्चा
पिभविष्यति ॥ इत्युक्तोनारदेनाथसराजाचद्रशेखरः ॥ १२८ ॥ वामेनपाणिनाधृत्वादेवींतारावतींसतीम् ॥ चक्षुषीचतया
सार्द्धन्निमील्योन्मील्यत्क्षणात् ॥ १२९ ॥ तन्निमीलनकालेतुतस्याभूच्छम्भुरूपता ॥ गौरीरूपाभवद्देवीततस्तारावतीस
ती ॥ १३० ॥अहंशम्भुरहङ्गौरीतिविज्ञानन्तयोरभूत् ॥ ततःप्रोवाचतंशम्भुन्नारदःप्रहसन्निव ॥ १३१ ॥ शम्भुःसाक्षाद्भवा
न्गौरीदेवीतारावतीस्वयम् ॥ प्रत्यक्षन्तेमहाभागसम्पश्यात्मानमात्मना ॥ १३२ ॥ ततोराजाभवत्त्वेवमित्युक्त्वाथस्वकान्त
नुम् ॥ व्याघ्रचर्म्मपरीधानन्दशभिर्ब्बाहुभिर्युतम् ॥ १३३ ॥ त्रिशूलखट्वाङ्गधरंशक्त्यादिधृतहस्तकम् ॥ वृषभोपरिसंस्थ

न्तुजटाजूटविभूषितम् ॥ १३४ ॥ ताराञ्चविद्युद्गौराङ्गीम्पद्महस्तांशुभाननाम् ॥ वीक्ष्यसम्प्रत्ययम्प्रापज्ज्ञानेनापितदात्म
नि ॥ १३५ ॥ ततस्तुनारदः प्राहशृणुराजन्वचोमम ॥ नृयोनौवैष्णवीमायायुवाम्पूर्व्वंममोहयत् ॥ १३६ ॥ तेनतेनशरीरेणश
म्भुत्वन्नेक्षितन्त्वया ॥ अधुनादर्शितातेद्यशम्भुनाशम्भुरूपता ॥ १३७ ॥ निमील्यनयनद्वन्द्वम्पुनस्त्वय्याँहिमर्त्त्यताम् ॥ आ
साद्यमानुषम्भावमादेहान्तंस्थिरोभव ॥ १३८ ॥ तथातारावतीदेवीतूर्णम्भवतुमानुषी ॥ और्व्वउवाच ॥ आत्मनोदेवरूपत्व
ञ्ज्ञात्वादृष्ट्वाथचक्षुषा ॥ १३९ ॥ जातसम्प्रत्ययोराजान्यमीलयतलोचने ॥ ततस्तारावतीदेवीन्यमीलयतचक्षुषी ॥ पुन
स्तौमानवौजातौमहिषीनृपतिस्तथा ॥ १४० ॥ उन्मील्यतौतुनेत्राणिमानुषत्वन्तदात्मनोः ॥ दृष्ट्वाआवान्तथामर्त्यौविविज्ञा
नमभूत्तयोः ॥ १४१ ॥ ततोविमोहितौतौतुदम्पतीविष्णुमायया ॥ अहंराजाचमहिषीअहमित्यभवन्मतिः ॥१४२॥ तस्यां
सुतौतुजायायान्देवांशाविविततन्मती ॥ आवांस्थिताकलामूर्ध्निअभूताञ्जातचिह्नितौ ॥१४३॥ ततःसराजान्यगदत्तम्मुनिन्ना
रदम्मुदा॥सत्यमेतत्त्वयाप्रोक्तङ्करिष्येवचनन्तव॥१४४॥पालयिष्येशम्भुपुत्रौसत्यलभ्यसदैवहि॥किन्त्वेतौमुनिशार्दूलत्वंसं
स्कुरुयथाविधि॥१४५॥ ॥ और्व्वउवाच ॥ ॥ ततस्तयोर्न्नामचक्रेनारदोवचनान्नृप॥ज्येष्ठोभैरवनामाभूद्वीरोःपुत्रोभयङ्करः॥
॥ १४६ ॥ वेतालसदृशःकृष्णोवेतालोभूत्तथापरः ॥ इतिचक्रेतयोर्न्नामदेवर्षिर्ब्ब्रह्मणःसुतः ॥ १४७॥ अन्याँश्चसर्व्वा

न्स्संस्कारान्नारदोमुनिसत्तमः ॥ चकारक्रमशोवाक्याच्चन्द्रशेखरभूभृतः ॥ १४८ ॥ एवंसर्व्वान्स्संशयांस्तुसञ्छिद्यमुनिस
त्तमः ॥ संस्कृत्यभर्ग्गतनयौविसृष्टस्तेनभूभृता ॥ १४९ ॥ ययावाकाशमार्ग्गेणनाकपृष्ठंसनारदः ॥ नारदेतुगतेराजामु
दितश्चन्द्रशेखरः ॥ १५० ॥ तारावत्यासमंरेमेकरवीराह्वयेपुरे ॥ शम्भोरंशोहमित्येवज्ञात्वाभार्य्यांस्तारावतीतिच ॥ १५१ ॥
जातश्रद्धस्तदाराजाशशाससुचिरङ्क्षितिम् ॥ तनयौचहरस्याथतदावेतालभैरवौ ॥ १५२ ॥ ववृधातेमहात्मानौशरच्चन्द्रा
विवोद्यतौ ॥ चन्द्रशेखरभूपस्यतारावत्यान्नृपोत्तम ॥ १५३ ॥ त्रयःपुत्रामहावीर्य्यारूपसम्पत्समन्विताः ॥ ज्येष्ठस्तत्रोपरि
चरोदमनोऽलर्कएवच ॥ १५४ ॥ वेतालभैरवाभ्यान्तुज्यायांसस्तेभवंस्त्रयः ॥ एवमेतेत्रयःपुत्राश्चन्द्रशेखरभूभृतः ॥ १५५ ॥
वेतालभैरवौचापिसद्योजातौहरात्मजौ ॥ समानभोगाववृधुश्चन्द्रशेखरभूभृतः ॥ १५६ ॥ पालितास्तुसभार्य्येणसमानास
नवाहनाः ॥ इतिपञ्चसुतामहाबलाःपञ्चभूतसदृशाःकृताविधेः ॥ १५७ ॥ ववृधिरेप्रथमंसकलञ्जगत्समतीत्यमुदाबलदर्प्पिताः
॥ १५८ ॥ इतिकालिकापुराणेद्वापञ्चाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ और्व्व उवाच ॥ ॥ अथकालक्रमेणैवप्रवृद्धास्तेमहाबलाः ॥ शस्त्रा
स्त्रज्ञानकुशलाःशास्त्रार्थपरिनिष्ठिताः ॥ १ ॥ सम्प्राप्तयौवनादोप्ताद्दुर्द्धर्षाःपरिपन्थिभिः ॥ धर्म्मार्थज्ञानकुशलाब्रह्मण्याःसत्य
वादिनः ॥ २ ॥ सदासहचरौतत्रप्रीत्यावेतालभैरवौ ॥ अलर्कोदमनश्चैवतथोपरिचरस्त्रयः ॥ ३ ॥ सदासहचरानित्यम्भ्रातरश्चान्द्र

शंखराः ॥ त्रिष्वात्मजेषुनृपतेःसदोपरिचरादिषु ॥ ४ ॥ ममत्वमधिकन्नित्यम्प्रीतिस्नेहौतथाधिकौ ॥ वेतालेभैरवेचापिच
न्द्रशेखरभूभृतः ॥ ५ ॥ नास्त्येवतादृशीप्रीतिर्य्यादृशीतेषुजायते ॥ नतौदृष्ट्वासनृपतिःकदाचिच्चन्द्रशेखरः ॥ ६ ॥ अ
त्याह्लादयतेऽजस्रम्पुत्रबुद्ध्येचष्यतेथवा ॥ तौवीरौधर्म्मकुशलौमहाबलपराक्रमौ ॥ ७ ॥ त्रैलोक्यविजयेदक्षौशस्त्रास्त्रग्रामपार
गौ ॥ ताभ्याम्बिभेतिचनृपःकदाकिंवाँकरिष्यतः ॥ ८॥ वेतालभैरवावेतौमांसुतान्राज्यमेववा ॥ इतिचिन्तापरोराजानित्य
मेवनिरीक्षते ॥ ९ ॥ प्रणतावपितत्पुत्रौसम्यग्वेतालभैरवौ ॥ अथोपरिचरंराजायौवराज्येभ्यषेचयत् ॥ १० ॥ ज्यायांसमौर
सम्पुत्रंसर्व्वराजगुणैर्य्युतम् ॥ यःपश्चात्सर्व्वभूपालान्योजयिष्यतिनीतिभिः ॥ ११ ॥ राजोपरिचरोनामसर्व्वशास्त्रार्थपारगः ॥
दमनायददौदायंतथालक्षायभूमिभृत् ॥ १२ ॥ प्रभूतधनरत्नानितथासनरथान्बहून् ॥ तावतिनददौताभ्यान्दायवित्तानिभा
गशः ॥ १३ ॥ वेतालभैरवाभ्यान्तुततस्तौमन्युराविशत् ॥ मन्युनाभिपरीतौतौविचरन्तावितस्ततः ॥ १४ ॥ नभोगमीप्सितांवो
रौतपसेचकृतोद्यमौ ॥ अनूढभार्य्यौसततन्निर्ज्जनेत्रसतःसदा ॥ १५ ॥ तथाभूतौतदापुत्रौदेवौवेतालभैरवौ ॥ बुबुधेचिन्तया
क्रान्तादेवीतारावतीतदा ॥ १६ ॥ राजोपरिचराद्भ्रातापत्युश्चचन्द्रशेखरात् ॥ नोवाचकिञ्चित्सुदतीछन्नन्तौबोधयत्यपि ॥ १७ ॥
एतस्मिन्नन्तरेविद्वान्कापोतोमुनिसत्तमः ॥ चित्राङ्गदासङ्गभोगीसन्तुष्टःसुरतोत्सवैः ॥ १८ ॥ चित्राङ्गदाम्परित्यज्यसपुत्रां

सहचारिणीम् ॥ इयेषगन्तुन्तसेप्रोचेचित्राङ्गदाश्वसः ॥ १९ ॥ मुनिरुवाच ॥ चित्राङ्गदेतपस्ततुङ्गमिष्यामितपोवनम् ॥
किन्तेप्रियङ्करोमीहतन्मेवदमनोहरे ॥ २० ॥ चित्राङ्गदोवाच ॥ तुम्बुरुश्चसुवर्च्चाश्चतनयौतवसुव्रत ॥ एतयोस्त्वम्मुनिश्रेष्ठ
प्रियङ्कुरुयथोचितम् ॥ २१ ॥ माञ्चापिभगिनीगेहेसंस्थाप्यद्विजसत्तम ॥ तदातपोवनङ्गच्छयदितेरोचतेनघ ॥ २२ ॥ इति
श्रुत्वावचस्तस्याःकापोतोमुनिसत्तमः ॥ हिरण्यार्थन्तामालोच्यकुबेरसदनय्ययौ ॥ २३ ॥ प्रार्थयित्वाकुबेरन्तुसुवर्णानांश
तानिषट् ॥ निष्काणान्तुसहस्राणिसलेभेमुनिसत्तमः ॥२४॥ शवम्भाराँश्चरत्नानामानीयचसवीवधैः[1] ॥ पुत्राभ्याम्प्रददौवि
प्रोभार्य्यायैचविशेषतः ॥ २५ ॥ ततस्तांसहपुत्राभ्यान्तैर्द्धनैरपिभूरिभिः ॥ चित्राङ्गदामतेनाथपुत्रयोरपिसम्मते ॥ २६ ॥
सुवर्च्चसन्तुम्बुरुञ्चतथाचित्राङ्गदामपि ॥ आमन्त्र्यमुनिशार्दूलःकरवीरपुरय्ययौ ॥ २७ ॥ तत्रगत्वासकापोतोराजानञ्चन्द्रशे
खरम् ॥ राजोपरिचरञ्चैववाक्यमेतदुवाचह ॥ २८ ॥ इयङ्ककुत्स्थजाभूपतवैवविदितापुरा ॥ सद्योजातौतथैवास्यामेतौ
मेतनयौशुची ॥ २९ ॥ एभिर्व्वित्तैःसमम्पुत्रौममत्वम्प्रतिपालय ॥ राजोपरिचरश्चापिपालयत्विहमेसुतौ ॥ ३० ॥ अपुत्रस्य
नृपःपुत्रोनिर्धनस्यधनन्नृपः ॥ अमातुर्ज्जननीराजात्व्यतातस्यपितान्नृपः ॥ ३१ ॥ अनाथस्यनृपोनाथोत्व्यभर्तुःपार्थिवःपतिः ॥
अभृत्यस्यनृपोभृत्योनृपएवनृणांसखा ॥ ३२ ॥ सर्व्वदेवमयोराजातस्माच्वामर्थयेनृप ॥ ॥ और्व्वउवाच ॥ ॥ ततःसरा

१ विवधवीव धशब्दौउभयतोबद्धशिक्येस्कन्धवाह्यकाष्ठेवर्ततेइतिदीक्षितः ॥

जातम्प्राहमुनिमेवान्द्विजोत्तमम् ॥ ३३ ॥ करिष्येत्वद्वचश्चाहंराजोपरिचरश्चसः ॥ अथचित्राङ्गदांराजाजग्राहमुनिसम्म
ते ॥ ३४ ॥ सुतौचतस्यसधनौज्यायसेसूनवेददौ ॥ सचोपरिचरःप्रादाद्राज्यमर्द्धंसुवर्च्चसे ॥ ३५ ॥ तथैवसचिवाध्यक्ष
मकरोत्तुम्बुरुन्तदा ॥ कापोतश्चापिसुप्रीतःपुत्रार्द्धिंसमवेक्ष्यच ॥ ३६ ॥ जगामामन्त्र्यनृपतिंतपसेचतपोवनम् ॥ पथिगच्छ
न्त्सकापोतःशम्भुपुत्रौमनोहरौ ॥ ३७ ॥ एकाकिनौचरन्तौतुसूर्य्याचन्द्रमसाविव ॥ तयोर्द्ददर्शचतदावदनेवानराकृती ॥३८॥
स्मृत्वापूर्व्वकथान्दृष्ट्वातावपृच्छत्तपोधनः ॥ कौयुवान्देवगर्भाभौचरन्तौविजनेपथि ॥ ३९ ॥ एकाकिनौनरश्रेष्ठौतन्मेवदत
मीरितम् ॥ अथतौप्रणिपत्यैनंसम्भाष्यचसमञ्जसम् ॥ ४० ॥ कापोताख्यम्मुनिश्रेष्ठमूचतुःशङ्करात्मजौ ॥ चन्द्रशेखरपु
त्रौतौतारावत्यांसमुद्भवौ ॥ ४१ ॥ विद्धित्वम्मुनिशार्द्दूलप्रणमावःपदन्तव ॥ अवज्ञाव्वीक्ष्यनृपेतरावयोःसततम्मुने ॥ ४२ ॥
एकाकिनौनिर्ज्जनेषुभ्रमावोमन्युनासदा ॥ किमर्थमात्मजौपुत्रौप्रणतौसततन्नृपः ॥ ४३ ॥ अवज्ञायमहाभागदायमात्रन्न
दित्सति ॥तस्मादावान्तपस्तप्तुमिच्छावोद्विजसत्तम ॥४४॥ उपदेशप्रदानेनचानुगृह्णातिचेद्भवान् ॥ ततस्तयोर्व्वचःश्रुत्वाप्र
हस्यमुनिसत्तमः ॥ ४५ ॥ भूतभव्यभवज्ज्ञानस्ताविदम्मुनिरब्रवीत् ॥ ॥मुनिरुवाच॥ ॥ नयुवान्तनयौतस्यचन्द्रशेखर
भूपतेः ॥ ४६ ॥ तारावत्यांसमुत्पन्नौभवन्तौशङ्करात्मजौ ॥ सद्यौजातोमहावीर्य्यौवेतालत्वेचसम्मतौ ॥ ४७॥ भृङ्गिम

हाकालसञ्ज्ञौशापाद्धरणिमागतौ ॥ युवयोरत्रतेनैवनदायान्दित्सतिप्रियम् ॥ ४८ ॥ गच्छतंशरणन्तातंशङ्करंवृषभध्व
जम् ॥ सएवयुवयोःसर्व्वङ्करिष्यतिमहेश्वरः ॥ ४९ ॥ किन्त्वात्युग्रेणतपसाचिरकालफलेनवै ॥ इत्युक्त्वामुनिशार्दूलःका
पोतःपरमात्मधृक् ॥ ५० ॥ भूतभव्यभवज्ज्ञानस्ताभ्यांसर्व्वमथोविवान् ॥ यथाभृङ्गिमहाकालौशप्तावत्रनिमागतौ ॥ ५१ ॥
यथाहरश्चगौरीचपृथिवीमागतौन्द्वय ॥ तारावतीयथाशप्तातेनैवमुनिनापुरा ॥ ५२ ॥ यथातौचसमुत्पन्नौतारावत्युदरेपुरा ॥
यथावानारदेनैवसंशयच्छेदनन्नृपे ॥ ५३ ॥ तत्सर्व्वङ्कथयामासपुत्राभ्याङ्गिरिशस्यतु ॥ तच्छ्रुत्वातौमहात्मानौतदावेताल
भैरवौ ॥ ५४ ॥ मुदापरमयायुक्तौबभूवतुरनिन्दितौ ॥ मोदपूर्णौतदाभूत्वासिक्ताविवसुधारसैः ॥ ५५ ॥ पुनःपप्रच्छका
पोतव्वेतालोभैरवोपिच ॥ पितावयोर्म्महादेवस्त्वयासत्यमितीरितम् ॥ ५६ ॥ सोर्च्चनीयोयथावाभ्यांसिद्धयेमुनिसत्तम ॥
चावाभ्याय्यथाराध्योयत्रवाराधितोहरः ॥ ५७ ॥ प्रसादमेष्यत्यचिरात्तन्नोवदमहामते ॥ धन्यावनुगृहीतौनौयत्त्वयामु

निसत्तम् ॥ ५८ ॥ विज्ञापितमिदंसर्वंहच्छल्यश्चोद्धृतश्चनौ ॥ पुनरावान्दयस्वत्वङ्कृपामयमुनोश्वर ॥ ५९ ॥ प्राप्स्यावोनचि
राद्भर्गय्यँथावदतथैवनौ ॥ ॥ मुनिरुवाच ॥ ॥ शृणुत्वङ्कथयाम्यद्ययत्रचाराधितोहरः ॥ ६० ॥ नचिरादेवभवतोरायास्यतिस
मक्षताम् ॥ नित्यय्यँत्रमहादेवोवसन्भवतितुष्टये ॥ ६१ ॥ युवान्तत्सम्प्रवक्ष्यामिस्थानङ्गुह्यम्प्रकाशितम् ॥ वाराणसीना

मपुरीगङ्गातीरेमनोहरे ॥ ६२ ॥ वरणायास्तथाचासेर्म्मध्येचापाकृतिःसदा ॥ स्वयव्वृँषध्वजस्तत्रनित्यव्वँसतियोगिना
म् ॥ ६३ ॥ सदाप्रीतिकरोयोगीस्वयञ्चाप्यात्मचिन्तकः ॥ वियत्स्थासापुरीनित्यम्भर्ग्गयोगबलाद्धृता ॥ ६४ ॥ दिव्य
ज्ञानन्ददात्येषातत्रयोम्रियतेनरः ॥ तस्मैस्वयम्महादेवःसंसारग्रन्थिमुक्तये ॥ ६५ ॥ सभूत्वापरमोयोगीमृतस्तत्रभवान्त
रे ॥ सुलभेनैवनिर्व्वाणमाप्नोतिहरसम्मतः ॥६६॥ योगयुक्तोमहादेवःपार्व्वत्यासहितःसदा॥ देवगन्धर्व्वयक्षाणाम्मानुषाणा
ञ्चनित्यशः ॥६७॥ज्ञेयोहरःप्रकाशश्चक्षेत्रन्तच्चप्रकाशितम् ॥ नतत्रकामदोदेवोनचिराच्चप्रसीदति ॥६८॥ आराधितश्चिरम्प्री
त्यानिर्व्वाणायप्रसीदति ॥ गौर्य्याविवर्जितासातुपुरीतत्रनगच्छति ॥६९॥योगस्थानम्महाक्षेत्रङ्कदाचिदपिशाङ्करी ॥ आस
न्नय्युँत्रयोःक्षेत्रमिदव्वाँराणसीतुयत् ॥ ७० ॥ कथितन्नातिदूरेचवर्त्ततेनरसत्तमौ ॥ अपरन्तुप्रवक्ष्यामिगुह्यम्पीठंसदार्च्चितम्
॥ ७१॥ हरगौरीसमायुक्तम्परन्धर्म्मार्थकामदम् ॥ तपसाचातितीव्रेणचिराद्भवतिमोक्षदम् ॥ ७२ ॥ नचिरात्कामदम्पुण्यङ्क्षे
त्रम्पीठन्निगद्यते ॥ चिरात्तुकामदोदेवोनचिरायत्रज्ञानदः॥७३॥तत्क्षेत्रमितिलोकेषुगद्यतेपूर्व्ववन्दिभिः ॥ कामरूपम्महापी
ठङ्कुत्याद्गुह्यतमम्परम् ॥ ७४ ॥ सदासन्निहितस्तत्रपार्व्वत्यासहशङ्करः ॥ नचिरात्पूजितोदेवस्तस्मिन्पीठेप्रसीदति॥७५॥
पार्व्वतीचानुगृह्णातिभर्ग्गभक्तन्तुतत्रवै ॥ ददातिनचिरात्काममभक्तायपरमेश्वरः ॥७६॥ तन्तुपीठम्प्रवक्ष्यामिशृणुतंसाम्प्रत

य्युँवाम् ॥ करतोयानदीपूर्व्वंय्यावद्दिक्करवासिनीम् ॥७७॥ त्रिंशद्योजनविस्तीर्णय्योजनैकशतायतम् ॥ त्रिकोणङ्कृष्णवर्णञ्च
प्रभूताचलपूरितम् ॥७८॥ नदीशतसमायुक्तङ्कामरूपम्प्रकीर्तितम् ॥शम्भुनेत्राग्निनिर्द्दग्धः कामःशम्भोरनुग्रहात् ॥७९ ॥ त
त्ररूपय्यँतःप्रापकामरूपन्तन्तोऽभवत् ॥ तस्यपीठस्यवायव्यान्नैर्ऋत्याम्मध्यभागतः ॥८०॥ ऐशान्याञ्चतथाग्नेय्याम्मध्यपा
र्श्वेचशङ्करः॥स्वमाश्रमपदङ्कृत्वापञ्चस्थानेषुशोभनम्॥८१॥नित्यव्वँसतितत्रापिपार्व्वत्यासहनर्म्मभिः ॥ मध्येदेवीगृहन्तत्र
तदधीनस्तुशङ्करः ॥ ८२ ॥ नीलाख्येपर्व्वतश्रेष्ठेपार्व्वतीतत्रतिष्ठति ॥ ऐशान्यान्नाटकेशैलेशङ्करस्यमहाश्रमम् ॥ ८३ ॥ नि
त्यव्वँसतितत्रेशस्तदधीनाचपार्व्वती ॥ अपरेचाश्रमाःसन्तिहरगौर्य्योःसदातनाः ॥ ८४ ॥ नैतयोःसदृशःकोपिविद्यतेशङ्क
राश्रमः ॥ यत्राराध्योमहादेवोऽभवद्यान्नरसत्तमौ ॥ ८५ ॥ तत्स्थानम्मनसादायप्रसादयवृषध्वजम् ॥ वेतालभैरवावूचतुः ॥
कामरूपङ्गमिष्यावोरहस्यन्नाटकाचलम् ॥ ८६ ॥ गौरीहरौस्थितौयत्रनित्यंसन्निहितौमुने ॥ आराधनीयोभूतेशोऽद्यवश्यमि
हचावयोः ॥ ८७ ॥ यथैवाराधयिष्यावस्तथाचक्ष्वद्विजोत्तम ॥ येनमन्त्रेणवादेवोनचिरात्तुप्रसीदति ॥ ८८ ॥ तत्त्वव्वँदमहा
भागानुग्रहोस्त्यावयोर्य्यदि ॥ ॥ऋषिरुवाच ॥ ॥ नाटकम्पर्व्वतश्रेष्ठङ्गच्छतन्नरसत्तमौ ॥ ८९ ॥ तत्रनित्यम्महादेवोरमतेऽ
पर्णयासह ॥ सन्ध्याचलेतत्रमुनिराराधयतिशङ्करम् ॥ ९० ॥ वशिष्ठोब्रह्मणःपुत्रस्तय्युँवामनुगच्छतम् ॥ सचमन्त्रंसतन्त्र

श्वहराराधनकर्म्मणि ॥ ९१ ॥ ज्ञापयिष्यतिवाम्पृष्टःकिलवेतालभैरवौ ॥तपसेगन्तुमिच्छामिनेदानीङ्कालयापना ॥ ९२ ॥ यु
ज्यतेममतस्मान्मान्त्यजताँव्वीरसत्तमौ ॥ एवमुक्त्वामुनिश्रेष्ठःकापोतःप्रययौवनम् ॥ ९३ ॥ तौतम्मुनिन्नमस्कृत्यजग्मतु
र्भ्भवनन्निजम् ॥ अथतौसमयङ्कृत्वादीक्षितौतपसेतदा ॥ ९४ ॥ पितरावप्यनुज्ञाप्यभ्रातॄनन्यांश्चबान्धवान् ॥ प्रस्थान
ङ्कामरूपायचक्रतुस्तौमहामती ॥ ९५ ॥ तौगच्छन्तौपरिज्ञायशङ्करोपिसहोमया ॥ देवान्त्सर्व्वानुवाचेदंसान्त्वयन्निवसे
न्द्रकान् ॥ ९६ ॥ ॥ ईश्वरउवाच ॥ ॥ पुत्रौमेतपसेयातःसाम्प्रतंसुरसत्तमाः ॥ ममाराधनचित्तौतुतौदयध्वंसुरेश्वराः
॥ ९७ ॥ संस्कृत्यतपसाचैतौपुत्रौवेतालभैरवौ ॥ गाणपत्येनियोक्ष्यामितौसंस्कुर्व्वन्तुनिर्ज्जराः ॥ ९८ ॥ अनेनैवशरीरेण
तौगणेशत्वमाप्स्यतः ॥ तपसातुतयोःकायौभावन्त्यक्त्वातुमानुषम् ॥ ९९ ॥ यथाप्रुतःसौरभावव्विँधास्यामित्यहन्तथा ॥
इत्युक्त्वावामदेवोपिपार्व्वत्यासहपुत्रकौ ॥ १०० ॥ गच्छन्तौवियतास्नेहात्पश्चादनुययौशिवः ॥ शक्राद्यास्त्रिदशाःसर्व्वैदि
क्पालाश्चतथापरे ॥ १ ॥ सर्व्वैहरञ्चानुजग्मुरनुगच्छन्तमात्मजौ ॥ अथतौतुनदीम्प्राप्यकृष्णाजिनधरौतदा ॥ २ ॥ आददे
तापसम्भावङ्गङ्गातुल्यान्दृषद्वतीम् ॥ तपस्विनौतौदेवेनत्र्यम्बकेनाथपालितौ ॥ ३ ॥ देवैःसहतदायातौकामरूपाह्वयाश्रमम् ॥
आसाद्यकामरूपन्तुकरतोयानदीजले ॥ ४ ॥ उपस्पृश्यततस्तौतुनन्दिकुण्डन्नृपोत्तम ॥ तत्रस्नात्वाप्युपस्पृश्यनदीङ्त्वाजटो

द्भवाम् ॥ ५॥ तत्राप्युपस्पृश्यचतौनन्दिनन्तपसाधृतम् ॥ प्रणम्यजल्पिषन्देवञ्गमतुर्न्नाटकाचलम् ॥ ६ ॥ नाटकाचलमा
साद्यप्रणम्यवृषभध्वजम् ॥ आराधनोपदेशायकापोतस्यवचःस्मरन् ॥ ७ ॥ जग्मतुर्दक्षिणाङ्काष्ठाय्यँत्रसन्ध्याचलः
स्थितः ॥ कान्तानामनदीतत्रवशिष्ठेनावतारिता ॥ ८ ॥ तस्यास्तीरेमहाशैलःस्निग्धच्छायालतातरुः ॥ सन्ध्याव्वँशिष्ठःकृत
वाँस्तत्रयस्माद्विधेःसुतः ॥ ९ ॥ अतःसन्धाचलन्नामतस्यगायन्तिदेवताः ॥ तत्रासाद्यवशिष्ठन्तुसाक्षादिवहुताशनम् ॥
॥ ११० ॥ आराधयन्तङ्गिरिशन्ध्यानसय्युँक्तमानसम् ॥ तपःश्रियादीप्यमानन्द्वितीयमिवभास्करम् ११ ॥ प्रणम्यपु
रतस्तस्यतदावेतालभैरवौ ॥ प्राञ्जलीतस्थतुर्भूपविनयानतकन्धरौ ॥ १२ ॥ इदञ्चाप्यूचतुस्तौतुप्रणमन्तौविधेःसुत
म् ॥ तारावत्यांसमुत्पन्नौचन्द्रशेखरभूभृतः ॥ १३ ॥ क्षेत्रेभर्ग्गस्यतनयावावाञ्जानीहिमानुषौ ॥ आराधयितुमिच्छावो
हरङ्कार्य्यस्यसिद्धये ॥ १४ ॥ वाञ्छितस्ययदित्वन्नावनुगृह्णासिसुव्रत ॥ तयोस्तद्वचनंश्रुत्वावशिष्ठोमुनिसत्तमः ॥ १५॥
उवाचेतियुवाञ्ज्ञातौमयासत्यंहरात्मजौ ॥ हरस्याराधनङ्कार्य्यय्युँवयोर्न्नरसत्तमौ ॥ १६ ॥ तत्रास्तिममकृत्यङ्किन्तद्ब्रू
षतमनिन्दितौ ॥ वृषध्वजाराधनाययुवयोस्तुप्रयोजनम् ॥ १७ ॥ विद्यतेतन्निमित्तय्यँत्तत्सिद्धमवधारय ॥ वेतालभैरवा
वूचतुः ॥ येनमन्त्रेणनचिरात्सम्यगाराधितोहरः ॥ १८ ॥ प्रसादमेष्यत्यवनौतन्नौवदमहामुने ॥ यथाचाराधयिष्या

वस्तन्त्रय्यँद्यादृशःक्रमः ॥ १९ ॥ तत्सर्व्वम्मुनिशार्दूलवक्तुमर्हसिचोत्तरम् ॥ यथात्वदुपदेशेनप्राप्स्यावोनचिराद्वरम्
॥ १२० ॥ तथाचावाम्मुनिश्रेष्ठत्वनुशाधिनतौत्वयि ॥ ॥ वशिष्ठउवाच ॥ ॥ प्रसन्नएवभवतोर्व्वृषकेतुःसहोमया ॥ २१ ॥
नचिरात्स्वयमेवात्रप्रसादश्चसमेष्यति ॥ सर्व्वैर्देवगणैःसार्द्धंसभार्य्योवृषभध्वजः ॥ २२ ॥ आकाशमार्ग्गेणायातः
पालयन्स्वसुतौगृहात् ॥ किन्तुमानुषदेहौवामविवास्यतपोव्रतैः ॥ २३ ॥ स्वयन्नेष्यतिकैलासङ्गाणपत्येनियोज्यवा
म् ॥ अहञ्चाप्युपदेक्ष्यामियथाभर्ग्गय्युँवान्द्रुतम् ॥ २४ ॥ प्राप्स्यथःपार्व्वतीपुत्रावेकाग्रंशृणुतन्तुतत् ॥ चिरात्प्रसीदति
ध्यानान्नचिराद्ध्यानपूजनात्॥ २५ ॥ तस्माद्ध्यानम्पूजनञ्चकथयाम्यद्यतत्त्वतः ॥ तेजोमयःसदाशुद्धोज्ञानामृतविवर्द्धितः
॥ २६ ॥ जगन्मयश्चिदानन्दःशौरिब्रह्मस्वरूपधृक् ॥ महादेवोमहामूर्त्तिर्म्महायोगयुतःसदा ॥ २७ ॥ जगन्तितस्यरू
पाणितानिकोगदितुङ्क्षमः ॥ किन्तुयैरिहरूपैस्तुविचरत्येषशङ्करः ॥ २८ ॥ तेषाय्यँन्मेज्ञानगम्यन्तत्रेष्टन्निगदामिवाम् ॥
प्रथमंशृणुतम्मन्त्रन्ततोनुध्यानगोचरम्॥ २९ ॥ ततःक्रमन्तुपूजायाःक्रमाद्वृत्तन्नरर्षभौ ॥ समस्तानांस्वराणान्तुदीर्घाःशे
षाःसबिन्दुकाः ॥१३०॥ ऋलृशून्याःसार्द्धचन्द्राउपान्तेनाभिसंहिताः ॥ एभिःपञ्चाक्षरैर्म्मन्त्रम्पञ्चवक्त्रस्यकीर्तितम् ॥ ३१ ॥
क्रमात्सम्मदसन्दोहनादगौरवसञ्ज्ञकाः ॥ प्रासादस्तुभवेच्छेषःपञ्चमन्त्राःप्रकीर्त्तिताः ॥ ३२ ॥ एकैकेनतथैकैकव्वँक्त्र

म्मन्त्रेणपूजयेत् ॥ एकंसमुदितङ्कृत्वापञ्चभिर्व्वाप्रपूजयेत् ॥ ३३ ॥ प्रासादेनाथवापञ्चवक्त्रन्देवम्प्रपूजयेत् ॥ सम्मदा
दिषुमन्त्रेषुप्रासादस्तुप्रशस्यते ॥ ३४ ॥ शम्भोःप्रसादनेनैषयस्माद्धृतस्तुमन्त्रकः ॥ तेनप्रासादसञ्ज्ञोयङ्कथ्यतेमुनि
सत्तमैः ॥ ३५ ॥ तस्मात्सर्व्वेषुमन्त्रेषुप्रासादःप्रीतिदःपरः ॥ आमोदकारकःशम्भोर्म्मन्त्रःसम्मदउच्यते ॥ ३६ ॥ म
नःप्रपूरणाच्चापिसन्दोहःपरिकीर्त्तितः ॥ आकर्षकोभवेन्नादोगुरुत्वाद्धारवाह्वयः ॥ ३७ ॥ एतद्व्यस्तंसमस्तञ्चमन्त्रंशम्भोः
प्रकीर्त्तितम् ॥ पञ्चाक्षरन्तुयन्मन्त्रम्पञ्चचक्रस्यकीर्त्तितम् ॥ ३८ ॥ युदान्तेनैवमन्त्रेणआराधयतमोश्वरम् ॥ ध्यानञ्चशृणु
वक्ष्यामिसम्यग्वेतालभैरवौ ॥ ३९ ॥ पञ्चवक्त्रम्महाकायञ्जटाजूटविभूषितम् ॥ चारुचन्द्रकलायुक्तम्मूर्द्धिन्व्यालौघभूषितम्
॥ १४० ॥ बाहुभिर्द्दशभिर्युक्तव्व्याघ्रचर्म्मवराम्बरम् ॥ कालकूटधरङ्कण्ठेनागहारोपशोभितम् ॥ ४१ ॥ किरीटबन्ध
नम्बाहुभूषणञ्चभुजङ्गमान् ॥ बिभ्रतंसर्व्वगात्रेषुज्योत्स्नार्प्पितसुरोचिषम् ॥ ४२ ॥ भूतिसल्लिप्तसर्व्वाङ्गमेकैकत्रिभि
स्त्रिभिः ॥ नेत्रैस्तुपञ्चदशभिज्ज्योतिष्मद्भिर्व्विराजितम् ॥ ४३ ॥ वृषभोपरिसंस्थन्तुगजकृत्तिपरिच्छदम् ॥ सद्योजातव्वामि
देवमघोरञ्चततःपरम् ॥ ४४ ॥ तत्पुरुषन्तथेशानम्पञ्चवक्त्रम्प्रकीर्त्तितम् ॥ सद्योजातम्भवेच्छुक्लंशुद्धस्फटिकसन्निभम् ॥
॥ ४५ ॥ पीतवर्णन्तथासौम्यव्वामदेवम्मनोहरम् ॥ नीलवर्णमघोरन्तुदंष्ट्राभीतिविवर्द्धनम् ॥ ४६ ॥ रक्तन्तत्पुरुषन्देवन्दि

व्यमूर्त्तिमनोहरम् ॥ श्यामलञ्चतथेशानंसर्व्वदेवशिवात्मकम् ॥ ४७ ॥ चिन्तयेत्पश्चिमेत्वाद्यन्द्वितीयन्तुतथोत्तरे ॥ अघोर
न्दक्षिणेदेवम्पूर्व्वेतत्पुरुषन्तथा ॥ ४८ ॥ ईशानंमध्यतोज्ञेयश्चिन्तयेद्भक्तितत्परः ॥ शक्तित्रिशूलखट्वाङ्गवरदाभयदंशिवम् ॥
॥४९॥ दक्षिणेष्वथहस्तेषुवामेष्वपिततःशृणु ॥ अक्षसूत्रम्बीजपूरम्भुजगण्डमरूत्पलम्॥१५०॥अष्टैश्वर्य्यसमायुक्तन्ध्याये
त्तुहृद्गतंशिवम् ॥ एवंविधंचिन्तयेद्ध्यानेमहादेवञ्जगत्पतिम् ॥ ५१ ॥ चिन्तयित्वाद्वारपालान्गणेशादीन्प्रपूजयेत् ॥ विशुद्धि
म्पञ्चभूतानाञ्चिन्तयित्वाततोमुहुः ॥ ५२ ॥ अष्टमूर्त्तीस्ततःपश्चात्पूजयेदष्टनामभिः ॥ आसनानिचतस्याथपूजयेत्सकला
नितु ॥ ५३ ॥ भावादीन्यष्टपुष्पाणिहृद्देवविनियोजयेत् ॥ नाराचमुद्रयातस्यताडनम्परिकीर्तितम् ॥ ५४ ॥ विसर्ज्जनन्धे
नुमुद्रान्दर्शयित्वाविधानतः ॥ निर्म्माल्यधारिणङ्कुर्य्यात्सदाचण्डेश्वरन्धिया ॥ ५५ ॥ प्रत्येकम्पञ्चभिर्म्मन्त्रैरङ्गादीनिप्रमा
र्ज्जयेत् ॥ सम्मदादिभिरेतस्यपूर्व्वोक्तैर्न्नरसत्तमौ ॥५६॥ बालाञ्ज्येष्ठान्तथारौद्रीङ्कालीञ्चतदनन्तरम् ॥ कलविकरिणीन्देवी
म्बलप्रमथिनीन्तथा ॥ ५७॥ दमनींसर्व्वभूतानाम्मनोन्मथिनीन्तथैवच ॥ अष्टौताःपूजयेद्देवीःक्रमाच्छम्भोश्चप्रीतये॥५८॥
एवंशिवम्पूजयित्वाध्यानतत्परमानसः ॥ जपेन्मालांसमादायमन्त्रन्ध्यात्वातथागुरुम् ॥ ५९ ॥ एकम्पञ्चाक्षरम्मन्त्रमेकम्प्रा
सादमेववा ॥ तच्छक्तमनसौजप्त्वाशीघ्रंसिद्धिमवाप्स्यथ॥१६०॥इतिवाङ्कथितम्मन्त्रन्ध्यानपूजाक्रमन्तथा ॥ गच्छतन्नाटकं

१ अस्यद्धानामितिशेषः ।

शैलन्तत्राराधयतंहरम् ॥ ६१ ॥ वेतालभैरवावूचतुः ॥ पञ्चाक्षरस्तुमन्त्रोयन्धृतस्त्वत्सम्मतेमुने ॥ अनेनैवहरन्देवम्पूज
यिष्यावहेमुदा ॥ ६२ ॥ इत्युक्त्वातन्नमस्कृत्यतदावेतालभैरवौ ॥ जग्मतुर्न्नाटकंशैलव्वँशिष्ठानुमतेनृप ॥ ६३ ॥ तत्रास्तिस
रसीरम्यासुसम्पूर्णामनोहरा ॥ सर्व्वदास्वच्छसलिलाप्रफुल्लकमलोत्पला ॥ ६४ ॥ तस्यास्तीरेतुविपुलःसुमनोज्ञोहरा
श्रमः॥ सर्व्वदादानवैर्देवैःकिन्नरैःप्रमथैस्तथा॥६५॥ रक्ष्यतेनृपशार्दूलनृत्यवादनतत्परैः॥यस्मान्नटतितत्रेशोनित्यङ्कौतुकत
त्परः॥ ६६ ॥ तस्मान्नाटकनाम्नासौशैलराजःप्रगीयते॥ छत्राकारन्तुतंशैलम्मनोज्ञंशङ्करप्रियम् ॥ ६७ ॥ आसाद्ययत्रसर
सीतत्रगत्वातुतौतदा ॥ नचैवापश्यतान्तत्रहराश्रममनुत्तमम् ॥ ६८ ॥ गन्तुञ्चैवाश्रमस्थानंतौनैवाशकतान्नृप ॥ ततोहर
म्प्रणम्याशुतस्यैवसरसस्तटे ॥ ६९ ॥ निर्म्मायस्थण्डिलञ्चारुवशिष्ठोक्तक्रमेणतु ॥ हरमाराद्धुमारेभेवेतालोभैरवोपिच
॥ १७० ॥ आराधयन्तौभूतेशन्तौतदाशङ्करात्मजौ ॥ दृष्ट्वाहरोदेवगणैःसार्द्धन्तास्मिंस्तुपर्व्वते ॥ ७१ ॥ अधित्यकायांन्यवस
त्स्वाश्रमेपर्णयासह ॥ अधोभागेसरस्तीरेतपस्यन्तौहरात्मजौ ७२ ॥ स्थितौदृष्ट्वादेवगणैःसहितःशङ्करःस्थितः ॥ नृत्यमर्द
लशब्दोयोहरस्यसततम्भवेत् ॥७३॥ शृणुतस्तौतदाशब्दन्तन्तुन्द्रष्टुन्नलभ्यते॥हरेणाधिष्ठितःशैलःसर्व्वदेवगणैःसह॥७४॥
राजतेस्मतदाभूपसुधर्म्मावासवीयथा ॥ ध्यायतोस्तुतदातत्रभगवान्वृषभध्वजः ॥ ७५ ॥ नचिरादेवतस्याभूद्ध्यानमा

गेषुनिश्चलः ॥ तौपूजयन्तौगच्छन्तौस्थितौवाचन्द्रशेखरम् ॥ ७६ ॥ नैवतत्यजतुश्चित्तैःकदाचिदपिभूमिप ॥ पञ्चाक्षरेणमन्त्रे
णपूजयन्तौवृषध्वजम् ॥७७॥ व्यतिचक्रमतुस्तौतुसहस्त्रम्परिवत्सरान्॥ निराहारौयताहारौहरसंसक्तमानसौ॥ ७८॥तपसा
निन्यतुर्व्वर्षान्त्सहस्त्रञ्चैकवर्षवत् ॥ गतेवर्षसहस्त्रेतुस्वयमेववृषध्वजः ॥ ७९ ॥ प्रसन्नस्तुतयोर्भूत्वाप्रत्यक्षत्वमुपागतः॥ त
न्तुप्रत्यक्षतोदृष्ट्वातदावेतालभैरवौ ॥ १८० ॥ वृषध्वजन्तुष्टुवतुर्ध्यानगम्यम्पुरः स्थितम् ॥ हररूपय्यँथाध्यातंदद्दृतन्तेजसो
ज्ज्वलम् ॥८१ ॥ तथादृष्ट्वाततस्ताभ्याव्वँशिष्ठोमनसानुतः ॥ वेतालभैरवावूचतुः ॥ पञ्चवक्त्रम्महाकायंसर्व्वंज्ञानमयम्परम्
॥८२॥ संसारसागरत्राणम्प्रणमावोवृषध्वजम् ॥ त्वम्परःपरमात्माचपरेशःपुरुषोत्तमः ॥८३॥त्वङ्कूटस्थोजगद्व्यापीप्रधानः
परमेश्वरः ॥ रूपात्मात्वम्महातत्त्वन्तत्त्वज्ञानालयःप्रभुः ॥ ८४ ॥ साङ्ख्ययोगालयःशुद्धोगुणत्रयविभागवित् ॥ त्वन्नित्य
स्त्वमनित्यश्चजगत्कर्त्तालयःस्मृतः ॥ ८५ ॥ एकोनेकस्वरूपश्चशान्तचेष्टोजगन्मयः ॥ निर्व्विकारोनिराधारोनित्यानन्दः
सनातनः ॥ ८६ ॥ त्वव्विँष्णुस्त्वम्महेन्द्रस्त्वम्ब्रह्मात्वञ्जगताम्पतिः ॥ योरूपरूपेश्वररत्नमालःसम्भूतिभूतोनिरवग्रहश्च
॥ ८७ ॥ काङ्क्षयावतीर्णाविगतप्रमाथीयोगेश्वरोज्ञानगतिस्त्वगम्यः॥ प्रमेयरूपात्मधराधराभोभोगीन्द्रबद्धामृतभोगतन्त्रः
॥ ८८ ॥ सूक्ष्माक्षरस्तत्त्वविदप्रमाथीत्वन्देवदेवःशरणंसुराणाम् ॥ विकल्पमानापरिहीनदेहःशुद्धान्तधामानुगतैकविद्यः ॥

॥ ८९ ॥ वर्द्धिष्णुरुग्रः पुरुषः परात्मात्वमिन्द्रियौघस्यविचारबुद्धिः ॥ त्वन्नाथनाथः प्रभवः परेषाङ्गतिर्म्मुनीनाम्परयोगिग
म्यः ॥ १९० ॥ त्वम्भूधरोभोगधरोह्यनन्तोविश्वात्मनस्तेबहवः प्रपञ्चाः ॥ ज्ञानामृतस्यन्दकपूर्णचन्द्रोमोहान्धकारस्य
परःप्रदीपः ॥ ९१ ॥ भक्तात्मजानाम्परमःपितात्वङ्कामेचपञ्चाननरूपधारी ॥ शास्ताखिलानाम्प्रथमोविवस्वाँस्तनूनपात्त्व
न्तनुषेगुणौघान् ॥९२॥ त्वम्ब्रह्मरूपेणकरोषिसृष्टिंव्विँष्णुस्वरूपैःसततंस्थितिश्च ॥ त्वंरुद्ररूपीकुरुषेतथान्तन्त्वत्तोनचान्य
जगतीहवस्तु ॥९३॥ त्वंरात्रिनाथोदिवसेश्वरश्चत्वमग्निरापःपवनोधरित्री ॥ नभस्तथात्वङ्क्रतुतन्त्रहोतात्वमष्टमूर्त्तिर्भवतो
नचान्यत् ॥९४॥अनन्तमूर्त्तिस्त्विहमुख्यभावान्निगद्यतेचाष्टमयीत्रिमूर्त्तिः॥अनन्तमूर्तेःकथमन्यथातेसङ्ख्यास्तिरूपस्ययद
ष्टमूर्त्तिः॥९५॥त्वन्त्र्यम्बकस्त्वन्त्रिपुरान्तकश्चत्वंशम्भुरीशःशमनोविधाता॥सहस्रबाहुश्चहिरण्यबाहुःसहस्रमूर्त्तिस्त्विहपञ्च
वक्त्रः ॥९६॥ प्रभूतनेत्रस्तुषडर्द्धनेत्रःप्रभूतबाहुर्द्दशबाहुरीशः ॥ प्रभूतभोगीमितभोगयुक्तोभोग्यानुसारोनिरवग्रहश्च ॥९७॥
नित्यानित्यस्वरूपायनित्यधामस्वरूपिणे ॥ परतत्त्वस्वरूपायनमस्तुभ्यंशिवात्मने ॥ ९८ ॥ नान्तल्लिँङ्गस्ययस्यात्तंव्विँ
ष्णुनाब्रह्मणातव ॥ तस्यावाङ्किंव्विँधास्यावःस्तुतिवाक्यंवृषध्वज ॥ ९९ ॥ स्वरूपर्य्यँस्यजानन्तिनदेवानापिदानवाः ॥ बा
लावावाङ्कथन्तुत्वांस्तोष्यावःपरमेश्वर ॥ २०० ॥ भक्तिमात्रेणदेवेशतवावांवृषभध्वज ॥ कुर्व्वःप्रणामङ्गौरीशभूयस्तुभ्य

न्नमोनमः ॥ १ ॥ ॥ और्व्वउवाच ॥ ॥ इतिस्तुतोमहादेवोवेतालेनमहात्मना ॥ भैरवेणापिराजेन्द्रप्रसन्नःप्राहतौतदा ॥ २ ॥
॥ ॥ भगवानुवाच ॥ ॥ तुष्टोस्मियुवयोः पुत्रौवृणुतव्वाँञ्छितव्वँरम् ॥ दास्यामियुवयोरिष्टम्प्रसन्नोहन्तपोव्रतैः
॥ ३ ॥ स्तुतिभिश्चदमैश्चापितथैकान्तानुचिन्तनैः ॥ मुहुर्म्मुहुःसुप्रसन्नइष्टन्दास्यामिवांसुतौ ॥ ४ ॥ वेतालभैरवावूच
तुः ॥ तुष्टोसियदिसत्यन्नौसत्यमावांसुतौयदि ॥ वृषध्वजतवैवेहतदेष्टन्देहिनौवरम् ॥ ५ ॥ सुतभावेनपितरम्भवन्तञ्ज
गताम्पतिम् ॥ नित्यय्यँथावगच्छावस्तथादेहिवरन्तुनौ ॥ ६ ॥ नराज्यमभिकाङ्क्षावोनधनन्नान्यदेववा ॥ तद्भक्त्यासे
वनङ्कन्तुतवेच्छावोवृषध्वज ॥ ७ ॥ त्वत्पादपङ्कजद्वन्द्वेनित्यम्ममधुकरात्मताम् ॥ त्वयिप्रसन्नेनेत्राणाय्युँगलेप्राप्नुतांसदा
॥ ८ ॥ इतोन्यथात्वच्चिन्ताभिस्त्वद्ध्यानैस्त्वत्प्रपूजनैः ॥ कल्पकोटिसहस्राणियान्तुसम्यक्तथावयोः ॥ ९ ॥ ततस्तद्वचनं
श्रुत्वामहादेवोहसन्निव ॥ सर्व्वैर्देवगणैःसार्द्धन्देवत्वमकरोत्तयोः ॥ २१० ॥ देवेन्द्रसम्मतेनैवसुधामानीयनाकतः ॥ वेताल
भैरवौतान्तुपाययामासशङ्करः ॥ ११ ॥ पीतेमृतेततस्तौतुमर्त्त्यतान्नरसत्तमौ ॥ अमर्त्यताम्परित्यज्यप्रापतुःशिवशक्तितः
॥ १२ ॥ तस्मिन्कालेस्वपन्तौतुदिव्यज्ञानबलान्वितौ ॥ दिव्यरूपोपसम्पन्नौबभूवतुररिन्दमौ ॥ १३ ॥ अभिन्नेनैवदेहेन
देवत्वङ्गतयोस्तयोः ॥ प्राहशम्भुस्तदातौतुसुतौपरमहर्षितौ ॥ १४ ॥ ॥ भगवानवाच ॥ ॥ अहन्तुष्टस्तुयुवयोःपा

र्व्वतीन्दयितामम ॥ मद्दत्तङ्कामममाकाङ्क्षन्नाराधयतमीश्वरीम् ॥ १५ ॥ तामृतेतुनशक्नोमिदातुमिष्टंसनातनम् ॥ सेवितुञ्चसुतौ
नित्यन्तस्मात्तांशरणव्व्रँज ॥ १६ ॥ अचिराद्येनभावेनप्रीतिन्देवीगमिष्यति ॥ अत्रवातत्रवागत्वातेनभावेनचार्च्चताम् ॥
॥ १७ ॥ इतिकालिकापुराणेत्रिपञ्चाशत्तमोध्यायः ॥ ५३ ॥ ॥ छ ॥ ॥ और्व्वउवाच ॥ एवव्वँदतिभूतेशेतदावेतालभैरवौ
॥ प्राहतुर्व्योमकेशन्तौहर्षोत्फुल्लविलोचनौ ॥ १ ॥ वेतालभैरवावूचतुः ॥ पार्व्वत्यानहिजानीवोध्यानम्मन्त्रव्विँधिन्तथा ॥
कथमाराधयिष्यावोभगवन्सम्यगुच्यताम् ॥ २ ॥ श्रीभगवानुवाच ॥ महामायाविधिम्मन्त्रङ्कल्पञ्चभवतोःसुतौ ॥ उपदे
क्ष्यामितत्त्वेनयेनसर्व्वम्भविष्यति ॥ ३ ॥ और्व्वउवाच ॥ इत्युक्त्वासमहामायाध्यानम्मन्त्रव्विँधिन्तथा ॥ कथयामास
गिरिशस्तयोःसम्यङ्नृपोत्तम ॥ ४ ॥ यदष्टादशभिःपश्चात्पटलैश्चसभैरवः ॥ सनिर्ण्णयंविधिङ्कल्पन्निबबन्धशिवामृते ॥ ५ ॥
सगरउवाच ॥ कीदृङ्मन्त्रम्पुराशम्भुरवोचद्दुभयोस्तयोः ॥ येनाराध्यमहामायान्तौगणेशत्वमापतुः ॥ ६ ॥ सकल्पंसरह
स्यञ्चसाङ्गन्तच्छ्रोतुमुत्सहे ॥ और्व्वउवाच ॥ दशाष्टपटलैर्य्यत्तुनिबबन्धसभैरवः ॥७॥ बहुत्वाङ्गदितुन्तस्यचिरेणैवतुशक्य
ते ॥ तस्मात्सद्यःसमुद्धृत्ययन्महादेवभाषितम् ॥८॥ सङ्क्षेपात्कथयेतत्त्वन्तच्छृणुष्वनृपोत्तम ॥ पृच्छन्तौपार्व्वतीमन्त्रन्तदावेताल
भैरवौ ॥९॥ जगादसमहादेवःशृणुतम्मन्त्रकल्पकौ ॥ श्रीभगवानुवाच ॥ शृणुमन्त्रम्प्रवक्ष्यामिगुह्याद्गुह्यतमम्परम् ॥ १० ॥

अष्टाक्षरन्तु वैष्णव्यामहामायामहोत्सवम् ॥ अस्यश्रीवैष्णवीमन्त्रस्यनारदऋषिःशम्भुर्देवताअनुष्टुप्छन्दः सर्व्वार्थसाधनेविनियोगः ॥ हान्तान्तपूर्व्वोरान्तश्चनान्तोणान्तस्तथैवच ॥ ११॥ कैकादशाद्यादिषष्ठःखान्तोबिन्दुपुरःसरः ॥ एभिरष्टाक्षरैर्म्मन्त्रंशोणपत्रसमप्रभम्॥१२॥ओङ्कारम्पूर्व्वतःकृत्वाजप्यंसर्व्वैस्तुसाधकैः ॥ महामन्त्रमिदङ्कुर्य्यंवैष्णवीमन्त्रसञ्ज्ञकम्॥ ॥१३॥मन्त्रङ्कलेवरगतन्तस्मादङ्गम्प्रकीर्त्तितम् ॥ महादेवस्योर्द्ध्वमुखम्बीजमेतत्प्रकीर्त्तितम् ॥ १४ ॥ ओङ्काराक्षरबीजञ्चयकारःशक्तिरुच्यते ॥ सबीजङ्कथितम्मन्त्रङ्कल्पञ्चशृणुभैरव ॥ १५ ॥ तीर्थेनद्यान्देवखातेगर्त्तप्रस्रवणादिके ॥ परकीयेतरेतोयेस्नानम्पूर्व्वंसमाचरेत् ॥ १६ ॥ आचान्तःशुचिताम्प्राप्तःकृतासनपरिग्रहः ॥ उत्तराभिमुखोभूत्वास्थण्डिलम्मार्ज्जयेत्ततः ॥ १७ ॥ करेणानेनमन्त्रेणयूंःक्षित्याइतिस्वयम् ॥ ओयूंसइतिमन्त्रेणआशापूरणकेनच ॥ १८ ॥ तोयैरभ्युक्षयेत्स्थानम्भूतानामपसारणे ॥ ततःसव्येनहस्तेनगृहीत्वास्थण्डिलंशुचिः ॥ १९ ॥ मन्त्रील्लिखेत्सुवर्णेनयाज्ञिकेनकुशेनवा ॥ ॐवैष्णव्यैनमइतिअस्त्रराजमथापिवा ॥ २० ॥ ततस्त्रिमण्डलङ्कुर्य्यात्तेनैवसमरेखया ॥ नित्यासुनहिपूजासुरजोभिर्म्मण्डलल्लिखेत् ॥ २१ ॥ पुरश्चरणकार्य्येषुतत्काम्येषुप्रयोजयेत् ॥ रेखामुदीच्याम्प्रथमम्पश्चिमेतदनन्तरम् ॥ २२ ॥ दक्षिणेतुततःपश्चात्पूर्व्वभागेतुशेषतः ॥ वर्णानाञ्चसहद्वारैरेवमेवक्रमोभवेत् ॥ २३ ॥ ओंह्रींश्रींसइतिमन्त्रेणमण्डलम्पूजयेत्त

तः ॥ हस्तेनमण्डलङ्कृत्वाकुर्य्याद्दिग्बन्धनन्ततः ॥ २४ ॥ आशाबन्धनमन्त्रेणपूर्व्वोक्तेनयथाक्रमम् ॥ फडन्तेनात्मना
प्यत्रकरेणैवनिबन्धयेत् ॥ २५ ॥ यवानान्तण्डुलैरेकमङ्गुलञ्चाष्टभिर्भवेत् ॥ अदीर्घयोजितैर्हस्तैश्चतुर्व्विंशतिरङ्गुलैः ॥ २६ ॥
तत्प्रमाणेनहस्तेनहस्तैकन्तस्यमण्डलम् ॥ पद्मव्वितस्तिमात्रंस्यात्कार्णिकारन्तदर्द्धकम् ॥ २७ ॥ दलान्यन्योन्यसक्ता
निध्यायतानिनियोजयेत् ॥ नन्यूनाधिकभागानिसबहिर्व्वेष्टितानिच ॥ २८ ॥ मध्यभागेन्यसेद्द्वारन्नन्यूनेनाधिकेतथा ॥ सु
बद्धम्मण्डलन्तच्चरक्तवर्णव्विंचिन्तयेत् ॥ २९ ॥ इतोन्यथामण्डलमुग्रमस्याःकरोतियोलक्षणभागहीनम् ॥ फलन्नचा
प्नोतिनकाममिष्टन्तस्मादिदम्मण्डलमत्रलेख्यम् ॥ ३० ॥ इतिकालिकापुराणेमहामायाकल्पेऽष्टादशपटलेचतुःपञ्चाशत्त
मोध्यायः ॥ ५४ ॥ छ ॥ श्रीभगवानुवाच ॥ ॥ ततोलमितिमन्त्रेणअर्घपात्रस्यमण्डलम् ॥ चतुष्कोणव्विंधायाशुद्वारप
द्मविवर्जितम् ॥ १ ॥ ओँह्रींश्रीमितिमन्त्रेणअर्घपात्रन्तुमण्डले ॥ विन्यसेत्प्रथमन्तत्रपूजयित्वासमिध्यति ॥ २ ॥ ओँह्रींक्रोंमि
तिमन्त्रेणगन्धपुष्पेतथाजलम् ॥ अर्घपात्रेक्षिपेत्तत्रमण्डलव्विंन्यसेत्ततः ॥ ३ ॥ पूर्व्ववन्मण्डलङ्कृत्वाअर्घपात्रेततोजलैः ॥ त्रिभा
गैःपूरयेत्पात्रम्पुष्पन्तत्रविनिःक्षिपेत् ॥ ४ ॥ ततोह्रींमितिमन्त्रेणआसनम्पूजयेत्स्वकम् ॥ ततःक्षौंमितिमन्त्रेणआत्मानम्पूजये
द्बुधः ॥ ५ ॥ गन्धैःपुष्पैःशिरोदेशेततःपूजांसमाचरेत् ॥ ओँक्रींसँइतिमन्त्रेणपुष्पहस्ततलस्थितम् ॥ ६ ॥ सम्मृज्यसव्यहस्तेन

घ्रात्वावामकरेणतु ॥ ७॥ ऐशान्यान्निक्षिपेदेतत्पूर्व्वमन्त्रेणकोविदः ॥ रक्तपुष्पङ्गृहीत्वातुकराभ्याम्पाणिकच्छपम् ॥ ८ ॥
बद्धाकुर्य्यात्ततःपश्चाद्दहनप्लवनादिकम् ॥ वामहस्तस्यतर्ज्जन्यान्दक्षिणस्यकनिष्ठिकाम् ॥ ९ ॥ तथादक्षिणतर्ज्जन्याव्वाँ
माङ्गुष्ठन्नियोजयेत् ॥ उन्नतन्दक्षिणाङ्गुष्ठव्वाँमस्यमध्यमादिकाः ॥ १० ॥ अङ्गुलीर्य्योजयेत्पृष्ठेदक्षिणस्यकरस्य च ॥ वा
मस्यपितृतीर्थेनमध्यमानामिकेतथा ॥ ११ ॥ अधोमुखेतुतेकुर्य्याद्दक्षिणस्यकरस्यच ॥ कूर्म्मपृष्ठसमम्पृष्ठङ्कुर्य्याद्दक्षिणह
स्ततः ॥ १२ ॥ एवम्बद्धःसर्व्वसिद्धिन्ददातिपाणिकच्छपः ॥ कुर्य्यात्तद्धृदयासन्नन्निमीलयनयनद्वयम् ॥ १३ ॥ समङ्काय
शिरोग्रीवङ्कृत्वास्थिरमनाबुधः ॥ ध्यानंसमारभेद्देव्यादाहप्लवनपूर्व्वकम् ॥ १४ ॥ अग्निव्वाँयौविनिःक्षिप्यवायुन्तोयेज
लंहृदि ॥ हृदयन्निश्चलेदत्वाआकाशेनिःक्षिपेत्स्वनम् ॥ १५॥ ओंहूँफडितिमन्त्रेणभित्त्वारन्ध्रन्तुमस्तके ॥ शब्देनसहित
ञ्जीवमाकाशेस्थापयेत्ततः ॥ १६ ॥ वाय्वग्नियमशक्राणाम्बीजेनवरुणस्यच ॥ परास्थानपराश्चैतैःसार्द्धचन्द्रैःसबिन्दु
कैः ॥ १७ ॥ शोषन्दाहन्तथोत्सादम्पीयूषासेचनम्परम् ॥ यथाक्रमेणकर्त्तव्यश्चिन्तामात्रव्विँशुद्धये ॥ १८ ॥ ततस्तुदे
व्याबीजन्तुशुद्धजाम्बूनदाकृति ॥ तत्रासाद्यद्विधाकुर्य्यादोँह्रींक्रींश्रीमितिमन्त्रकैः ॥ १९ ॥ तदूर्द्ध्वभागेविधिनालोकंस्वर्ग्ग
ञ्चखन्तथा ॥ निष्पाद्यशेषभागेतुभुवम्पातालधारिणीम् ॥ २० ॥ चिन्तयेत्तत्रसर्व्वाणिसप्तद्वीपाञ्चमेदिनीम् ॥ तत्रेक्षुसाग

शन्तःस्थंस्वर्णद्वीपव्विँचिन्तयेत् ॥ २१ ॥ तन्मध्येरत्नपर्य्यङ्कंरत्नमण्डलसंस्थितम् ॥ आकाशगङ्गातोयौघैःसदैवासे
वितंशुभम् ॥ २२ ॥ तत्पर्य्यङ्केरत्नपद्मम्प्रसन्नंसर्व्वदाशिवम् ॥ चिन्तयेत्स्वर्णमालाढ्यंसप्तपातालनालकम् ॥ २३ ॥
आब्रह्मभुवनस्पर्शिस्वर्णवर्णककर्णिकम् ॥ तत्रस्थिताम्महामायान्ध्यायेदेकाग्रमानसः ॥ २४ ॥ शोणपद्मप्रतीकाशाम्मु
क्तमूर्द्धजलम्बिनीम् ॥ चलत्काञ्चनसम्बद्धकुण्डलोज्ज्वलशालिनीम् ॥ २५ ॥ सुवर्णरत्नसम्बद्धकिरीटत्रयधारिणीम् ॥ शु
क्लकृष्णारुणैर्न्नेत्रैस्त्रिभिश्चारुविभूषिताम् ॥ २६ ॥ सन्ध्याचन्द्रसमप्रख्यकपोलाल्लोँललोचनाम् ॥ विपक्वदाडिमीबीजदन्तां
सुभ्रूयुगोज्ज्वलाम् ॥ २७ ॥ बन्धूकदन्तवसनांशिरीषप्रभनासिकाम् ॥ कम्बुग्रीवाव्विँशालाक्षींसूर्यकोटिसमप्रभाम् ॥ २८ ॥
चतुर्भुजाव्विँवसनाम्पीनोन्नतपयोधराम् ॥ दक्षिणोर्द्ध्वेननिस्त्रिंशम्परेणसिद्धसूत्रकम् ॥ २९ ॥ बिभ्रतीव्वाँमहस्ताभ्यामभीति
वरदायिनीम् ॥ निम्ननाभिङ्क्षामायातक्षीणमध्याम्मनोहराम् ॥ ३० ॥ आनम्रनागनासोरूद्गूढगुल्फांसुपार्ष्णिकाम् ॥ बद्धपर्य्य
ङ्कसङ्कल्पनिबिडासनराजिताम् ॥ ३१ ॥ गात्रेणरत्नस्तम्भञ्चसम्यगालम्ब्यसंस्थिताम् ॥ किमिच्छसीतिवचनव्व्याँहरन्ती
म्मुहुर्म्मुहुः ॥ ३२ ॥ पञ्चाननम्पुरःसंस्थन्निरीक्षन्तींस्ववाहनम् ॥ मुक्तावलीस्वर्णरत्नकेयूरकङ्कणादिभिः ॥ ३३ ॥ सर्व्वैरलङ्का
रगणैरुज्ज्वलांसस्मितानननाम् ॥ ३४ ॥ सूर्यकोटिप्रतीकाशांसर्व्वलक्षणसय्युँताम् ॥ नवयौवनसम्पन्नान्तथासर्व्वाङ्गसुन्दरीम्

॥ ३५ ॥ ईदृशीमम्बिकान्ध्यात्वोंनमःफडितिमस्तके ॥ स्वकीयेसुमनोदद्यात्साहमेवव्विँचिन्तयन् ॥ अङ्गन्यासकरन्यासौत
तःकुर्य्यात्क्रमेणतु ॥ ३६ ॥ एभिर्म्मन्त्रैःस्वरैःसंघैराशीभूतैःक्रमान्वितैः ॥ ओँमुचैते(?)सप्रणवांरक्तवर्णाम्मनोहराम् ॥ ३७ ॥
अङ्गुष्ठादिकनिष्ठान्तम्मन्त्रसँव्वेष्टनञ्चफट् ॥ प्रान्तेनकुर्य्याद्विन्यासम्पूर्व्वङ्करतलद्वयोः ॥ ३८ ॥ हृच्छिरःशिखाकवचनेत्रे
षुतत्क्रमान्न्यसेत् ॥ ततस्तुमूलमन्त्रस्यवक्त्रेपृष्ठेतथोदरे ॥ ३९ ॥ बाह्वोर्गुह्येपादयोश्चजङ्घयोर्ज्जघनेक्रमात् ॥ विन्यसेदक्ष
रान्यष्टौओँकारञ्चतथास्मरन् ॥ ४० ॥ एभिःप्रकारैरभिशुद्धदेहःपूजांसदैवार्हतिनान्यथाहि ॥ शरीरशुद्धिम्मनसोनिवे
शम्भूतप्रसादङ्कुरुतेनृणान्तत् ॥ ४१ ॥ ॥इतिकालिकापुराणेपञ्चपञ्चाशत्तमोध्यायः ॥ ५५ ॥ ॥ छ ॥
॥ ॥श्रीभगवानुवाच ॥ ॥ ततोर्घपात्रेतन्मन्त्रमष्टधावृत्यसञ्जपेत् ॥ तेनतोयेनपुष्पाणिस्वमण्डलमथासनम् ॥
॥ १ ॥ आसेचयेत्ततःपश्चात्पूजोपकरणंसमम् ॥ ओँ ऐँ क्रीँश्रीमितिमन्त्रेणशब्दप्रांशुविवर्जितम् ॥ २ ॥ द्वारपाल
न्ततोदेव्याआसनानिचपूजयेत् ॥ नन्दिभृङ्गिमहाकालगणेशाद्वारपालकाः ॥ ३ ॥ उत्तरादिक्रमात्पूज्याआसनानिचम
ध्यतः ॥ आधारशक्तिप्रभृतिहेमाद्र्यन्तान्प्रपूजयेत् ॥ ४ ॥ प्रसिद्धान्सर्व्वतन्त्रेषुपूजाकल्पेषुभैरव ॥ दशदिक्पालसहिता
न्धर्म्माधर्म्मादिकाँस्तथा ॥ ५ ॥ मण्डलाग्न्यादिकोणेषुपूजयेत्पार्श्वदेशतः ॥ सूर्य्याग्निसोममरुताम्मण्डलानिचपद्म

कम् ॥ ६ ॥ रजस्तथातमःसत्वय्यैँोगपीठङ्कुरोःपदम् ॥ सारादीन्भद्रपीन्ठातान्त्साङ्गोपाङ्गान्प्रपूजयेत् ॥ ७ ॥ ब्रह्मा
ण्डंस्वर्णडिम्बञ्चब्रह्मविष्णुमहेश्वरान् ॥ ससागरान्त्सप्तद्वीपान्स्वर्णद्वीपंसमण्डपम् ॥ ८ ॥ रत्नपद्मंसपर्य्यङ्कंरत्नस्तम्भन्त
थैवच ॥ पञ्चाननम्मण्डलस्यमध्येवश्यम्प्रपूजयेत् ॥ ९ ॥ क्रौंमन्त्रेणततःकूर्म्मंपृष्ठम्पाण्योर्न्निबध्यच ॥ ध्यायेच्चपूर्व्ववद्
देवीमासाद्यासनमुत्तमम् ॥ १० ॥ हृन्मध्येचिन्तयेत्स्वर्णद्वीपम्पर्य्यङ्कसम्भृतम् ॥ पश्यन्निवततोदेवीमेकाग्रमनसास्म
रेत् ॥ ११ ॥ प्रत्यक्षीकृत्यहृदयेमानसैरुपचारकैः ॥ षोडशानाम्प्रकारैस्तुहृदिस्थाम्पूजयेच्छिवाम् ॥ १२ ॥ ततस्तुवायु
बीजेनदक्षिणेनपुटेनच ॥ नासिकायाविनिःसार्य्यक्रींमन्त्रेणचभैरव ॥ १३ ॥ स्थापयेत्पद्ममध्येतुतद्धस्तन्नवियोजयेत् ॥
कृतेवियोगेहस्तस्यपुष्पात्तस्माच्चभैरव ॥ १४ ॥ गन्धर्व्वैःपूज्यतेदेवीपूजकैर्न्नाप्यतेफलम् ॥ आवाहनन्ततःकुर्य्याद्गाय
त्र्याशिरसासह ॥ १५ ॥ महामायायैविद्महेत्वाञ्चण्डिकाख्यान्धीमहि ॥ एतदुक्त्वाततःपश्चाद्धियोयोनःप्रचोदयात् ॥ १६ ॥
स्नानीयन्देवितेतुभ्यंओँक्रींश्रींनँमइत्यतः ॥ स्नानीयञ्चततोदेव्यैदद्याल्लक्षणलक्षितम् ॥ १७ ॥ ततस्तुमूलमन्त्रेणगन्ध
पुष्पंसदीपकम् ॥ धूपादिकम्प्रदद्यात्तुमोदकम्पायसन्तथा ॥ १८ ॥ सिताङ्कुडन्दधिक्षीरंसर्प्पिरन्नंनानाविधैःफलैः ॥ रक्तपुष्पंपु
ष्पमालांसुवर्णरजतादिकम् ॥ १९ ॥ नैवेद्यमुत्तमन्देव्यालाङ्गलम्मोदकंसिताम् ॥ शाण्डिल्यकरताम्राख्याकुष्माण्डानाम्फ

लानिच ॥ २० ॥ हरीतकीफलञ्चापिनागरङ्कमैलका ॥ बालप्रियञ्चयद्दव्यङ्कसेरुकबिसादिकम् ॥ २१ ॥ तोयञ्च
नारिकेलस्यदेव्यैदेयम्प्रयत्नतः ॥ रक्तङ्कौशेयवस्त्रञ्चदेयन्नीलङ्कदापिन ॥ २२ ॥ देव्याःप्रियाणिपुष्पाणिबकुलङ्केशरन्त
था ॥ माध्यङ्कह्लारवज्राणिकरवीरकुरुण्टकान् ॥ २३ ॥ अर्कपुष्पंशाल्मलकन्दूर्वाङ्कुरंसुकोमलम् ॥ कुशमञ्जरिकाद
र्भाबन्धूककमलेतथा ॥ २४ ॥ मालूरपत्रम्पुष्पञ्चत्रिसन्ध्यारक्तपर्णके ॥ सुमनांसिप्रियाण्येतान्यम्बिकायाश्चभैरव
॥ २५ ॥ बन्धूकमुकुलम्मध्यम्बिल्वपत्राणिसन्ध्यकम् ॥ उत्तमंसर्व्वपुष्पेषुद्रव्येपायसमोदकौ ॥ २६ ॥ माल्यम्बन्धू
कपुष्पस्यशिवायैबकुलस्यवा ॥ करवीरस्यमाध्यस्यसहस्राणान्ददातियः ॥ २७ ॥ सकामान्प्राप्यचाभीष्टान्ममलोके
प्रमोदते ॥ चन्दनंशीतलञ्चैवकालीयकसमन्वितम् ॥ २८ ॥ अनुलेपनमुख्यन्तुदेव्यैदद्यात्प्रयत्नतः ॥ कर्पूरंकुङ्कु
मञ्चैवम्मृगनाभिःसुगन्धिकम् ॥ २९ ॥ कालीयकंसुगन्धेषुदेव्याःप्रीतिकरम्परम् ॥ यक्षधूपःप्रतीवाहःपिण्डधूपःसगो
लकः ॥ ३० ॥ अगुरुःसिन्धुवारश्चधूपाःप्रीतिकरामताः ॥ अङ्गरागेषुसिन्दूरन्देव्याःप्रीतिकरम्परम् ॥ ३१ ॥ सुगन्धिशा
लिजञ्चान्नम्मधुमांससमन्वितम् ॥ अपूपंपायसङ्क्षीरमन्नन्देव्याःप्रशस्यते ॥ ३२ ॥ रत्नोदकंसकर्पूरम्पिण्डीतककुमारकौ ॥
रोचनम्पुंष्पकन्देव्याःस्नानीयम्परिकीर्तितम् ॥ ३३ ॥ घृतप्रदीपोदीपेषुप्रशस्तःपरिकीर्तितः ॥ पुष्पाञ्जलित्रयन्दद्यान्मू

१ पुष्पंकरीतिपुष्पंकुसुमांजवनंकुसुमाकाररीतिमलसम्भवमंजनमित्यर्थः ।

लमन्त्रेणशोभनम् ॥ ३४ ॥ दत्त्वोपचारानखिलान्मध्येचैताःप्रपूजयेत् ॥ कामेश्वरीन्तुतदुर्गांविन्ध्यकन्दरवासिनीम् ॥ ३५ ॥ कोटेश्वरीन्दीर्घिकाख्याम्प्रकटोम्भुवनेश्वरीम् ॥ आकाशगङ्गाङ्कामाख्यान्तथादिक्करवासिनीम् ॥ ३६ ॥ मातङ्गीं ललितान्दुर्गाम्भैरवींसिद्धिदान्तथा ॥ बलप्रमथिनीञ्चण्डीञ्चण्डोग्राञ्चण्डनायिकाम् ॥ ३७॥ उग्राम्भीमांशिवांशान्ताञ्ज यन्तीङ्कालिकान्तथा ॥ मङ्गलाम्भद्रकालीञ्चशिवान्धात्रीङ्कपालिनीम् ॥ ३८ ॥ स्वाहांस्वधामपर्णाञ्चपञ्चपुष्करिणोन्तथा ॥ ३९ ॥ दमनींसर्व्वभूतानाम्मनःप्रोत्साहकारिणीम् ॥ दमनींसर्व्वभूतानाञ्चतुःषष्टिञ्चयोगिनीः ॥ ४० ॥ एताःसम्पूज्यमध्येतुमन्त्रेणाङ्गानिपूजयेत् ॥ हृच्छिरस्तुशिखावर्म्मनेत्रबाहुपदानिच ॥ ४१ ॥ मूलमन्त्राद्यक्षरैस्तुत्रिभिराद्यङ्गपूजनम् ॥ एकैकर्व्वर्द्धयेत्पश्चान्मन्त्राण्यङ्गौघपूजने ॥ ४२॥ सिद्धसूत्रञ्चखड्गञ्चखड्गमन्त्रेणपूजयेत् ॥ ततोष्टपत्रमध्येतुपूजयेदष्टयोगिनीः ॥ ४३ ॥ शैलपुत्रीञ्चण्डघण्टांस्कन्दमातरमेवच ॥ कालरात्रिञ्चपर्व्वादिचतुर्दिक्षुप्रपूजयेत् ॥ ४४ ॥ चण्डिकामथकुष्माण्डीन्तथाकात्यायनींशुभाम् ॥ महागौरींचाग्निकोणेनैर्ऋत्यादिषुपूजयेत् ॥ ४५ ॥ महामायाक्षमस्वेतिमूलमन्त्रेणचाष्टधा ॥ पूजयेत्पद्ममध्येतुबलिदानन्ततःपरम् ॥ ४६ ॥ एवय्यँदाकल्पविधानमानैःसम्पूज्यतेभैरवकामदेवी ॥ तदास्वयम्मण्डलमेत्यदेयङ्कृह्णातिकामञ्चददातिसम्यक् ॥ ४७॥ ॥ इतिश्रीकालिकापुराणेषट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ श्रीभगवानु

वाच ॥ ॥ बलिदानन्ततःपश्चात्कुर्य्याद्देव्याःप्रमोदकम् ॥ मोदकैर्ग्गजवक्त्रञ्चहविषातोषयेद्रविम् ॥ १ ॥ तौर्य्यत्रिकैश्चनिय
मैःशङ्करन्तोषयेद्धरिम् ॥ चण्डिकाम्बलिदानेनतोषयेत्साधकःसदा ॥ २ ॥ पक्षिणःकच्छपाग्राहाश्छागलाश्चवराहकाः ॥
महिषोगोधिकाशोषातथानवविधामृगाः ॥ ३ ॥ चामरःकृष्णसारश्चशशःपञ्चाननस्तथा ॥ मत्स्याःस्वगात्ररुधिरैश्चाष्टधाब
लयोमताः ॥४॥ अभावेचतथैवैषाङ्कदाचिद्धयहस्तिनौ ॥ छागलाःशरभाश्चैवनरश्चैवयथाक्रमात् ॥५॥ बलिर्म्महाबलिरिति
बलयःपरिकीर्त्तिताः ॥ स्नापयित्वाबलिन्तत्रपुष्पचन्दनधूपकैः ॥ ६ ॥ पूजयेत्साधकोदेवीम्बलिमन्त्रैर्मुहुर्म्मुहुः ॥ उत्तराभि
मुखोभूत्वाबलिम्पूर्व्वमुखन्तथा ॥ ७ ॥ निरीक्ष्यसाधकःपश्चादिमम्मन्त्रमुदीरयेत् ॥ वरस्त्वम्बलिरूपेणममभाग्यादुपस्थि
तः ॥ ८ ॥ प्रणमामिततःसर्व्वरूपिणम्बलिरूपिणम् ॥ चण्डिकाप्रीतिदानेनदातुरापद्विनाशन ॥ ९ ॥ वैष्णवीबलिरूपायबले
तुभ्यन्नमोनमः ॥ यज्ञार्थेपशवःसृष्टाःस्वयमेवस्वयम्भुवा ॥ १० ॥ अतस्त्वाङ्घातयाम्यद्यतस्माद्यज्ञेवधोऽवधः ॥ ऐँ क्रीँ श्रीँ
इतिमन्त्रेणतम्बलिङ्कामरूपिणम् ॥ ११ ॥ चिन्तयित्वान्यसेत्पुष्पम्मूर्द्ध्नितस्यचभैरव ॥ ततोदेवींसमुद्दिश्यकाममुद्दिश्यचा
त्मनः ॥ १२ ॥ अभिषिच्यबलिम्पश्चात्करवालम्प्रपूजयेत् ॥ रसनात्वञ्चण्डिकायाःसुरलोकप्रसाधकः ॥ १३ ॥ ऐँ श्रीँ क्रीँ इ
तिमन्त्रेणध्यात्वाखड्गम्प्रपूजयेत् ॥ १४ ॥ कृष्णम्पिनाकपाणिञ्चकालरात्रिस्वरूपिणम् ॥ उग्रंरक्तास्यनयनंरक्तमाल्यानुले

१ तौर्यत्रिकैर्हरंनियमैर्हरिन्तोषयेदितियथासंख्येनान्वयः ।

पनम् ॥१५॥ रक्ताम्बरधरश्चैकम्पाशहस्तङ्कुटुम्बिनम् ॥ पीयमानञ्चरुधिरम्भुञ्जानङ्क्रव्यसंहतिम् ॥ १६ ॥ असिर्व्विशसनः
खड्गस्तीक्ष्णधारोदुरासदः॥ श्रीगर्वोविजयश्चैवधर्म्मपालनमोस्तुते ॥१७॥ पूजयित्वाततःखड्गंओंक्रींफडितिमन्त्रकैः ॥गृही
त्वाविमलङ्खड्गञ्छेदयेद्बलिमुत्तमम् ॥ १८ ॥ ततोबलीनांरुधिरन्तोयसैन्धवसत्फलैः ॥ मधुभिर्गन्धपुष्पैश्चअधिवास्यप्रयत्न
तः ॥ १९ ॥ ॐ ऐँ क्लींश्रींकौशिकीतिरुधिरन्दापयामित ॥स्थानेनियोजयेद्रक्तंशिरश्चसप्रदीपकम् ॥ २० ॥ एवन्दत्वाबलि
म्पूर्णम्फलम्प्राप्नोतिसाधकः ॥ हीनंस्याद्धीनतामूलन्निष्फलंस्याद्विपर्य्ययात् ॥ २१ ॥ बलिदानेतुदुर्ग्गायाअन्यत्रापिविधिः
सदा ॥ अयमेवप्रयोक्तव्यःसद्भिर्व्वैतालभैरवौ ॥ २२ ॥ जपंसमारभेत्पश्चात्पूर्व्ववद्ध्यानमास्थितः ॥ हस्तेनस्रजमादायचि
न्तयेन्मनसाशिवाम् ॥ २३ ॥ चिन्तयित्वागुरुम्मूर्द्ध्नियथावर्णादिकम्भवेत् ॥ मन्त्रश्चकण्ठतोध्यात्वासितवर्णहिरण्मय
म् ॥ २४ ॥ महामायाश्चहृदयेआत्मानङ्कुरुपादयोः ॥ आचक्षेतततःपश्चाद्गुरोर्म्मन्त्रस्यचात्मनः ॥ २५ ॥ देव्य
श्चाप्येकतान्ध्यात्वासुषुम्नावर्त्मनाततः ॥ तत्त्वस्वरूपमेकन्तुषट्चक्रम्प्रतिलम्बयेत् ॥२६॥ षट्चक्रेपिमहामायाङ्क्षणन्ध्यात्वाप्रय

त्नतः ॥ लम्बयेन्मूलमन्त्रेणवादिषोडशचक्रकम् ॥२७॥आदिषोडशचक्रस्थांसाधकानन्दकारिणीम् ॥ चिन्तयन्साधकोदेवी
ञ्जपकर्म्मसमारभेत् ॥२८॥ भ्रुवोरुपरिनाडीनान्त्रयाणाम्प्रान्तउच्यते ॥ तत्प्रान्तन्त्रिपथस्थानंषट्कोणंचतुरङ्गुलम् ॥ २९॥ र

क्तवर्णन्तुयोगज्ञैराज्ञाचक्रमितीर्य्यते ॥ कण्ठेत्रयाणान्नाडीनाव्वेँष्टनव्विँद्यतेनृणाम् ॥ ३० ॥ सुषुम्नेडापिङ्गलानांषट्कोणन्त
त्षडङ्गुलम् ॥ तत्षट्चक्रमितिप्रोक्तंशुक्लङ्कण्ठस्यमध्यगम् ॥ ३१ ॥ त्रयाणामथनाडीनांहृदयेचैकताभवेत् ॥ तत्स्थानं
षोडशारंस्यात्सप्ताङ्गुलप्रमाणतः ॥ ३२ ॥ तत्प्रयुक्तन्तुयोगज्ञैरादिषोडशचक्रकम् ॥ ध्यानानामथमन्त्राणाञ्चिन्तनस्यजप
स्यच ॥ ३३ ॥ यस्मादाद्यन्तुहृदयन्तस्मादादीतिगद्यते ॥ जपादौपूजयेन्मालान्तोयैरभ्युक्ष्ययत्नतः ॥ ३४ ॥ निधायमण्डल
स्यान्तःसव्यहस्तगताञ्चवा ॥ ओँमाम्मालेमहामायेसर्व्वशक्तिस्वरूपिणि ॥ ३५ ॥ चतुर्व्वर्ग्गस्त्वयिन्यस्तस्तस्मान्मेसिद्धिदा
भव ॥ पूजयित्वाततोमालांगृह्णीयाद्दक्षिणेकरे ॥ ३६ ॥ मध्यमायामध्यभागेवर्ज्जयित्वाथतर्ज्जनीम् ॥ अनामिकाकनिष्ठा
भ्याय्युँतायानखभागतः ॥ ३७ ॥ स्थापयित्वातत्रमालामङ्गुष्ठाग्रेणतद्गतम् ॥ प्रत्येकम्बीजमादायजप्याद्दूर्द्धनभैरव ॥ ३८ ॥
प्रतिवारम्पठेन्मन्त्रंशनैरोष्ठञ्चचालयेत् ॥ मालाबीजन्तुजप्तव्यंस्पृशेन्नहिपरस्परम् ॥ ३९ ॥ पूर्व्वंजापप्रयुक्तेननैवाङ्गुष्ठेनभै
रव ॥ पूर्व्वबीजञ्जपन्यस्तुपरबीजञ्चसंस्पृशेत् ॥ ४० ॥ अङ्गुष्ठेनभवेत्तस्यनिष्फलस्तस्यतज्जपः ॥ मालांस्वहृदयासन्ने धृत्वा
दक्षिणपाणिना ॥ ४१ ॥ देवीव्विँचिन्तयञ्जप्यङ्कुर्य्याद्वामेननस्पृशेत् ॥ स्फटिकेन्द्राक्षरुद्राक्षैःपुत्रञ्जीवसमुद्भवैः ॥ ४२ ॥
सुवर्णमणिभिःसम्यक्प्रवालैरथवाब्जजैः ॥ अक्षमालातुकर्त्तव्यादेवीप्रीतिकरीपरा ॥ ४३ ॥ जपेद्दुपांशुसततङ्कुशग्रन्थ्या

थपाणिना ॥ मालाबीजेषुसर्व्वेषुरुद्राक्षोमत्प्रियाप्रियः ॥ ४४ ॥ रुद्रप्रीतिकरीयस्मात्तेनरुद्राक्षरोचनी ॥ प्रवालैरथवाकुर्य्यां
दष्टाविंशतिबीजकैः ॥ ४५ ॥ पञ्चपञ्चाशतावापिनन्यूनैरधिकैश्चया ॥ रुद्राक्षैर्य्यदिजप्येतइन्द्राक्षैःस्फाटिकैस्तथा ॥ ४६ ॥
नान्यम्मध्येप्रयोक्तव्यम्पुत्रञ्जीवादिकञ्चयत् ॥यद्यन्यत्तुप्रयुज्येतमालायाञ्जपकर्म्मणि ॥ ४७॥ तस्यकामञ्चमोक्षञ्चददा
तिर्नाप्रियङ्करी ॥ मिश्रीभावन्ततोयातिचाण्डालैःपापकर्म्मभिः ॥ जन्मान्तरेजायतेनवेदवेदाङ्गपारगः ॥४८॥ एकोमेरुस्तत्रदे
यःसर्व्वेभ्यःस्थूलसम्भवः ॥ आद्यंस्थूलन्ततस्तस्मान्न्यूनंन्यूनतरन्तथा ॥ ४९ ॥ विन्यसेत्क्रमतस्तस्मात्सर्वांकाराहिसाय
तः ॥ ब्रह्मग्रन्थियुतङ्कुर्य्यात्प्रतिबोजय्यँथास्थितम् ॥ ५० ॥ अथवाग्रन्थिरहितन्दृढरज्जुसमन्वितम् ॥ द्विरावृत्त्याथमध्येनचा
द्यावृत्त्यान्तदेशतः ॥ ५१ ॥ ग्रन्थिःप्रदक्षिणावर्त्तःसब्रह्मग्रन्थिसञ्ज्ञकः ॥ आत्मनायोजयेन्मालान्नामन्त्रोयोजयेन्नरः॥ ५२ ॥
दृढंसूत्रन्नियुञ्जीतजपेत्त्रुट्यतिनोयथा ॥ यथाहस्तान्नच्यवेतजपतःस्रक्तथाचरेत्॥ ५३॥हस्तच्युतायाव्विघ्नंस्याच्छिन्नायाम्मर
णम्भवेत् ॥ एवय्यँःकुरुतेमालाञ्जपञ्जपकोविदः॥ ५४ ॥ सप्राप्नोतीप्सितङ्कामंहीनेस्यात्तुविपर्य्ययः ॥ अन्यत्रापिजपे
न्मालाञ्जप्यन्देवमनोहरम् ॥ ५५ ॥ तादृशःसाधकःकुर्य्यान्नान्यथातुकदाचन ॥ यथाशक्तिजपङ्कुर्य्यात्सङ्ख्ययैवप्रयत्नतः ॥
असङ्ख्यातञ्चयज्जप्तन्तस्यतन्निष्फलम्भवेत् ॥ ५६ ॥ जप्त्वामालांशिरोदेशेप्रांशुस्थानेथवान्यसेत् ॥ स्तुतिपाठन्ततः

कुर्य्यादिष्टङ्कामन्निवेद्यच ॥ ५७ ॥ स्तुतिश्चापिमहामन्त्रंसाधनंसर्व्वंकर्म्मणाम् ॥ वक्ष्येयुवाम्महाभागौसर्व्वसिद्धिप्रदाय
कम् ॥ ५८ ॥ सर्व्वमङ्गलमङ्गल्येशिवेसर्व्वार्थसाधिके ॥ शरण्येत्र्यम्बकेगौरिनारायणिनमोस्तुते ॥ ५९ ॥ सप्तधावर्त्त
नङ्कृत्वास्तुतिमेनाञ्चसाधकः ॥ पञ्चप्रणामान्कृत्वाथऐँ ह्रींश्रीमितिमन्त्रकैः ॥६०॥ अन्येषाम्पुरतश्चैवअधिकव्वाँयथेच्छया
॥ योनिमुद्रान्ततःपश्चाद्दर्शयित्वाविसर्ज्जयेत् ॥ ६१ ॥ द्वौपाणीप्रसृतोकृत्यकृत्वाचोत्तानमञ्जलिम् ॥ अङ्गुष्ठाग्रद्वयन्न्यस्यक
निष्ठाग्रद्वयोस्ततः ॥ ६२ ॥ अनामिकायाव्वाँमस्यतत्कनिष्ठांपुरोन्यसेत् ॥ दक्षिणस्यानामिकायाङ्कनिष्ठान्दक्षिण
स्यच ॥ ६३ ॥ अनामिकायाःपृष्ठेतुमध्यमेद्वेनिवेशयेत् ॥ द्वेतर्ज्जन्यौकनिष्ठाग्रेतदग्रेणैवयोजयेत् ॥ ६४ ॥ योनिमुद्रा
समाख्यातादेव्याःप्रीतिकरीमता ॥ ६५ ॥ त्रिवारन्दर्शयेत्तान्तुमूलमन्त्रेणसाधकः ॥ ताम्मुद्रांशिरसिन्यस्यमण्डलव्विन्य
सेत्ततः ॥ ६६ ॥ ऐशान्यामग्रहस्तेनद्वारपद्मविवर्ज्जितम् ॥ तत्रनत्वारक्तचण्डांह्रौँह्रींमन्त्रेणसाधकः ॥ ६७ ॥ रक्तचण्डा
यैनमइतिनिर्म्माल्यन्तत्रनिक्षिपेत् ॥ उदकेतरुमूलेवानिर्म्माल्यन्तत्रसन्त्यजेत् ॥ ६८ ॥ एवय्यँःपूजयेद्देवीव्विँधानेनशिवा
न्नरः ॥ सोचिरेणलभेत्कामान्सर्व्वांनेवमनोगतान् ॥ ६९ ॥ अर्द्धलक्षजपञ्जप्त्वाप्रथमञ्चैवसाधकः ॥ पुरश्चरेद्विशेषेणनाना
नैवेद्यवेदनैः ॥ ७० ॥ कुण्डम्मण्डलवत्कृत्वाचाष्टम्यांसमुपोषितः ॥ नवम्यांशुक्लपक्षस्यरजोभिःपञ्चभिर्न्नरः ॥ ७१ ॥ पूर्व्व

वन्मण्डलङ्कृत्वागुरुपित्रोश्चसन्निधौ ॥ अनेनैवविधानेनपूजयित्वातुचण्डिकाम् ॥ ७२ ॥ सहितैर्बिल्वपत्रैश्चअष्टोत्तरशतत्र
यम् ॥ तिलैर्होमञ्चरेत्तस्यांसहस्रत्रितयञ्जपेत् ॥ ७३ ॥ नैवेद्यङ्गन्धपुष्पेचवस्त्रन्दद्याच्चयत्त्रियम् ॥ पूर्व्वोक्तञ्चान्यदप्यस्यैत्र
दद्यात्पायसन्तथा ॥७४॥ पूजावसानेदेयंस्यात्तज्जातीयम्बलित्रयम् ॥ सिन्दूरंस्वर्णरत्नानियद्यत्स्त्रीणाव्विभूषणम् ॥ ७५॥
निवेदयेद्यथाशक्त्यापुष्पमालाश्चभूरिशः ॥ महाशुल्कंसशाल्यन्नङ्कव्यव्यञ्जनसय्युँतम् ॥ ७६ ॥ देव्यैनवम्यांसम्पूर्णम्बलि
न्दद्याद्धृतादिभिः ॥ दक्षिणाङ्गुरवेदद्यात्सुवर्णङ्कान्तथातिलम् ॥७७॥ अभिशप्तमपुत्रञ्चसावद्यङ्कितवन्तथा ॥ क्रियाहीनमक
ल्पज्ञव्वाँमनङ्गुरुनिन्दकम् ॥ ७८ ॥ सदामत्सरसय्युँक्तङ्गुरुम्मन्त्रेषुवर्ज्जयेत् ॥ गुरुर्म्मन्त्रस्यमूलंस्यान्मूलशुद्धौतदुद्गतम् ॥
॥७९॥ सफलञ्जायतेयस्मान्मन्त्रय्यँत्नात्परीक्षयेत् ॥ शाठ्यात्क्रोधात्तुमोहाद्वानासम्मत्यागुरोर्म्मुखात् ॥ ८०॥ कल्पेषुदृष्ट्वा
वामन्त्रङ्गृह्णीयाच्छद्मनाथवा ॥ सब्रह्मस्तेयपापेनतामिस्रेनरकेनरः ॥ ८१ ॥ मन्वन्तरत्रयंस्थित्वापापयोनिषुजायते ॥ शठे
क्रूरेचमूर्खेचच्छद्मकारिण्यभक्तिके ॥ ८२ ॥ मन्त्रन्नदूषितेदद्यात्सुबीजव्वँपिनेतथा ॥ लक्षेणसाधयेत्कामम्पुरश्चरणपूर्व्वक
म् ॥ ८३ ॥ पापक्षयम्भवेद्यस्मात्पुरश्चरणकर्म्मणा ॥ लक्षद्वयेनमन्त्रस्यजपेननरसत्तमौ ॥८४॥ त्रिसन्ध्यासुप्रतिदिनम्बी
जसङ्घातकेनच ॥ कविर्व्वाग्मीपण्डितश्चयशस्वीचप्रजायते ॥८५॥ साधकःसाधकश्रेष्ठपूजास्थानन्ततःशृणु ॥ यत्रयत्रन

रःपूजान्निर्ज्जनेकुरुतेचयः ॥ ८६ ॥ तस्यादत्तेस्वयन्देवीपत्रम्पुष्पम्फलञ्जलम् ॥ शिलाप्रशस्तापूजायांस्थण्डिलन्निर्ज्जनन्त
था ॥ ८७ ॥ जपश्चोपांशुसर्व्वेषामुत्तमःपरिकीर्तितः ॥ अशुचिर्नमहामायाम्पूजयेत्तुकदाचन ॥ ८८ ॥ अवश्यन्तुस्मरेन्म
न्त्रंयोतिभक्तियुतोनरः ॥ दन्तरक्तेसमुत्पन्नेस्मरणञ्चनविद्यते ॥ ८९ ॥ सर्व्वेषामेवमन्त्राणांस्मरणान्नरकव्व्रँजेत् ॥ जानूर्द्ध्वक्ष
तजेजातेनित्यंकर्म्मनचाचरेत् ॥ ९० ॥ नैमित्तिकञ्चतदधःस्त्रवद्रक्तोनचाचरेत् ॥ लोतके (?) चसमुत्पन्नेक्षुरकर्म्मणिमैथुने ॥
धूमोद्गारेतथावान्तेनित्यकर्म्माणिसन्त्यजेत् ॥ ९१ ॥ द्रव्येभुक्तेत्वजीर्णेचनैवभुक्त्वाचकिञ्चन ॥ कर्म्मकुर्य्यान्नरोनित्यंसूत
केमृतकेतथा ॥ ९२ ॥ पत्रम्पुष्पञ्चताम्बूलम्भेषजत्वेनकल्पितम् ॥ कणादिपिप्पल्यंतंचफलम्भुक्त्वानचाचरेत् ॥ ९३ ॥
जलस्यापिनरश्रेष्ठभोजनाद्भेषजादृते ॥ नित्यक्रियानिवर्त्ततसहनैमितिकैःसदा ॥ ९४ ॥ जलौकाक्रूढपादश्चकृमिगंडू
पदादिकम् ॥ कामाद्धस्तेनसंस्पृश्यनित्यकर्म्माणिसन्त्यजेत् ॥ ९५ ॥ विशेषतःशिवापूजाम्प्रमीतपितृकोनरः ॥ यावद्व
त्सरपर्य्यन्तम्मनसापिनचाचरेत् ॥ ९६ ॥ महागुरुनिपातेतुकाम्यङ्किञ्चिन्नचाचरेत् ॥ आर्त्विज्यम्ब्रह्मयज्ञञ्चश्राद्धन्देवयज
ञ्चयत् ॥ ९७ ॥ गुरुमाक्षिप्य्यविप्रञ्चप्रहत्यैवचपाणिना ॥ नकुर्य्यान्नित्यकर्म्माणिरेतःपातेचभैरव ॥ ९८ ॥ आसनञ्चार्घपा
त्रञ्चअन्नमासादयेन्नतु ॥ ऊषरेकृमिसंयुक्तेस्थानेमृष्टेपिनार्च्चयेत् ॥ ९९ ॥ नीचैरासनमासाद्यशुचिःप्रयतमानसः ॥ अर्च्चये

१ कणाजीरकमितिमेदिनी ।

च्चण्डिकान्देवीन्देवमन्यश्चभैरव ॥१००॥ दिग्विभागेतुकौबेरीदिक्छिवाप्रीतिदायिनी ॥ तस्मात्तन्मुखआसीनःपूजयेच्चण्डि
कांसदा ॥ १ ॥ पुष्पञ्चकृमिसम्मिश्रव्विँशीर्णम्भग्नमुद्गते ॥ सकेशम्मूषिकोद्धूतय्यँत्नेनपरिवर्ज्जयेत् ॥ २ ॥ याचित
म्परकीयञ्चतथापर्य्युषितञ्चयत् ॥ अन्त्यस्पृष्टम्पदास्पृष्टय्यँत्नेनपरिवर्ज्जयेत् ॥ ३ ॥ इदंशिवायाःपरमम्मनोहरङ्करोति
योनेनतदीयपूजनम् ॥ सवाञ्छितार्थंसमवाप्यचण्डिकागृहम्प्रयातानचिरेणभैरव॥ १०४॥ ॥ इतिकालिकापुराणेऔर्व्व
सगरसव्वाँदेसप्तपञ्चाशोध्यायः॥ ५७॥ ॥ श्रीभगवानुवाच ॥ ॥ अस्यमन्त्रस्यकवचंशृणुवेतालभैरव ॥ वैष्णवीतन्त्रस
ञ्ज्ञस्यवैष्णव्याश्चविशेषतः ॥१॥ तत्रमन्त्राद्यक्षरन्तुवासुदेवस्वरूपधृक् ॥ वर्णोद्वितीयोब्रह्मैवतृतीयश्चन्द्रशेखरः ॥२॥ चतु
र्थोगजवक्त्रश्चपञ्चमस्तुदिवाकरः॥ शक्तिःस्वयम्पकारश्चमहामायाजगन्मयी॥३॥ यकारस्तुमहालक्ष्मीःशेषवर्णःसरस्वती॥
योगिनीपूर्व्ववर्णस्यशैलपुत्रीप्रकीर्त्तिता ॥ ४॥ द्वितीयस्यतुवर्णस्यचण्डिकायोगिनीमता ॥ चण्डघण्डातृतीयस्यकुष्माण्डीत
त्परस्यच ॥५॥ स्कन्दमातातकारस्यपस्यकात्यायनीस्वयम् ॥कालरात्रिःसप्तमस्यमहादेवीतिसंस्थिता ॥ ६ ॥ प्रथमव्वँर्ण
कवचंयोगिनीकवचन्तथा ॥ देवौघकवचम्पश्चाद्देवीदिक्कवचन्तथा ॥७॥ ततस्तुपार्श्वकवचन्द्वितीयान्ताव्ययस्यच ॥ कवच
न्तुततःपश्चात्षड्वर्णकवचन्तथा ॥ ८ ॥ अभेद्यकवचञ्चेतिसर्व्वत्राणपरायणम् ॥ इमानिकवचान्यष्टौयोजानातिनरोत्तमः

॥ ९ ॥ सोहमेवमहादेवोदेवीरूपश्चशक्तिमान् ॥ अस्यवैष्णवीतन्त्रकवचस्यनारायणऋषिरीश्वरोदेवताऽनुष्टुप्छन्दः
कात्यायनीदेवी सर्व्वकामार्थसाधनेविनियोगः ॥ अःपातुपूर्व्वकाष्ठायामाग्नेय्याम्पातुकःसदा ॥ १० ॥ पातुचायमका
ष्ठायाण्टोनैऋर्त्याञ्चसर्व्वदा ॥ माम्पातुतोऽसौपाश्चात्त्येशक्तिर्व्वायव्यदिग्गता ॥ ११ ॥ यःपातुमाञ्चोत्तरस्यामैशान्यां
शस्तथावतु ॥ मूर्द्धिरक्षतुमांसोसौबाहौमान्दक्षिणेतुकः ॥ १२ ॥ माव्वाँमबाहौचःपातुहृदिटोमांसदावतु ॥ तःपातुकण्ठ
देशेमाङ्कूर्व्योःशक्तिस्तथावतु ॥ १३ ॥ यःपातुदक्षिणेपादेशोमाव्वाँमपदेतथा ॥ शैलपुत्रीतुपूर्व्वस्यामाग्नेय्याम्पातुचाण्डि
का ॥ १४ ॥ चण्डघण्टापातुयाम्यायाँमभीतिविवर्द्धिनी ॥ नैऋर्त्येत्वथकूष्माण्डोपातुमाञ्जगताम्प्रसूः ॥ १५ ॥
स्कन्दमातापश्चिमायाम्मांरक्षतुसदैवहि ॥ कात्यायनीमाव्वाँयव्येपातुलोकेश्वरोसदा ॥ १६ ॥ कालरात्रीतुकौबेर्य्यां
सदारक्षतुमांस्वयम् ॥ महागौरीतथैशान्यांसततम्पातुपावनी ॥ १७ ॥ नेत्रयोर्व्वासुदेवोमाम्पातुनित्यंसनातनः ॥
ब्रह्मामाम्पातुवदनेपद्मयोनिरयोनिजः ॥ १८ ॥ नासाभागेरक्षतुमांसर्व्वदाचन्द्रशेखरः ॥ गजवक्त्रःस्तनयुग्मेपातुनित्यं
हरात्मजः ॥ १९ ॥ वामदक्षिणपाण्योर्म्मान्नित्यम्पातुदिवाकरः ॥ महामायास्वयन्नाभौमाम्पातुपरमेश्वरी ॥ २० ॥
महालक्ष्मीःपातुगुह्येजानुनोश्चसरस्वती ॥ महामायापूर्व्वभागेनित्यंरक्षतुमांशुभा ॥ २१ ॥ अग्निज्वालातथाग्नेय्या

म्पायान्नित्यव्वँशासिनी ॥ रुद्राणीपातुमाय्याँम्यान्नैर्ऋत्याञ्चण्डनायिका ॥ २२ ॥ उग्रचण्डापश्चिमायाम्पातुनित्यम्महे
श्वरी ॥ प्रचण्डापातुवायव्व्येकौबेर्य्याङ्घोररूपिणी ॥ २३ ॥ ईश्वरीचतथैशान्याम्पातुनित्यंसनातनी ॥ ऊर्द्ध्वंपातुम
हामायापात्वधःपरमेश्वरी ॥ २४ ॥ अग्रतःपातुमामुग्रापृष्ठतोवैष्णवीतथा ॥ ब्रह्माणीदक्षिणेपार्श्वेनित्यंरक्षतुशोभना ॥
माहेश्वरीवामपार्श्वेनित्यम्पायाद्वृषध्वजा ॥ २५ ॥ कौमारीपर्व्वतेपातुवाराहीसलिलेचमाम् ॥ नारसिंहीदंष्ट्रिभयेपातु
माव्विँपिनेषुच ॥ २६ ॥ ऐन्द्रीमाम्पातुचाकाशेतथासर्व्वजलेस्थले ॥ सेतुःसर्व्वाङ्गुलीःपातुदेवादिःपातुकर्णयोः ॥ २७ ॥ दे
वान्तश्चिबुकेपातुपार्श्वयोःशक्तिपञ्चमः ॥ हापातुमान्तथैवोर्व्वोर्म्मायारक्षतुजङ्घयोः ॥ २८ ॥ सर्वेन्द्रियाणिमेपातुरोमकूपे
षुसर्व्वदा ॥ त्वचिमाव्वैसदापातुमांशम्भुःपातुसर्व्वदा ॥ २९ ॥ नखदन्तकरोष्ठादौरोमाम्पातुसदैवहि ॥ देवादिःपातुमा
म्बस्तौदेवान्तःस्तनकक्षयोः ॥ ३० ॥ एतदादौतुयःसेतुर्ब्बाह्येमाम्पातुदेहतः ॥ आज्ञाचक्रेसुषुम्नायांषट्चक्रेहृदिसन्धिषु ॥ ३१ ॥
आदिषोडशचक्रेचललाटाकाशएवच ॥ वैष्णवीतन्त्रमन्त्रोमान्नित्यंरक्षश्चँतिष्ठतु ॥ ३२ ॥ कर्णनाडीषुसर्व्वासुपार्श्वकक्षशि
खासुच ॥ रुधिरस्नायुमज्जासुमस्तिष्केषुचपर्वसु ॥ ३३ ॥ द्वितीयाष्टाक्षरोमन्त्रःकवचःपातुसर्व्वतः ॥ रेतोवायौनाभिरन्ध्रेपृष्ठ
सन्धिषुसर्व्वतः ॥ षडक्षरस्तृतीयोयम्मन्त्रोमाम्पातुसर्व्वदा ॥ ३४ ॥ नासारन्ध्रेमहामायाकण्ठरन्ध्रेतुवैष्णवी ॥ सर्व्वसन्धि

षुमाम्पातुदुर्गादुर्गार्तिहारिणी ॥ ३५ ॥ श्रोत्रयोर्हूँम्फँडित्येवंनित्यंरक्षतुकालिका ॥ नेत्रबीजत्रयन्नेत्रेसदातिष्ठतुरक्षितु
म् ॥ ३६ ॥ ओंऐंह्रोंह्रौंनासिकायांरक्षन्तीचास्तुचण्डिका ॥ ओंह्रींहूँमांसदाताराजिह्वामूलेतुतिष्ठतु ॥ ३७ ॥ हृदितिष्ठ
तुमेसेतुर्ज्ञानंरक्षितुमुत्तमम् ॥ ओंक्षौंफँट्चमहामारीपातुमांसर्व्वतःसदा ॥ ३८ ॥ ओंयूँसःप्राणान्कौशिकीमाम्प्राणात्र
क्षतुरक्षिका ॥ ओंह्रींहूँमाम्भर्गदयितादेहशून्येषुपातुमाम् ॥ ३९ ॥ ओंमःसदाशैलपुत्रीसर्व्वान्रोगान्प्रमृज्यताम् ॥
ओंह्रींसँःस्फेंक्षःफडस्त्रायसिंहव्याघ्रभयाद्रणात् ॥ ४० ॥ शिवदूतीपातुनित्यंह्रींसर्व्वाङ्गेषुतिष्ठतु ॥ ओंह्रांह्रींसश्च
ण्डघण्टाकर्णछिद्रेषुपातुमाम् ॥ ४१ ॥ ओंह्रींसँःकामेश्वरीकामानभितिष्ठतुरक्षतु ॥ ओंआंहूँफडुग्रचण्डारिपून्विघ्नान्वि
मर्द्दताम् ॥ ४२ ॥ ओंऐंलापातुमान्नित्यंवैष्णवीजगदीश्वरी ॥ ओंकंब्रह्माणीपातुचक्रतुओंचंरुद्राणीतुशक्तितः ॥ ४३ ॥
ओंटक्कौमारीपातुवज्रात्ओंतंवाराहीतुकाण्डतः ॥ ओंपंपातुनारसिंहीमाङ्कुव्यादेभ्यस्तथास्त्रतः ॥ ४४ ॥ शस्त्रास्त्रेभ्यःसम
स्तेभ्योयन्त्रेभ्योनिष्ठमन्त्रतः ॥ चण्डिकामांसदापातुओंयंसंदेव्यैनमोनमः ॥ ४५ ॥ विश्वासघातकेभ्योमामैन्द्रीरक्षतुम
न्मनः ॥ ओंनमोमहामायायैओंवैष्णव्यैनमोनमः ॥ ४६ ॥ रक्षमांसर्व्वभूतेभ्यःसर्व्वत्रपरमेश्वरि ॥ आधारेवायुमार्गे
हृदिकमलदलेचन्द्रवत्स्मेरसूर्य्यैबस्तौवह्नौसमिद्धेविशतुवरदयामन्त्रमष्टाक्षरन्तत् ॥ ४७ ॥ यद्ब्रह्मामूर्ध्निधत्तेहरिरवतिगले

चन्द्रचूडोहृदिस्थन्तन्माम्पातुप्रधानन्निखिलमतिशयम्पद्मगर्भाभबीजम् ॥ आद्याःशेषाःस्वरौघैर्न्नमयबलवरेरस्वरंणापि
युक्तैःसानुस्वाराविसर्गैर्हरिहरविदितय्यँत्सहस्रञ्चसाष्टम् ॥ ४८ ॥ मन्त्राणांसेतुबन्धन्निवसतिसततव्वैष्णवीतन्त्रमन्त्रेत
न्माम्पायात्पवित्रम्परमपरमजम्भूतलव्योमभागे ॥ अङ्गान्यष्टौतथाष्टौवसवइहतथैवाष्टमूर्त्तिर्दलानिप्रोक्तान्यष्टौतथाष्टौम
धुमतिरचिताःसिद्धयोष्टौतथैव ॥ ४९ ॥ अष्टावष्टाष्टसङ्ख्याजगतिरतिकलाःक्षिप्रकाष्ठाङ्गयोगामय्यष्टावक्षराणिक्षरतुनहि
गणोयद्वदोयस्त्वमूषाम् ॥ इतितत्कवचम्प्रोक्तन्धर्म्मकामार्थसाधकम् ॥ ५० ॥ इदंरहस्यम्परममिदंसर्व्वार्थसाधकम् ॥ यः
सकृच्छृणुयादेतत्कवचम्मयकोदितम् ॥ ५१ ॥ ससर्व्वांल्लँभते कामान्परत्रशिवरूपताम् ॥ सकृद्यस्तुपठेदेतत्कवचम्मयको
दितम् ॥ ५२ ॥ ससर्व्वयज्ञस्यफलल्लँभतेनात्रसंशयः ॥ सङ्ग्रामेपुजयेच्छत्रून्मातङ्गानिवकेसरी ॥ ५३ ॥ दहेत्तृणय्यँथावह्निस्त
थाशत्रून्दहेत्सदा ॥ नास्त्राणितस्यशस्त्राणिशरीरेप्रविशन्तिवै ॥ ५४ ॥ नतस्यजायतेव्याधिर्न्नचदुःखङ्कदाचन ॥ गुटिकाञ्ज
नपातालपादुलेपरसाञ्जनम् ॥ ५५ ॥ उच्चाटनाद्यास्ताःसर्व्वाःप्रसीदन्तिचसिद्धयः ॥ वायोरिवगतिस्तस्यभवेदन्यैरवारिता
॥ ५६ ॥ दीर्घायुःकामभोगीचधनवानभिजायते ॥ अष्टम्यांसय्यँतोभूत्वानवम्याव्विँधिवच्छिवाम् ॥ ५७ ॥ पूजयित्वावि
धानेनविचिन्त्यमनसाशिवाम् ॥ योन्यसेत्कवचन्देहेतस्यपुण्यफलंशृणु ॥ ५८ ॥ जितव्याधिःशतायुश्चरूपवान्गुणवान्स

दा ॥ धनरत्नौघसम्पूर्णोविद्यावान्सचजायते ॥ ५९ ॥ नाग्निर्दहतितत्कायन्नापःसङ्क्लेदयन्तिच ॥ नशोषयतितद्वायुःक्रव्या
तन्नहिनस्तिच ॥ शस्त्राणिनैनञ्छिन्दन्तिनतापयतिभास्करः ॥ ६० ॥ नतस्यजायतेविघ्नोनास्तितस्यचसञ्ज्वरः ॥ वे
तालाश्चपिशाचाश्चराक्षसागणनायकाः ॥ ६१ ॥ सर्व्वेतस्यवशय्यान्तिभूतग्रामाश्चतुर्व्विधाः ॥ नित्यम्पठतियोभक्त्या
कवचंहरनिर्म्मितम् ॥ ६२ ॥ सोहमेवमहादेवोमहामायाचमातृका ॥ धर्म्मार्थकाममोक्षाश्चतस्यनित्यङ्करेस्थिताः ॥ ६३ ॥
अन्यस्यवरदःसोवैनित्यम्भवतिपण्डितः ॥ कवित्वंसत्यवादित्वंसततन्तस्यजायते ॥ ६४ ॥ वदेच्छ्लोकसहस्राणिभवेच्छ्रुति
धरस्तथा ॥ लिखितय्यँस्यगेहेतुकवचम्भैरवस्थितम् ॥ ६५ ॥ नतस्यदुर्ग्गतिःक्वापिजायतेतस्यदूषणम् ॥ ग्रहाश्चस
र्व्वेतुष्यन्तिवशङ्गच्छन्तिभूमिपाः ॥ ६६ ॥ यद्राज्येकवचञ्चास्तिजायन्तेतत्रनेतयः ॥ सेतुर्द्देवःशक्तिबीजम्पञ्चमोहाय
नेनमः ॥ ६७ ॥ वायुर्ब्बलेनचैतायैद्वितीयाष्टाक्षरन्त्विदम् ॥ सेतुर्द्देवोथवैष्णव्यैषडक्षरमिदंस्मृतम् ॥ ६८ ॥ एतद्द्वयन्तु
जिह्वाग्रेसततय्यँस्यवर्त्तते ॥ तस्यदेवीमहामायाकार्य्येतिष्ठतिवैसदा ॥ ६९ ॥ मन्त्राणाम्प्रणवःसेतुस्तत्सेतुःप्रणवःस्मृतः ॥
क्षरत्यनोङ्कृतःपूर्व्वंपरस्ताच्चविशीर्य्यते ॥ ७० ॥ नमस्कारोमहामन्त्रोदेवइत्युच्यतेसुरैः ॥ द्विजातीनामयम्मन्त्रःशूद्राणांस
र्व्वकर्म्मणि ॥ ७१ ॥ अकारश्चाप्युकारश्चमकारश्चप्रजापतिः ॥ वेदत्रयात्समुद्धृत्यप्रणवन्निर्म्ममेपुरा ॥ ७२ ॥ सउदा

त्तोद्विजातीनांराज्ञांस्यादनुदात्तकः ॥ प्रचितश्चोरुजातानाम्मनसापितथास्मरेत् ॥ ७३ ॥ चतुर्द्दशस्वरोयोसौशेषऔका
रसञ्ज्ञकः ॥ सचानुस्वारचन्द्राभ्यांशूद्राणांसेतुरुच्यते ॥ ७४ ॥ निःसेतुचयथातोयङ्क्षणान्निम्नम्प्रसर्प्पति ॥ मन्त्रस्तथै
वनिःसेतुःक्षणात्क्षरतियज्ज्वनाम् ॥ ७५ ॥ तस्मात्सर्व्वत्रमन्त्रेषुचतुर्व्वर्णाद्विजातयः ॥ पार्श्वयोःसेतुमादायजपकर्म्मसमा
रभेत् ॥ ७६ ॥ शूद्राणामादिसेतुर्व्वाद्विःसेतुर्व्वायथेच्छतः ॥ द्विःसेतवःसमाख्याताःसर्व्वदैवद्विजातयः ॥ ७७ ॥ ॥ और्
र्व्वउवाच ॥ ॥ एतत्तेसर्व्वमाख्यातङ्कवचन्त्र्यम्बकोदितम् ॥ अभेद्यंकवचन्तत्तुकवचाष्टकमुत्तमम् ॥ ७८ ॥ महामाया
मन्त्रकल्पङ्कवचम्मन्त्रसय्युतम् ॥ षडक्षरसमायुक्तन्त्रिषुलोकेषुदुर्ल्लभम् ॥ ७९ ॥ एतत्त्वन्नृपशार्द्दूलनित्यम्भक्तियुतःपठ
न् ॥ जपन्मन्त्रञ्चवैष्णव्याःसर्व्वसिद्धिमवाप्स्यसि ॥ ८० ॥ इतिकालिकापुराणेमहामायामन्त्रकल्पंनामाष्टपञ्चाशत्तमो
ऽध्यायः ॥ ५८ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ श्रुत्वेमंसगरोराजासर्व्वान्दम्भैरवेणवै ॥ वेतालेनापिभर्गस्यपुनरौर्व्वमपृ
च्छत ॥ १ ॥ सगरउवाच ॥ ॥ मन्त्रङ्कलेवरगतंसाङ्गम्प्रोक्तन्त्वयाद्विज ॥ अङ्गमन्त्राणिमेदेव्याःकथ्यन्ताम्भोद्विजोत्तम
॥ २ ॥ तथामन्त्राणिसर्व्वाणिपूजास्थानानिसर्व्वशः ॥ तथैवोत्तरमन्त्राणिकवचानिपृथक्पृथक् ॥ ३ ॥ कामाख्यायाश्चमाहा
त्म्यंसरहस्यंसमन्त्रकम् ॥ यथाशशंसभगवान्महादेवउमापतिः ॥ ४ ॥ वेतालभैरवाभ्यान्तत्समाचक्ष्वसविस्तरात् ॥ शृण्वतोन

हिमेतृप्तिर्ज्जायतेमहदद्भुतम् ॥ ५ ॥ भवताकथ्यमानंहिपरङ्कौतूहलम्मम ॥ और्व्वउवाच ॥ ॥ शृणुत्वंराजशार्दूलयत्पुत्रा
भ्यामुमापतिः ॥ ६ ॥ उवाचमहदाख्यानन्तन्मेनिगदतोधुना ॥ एतद्रहस्यम्परमम्पवित्रम्पापनाशनम् ॥ परंस्वस्त्ययनम्पुं
साङ्गर्भेपुंसवनंस्मृतम् ॥ ७ ॥ कल्याणकारकम्भद्रञ्चतुर्व्वर्ग्गफलप्रदम् ॥ शठायचलचित्तायनास्तिकायाजितात्मने ॥ ८ ॥
देवद्विजगुरूणाञ्चमिथ्यानिर्ब्बन्धकारिणे ॥ नपापायाप्रशस्तायखञ्जकाणादिरोगिणे ॥ ९ ॥ नकथ्यन्नचवादेयंश्रद्धाविरहि
तायच ॥ महामायामन्त्रकल्पम्प्रोक्तांताभ्यामुमापतिः ॥ १० ॥ वेतालभैरवाभ्यान्तुपुनरेवाभ्यभाषत ॥ भगवानुवाच ॥ अङ्ग
मन्त्रम्प्रवक्ष्यामिप्रोक्तव्वाँन्तन्त्रमुत्तमम् ॥ ११ ॥ तदेवप्रथमव्विँद्धिसर्व्वपूजासुसङ्गतम् ॥ आचान्तःशुचिताम्प्राप्तःसुस्नातोदे
वपूजने ॥ १२ ॥ पूजावेद्याबहिःस्थित्वाचतुर्हस्तान्तरेधिया ॥ गृहेवाद्वारदेशस्थःप्रणम्यशिरसागुरुम् ॥ १३ ॥ प्रणमेदिष्टदे
वंस्वन्दिक्पालानपिचेतसा ॥ यत्पूर्व्वमर्ज्जितम्पापन्तद्दिनेन्यदिनेपिवा ॥ १४ ॥ प्रायश्चित्तैर्न्नापनुन्नन्तच्चपापंस्मरेद्धिया ॥ तत्पा
पस्यापनोदायमन्त्रद्वयमुदीरयेत् ॥ १५ ॥ देविलम्प्राकृतश्चित्तंपापाक्रान्तमभून्मम ॥ तन्निःसारयचित्तान्मेपापंहूँफट्चतेनमः
॥ १६ ॥ सूर्य्यःसोमोयमःकालोमहाभूतानिपञ्चवै ॥ एतेशुभाशुभस्येहकर्म्मणोनवसाक्षिणः ॥ १७ ॥ ततःपुनर्हूंफडितिपार्श्वं
मूर्द्ध्वमधस्तथा ॥ आत्मानंक्रोधदृष्ट्याथनिरीक्ष्यसुमनाभवेत् ॥ १८ ॥ एवङ्कृतेप्रथमतःपापोत्सारणकर्म्मणि ॥ यत्स्याद्दृढतर

म्पापन्तद्दूरेचावतिष्ठते ॥ १९ ॥ अतीतेपूजनेस्थानंस्वम्प्रयातिपुनश्चयत् ॥ यत्स्यादल्पतरम्पापन्तन्नाशमुपगच्छति ॥ २० ॥ ओँअःफडितिमन्त्रेणपूजावेदीन्ततोविशेत् ॥ पूजनेत्यक्तपापस्यकाममिष्टंक्षणाद्भवेत् ॥ २१ ॥ नाराचमुद्रयादृष्ट्वासमयासम लोकयत् ॥ पुष्पनैवेद्यगन्धादिन्ह्राँ ह्रीँफडितिमन्त्रकैः ॥ २२ ॥ यदात्मनानवज्ञातंसम्यक्पुष्पादिदूषणम् ॥ अस्पृश्यस्पर्शनव्वाँ पियदन्यायाज्जितञ्चवा ॥ २३ ॥ तथानिर्म्माल्यसंसृष्टकीटाद्यारोहणञ्चयत् ॥ तत्सर्व्वन्नाशमायातिनैवद्याद्यवलोकनात् ॥ २४ ॥ ततोरमितिमन्त्रेणशिखान्दीपस्यसंस्पृशेत् ॥ सतस्यसुभगोदीपोभवेत्स्पर्शनमात्रतः ॥ २५ ॥ पतङ्गकीटकेशादिदाहात्क्रव्या दसंहतः ॥ २६ ॥ वसामज्जास्थिसम्पूतिर्य्यज्ञादावुपयोजनम् ॥ अज्ञातरूपन्तत्सर्व्वन्दोषंस्पर्शाद्विनाशयेत् ॥ २७ ॥ नार सिंहेनमन्त्रेणदेवतीर्थेनसंस्पृशेत् ॥ पानीयङ्कटमध्यस्थव्वीक्षन्नभ्युक्षययाजकः ॥ २८ ॥ वामेनपाणिनाधृत्वावामपार्श्वे स्थितन्तदा ॥ पात्रमाधारमन्त्रेणसंस्कुर्व्वन्त्संस्पृशेज्जलम् ॥ २९ ॥ ॥ यदज्ञानादपेयादिसंसृष्टिरिहसङ्गता ॥ यदन्यद्दूष णम्पात्रेतोयेवाज्ञानतोभवेत् ॥ ३० ॥ जलाशयंशवस्पर्शाज्जलंस्नानाच्चसङ्गतम् ॥ दूषणानिविनश्यन्तितानिवैदेवपूजने ॥ ३१ ॥ [1]प्रजापतिसुतोहान्तप्रान्तःस्वरसमन्वितः ॥ चन्द्रार्द्धबिन्दुसहितोमन्त्रोयन्नारसिंहकः ॥ ३२ ॥ स्वसञ्ज्ञाद्यक्षर म्बिन्दुचन्द्रार्द्धपरियोजितम् ॥ आधारमन्त्रञ्जानीयात्साधकःकार्य्यसिद्धये ॥ ३३ ॥ ततआधारमन्त्रेणपाणिभ्यामासनं

१ प्रजापतिसुतोऽग्निस्तद्बीजंरमित्यपिप्रजापतिसुतशब्देनाभिधीयते ।

स्वकम् ॥ आदायविनिधायाशुपुनःसंस्पृश्यपाणिना ॥ ३४ ॥ आत्ममन्त्रेणोपविशेत्तदातस्मिन्वरासने ॥ दुःशिल्पिर
चितत्वादियद्वान्यासनभूषणम् ॥ ३५ ॥ अज्ञातव्विँलयय्याँतिउपवेशात्समन्त्रकात् ॥ आहूयस्वाक्षरम्पूर्व्वँसोमसा
मिसमन्वितम् ॥ ३६ ॥ सबिन्दुकव्विँजानोयादात्ममन्त्रन्तुसाधकः ॥ ततस्तुमातृकान्यासन्नादबिन्दुसमन्वितम् ॥ ३७ ॥
कुर्य्यात्तुमातृकामन्त्रैःस्वशरीरेविचक्षणः ॥ कल्पेषुचयदज्ञातम्मन्त्रोच्चारणकर्म्माणि ॥ ३८ ॥ यद्दुष्टव्वाँतथास्पृष्टम्मा
त्राभ्रष्टादिदूषणम् ॥ तव्यस्तामातृकामन्त्रानाशयन्तिसदैवहि ॥ ३९ ॥ व्यञ्जनानिचसर्व्वाणितथाविष्ण्वादयःस्वराः ॥
सर्व्वेतेमातृकामन्त्राश्चन्द्रबिन्दुविभूषणाः ॥ ४० ॥ सर्व्वेयुगान्तबन्धेषुन्यस्तेषुन्यूनपूरणम् ॥ मन्त्रेकल्पेचकुर्व्वन्ति
विन्यस्तामातृकाःस्वयम् ॥ ४१ ॥ एकमात्रोभवेद्ध्रस्वोद्विमात्रोदीर्घउच्यते ॥ प्लुतस्त्रिमात्रोविज्ञेयोवर्णाएतेव्यवस्थिताः
॥ ४२ ॥ सर्व्वेषामेववर्णानाम्मात्रादेव्यस्तुमातृकाः ॥ शिवदूतीप्रभृतयस्तन्न्यासास्तत्तनुस्थिताः ॥ ४३ ॥ पूरयन्ति
चतान्न्यूनाँश्चतुर्व्वर्गन्तथाचिरात् ॥ ददत्येवसदारक्षाङ्कुर्व्वन्तिसुरपूजने ॥ ४४ ॥ चतुर्व्वर्गप्रदश्चायंसर्व्वकामफलप्रदः ॥
सर्व्वदामातृकान्यासस्तुष्टिपुष्टिप्रदायकः ॥ ४५ ॥ यःकुर्य्यान्मातृकान्यासव्विँनापिसुरपूजनात् ॥ तस्माद्बिभेतिसतत
म्भूतग्रामश्चतुर्व्विधः ॥ ४६ ॥ तन्द्रष्टुमपिदेवाश्चस्पृहयन्तिमहौजसम् ॥ ससर्व्वञ्चवशङ्कुर्य्यान्नचयातिपराभवम् ॥ ४७ ॥

१सोमसामीति सोमार्द्धसमन्वितमित्यर्थः । २शिवदूतीप्रभृतयोयादेव्यस्तदभिन्नाएवाकारादिमातृकाःसर्व्वेषांव्यंजनवर्णानांमात्रारूपाभवन्तीत्यर्थः । ३ताइति शिवदूतीप्रभृतयइत्यर्थः

कुसुमव्विँष्णुमन्त्रेणअङ्गुल्यग्रेणसाधकः ॥ विमर्द्दनार्थङ्गृह्णीयात्करशोधनकर्म्मणि ॥ ४८ ॥ उपान्तःसामिचन्द्रेणरञ्जितः
शून्यसय्युँतः ॥ रुद्रान्तोपरिसंसृष्टोमन्त्रोयँव्वैष्णवोमतः ॥ ४९ ॥ प्रासादेनतुमन्त्रेणअङ्गुल्यग्रेणसाधकः ॥ गृहीत्वाचततः
कुर्य्यात्कराभ्याम्पुष्पमर्द्दनम् ॥ ५० ॥ निर्म्मथ्येत्कामबीजेनजिघ्रेद्ब्राह्मेणतत्पुनः ॥ प्रासादेनपरित्यागोदिश्यैशान्याव्विँशेषतः
॥ ५१ ॥ एवङ्कृतेतुकरयोर्व्विशुद्धिरतुलाभवेत् ॥ जलौकागूढपादादिस्पर्शाच्छुद्धिर्व्विशोधनात् ॥ ५२ ॥ दुर्ग्गन्ध्युच्छिष्टसं
स्पर्शाद्दूषणङ्करयोस्तुयत् ॥ अज्ञातरूपन्तत्सर्व्वन्नाशयेत्सुविधानतः ॥ ५३ ॥ अङ्गुल्यग्राणिशुद्धानिपुष्पाणाङ्ग्रहणाद्भवेत् ॥
तलद्वयम्मर्द्दनात्तुविशुद्धमभिजायते ॥ ५४ ॥ निर्म्मन्थनात्पाणिपृष्ठङ्घ्राणान्नासाग्रमुत्तमम् ॥ तीर्थानिचसमायान्तिनासिका
याङ्करम्प्रति ॥ ५५ ॥ तस्माद्यत्नेनकार्य्याणिकर्म्माण्येतानिभैरव ॥ प्रान्तादिर्व्वासुदेवेनवर्णेनापिचसंहितः ॥ ५६ ॥ शम्भुचूडा
बिन्दुयुक्तःप्रासादश्चसउच्यते ॥ कामबीजन्तुविज्ञेयव्वाँसुदेवेन्दुबिन्दुभिः ॥ ५७ ॥ व्यञ्जनञ्चाद्यदन्तञ्चप्रान्तदन्त्यातुपूर्व्व
कम् ॥ आद्यदन्त्यद्वयम्पश्चाद्व्यञ्जनम्प्रणवोत्तरम् ॥ ५८ ॥ ब्रह्मबीजमिदम्प्रोक्तंसर्व्वपापप्रणाशनम् ॥ प्रणवन्दीर्घमुच्चार्य्य
प्रथमम्मुखशुद्धये ॥ ५९ ॥ वासुदेवस्यबीजेनप्राणायामंसमाचरेत् ॥ यस्यदेवस्ययद्रूपय्यँथाभूषणवाहनम् ॥ ६० ॥ तदेव
पूजनेतस्यचिन्तयेत्पूरकादिभिः ॥ वैष्णवीतन्त्रमन्त्रस्यकण्ठाद्यय्यँत्पुरःसरम् ॥ ६१ ॥ तद्बीजव्वाँसुदेवस्यपूर्णचन्द्रनिभंस

दा ॥ गङ्गावतारबीजेनप्रथमन्धेनुमुद्रया ॥ ६२ ॥ अमृतीकरणंकुर्य्यादर्घपात्राहितेजले ॥ शशिखण्डयुतःकण्ठ्यःपञ्चमोबल
बीजकः ॥ ६३ ॥ गङ्गावतारमन्त्रोयंसर्व्वपापप्रणाशकः ॥ मात्राद्वययुतोविष्णुर्ब्बलबीजमुदाहृतम् ॥ ६४ ॥ अमृतीकरणे
वृत्तेतोयर्घ्यँद्दीयतेमृतम् ॥ भूत्वाप्रयातिदेवस्यप्रीतयेसुरपूजने ॥ ६५ ॥ गङ्गापिस्वयमायातिपूजापात्रजलम्प्रति ॥ अमृती
करणङ्कुर्य्याद्धर्म्मकामार्थसिद्धये ॥ ६६ ॥ स्वस्तिकङ्गोमुखम्पद्ममर्द्धस्वस्तिकमेवच ॥ पर्य्यङ्कमासनंशस्तमभीष्टसुरपूजने ॥
॥ ६७ ॥ पादयन्त्रमिदम्प्रोक्तंसर्व्वमन्त्रोत्तमोत्तमम् ॥ तद्वत्क्रीयाद्वराहस्यबीजेनप्रथमम्बुधः ॥ ६८ ॥ मायादिरग्निबीजस्यचतु
र्थःसमवाप्तिकः ॥ षष्ठस्वरोपरिचरोवाराहम्बीजमुच्यते ॥ ६९ ॥ वाराहबीजसंशुद्धम्मन्त्रम्पादद्वयेकृतम् ॥ पश्यन्नभीष्टदेव
न्तुपाददोषन्नपश्यति ॥ ७० ॥ नयुक्तमन्यथापाददर्शनंसुरपूजने ॥ मन्त्रेणलभतेभीष्टांस्तस्मान्मन्त्रपरोभवेत् ॥ ७१ ॥ पाणिक
च्छपिकाङ्कुर्य्यात्कूर्म्ममन्त्रेणसाधकः ॥ तत्रसंस्कृतपुष्पेणपूजयेदात्मनोवपुः ॥ ७२ ॥ पूजितेतेनपुष्पेणदेवत्वंस्वस्यजायते ॥
द्वितीयव्वैष्णवीतन्त्रम्बीजम्बिन्द्विन्दुसय्युँतम् ॥ ७३ ॥ षष्ठस्वरोपरिचरङ्कूर्म्मबीजम्प्रकीर्त्तितम् ॥ दहनप्लवनस्यादौरन्ध्रस्य
दशमस्यतु ॥ ७४ ॥ भेदनंसाधकःकुर्य्यान्मन्त्रेणप्रणवेनतु ॥ बीजेनवासुदेवस्यआकाशेविनिधापयेत् ॥ ७५ ॥ प्राणेनसहि
तम्बीजन्तत्पूर्व्वम्प्रतिपादितम् ॥ अज्ञाताप्रयतानान्तुमण्डलस्थानमार्ज्जनात् ॥ ७६ ॥ द्रव्याणाव्विँप्रकारःस्यात्संसर्गा

णान्तथैवच ॥ मधुकैटभयोर्म्मेदःसंघातैर्द्दढताङ्गता ॥ ७७॥ मेदिनीसर्व्वदाशुद्धासुरपूजासुसर्व्वतः ॥ अद्यापिसर्व्वेत्रिदशा
नस्पृशन्तिपदाक्षितिम् ॥ ७८ ॥ नचस्वीयतनुच्छायांयोजयन्तिचभूतले ॥ तस्यदोषस्यमोक्षार्थम्मन्त्रराजलिँखेत्क्षितौ
॥ ७९ ॥ प्रोक्षणाद्वीक्षणाद्वापिशुद्धाभवतिमेदिनी ॥ वीक्षणन्धर्म्मबीजेनस्थण्डिलस्यसमाचरेत् ॥ ८० ॥ दान्तोबले
नसय्युँक्तश्चूडाबिन्दुसमन्वितः ॥ धर्म्मबीजमितिप्रोक्तन्धर्म्मकामार्थसाधनम् ॥ ८१ ॥ आदानन्धारणञ्चैवतथासंस्थान
पूजने ॥ पूरणंसलिलेनैवनिःक्षेपोगन्धपुष्पयोः ॥ ८२ ॥ मण्डलस्याथविन्यासःपुनःपुष्पस्यसंश्रयः ॥ अमृतीकरणम्पा
त्रप्रतिपत्तिरियंन्नरः ॥ ८३ ॥ आनिरुद्धेनचादायअस्त्रमन्त्रेणधारणम् ॥ पात्रंतुमण्डलाभ्याशव्वाँग्बीजाग्रेणयोजयेत् ॥
॥ ८४ ॥ आनिरुद्धम्भवेद्बीजमाद्यम्बिन्दुद्वयोत्तरम् ॥ फडन्तेनानिरुद्धन्तु अस्त्रमन्त्रम्प्रकीर्त्तितम् ॥ ८५ ॥ शम्भुराद्यम्बलः
प्रान्तःसम्पूर्णःसहिताइमे ॥ परतःपरतःपूर्व्वंसमाप्यन्ताःसबिन्दुकाः ॥ ८६ ॥ तृतीयव्वाँग्भवम्बीजंसकलन्निष्कलाह्वय
म् ॥ स्वरश्चतुर्थःसकलःसंसृष्टौन्बिदुनेन्दुना ॥ ८७ ॥ वर्ग्गाद्याद्विद्वितीयन्तुवाग्भवम्बीजमुच्यते ॥ कामराजाह्वयञ्चैतद्धर्म्म
कामार्थसाधनम् ॥ ८८ ॥ मनोभवस्यबीजन्तुकुण्डलीशक्तिसय्युँतम् ॥ वासुदेवेनसम्पृक्तमाद्यव्वाँग्भवमुच्यते ॥ ८९ ॥ इ
दंसारस्वतन्नामयदाद्यव्वाँग्भवंस्मृतम् ॥ एकैकङ्कामबीजादित्रिभिस्तुत्रिपुरामहः ॥ ९० ॥ आद्यन्तृतीयंसामीन्दुबिन्दुभ्यां

समलङ्कृतं ॥ मदनस्यतुमन्त्रोयङ्कामभोगफलप्रदः ॥ ९१ ॥ औंदेतोरूपविन्यस्तय्यँतुभास्करसन्निभम् ॥ तद्वक्ष्येकुण्डली
शक्तिमभेदातुनिगद्यते ॥ ९२ ॥ भूतापसारणङ्कुर्य्यान्मन्त्रेणानेनयाजकः ॥ यस्मिन्कृतेस्थानभूतादूरय्याँन्तिसुरार्च्चने ॥
॥ ९३ ॥ स्थितेषुतत्रभूतेषुनैवेद्यमण्डलन्तथा ॥ विलुम्पन्तिसदालुब्धानगृह्णन्तिचदेवताः ॥ ९४ ॥ तस्माद्यत्नेनकर्त्तव्यम्भू
तानामपसारणम् ॥ अस्त्रमन्त्रेणसहितन्तस्यमन्त्रमिदंस्मृतम् ॥ ९५ ॥ अपसर्प्पन्तुतेभूतायेभूताभूमिपालकाः ॥ भूताना
मविरोधेनपूजाकर्म्मकरोम्यहम् ॥ ९६ ॥ अनेनस्थण्डिलाद्भूतानपसार्य्यार्थसाधकः ॥ ततोदिग्बन्धनङ्कृत्वादिग्भ्यस्तानप
सारयेत् ॥९७॥ विष्णुबीजम्फडन्तेतुमन्त्रन्दिग्बन्धनेस्थितम् ॥ करेणछोटिकापूर्व्वव्वेँष्टनम्बन्धनन्दिशः ॥ ९८ ॥ आत्मनः
पूजनेनाथकर्म्मारम्भाधिकारिता ॥ पूजितश्चासनय्योँगपीठस्यसदृशम्भवेत् ॥९९॥ स्वभावतःसदाशुद्धम्पञ्चभूतात्मकव्वँ
पुः ॥ मलपूतिसमायुक्तश्लेष्मविण्मूत्रपिच्छिलम् ॥ १००॥ रेतोनिष्ठीवमालाभिःस्रवद्भिरपरिष्कृतम् ॥ बीजभूतानिचैतस्य
महाभूतानिपञ्चवै ॥१॥ तेषान्तुसर्व्वभूतानाम्बीजानान्देहसञ्ज्ञिनाम् ॥ वायुतेजःपृथिव्यम्भोवियतांशुद्धयेक्रमात् ॥ २ ॥
शोषणन्दहनम्भस्मप्रोत्सादोमृतवर्षणम् ॥ आप्लावनञ्चकर्त्तव्यञ्चिन्तामात्रविशुद्धये ॥३॥ अण्डस्यचिन्तनाद्भेदातन्मध्येदेव
चिन्तनात् ॥ स्वकीयस्यैष्टदेवस्यचिन्तासर्व्वात्मनाभवेत् ॥ ४ ॥ सोहमित्यस्यसततञ्चिन्तनाद्देवरूपना ॥ आत्मनोजायते

सम्यक्संस्कृतिःपुष्पदानतः ॥ ५ ॥ अर्हन्देवोथनैवेद्यम्पुष्पगन्धादिकञ्चयत् ॥ पूजोपकरणार्थापिदेवत्वमिहजायते ॥ ६ ॥ देवाधारोह्यर्हन्देवोदेवन्देवाययोजयेत् ॥ सर्व्वेषान्देवतासृष्ट्याजायतेशुद्धतापिच ॥ ७ ॥ मनोजीवात्मनोःशुद्धिःप्राणायामेनजायते ॥ अन्तर्गतय्यँच्चमलन्तच्चशुद्धम्प्रजायते ॥ ८ ॥ गृहेचेत्पूजयेद्देवन्तदातस्यविलोकनम् ॥ कुर्य्यादादित्यबीजेनचतुःपार्श्वेष्वपिक्रमात् ॥ ९ ॥ हान्तःसमाप्तिसहितोवह्निबीजेनसंहितः ॥ उपान्तःसचतुर्थस्तुसतथासबलोग्रतः ॥ १० ॥ आदित्यबीजङ्कथितंसर्व्वरोगविनाशनम् ॥ धर्म्मार्थकाममोक्षाणाङ्कारणन्तोषदायकम् ॥ ११ ॥ अशुद्धपक्षिसय्योगपक्षिविष्ठाप्रसेचने ॥ मूषिकानान्तथास्पर्शःकृमिकीटादिसङ्गमः ॥ १२ ॥ एवमादीनिनश्यन्तिलोकनाद्गृहदूषणम् ॥ ततस्तुयोगपीठस्यध्यानम्प्रथमतश्चरेत् ॥ १३ ॥ ध्यानमात्रय्योँगपीठम्प्रविशत्येवमण्डलम् ॥ योगपीठेस्मृतंसर्व्वय्योगपीठमयंसमम् ॥ १४ ॥ नयोगपीठादधिकव्विँद्यतेपरमासनम् ॥ यस्यध्यानज्जगद्व्याप्तंसचराचरमानुषम् ॥ १५ ॥ तच्चिन्तनस्यमाहात्म्यङ्कोवावक्तुंसमुत्सहेत् ॥ चिन्तामात्रेणमानुष्यम्पश्यशोकविनाशनम् ॥ १६ ॥ धारणाद्योगपीठन्तुचतुर्व्वर्गफलप्रदम् ॥ शुद्धस्फटिकसङ्काशञ्चतुष्कोणञ्चतुर्व्रतिम् ॥ १७ ॥ आधारशक्त्याविहितम्प्रग्रहंसूर्य्यसन्निभम् ॥ आग्नेयादिषुकोणेषुचतुर्षुक्रमतःस्थितम् ॥ १८ ॥ धर्म्मोज्ञानन्तथैश्वर्य्यव्वैराग्यङ्क्रमतःसदा ॥ पूर्व्वादिदिक्षुचैतानिस्थितानि

क्रमतोयथा ॥ १९ ॥ अधर्म्मश्चतथाज्ञानमनैश्वर्य्यन्ततःपरम् ॥ अवैराग्यम्परन्तस्माद्धारणार्थव्यँवस्थितम् ॥ १२० ॥
तस्योपरिजलौघस्तुतस्मिन्ब्रह्माण्डमास्थितम् ॥ ब्रह्माण्डाभ्यन्तरेतोयङ्कूर्म्मस्तस्योपरिस्थितः ॥ २१ ॥ कूर्म्मोपरितथानन्तः
पृथ्वीतस्योपरिस्थिता ॥ अनन्तगात्रसय्युँक्तन्नालम्पातालगोचरम् ॥ २२ ॥ पृथ्वीमध्येस्थितम्पद्मन्दिक्पत्रङ्किरिकेशरम् ॥
तस्याष्टदिक्षुदिक्पालाःस्वर्ग्गोमध्येव्यवस्थितः ॥ २३ ॥ कर्णिकायाम्ब्रह्मलोकोमहर्लोकादयोह्यधः ॥ स्वर्ग्गेज्योतींषिदेवा
श्चचतुर्व्वेदास्तदन्तरे ॥ २४ ॥ सत्वंरजस्तमइतिगुणाःप्रकृतिसम्भवाः ॥ सदास्थिताःपद्ममध्येपरन्तत्वन्तथैवच ॥ २५ ॥
आत्मतत्वन्तत्रसंस्थमूर्द्ध्वच्छदनमूर्द्ध्वतः ॥ अधोधश्छदनन्तत्रकेशराग्रेस्थितम्पुनः ॥ २६ ॥ सूर्य्याग्निचन्द्रमरुताम्मण्डलानि
क्रमात्ततः ॥ शावासनय्योँगपीठेसुखासनमतःपरे ॥ २७ ॥ आराध्यासनमस्माच्चततश्चविमलासनम् ॥ मध्येविचिन्तयेत्सर्व्व
ञ्जगद्वैसचराचरम् ॥ २८ ॥ ब्रह्मविष्णुशिवांश्चैवभागत्रयविनिश्चितान् ॥ आत्मानञ्चिन्तयेत्तत्रपूजनेसमुपस्थितम् ॥ २९ ॥
मण्डलय्योँगपीठन्तुपद्मेपद्मन्तुचिन्तयेत् ॥ शावादीन्यासनानीहचत्वार्य्यपिविचिन्तयेत् ॥ ३० ॥ योगपीठम्पृथग्ध्यात्वाम
ण्डलेनसहैकताम् ॥ पुनर्ध्यात्वाततःपश्चात्पूजयेदासनन्ततः ॥ ३१ ॥ ध्यानेनयोगपीठस्ययथायद्दीयतेजलम् ॥ नैवेद्यपुष्पधू
पादितत्स्वयञ्चोपतिष्ठते ॥ ३२ ॥ सर्व्वेदेवाःसगन्धर्व्वाःसचराचरगुह्यकाः ॥ चिन्तिताःपूजिताश्चस्युर्य्योगपीठस्यपूजने ॥

॥ ३३ ॥ अभीष्टदेवतापूजाव्विँनायस्यविचिन्तनात् ॥ लभतेवैचतुर्व्वर्ग्गन्तुष्टिःपुष्टिश्चजायते ॥ ३४ ॥ आवाहनानन्तरतः पाणिभ्यामवतारयेत् ॥ प्रागुत्तानौकरौकृत्वाऊर्द्ध्वमुत्क्षिप्यसान्तरौ ॥ ३५ ॥ निरन्तरावधःकुर्य्यान्नामयन्पूजकस्तथा ॥ हेरम्बस्यतुबीजेनतस्मादवतरेतिच ॥ ३६ ॥ आम्रेडितेनचाभीष्टदेवानाल्लँम्बनायवै ॥ नासिकावायुनिःसाराद्वियत्स्थादेवताभवेत् ॥ ३७॥ एवङ्कृतेमण्डलेतुस्थितिस्तस्यप्रजायते ॥ खान्तःशुद्धांशुबिन्दुभ्यांहैरम्बम्बीजमुच्यते ॥ ३८ ॥ नाशनम्विघ्नबीजानान्धर्म्मकामार्थसाधनम् ॥ गन्धपुष्पेतथाधूपदीपौनैवेद्यमेवच ॥ ३९॥ यदन्यद्दीयतेवस्त्रमलङ्कारादिकञ्चयत् ॥ तेषान्दैवतमुच्चार्य्यकृत्वाप्रोक्षणपूजने ॥ १४० ॥ उत्सृज्यमूलमन्त्रेणप्रतिनाम्नानिवेदयेत् ॥ वरुणस्यतुबीजेनतेषाम्प्रोक्षणमाचरेत् ॥ ४१ ॥ इष्टेनमूलमन्त्रेणतथोत्सर्ग्गनिवेदने ॥ लपरश्चन्द्रबिन्दुभ्याम्बीजव्वाँरुणमुच्यते ॥ ४२ ॥ विलोकनम्पूजनञ्चतथादानम्पृथक्पृथक् ॥ जपकर्म्मणिमालायाःप्रतिपत्तिरिदन्त्रयम् ॥ ४३ ॥ इष्टमन्त्रेणमालायाःप्रोक्षणम्परिकीर्त्तितम् ॥ बीजङ्गाणपतम्पूर्व्वमुच्चार्य्यतदनन्तरम् ॥ ४४ ॥ अविघ्नङ्कुरुमालेत्वङ्गृह्णीयादित्यनेनच ॥ जपान्तेशिरसिन्यासो मालायाःपरिकीर्त्तितः ॥ ४५ ॥ स्रजमादायपाणिभ्यांश्रीबीजेनतथार्च्चयेत् ॥ अन्त्यदन्त्यान्तमात्राभ्याश्चादिवर्ग्गतृतीयकौ ॥ ४६ ॥ परतःपरतःपूर्व्वंश्रीबीजम्बिन्दुनेन्दुना ॥ मालायाअवतारस्तुशिरसःक्रियतेयदा ॥ ४७॥ तांसमादायपाणि

भ्याङ्कुर्य्यात्सारस्वतेनवै ॥ श्रीबीजानामाद्यमाद्यबिन्दुचन्द्रार्द्धसय्युँतम् ॥ ४८॥ एतच्चतुष्टयम्बीजंसारस्वतमुदीरितम् ॥ पौ
राणिकैर्व्वैदिकैश्चमूलमन्त्रेणचैवहि ॥ ४९ ॥ प्रदक्षिणाम्प्रणामञ्चकुर्य्याद्धर्म्मार्थसाधकम् ॥ भूमिव्वीक्ष्यतथाभ्युक्ष्यक्षितिबी
जेनपूर्व्वतः॥ १५० ॥ स्पृशंस्तांशिरसाभूमिम्प्रणमेदिष्टदेवताः ॥ समाप्तिहीनव्वाँराहम्बीजम्बिन्द्विन्दुसय्युँतम् ॥ ५१ ॥
क्षितिबीजव्विँजानीयाच्चतुर्व्वर्गप्रदायकम् ॥दर्प्पणव्व्यँजनङ्घण्टाञ्चामरम्प्रोक्षयेत्पुनः ॥५२॥ नैवेद्यालोकमन्त्रेणपूर्व्वम्प्रोक्ते
नभैरव ॥ ५३ ॥ नामाक्षराणिचाद्यानिचैतेषाम्बिन्दुनेन्दुना ॥५४॥ तस्मैनमइतिप्रान्तेग्रहणेमन्त्रमुच्यते ॥ निवेदनमथैतेषा
मिष्टमन्त्रेणचाचरेत्॥५५॥ वाग्भवस्यद्वितीयेनकामबीजेनभैरव ॥ मुद्रायाबन्धनङ्कार्य्यम्मूलमन्त्रेणदर्शनम् ॥५६॥ परित्या
गन्तुमुद्रायास्ताराबीजेनचाचरेत् ॥ प्रान्तादिश्चन्द्रबिन्दुभ्यांषष्ठस्वरसमन्वितः ॥५७॥ताराबीजमितिप्रोक्तन्धर्म्मकामार्थसा
धनम् ॥ मुदंददातियस्मात्सामुद्रातेनप्रकीर्तिता॥५८॥दर्शितायान्तुमुद्रायाम्भवेत्पूजासमापनम् ॥ कामम्मोक्षन्तथाधर्म्मम
र्थमोदयुतास्वयम् ॥५९॥ ददातिसाधकायाशुदेवतागन्तुमुत्सका ॥ मुद्रान्तेतुमहामन्त्रान्षडिमान्त्समुदीरयेत् ॥ १६० ॥
यद्दत्तंभक्तिमात्रेणपत्रम्पुष्पम्फलञ्जलम् ॥ आवेदितञ्चनैवेद्यन्तद्गृहाणानुकम्पया ॥६१॥ आवाहनन्नजानामिनजानामिविस
र्ज्जनम् ॥ पूजाभावन्नजानामित्वङ्गतिःपरमेश्वरि ॥ ६२ ॥ कर्म्मणामनसावाचात्वत्तोनान्यागतिर्म्मम ॥ अन्तश्चरेणभूताना

न्त्वङ्गतिःपरमेश्वरि ॥ ६३ ॥ मातर्य्योनिसहस्त्रेषुयेषुयेषुव्रजाम्यहम् ॥ तेषुतेष्वच्युताभक्तिरच्युतेस्तुसदात्वयि ॥ ६४ ॥ देवीदात्रीचभोक्रीचदेवीसर्व्वमिदञ्जगत् ॥ देवीजयतिसर्व्वत्रयादेवीसोहमेवच ॥ ६५ ॥ यदक्षरम्परिभ्रष्टम्मात्राहीनञ्चयद्भवेत् ॥ तत्सर्व्वङ्क्षम्यतान्देविकस्यनस्खलितम्मनः ॥ ६६ ॥ मन्त्रेषुपठितेष्वेषुस्वयमेवप्रसीदति ॥ दातुन्देवीचतुर्व्वर्ग्गन्नचिरादेव भैरव ॥ ६७ ॥ ऐशान्याम्मण्डलङ्कुर्य्याद्द्वारपद्मविवर्ज्जितम् ॥ विसर्ज्जनार्थन्निर्म्माल्यधारिण्याःपूजनायवै ॥ ६८ ॥ पाद्यादिभिःपूजयित्वाध्यात्वानिर्म्माल्यधारिणीम् ॥ निःक्षिप्यतस्मिन्निर्म्माल्यम्मन्त्रेणतुविसर्ज्जयेत् ॥ ६९ ॥ गच्छगच्छपरंस्थानंस्वस्थानम्परमेश्वरि ॥ यत्रब्रह्मादयोदेवानविदुःपरमम्पदम् ॥ १७० ॥ विसृज्यमन्त्रेणानेनततःपूरकवायुना ॥ ध्यायंस्तुमन्त्रेणानेननत्वातांस्थापयेद्धृदि ॥ ७१ ॥ तिष्ठदेविपरेस्थानेस्वस्थानेपरमेश्वरि ॥ यत्रब्रह्मादयस्सर्व्वेसुरास्तिष्ठन्तिमेहृदि ॥ ७२ ॥ ततएकजटाबीजैरिष्टदेवीन्धियास्मरन् ॥ निर्म्माल्यम्मूर्ध्निगृह्णीयाद्धर्म्मकामार्त्थसाधनम् ॥ ७३ ॥ मण्डलप्रतिपत्तिन्तुततःकुर्य्याद्विभूतये ॥ सर्व्वाङ्गुलीनामग्रौघैःपद्ममष्टदलान्वितम् ॥ ७४ ॥ निर्म्मन्थेत्क्षितिबीजेनमण्डलञ्चापिभैरव ॥ ततस्तुमूलमन्त्रेणसर्व्ववश्येनवापुनः ॥ ७५ ॥ अनामिकानामग्रेणललाटमपिसंस्पृशेत् ॥ समाप्तिसहितःप्रान्तस्ताराबीजन्ततःपरम् ॥ ७६ ॥ स्मरबीजम्विसर्ग्गेणपरतःपरतःपरम् ॥ भवेदेकजटाबीजन्धर्म्मकामार्त्थसाधनम् ॥ ७७ ॥

ततोभास्करबीजेनसहितेनात्मनापुनः ॥ मन्त्रेणभास्करायार्घ्यमच्छिद्रार्थन्निवेदयेत् ॥ ७८ ॥ नमोविवस्वतेब्रह्मन्भा
स्वतेविष्णुतेजसे ॥ जगत्सवित्रेशुचयेसवित्रेकर्म्मदायिने ॥ ७९ ॥ ततःकृताञ्जलिर्भूत्वापठित्वामन्त्रमीरितम् ॥ ए
काग्रमनसावाग्भिरच्छिद्रमवधारयेत् ॥ १८० ॥ यच्छिद्रन्तपश्छिद्रंय्यच्छिद्रम्पूजनेमम ॥ सर्व्वन्तदच्छिद्रमस्तुभास्क
रस्यप्रसादतः ॥ ८१ ॥ ततस्तुपुष्पनैवेद्यतोयपत्रादिकञ्चयत् ॥ देवीबीजेनतत्सर्व्वम्पुनरेवविलोकयेत् ॥ ८२ ॥ हस्ते
नचक्षुषावापियत्रयत्रकृतःपुरा ॥ मन्त्रन्यासस्तत्रतत्रविसृष्टिरमुनाभवेत् ॥ ८३ ॥ प्रान्तादिपञ्चमोवह्निबीजषष्ठस्वरा
हितः ॥ तथोपान्तंवाग्भवाद्यन्दुर्ग्गाबीजम्प्रचक्षते ॥ ८४ ॥ स्थण्डिलेज्वलदग्नौचतोयेसूर्य्यमरीचिषु ॥ प्रतिमासु
चशुद्धासुशालग्रामशिलासुच ॥ ८५ ॥ शिवलिङ्गशिलायान्तुपूजाकार्य्याविभूतये ॥ सर्व्वत्रमण्डलन्यासङ्कुर्य्यादेकाग्र
मानसः ॥ ८६ ॥ योगपीठस्यबीजेनस्थण्डिलादिषुसाधकः ॥ वासुदेवस्यरुद्रस्यब्रह्मणोमिहिरस्यच ॥ ८७ ॥ कु
र्य्यात्सर्व्वत्रपूजासुप्रतिपत्तिमिमाम्बुधः ॥ एवय्यँःपूजयेद्विष्णुममीभिःप्रतिपत्तिभिः ॥ ८८ ॥ चतुर्व्वर्ग्गप्रदस्तस्यन
चिराज्जायतेहरिः ॥ शिवोवामिहिरोवापियेन्येलम्बोदरादयः ॥ ८९ ॥ प्रसीदन्तिसुराःसर्व्वेपूजायाविधिनामुना ॥ वि
शेषतोमहादेवीमहामायाजगन्मयी ॥ १९० ॥ प्रतिपत्तिमिमान्नित्यंस्पृहयत्येवपूजने ॥ एवय्यँःकुरुतेपूजांसम्यक्सफल

भाग्भवेत् ॥ ११ ॥ एतैर्व्विहीनायापूजाततोल्पाल्पम्फलम्भवेत् ॥ अङ्गहीनस्तुपुरुषोनसम्यक्कृयाङ्गिकोयथा ॥१२॥ अङ्गैर्हीं
नातथापूजानसम्यक्फलभाग्भवेत्॥ इदंरहस्यम्परममिदंस्वस्त्ययनम्परम् ॥१३॥ मन्त्रवेदमयंशुद्धंसर्व्वपापप्रणाशनम्॥
यःश्रावयेद्ब्राह्मणसन्निधानेश्राद्धेषुयज्ञेसुरपूजनेषु ॥ १४ ॥ सम्यक्फलन्तस्यलभेत्सकर्म्मणोविनापिपूजान्तदनन्तमश्नुते ॥
॥ १९५ ॥ इतिकालिकापुराणेउत्तरतन्त्रेएकोनषष्टितमोध्यायः ॥ ५९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ देव्यास्तन्त्रम्विशेषेणशृ
णुतंसाम्प्रतय्युँवाम् ॥ येनचाराधितादेवीनचिराद्वरदाभवेत् ॥ १ ॥ पूर्व्वतन्त्राद्विशेषेणतथावैतन्त्रमुत्तरम् ॥ विशेषेणचसामा
न्यात्कथितम्भवतोःपुरा ॥२॥ पुनर्देव्याविशेषेणपूजायांभक्तिकर्म्मणि ॥ यानितन्त्राणिशेषाणितानिवक्ष्याम्यहम्पुनः ॥ ३ ॥
यःकुर्य्यात्तुमहामायाभक्तिमेकाग्रमानसः ॥ अङ्गिनावाङ्गिमन्त्रेणतेनकार्य्यमिदंशुभम् ॥ ४ ॥ फलम्पुष्पञ्चताम्बूलमन्नपाना
दिकञ्चयत् ॥ अदत्वातुमहादेव्यैनभोक्तव्यङ्कदाचन॥५॥पथिवापर्व्वताग्रेवासभायामपिसाधकः ॥यथातथानिवेद्यैवस्वमर्थ
मुपकल्पयेत् ॥ ६ ॥ दृष्ट्वैवमदिराभाण्डरक्तवर्णास्तथास्त्रियः ॥ सिंहंशवंरक्तपद्मव्व्याँघ्रवारणसङ्गमम् ॥७॥ गुरुंराजानमथवा
महामायान्ततोनमेत् ॥ पतिव्रतायाम्भार्य्यायांसदैवऋतुसङ्गमः॥८॥क्रियतेचण्डिकान्ध्यात्वातदाकार्य्योविभूतये ॥ शान्ति
कम्पौष्टिकम्वापितथेष्टापूर्त्तकर्म्मणी ॥९॥ यदाकुर्य्यात्तदानत्वादेवीयात्रांसमाचरेत्॥ तौर्य्यत्रिकय्यँदापश्येत्केवलङ्गीतमेववा

॥१०॥ तच्चदेव्यैनिवेद्यैवकर्त्तव्यंस्वोपयोजनम्॥ यद्देवभूषणव्वाँसोमलयोद्भवमेववा ॥११॥ स्वकायेपरियुञ्जीततत्रमन्त्रन्धि
यान्यसेत्॥ व्यायामेचविधानेचसभायाव्वाँजलेस्थले॥१२॥ यत्रयत्रस्वयङ्गच्छेत्तत्रदेवींसदास्मरेत् ॥ यद्यत्कर्म्मतुपूजाङ्गन्त
त्तन्मन्त्रेणचाचरेत् ॥ १३ ॥ मन्त्रहीनम्पूजनाङ्गङ्कर्म्मयत्तत्तुनिःफलम् ॥ यस्मिन्कर्म्मणियोदिष्टोमन्त्रः पूजासुभैरव ॥ १४ ॥
नैवेद्यालोकमन्त्रेणतत्तत्कर्म्मसमाचरेत् ॥ देव्यास्तुमण्डलन्यासमिष्टमन्त्रेणचाचरेत् ॥ १५ ॥ पूजान्तेमण्डलल्लिँख्वातिल
कन्तेनकारयेत् ॥ सर्व्ववश्येनमन्त्रेणधर्म्मकामार्थदायिना ॥ १६ ॥ बलिदानेबलिञ्छित्त्वाखड्गस्थैरुधिरैःस्वकैः ॥ सर्व्वव
श्येनमन्त्रेणललाटेतिलकन्न्यसेत् ॥ १७ ॥ जगद्वशेभवेत्तस्यचतुर्त्थःकस्यवह्निना ॥ षष्ठस्वरेणसय्युँक्तःकलाबिन्दुसमन्वितः
॥ १८ ॥ अथोपान्तस्थकारान्तःसपरोपितथापुनः ॥ द्विर्मोहीतिहकारस्यतुय्योंद्विस्वरसय्युँतः ॥ १९ ॥ तृतायवर्ग्गप्रान्ते
नतृतीयस्वरसंज्ञिना ॥ पूरितान्तोद्विधावर्णस्तथावादिचतुर्थकः ॥ २० ॥ स्वरोद्वितीयश्चतथाक्षोभशब्दःपुरःसरः ॥ पुरे
तिसहितःसोपिमित्रंशत्रुश्चराक्षसः ॥ २१ ॥ दक्षप्रजातथाराजासर्व्वशास्त्रइतिश्रुतः ॥ विनापपूजनङ्कुर्य्याद्योरहीस्तलक
न्नरः ॥ २२ ॥ मन्त्रेणानेनसततंसर्व्वन्तस्यवशेभवेत् ॥ राजावाराजपुत्रोवास्त्रियोवायक्षराक्षसाः ॥ २३ ॥ सर्व्वेतस्य
वशय्याँन्तिभूतग्रामाश्चतुर्व्विधाः ॥ प्रवासेपथिवादुर्ग्गेस्थानाप्राप्तौजलेपिवा ॥ २४ ॥ कारागारेनिबद्धोवाप्रायोवेशग

तोपिवा ॥ कुर्य्यात्तत्रमहामायापूजाव्वैमानसीम्बुधः ॥ २५ ॥ मनोभयेसमुत्पन्नेसिंहव्याघ्रसमाकुले ॥ परचक्रागमेवापि कुर्य्यान्मानसपूजनम् ॥ २६ ॥ मनसाहृदयस्यान्तर्ध्यात्वायोगाख्यपीठकम् ॥ तत्रैवपृथिवीमध्येपूजांतत्रसमाचरेत् ॥ ॥ २७ ॥ मैत्रंप्रसाधनंस्नानन्दन्तधावनकर्म्मवै ॥ अन्यच्चसर्व्वम्मनसाकृत्वाकुर्य्याच्चपूजनम् ॥ २८ ॥ पश्चात्पुष्पादिभिःपूजाबहिर्द्देशेविधीयते ॥तथाह्यर्घ्यपिकर्त्तव्याःसर्व्वाश्चप्रतिपत्तयः ॥२९॥ अष्टम्यांसततन्देवीयाजकःस्यात्सदाव्रती ॥ नवम्यान्तुतथापूजाकर्त्तव्यानिजशोणितैः ॥ ३० ॥ लिङ्गस्थाम्पूजयेद्देवीम्पुस्तकस्थान्तथैवच ॥ स्थण्डिलस्थाम्महामायाम्पादुकाप्रतिमास्तुच ॥ ३१ ॥ चित्रेचत्रिशिखेखड्गे जलस्थाम्वापिपूजयेत् ॥ पञ्चाशदङ्गुलङ्खड्गन्त्रिशिखश्चत्रिशूलकम् ॥ ३२ ॥ शिलायाम्पर्व्वतस्याग्रेतथापर्व्वतगह्वरे ॥ देवींसम्पूजयेन्नित्यम्भक्तिश्रद्धासमन्वितः ॥ ३३ ॥ वाराणस्यांसदापूजासम्पूर्णफलदायिनी ॥ ततस्तद्द्विगुणाप्रोक्तापुरुषोत्तमसन्निधौ ॥ ३४ ॥ ततोपिद्विगुणाप्रोक्ताद्वारवत्याव्विशेषतः ॥ सर्व्वक्षेत्रेषुतीर्त्थेषुपूजाद्वारवतीसमा ॥ ३५ ॥ विन्ध्येशतगुणाप्रोक्तागङ्गायामपितत्समा ॥ आर्य्यावर्त्तेमध्यदेशेब्रह्मावर्त्तेतथैवच ॥ ३६ ॥ विन्ध्यवत्फलदापूजाप्रयागेपुष्करेतथा ॥ ततश्चतुर्ग्गुणाप्रोक्ताकरतोयानदीजले ॥ ३७ ॥ तस्माच्चतुर्ग्गुणफलानन्दिकुण्डेचभैरव ॥ ततश्चतुर्ग्गुणाप्रोक्ताजल्पिषेश्वरसन्निधौ ॥ ३८ ॥ तत्रसिद्धेश्वरीयोनौततोपिद्विगुणास्मृता ॥ ततश्चतुर्ग्गुणाप्रोक्तालौहित्यनदपाथसि ॥ ३९ ॥

तत्समाकामरूपेतु सर्व्वत्रैवजलेस्थले ॥ सर्व्वश्रेष्ठोयथाविष्णुर्लक्ष्मीसर्व्वोत्तमायथा ॥ ४० ॥ देवीपूजातथाशस्ताकामरू
पेसुरालये ॥ देवीक्षेत्रङ्कामरूपम्विद्यतेऽन्यन्नतत्समम् ॥४१॥ अन्यत्रविरलादेवीकामरूपेगृहेगृहे ॥ ततःशतगुणाप्रोक्तानी
लकूटस्यमस्तके ॥ ४२ ॥ ततोपिद्विगुणाप्रोक्ताहेरुकेशिवलिङ्गके ॥ ततोपिद्विगुणाप्रोक्ताशैलपुत्र्यादियोनिषु ॥ ४३ ॥ ततः
शतगुणाप्रोक्ताकामाख्यायोनिमण्डले ॥ कामाख्यायाम्महामायापूजायँःकृतवान्सकृत् ॥ ४४ ॥ सचेहलभतेकामान्परत्र
शिवरूपताम् ॥ नतस्यसदृशोन्योस्तिकृत्यन्तस्यनविद्यते ॥ ४५ ॥ वाञ्छितार्थमवाप्येहचिरायुरभिजायते ॥ वायोरिवग
तिस्तस्यभवेदन्यैरबाधिता ॥ ४६ ॥ सङ्ग्रामेशास्त्रवादेवादुर्ज्जयःसचजायते ॥ वैष्णवीतन्त्रमन्त्रेणकामाख्यायोनिमण्डले
॥ ४७ ॥ सकृत्तुपूजनङ्कृत्वाफलंशतगुणंलभेत् ॥ मूलमूर्तिंमहामायायोगनिद्राजगन्मयी ॥ ४८ ॥ तस्यास्तुवैष्णवीत
न्त्रम्मन्त्रम्प्राक्प्रतिपादितम् ॥ अन्यायामूर्तयःप्रोक्ताःशैलपुत्र्यादयोपराः ॥ ४९ ॥ तस्याएवविभागास्तास्तच्छरीरविनि
र्गताः ॥ निःसरन्तियथानित्यंसूर्य्यबिम्बान्मरीचयः ॥ ५० ॥ देव्यास्तथोग्रचण्डाद्यामहामायाशरीरतः ॥ तासामेवाङ्ग
रूपाणिवक्तव्यानिमयातव ॥ ५१ ॥ एकैवतुमहामायाकार्य्यार्थम्भिन्नताङ्गता ॥ कामाख्यातुमहामायामूलमूर्त्तिःप्रगीय
ते ॥ ५२ ॥ पीठैर्भिन्नाह्वयासातुमहामायाप्रगीयते ॥ एकएवयथाविष्णुर्नित्यत्वाद्धिसनातनः ॥ जनानामर्द्दनात्सोपिजना

र्हनर्ईतिश्रुतः ॥ ५३ ॥ तथैवसामहामायाकामार्थसङ्गतागिरौ ॥ कामाख्येतिसदादेवैर्गीयतेसततन्नरैः ॥५४॥ यथाहिपुरुषः
कोपिछत्रीछत्रग्रहाद्भवेत् ॥ स्नापकःस्नानकालेवैकामाख्यापितथाह्वया ॥५५॥ महामायाशरीरन्तुकामार्थंसमुपस्थितम् ॥लो
हितैःकुङ्कुमैःपीतङ्कामार्थमुपयोजितैः ॥५६॥ खड्गन्त्यक्त्वाकामकालेसागृह्णातिस्रजंस्वयम् ॥यदातुत्यक्तकामासातदास्याद
सिधारिणी ॥ ५७ ॥ कामकालेशिवप्रेतेन्यस्तेलोहितपङ्कजे ॥ रमतेत्यक्तकामातुसितप्रेतोपरिस्थिता ॥ ५८ ॥ तथैवेतस्ततो
गत्यासिंहस्थाकामदाभवेत् ॥ कदाचित्सासितप्रेतेकदाचिद्रक्तपङ्कजे ॥ कदाचित्केशरीपृष्ठेरमतेकामरूपिणी ॥ ५९ ॥ य
दालोहितपद्मस्थातदाग्रेकेशरीश्वरः ॥ यदाप्रेतगतादेवीतदाग्रेन्यान्निरीक्षते ॥६० ॥ महामायास्वरूपेणयदासावरदाभवेत् ॥
पूजाकालेतदाप्रेतपद्मसिंहोपरिस्थिता ॥ ६१ ॥ रक्तपद्मेयदाध्यायेत्तदाग्रेचिन्तयेद्धरिम् ॥ यदाध्यायेद्धरौचान्यद्द्वयमग्रे
विचिन्तयेत् ॥ ६२ ॥ त्रिषुध्यातेषुयुगपत्प्रेतेपद्मेहरौक्रमात् ॥ स्थितेषुकामदादेवीतेषुध्यायेतकामदा ॥ ६३ ॥ एकैकस्मिन्न
पितथाययथावच्चिन्तयेच्छिवाम् ॥ एकासमस्ताजगताम्प्रकृतिःसायतस्ततः ॥ ६४ ॥ विष्णुब्रह्मशिवैर्देवैर्ध्रियतेसाजग
न्मयी ॥ सितप्रेतोमहादेवोब्रह्मालोहितपङ्कजम् ॥ ६५ ॥ हरिर्हरिस्तुविज्ञेयोवाहनानिमहौजसः ॥ स्वमूर्त्यावाहनत्व
न्तुतेषाय्यँन्मान्नयुज्यते ॥ ६६ ॥ तस्मान्मूर्त्यन्तरङ्कृत्वावाहनत्वङ्गतास्त्रयः ॥ यस्मिन्यस्मिन्महामायाप्रीणातिसततंशि

वा ॥६७॥ तेनतेनैवरूपेणआसनान्यभवँस्त्रयः ॥ सिंहोपरिस्थितम्पद्मंरक्तन्तस्योर्द्ध्वगःशवः ॥६८॥ तस्योपरिमहामायावरदा
भयदायिनी ॥ एवंरूपेणयोध्यात्वापूजयेत्सततंशिवाम् ॥६९॥ ब्रह्मविष्णुशिवास्तेनपूजिताःस्युरसंशयः ॥ एवंसदामहामा
याकामाख्याचैकरूपिणी ॥ ७० ॥ ध्यानतोरूपतोभिन्नातस्मात्तान्तत्रपूजयेत् ॥ एवंविशेषतन्त्राणिदुर्गायाःकथितानिवाम्
॥ ७१ ॥ अङ्गमन्त्राणितस्यास्तुश्रूयतान्नरसत्तमौ ॥ ७२ ॥ इतिकालिकापुराणेषष्टितमोध्यायः ॥ ६० ॥ ॥ श्रीभगवानुवा
च ॥ अङ्गमन्त्राण्यहंव्वक्ष्येचण्डिकायाविशेषतः ॥ यैःसमाराधितादेवी चतुर्वर्गप्रदाभवेत् ॥१॥ तालव्यान्तोयुतःषष्ठस्वरबि
न्दुवह्निभिः ॥ तथोपान्तोयुतस्त्वेतैरद्यम्वाँग्भवमेवच ॥२॥ नेत्रबीजश्चण्डिकायास्त्रयमेतत्प्रकीर्त्तितम्॥ वामललाटदाक्षि
ण्यनेत्रेषुत्रितयङ्क्रमात्॥३॥धर्म्मार्थकाममोक्षाणांसर्वदाकारणम्परम् ॥ मन्त्रमेतन्महागुह्यन्दुर्गाबीजमितिस्मृतम् ॥४॥ य
दाकात्यायनमुनेराश्रमेषुदिवौकसाम्॥तेजोभिर्द्धृतकायाभूद्देवीदेवौघसंस्तुता॥तदानेत्रत्रयाद्देव्यामूलमूर्त्तिर्विनिःसृता ॥५॥
तेजोमयीजगद्धात्रीमहिषासुरघातिनी ॥ तेजोभिःसर्वदेवानांसाधृत्वावपुरुत्तमम्॥६॥अस्त्राण्यनेकान्यादायदेवैर्दत्तानिभाग
शः ॥ सगणंसानुबन्धञ्चसामात्यबलवाहनम् ॥ ब्रह्माद्यैःसंस्तुतादेवीजघानमहिषासुरम्॥७॥हतेतुमहिषेदेवीपूजितात्रिदशै
स्ततः॥अनेनैवतुमन्त्रेणलोकेख्यातिञ्चसागता ॥८॥ ततःप्रभृतिसामूर्त्तिःसर्व्वैःसर्वत्रपूज्यते॥मूलमूर्त्तिःसुगुप्ताभूत्स्वमूर्त्त्या

ख्यातिमागता॥९॥ देवानाव्वँरदानेनब्रह्माद्यैरुपयोजनात् ॥ यन्मूर्त्तिःपूज्यतेसर्व्वैस्ताम्मूर्त्तिंशृणुभैरव॥१०॥जटाजूटसमा
युक्तामर्द्धेन्दुकृतशेखराम् ॥ लोचनत्रयसय्युँक्ताम्पद्मेन्दुसदृशाननाम् ॥ ११ ॥ तप्तकाञ्चनवर्णाभांसुप्रतिष्ठांसुलोचनाम् ॥ न
वयौवनसम्पन्नांसर्व्वाभरणभूषिताम् ॥ १२ ॥ सुचारुदशनान्तीक्ष्णाम्पीनोन्नतपयोधराम् ॥ त्रिभङ्गस्थानसंस्थानांमहिषा
सुरमर्द्दिनीम् ॥ १३ ॥ मृडालायतसंस्पर्शदशबाहुसमन्विताम् ॥ त्रिशूलन्दक्षिणेदेयङ्खड्गञ्चक्रंक्रमादधः ॥ १४ ॥ तीक्ष्णबाण
न्तथाशक्तिम्बाहुसङ्घेषुसङ्गताम् ॥ खेटकम्पूर्णचापञ्चपाशञ्चाङ्कुशमूर्द्ध्वतः ॥१५॥ घण्टाञ्चपरशुञ्चापिवामेधःप्रतियोजयेत् ॥
अधस्तान्महिषन्तद्वद्विशिरस्कम्प्रदर्शयेत् ॥ १६ ॥ शिरश्छेदोद्भवन्तद्वद्दानवङ्खड्गपाणिनम् ॥ हृदिशूलेननिर्भिन्नन्तिर्यग्दन्त
विभूषितम् ॥ १७ ॥ रक्तरक्तीकृताङ्गञ्चरक्तविस्फुरितेक्षणम् ॥ वेष्टितन्नागपाशेनभृकुटीकुटिलाननम् ॥ १८॥ सपाशवामहस्ते
नधृतकेशञ्चदुर्गया॥वमद्रुधिरवक्त्रञ्चदेव्याःसिंहंप्रदर्शयेत्॥१९॥ देव्यास्तुदक्षिणम्पादंसमंसिंहोपरिस्थितम् ॥ किञ्चिदूर्द्ध्वन्त
थावाममङ्गुष्ठम्महिषोपरि ॥ २०॥ उग्रचण्डाप्रचण्डाचचण्डोग्राचण्डनायिका ॥ चण्डाचण्डवतीचैवचामुण्डाचण्डिकातथा ॥
॥२१॥आभिश्शक्तिभिरष्टाभिःसततम्परिवेष्टिताम् ॥ चिन्तयेत्सततन्देवीन्धर्म्मकामार्त्थमोक्षदाम्॥२२॥एतस्याश्चाङ्गमन्त्र
न्तुदुर्गातन्त्रमितिश्रुतम् ॥ शृणुष्वैकमनाभूत्वायम्मर्कामार्त्थसाधनम् ॥ २३॥ वह्निभार्य्यांस्वरषष्ठोहान्तःप्रान्तोग्निरेवच ॥

दुर्ग्गेंह्रिरितिसोङ्कारन्दुर्ग्गामन्त्रमितिश्रुतम् ॥ २४ ॥ रवौमकरराशिस्थेयाभवेत्सितपञ्चमी ॥ तस्यामनेनमन्त्रेणसम्पूज्यवि
धिवच्छिवाम् ॥ २५ ॥ शुक्लाष्टम्याम्पुनर्द्देवीम्पूजयित्वायथाविधि ॥ नवम्यांबलिदानानिप्रभूतानिसमाचरेत् ॥ २६ ॥ सन्ध्या
याञ्चबलिङ्कुर्य्यान्निजगात्रासृगुक्षितैः ॥ एवङ्कृतेतुकल्याणैर्य्युक्तोनित्यम्प्रमोदते ॥ २७ ॥ पुत्रपौत्रसमृद्धस्तुधनधान्यसमृद्धि
भिः ॥ दीर्घायुःसर्व्वसुभगोलोकेस्मिन्स्सचजायते ॥ २८ ॥ सिताष्टम्यान्तुचैत्रस्यपुष्पैस्तत्कालसम्भवैः ॥ अशोकैरपियःकु
र्य्यान्मन्त्रेणानेनपूजनम् ॥ २९ ॥ नतस्यजायतेशोकोरोगोवाप्यथदुर्ग्गतिः ॥ ज्यैष्ठेतुशुक्लपक्षस्यअष्टम्यांसमुपोषितः ॥
॥ ३० ॥ नवम्यांसतिलैरन्नैर्य्यावकैरथमोदकैः ॥ क्षीरैराज्यैस्तथाक्षौद्रैःशर्क्कराभिःसपिष्टकैः ॥ ३१ ॥ नानापशूनांरुधिरैर्म्मांसै
रपिचपूजयेत् ॥ ततोदशम्यांशुक्लायामद्भिस्तुतिलमिश्रितैः ॥ ३२ ॥ दुर्ग्गातन्त्रेणमन्त्रेणदातव्यमञ्जलित्रयम् ॥ एवङ्कृतेदश
म्यान्तुयत्पापन्दशजन्मभिः ॥ ३३ ॥ कृतन्तत्प्रलयय्यातिदीर्घायुरपिजायते ॥ आषाढेशुक्लपक्षस्ययाष्टमीश्रावणस्यच
॥ ३४ ॥ पवित्रारोहणङ्कुर्य्याद्देवीप्रीतिकरम्परम् ॥ दुर्ग्गातन्त्रेणमन्त्रेणदुर्ग्गाबीजेनभैरव ॥ ३५ ॥ वैष्णवीतन्त्रमन्त्रेणपवि
त्रारोहणञ्चरेत् ॥ विशेषाच्छ्रावणम्प्राप्यदेव्याःकुर्य्यात्पवित्रकम् ॥ ३६ ॥ सर्व्वेषामेवदेवानाम्पवित्रारोहणञ्चरेत् ॥ आषाढे
श्रावणेवापिसम्वत्सरफलप्रदम् ॥ ३७ ॥ प्रतिपद्धनदस्योक्तापवित्रारोहणेतिथिः ॥ द्वितीयातुश्रियादेव्यास्तिथीनामुत्तमा

स्मृता ॥ ३८ ॥ तृतीयाभवभाविन्याश्चतुर्थीतत्सुतस्यच ॥ पञ्चमीसोमराजस्यषष्ठीप्रोक्तागुहस्यच ॥ ३९ ॥ सप्तमीभास्क
रस्योक्तादुर्ग्गायाश्चतथाष्टमी ॥ मातॄणान्नवमीप्रोक्तावासुकेर्द्दशमीमता ॥ ४० ॥ एकादशीऋषीणाञ्चद्वादशीचक्रपाणिनः ॥
त्रयोदशीत्वनङ्गस्यममचैवचतुर्द्दशी ॥४१॥ ब्रह्मणोदिक्पतीनाञ्चपौर्णमासीतिथिर्म्मता ॥ पवित्रारोहणय्यैर्वैदेवानान्तसमा
चरेत् ॥ ४२ ॥ तस्यसाम्वत्सरीपूजाफलंहरतिकेशवः ॥ तस्माद्यत्नेनकर्त्तव्यम्पवित्रारोहणम्परम् ॥ ४३ ॥ कृतेबहुफलप्रा
प्तिस्तत्पूजासफलाभवेत् ॥ पवित्रय्येनसूत्रेणयथाकार्य्यंव्विजानता ॥ ४४ ॥ तच्छृणुष्वप्रमाणन्तुवचनान्ममभैरव ॥
प्रथमन्दर्भसूत्रञ्चपद्मसूत्रन्ततःपरम् ॥ ४५ ॥ ततःक्षौमंसुपुण्यंस्यात्कार्पासकमतःपरम् ॥ पट्टसूत्रन्तथान्येनपवित्रा
णिनकारयेत् ॥ ४६ ॥ विचित्राणिपवित्राणिकर्त्तव्यानितुयत्नतः ॥ गन्धमाल्यैःसुरभिभीरचितानियथोदितम् ॥ ४७ ॥
कन्याचकर्त्तयेत्सूत्रम्प्रमदाचपतिव्रता ॥ विधवासाधुशीलावादुःशीलानहिकर्त्तयेत् ॥ ४८ ॥ यत्सूचिभिन्नन्दग्धञ्चभस्मधू
माभिगुन्ठितम् ॥ तद्वर्ज्जनीयय्यत्नेनसूत्रमस्मिन्पवित्रके ॥ ४९ ॥ उपयुक्तञ्चाखुजग्धम्मद्यरक्तादिदूषितम् ॥ मलिनंनीलर
क्तञ्चप्रयत्नेनविवर्ज्जयेत् ॥ ५० ॥ सूत्रैःपवित्रङ्कुर्व्वीतकनिष्ठोत्तममध्यमम् ॥ कनिष्ठय्यत्पवित्रन्तुसप्तविंशतितन्तुभिः ॥
॥ ५१ ॥ मर्त्त्यलोकेयशःकीर्तिःसुखसौभाग्यवर्द्धनम् ॥ चतुःपञ्चाशताप्रोक्तन्तन्तूनाम्मध्यमपम्रम् ॥ ५२ ॥ दिव्यभो

गावहम्पुण्यंस्वर्ग्गमोक्षप्रदायकम् ॥ उत्तमञ्चैवतन्तूनामष्टोत्तरशतेनवै ॥ ५३ ॥ तद्दत्वातुमहादेव्यैशिवसायुज्यमाप्नुया
त् ॥ उत्तमम्वासुदेवायदद्याद्यदिपवित्रकम् ॥ ५४ ॥ तदायातिहरेर्ल्लोकंसाधकोनात्रसंशयः ॥ अष्टोत्तरसहस्रन्तुरत्नमा
लेतिगीयते ॥ ५५ ॥ पवित्रन्तुमहादेव्याभुक्तिमुक्तिप्रदायकम् ॥ रत्नमालान्तुयोयच्छेन्महादेव्यैपवित्रकम् ॥ ५६ ॥ कल्प
कोटिसहस्राणिस्वर्ग्गेस्थित्वाशिवोभवेत् ॥ एतत्तुनागहाराख्यंशङ्करस्यपवित्रकम् ॥ ५७ ॥ अष्टोत्तरसहस्रेणतन्तुनासुम
नोहरम् ॥ यःप्रयच्छतिमत्यन्तुसयावाँस्तन्तुसञ्चयः ॥ ५८ ॥ तावत्कल्पसहस्राणिममलोकेप्रमोदते ॥ अष्टोत्तरसहस्रणव
नमालाहरेःस्मृता ॥ ५९ ॥ तन्तूनान्तस्यदानेनविष्णुसायुज्यमाप्नुयात् ॥ यत्कनिष्ठम्पवित्रन्तुनाभिमात्रम्भवेत्तुतत् ॥ ६० ॥
द्वादशग्रन्थिसय्युँक्तमात्ममानेनयोजयेत् ॥ ऊरुप्रमाणम्मध्यंस्याद्ग्रन्थीनान्तत्रयोजयेत् ॥ ६१ ॥ चतुर्व्विंशतिमप्यस्यमानमा
त्मनएवच ॥ पवित्रमुत्तमंप्रोक्तञ्जानुमात्रञ्चभैरव ॥ ६२ ॥ षट्त्रिंशत्ततुग्रन्थीनाय्योँजयेदात्ममानतः ॥ शतमष्टोत्तरंकार्य्यङ्ग्रन्थी
नांसुविधानतः ॥ ६३ ॥ नागहाराह्वयन्तद्वदन्येषुचविधानतः ॥ पवित्रङ्क्रियतेयेनसूत्रेणग्रन्थयःपुनः ॥ ६४ ॥ तदन्यवर्णसूत्रेण
कर्त्तव्यालक्षणान्विता ॥ ग्रन्थिस्तुसप्तभिःकुर्य्याद्वेष्टनैस्तुकनिष्ठके ॥ ६५ ॥ द्विगुणैर्म्मध्यमेकुर्य्यात्त्रिगुणैरुत्तमेतथा ॥ अधिवा
स्यपवित्राणिपूर्व्वस्मिन्दिवसेततः ॥ ६६ ॥ मन्त्रन्यासम्पवित्रेतुकुर्य्यात्तत्रापरेहनि ॥ दुर्ग्गाबीजेनमन्त्रेणमन्त्रन्यासन्द्विज

श्चरेत् ॥ ६७ ॥ वैष्णवीतन्त्रमन्त्रेणकुर्य्युरन्येचभैरव ॥ प्रतिग्रन्थिस्वयङ्कुर्य्यान्मन्त्रन्यासम्विचक्षणः ॥ ६८ ॥ अङ्गु
ष्ठाग्रेणजपनम्मालायामिहभैरव ॥ यावन्तोग्रन्थयश्चात्रतावन्त्येवचसन्न्यसेत् ॥ ६९ ॥ मन्त्राणितस्यतेनस्याद्देवाङ्गोपनियो
जनम् ॥ दुर्ग्गातन्त्रेणमन्त्रेणतत्त्वन्यासन्तुकारयेत् ॥ ७० ॥ एकत्रन्यस्यसकलय्यँज्ञपात्रेपवित्रकम् ॥ तस्मिन्निधायगन्धा
दिपुष्पाणिचसुशोभनम् ॥ ७१ ॥ तत्त्वन्यासन्ततःकुर्य्यादङ्गुल्यग्रेणभैरव ॥ विष्णोस्तुमूलमन्त्रेणतत्त्वन्यासन्तुकारयेत् ॥
इदव्विँष्णुरितिप्रोक्तम्मन्त्रन्यासन्द्विजस्यहि ॥ ७२ ॥ शूद्राणांमन्त्रविन्यासेमन्त्रोवैद्वादशाक्षरः ॥ प्रासादेनतुमन्त्रेणतत्त्वन्या
सोममस्मृतः ॥ ७३ ॥ अनेनमन्त्रन्यासश्चदानञ्चानेनकारयेत् ॥ कुङ्कुमोशीरखर्ज्जूरैश्चन्दनादिविलेपनैः ॥ ७४ ॥ पवित्रा
णिविलिप्याथतत्त्वन्यासन्तुयोजयेत् ॥ सम्पूज्यमण्डलेदेवीव्विँधिवत्प्रयतोनरः ॥ ७५ ॥ वैष्णवीतन्त्रमन्त्रेणदुर्ग्गातन्त्रे
णभैरव ॥ दुर्ग्गाबीजेनदद्यात्तुदेव्यामूर्द्ध्निपवित्रकम् ॥ ७६ ॥ यस्यदेवस्ययःप्रोक्तस्तस्यतेनैवमण्डलम् ॥ यस्ययस्यतुयोम
न्त्रोयथाध्यानादिपूजनम् ॥ ७७ ॥ तत्तत्तेनैवमन्त्रेणपूजयित्वाप्रयत्नतः ॥ तस्यैवबीजमन्त्राभ्याम्मूर्द्ध्निदद्यात्पवित्रकम्
॥ ७८ ॥ पवित्रम्ममयोदद्याद्देवेभ्यश्चपवित्रकम् ॥ सर्व्वेषामेवदेवानांसम्पूर्णार्त्थश्चभैरव ॥७९॥ अग्निर्ब्रह्माभवानीचगजवक्त्रो
महोरगः ॥ स्कन्दोभानुर्म्मातृगणोदिक्पालाश्चनवग्रहा ॥ ८० ॥ एतान्घटेषुप्रत्येकम्पूजयित्वायथाविधि ॥ पवित्रम्मूर्द्ध्निचे

कैकन्दद्यादेभ्यः समाहितः ॥ ८१ ॥ पञ्चगव्यचरुङ्कृत्वादेव्यैदत्वाहुतित्रयम् ॥ तेनैवविष्णवेदत्वाशम्भवेचयथाविधि॥८२॥ आज्यैरष्टोत्तरशतंतिलैराज्यैस्तथैवच ॥ अष्टोत्तरशतन्दद्यान्महादेव्यैचसाधकः ॥ ८३ ॥ एवमेवविधानेनविष्णवादीनाञ्च साधकः ॥ पवित्रारोहणङ्कुर्य्याद्धर्म्मकामार्थसिद्धये ॥ ८४ ॥ नैवेद्यैर्व्विविधैःपेयैर्व्वटपिष्टकमोदकैः ॥ कुष्माण्डैर्न्नारिकेलैश्च खर्ज्जूरैःपनसैस्तथा ॥ ८५ ॥ आम्रदाडिमकर्कारुद्राक्षादिविविधैःफलैः ॥ भक्ष्यभोज्यादिभिःसर्व्वैर्म्मत्स्यैर्म्मांसैस्तथोदनैः ॥ ८६ ॥ गन्धैःपुष्पैस्तथाधूपैर्द्दीपैश्चसुमनोहरैः ॥ वासोभिर्भूषणैश्चैवभवानीसाधकोजपेत् ॥ ८७ ॥ नटनर्त्तकसङ्घैश्च वेश्याभिश्चैवभैरव ॥ नृत्यगीतैःसमुदितोजागरङ्कारयेन्निशि ॥ ८८ ॥ भोजयेद्ब्राह्मणाँश्चापिज्ञातोनपिद्विजातिभिः ॥ पवित्रारोहणेवृत्तेदक्षिणामुपदापयेत् ॥ ८९ ॥ हिरण्यङ्गान्तिलघृतव्वाँसोवाशाकमेववा ॥ इमम्मन्त्रन्ततःपश्चात्साधकः समुदीरयेत् ॥ ९० ॥ मणिविद्रुममालाभिर्म्मन्दारकुसुमादिभिः ॥ इयंसाव्वँत्सरीपूजातवास्तुपरमेश्वरी ॥ ९१ ॥ ततोविसर्ज्जयेद्देवीम्पूजाभिःप्रतिपत्तिभिः ॥ एवङ्कृतेपवित्राणान्दानेदेव्यायथाविधि ॥ ९२ ॥ सव्वँत्सरस्ययापूजासम्पूर्णावत्सराद्भवेत् ॥ कल्पकोटिशतय्याँवद्देवीगेहेवसेन्नरः ॥ ९३ ॥ तत्रापिसुखसौभाग्यसमृद्धिरतुलाभवेत् ॥ ९४ ॥ इतिकालिकापुराणेएकषष्टितमोध्यायः ॥ ६१ ॥

॥ श्रीभगवानुवाच ॥ ॥ दुर्गातन्त्रेणमन्त्रेणकुर्य्याद्दुर्गामहोत्सव

म् ॥ महानवम्यांशरदिबलिदानन्नृपादयः ॥ १ ॥ आश्विनस्यतुशुक्लस्यभवेद्याअष्टमीतिथिः ॥ महाष्टमीतिसाप्रोक्तादे
व्याःप्रीतिकरीपरा ॥ २ ॥ ततोनुनवमीयास्यात्सामहानवमीस्मृता ॥ सातिथिःसर्व्वलोकानाम्पूजनीयाशिवप्रिया ॥ ३ ॥
अनयोर्व्वत्सपूजायांविशेषंश्रृणुभैरव ॥ सम्पूज्यमण्डलेदेवीव्विँधिवत्प्रयतोनरः ॥ वैष्णवीतन्त्रमन्त्रेणदुर्गातन्त्रेणभैरव ॥ मू
र्तिभेदेयथादेवीपूजाङ्कुर्य्यातिभूतये ॥ ४ ॥ कन्यासंस्थेरवौवत्सशुक्लामारभ्यनन्दिकाम् ॥ अयाचिताशीनक्ताशीएकाशीत्वथचा
पदः ॥ ५ ॥ प्रातःस्नायीजितद्वन्द्वस्त्रिकालंशिवपूजकः ॥ जपहोमसमायुक्तोभोजयेच्चकुमारिकाः ॥ ६ ॥ बोधयद्बिल्वशाखासु
षष्ठ्यान्देवीफलेषुच ॥ सप्तम्यांव्बिल्वशाखान्तामाहृत्यप्रतिपूजयेत् ॥ ७ ॥ पुनःपूजान्तथाष्टम्यांविँशेषेणसमाचरेत् ॥ जागर
ञ्चस्वयङ्कुर्य्याद्बलिदानम्महानिशि ॥ ८ ॥ प्रभूतबलिदानन्तुनवम्यांव्विँधिवच्चरेत् ॥ ध्यायेद्दशभुजान्देवीन्दुर्गातन्त्रेणपूजयेत्
॥ ९ ॥ विसर्ज्जयन्दशम्यान्तुकुर्य्याद्वैसाधकोत्तमः ॥ कृत्वाविसर्ज्जनन्तस्यान्तिथौनक्तंसमाचरेत् ॥ १० ॥ यदातुषोडशभुजाम्महा
मायाम्प्रपूजयेत् ॥ दुर्गातन्त्रेणमन्त्रेणविशेषन्तत्रवैश्रृणु ॥ ११ ॥ कन्यायाङ्कृष्णपक्षस्यएकादश्यामुपोषितः ॥ द्वादश्यामे
कभक्तन्तुनक्तङ्कुर्य्यात्परेहनि ॥ १२ ॥ चतुर्द्दश्याम्महामायाम्बोधयित्वाविधानतः ॥ गीतवादित्रनिर्घोषैर्न्नानानैवेद्यवेदनैः ॥
॥ १३ ॥ अयाचितम्बुधःकुर्य्यादुपवासम्परेहनि ॥ एवमेवव्रतङ्कुर्य्याद्यावद्वैनवमीभवेत् ॥ १४ ॥ ज्येष्ठायाञ्चसमभ्यर्च्यमूलेन

प्रतिपूजयेत् ॥ उत्तरेणार्च्चनङ्कृत्वा श्रवणान्ते विसर्ज्जयेत् ॥ १५ ॥ यदात्वष्टादशभुजांमहामायाम्प्रपूजयेत् ॥ दुर्ग्गातन्त्रेणम
न्त्रेणतत्रापिशृणुभैरव ॥ १६ ॥ कन्यायाङ्कृष्णपक्षस्यपूजयित्वार्द्रऽऽदिवा ॥ नवम्याम्बोधयेद्देवींगीतवादित्रनिस्वनैः ॥
॥ १७ ॥ शुक्लपक्षेचतुर्थ्यान्तुदेवीकेशविमोचनम् ॥ प्रातरेवतुपञ्चम्यांस्नापयेत्तुशुभैर्ज्जलैः ॥ १८ ॥ सप्तम्याम्पत्रिकापूजा
अष्टम्याञ्चाप्युपोषणम् ॥ पूजाजागरणञ्चैवनवम्याम्विधिवद्बलिः ॥ १९ ॥ सम्प्रेषणन्दशम्यान्तुक्रीडाकौतुकमङ्गलैः ॥ नी
राजनन्दशम्यान्तुबलवृद्धिकरम्महत् ॥२०॥ यदावैवैष्णवीन्देवीम्महामायाञ्जगन्मयीम्॥ पूजयेत्तत्रचतदाविशेषंशृणुभैरव ॥
॥ २१ ॥ कन्यासंस्थेरवौपूजायाशुक्लातिथिरष्टमी ॥ तस्यांरात्रौपूजितव्यामहाविभवविस्तरैः ॥ २२ ॥ नवम्याम्बलिदा
नन्तुकर्त्तव्यँव्वैयथाविधि ॥ जपहोमञ्चविधिवत्कुर्य्यात्तत्रविभूतये ॥२३॥ सम्पूजयेन्महादेवीमष्टपुष्पिकयानरः ॥ रामस्या
नुग्रहार्थायरावणस्यवधायच ॥ २४ ॥ रात्रावेवमहादेवीब्रह्मणाबोधितापुरा ॥ ततस्तुत्यक्तनिद्रासानन्दायामाश्विनेसिते ॥
॥ २५ ॥ जगामनगरींलङ्कांयत्रासीद्राघवःपुरा ॥ तत्रगत्वामहादेवीतदातौरामरावणौ ॥ २६ ॥ युद्धेनियोजयामासस्वयम
न्तार्हिताम्बिका ॥ रक्षसाव्वाँनराणाञ्चजग्ध्वासामांसशोणिते ॥ २७ ॥ रामरावणयोर्य्युद्धंसप्ताहंसान्ययोजयेत् ॥ व्यतीते
सप्तमेरात्रौनवम्यांरावणन्ततः ॥ २८ ॥ रामेणघातयामासमहामायाजगन्मयी ॥ यावत्तयोःस्वयन्देवीयुद्धकेलिमुदैक्षत ॥

॥२९॥ तावत्तु सप्तरात्राणि सर्व्वैर्देवैः सुपूजिता ॥ निहते रावणे वीरे नवम्यां सकलैः सुरैः ॥३०॥ विशेषपूजां दुर्गायाश्चक्रे लोक
पितामहः ॥ ततः सम्प्रेषिता देवी दशम्यां शाबरोत्सवैः ॥३१॥ शक्रोऽपि देवसेनाया नीराजनमथाकरोत् ॥ शान्त्यर्थं सुरसैन्याना
न्देवराज्यस्य वृद्धये ॥ ३२ ॥ रामरावणबाणेन युद्धञ्चावेक्ष्य भीतिदम् ॥ तृतीयायान्तु लङ्कायाः पूर्वोत्तरदिशि स्थितम् ॥ ३३ ॥
स्वातीनक्षत्रयुक्तायाम्भीतं सुरबलम्महत् ॥ शान्त्यर्थं वर्त्तयामास देवेन्द्रो वचनाद्धरेः ॥ ३४ ॥ ततस्तु श्रवणेनाथ दशम्याञ्चण्डि
कां शुभाम् ॥ विसृज्य चक्रे शान्त्यर्थम्बलनीराजनं हरिः ॥३५॥ नीराजितबलः शक्रस्तत्र रामञ्च राघवम् ॥ सम्प्राप्य प्रययौ स्वर्गं
सह देवैः शचीपतिः ॥ ३६ ॥ इति वृत्तम्पुराकल्पे मनोः स्वायम्भुवेन्तरे ॥ प्रादुर्भूता दशभुजा देवी देवहिताय वै ॥ ३७ ॥ नृणा
न्त्रेतायुगस्यादौ जगतां हितकाम्यया ॥ पुराकल्पे यथा वृत्तम्प्रतिकल्पन्तथा तथा ॥ ३८ ॥ प्रवर्त्तते स्वयन्देवी दैत्यानान्नाश
नाय वै ॥ प्रतिकल्पम्भवेद्रामो रावणश्चापि राक्षसः ॥३९॥ तथैव जायते युद्धन्तथा त्रिदशसङ्गमः ॥ एवं रामसहस्राणि रावणानां
सहस्रशः ॥४०॥ भवितव्यानि भूतानि तथा देवी प्रवर्त्तते ॥ पूजयन्ति सुरास्सर्व्वे बलन्नीराजयन्त्यपि ॥४१॥ तथैव च नराः सर्व्वे
कुर्य्युः पूजां यथाविधि ॥ बलनीराजनं राजा कुर्य्याद्बलविवृद्धये ॥४२॥ दिव्यालङ्कारयुक्ताभिर्व्वारुणीभिः प्रवर्त्तनम् ॥ कर्त्तव्य
न्नृत्यगीतानि क्रीडाकौतुकमङ्गलैः ॥४३॥ मोदकैः पिष्टकैः पेयैर्भक्ष्यभोज्यैरनेकशः ॥ कूष्माण्डैर्न्नारिकेलैश्च खर्ज्जूरैः पनसैस्त

था ॥ ४४ ॥ द्राक्षामलकशाण्डिल्यैःक्षीहैश्चकरुणैस्तथा ॥ कशेरुक्रमुकैर्म्मूलैसजम्बूतिन्दुकादिभिः ॥ ४५ ॥ गव्यैर्ग्गु
डैस्तथामांसैर्म्मद्यैर्म्मधुभिरेवच ॥ बालप्रियैश्चनैवेद्यैर्ल्लाजाक्षतफलादिभिः ॥ ४६ ॥ इक्षुदण्डैःसिताभिश्चलवलीनागरङ्ग
कैः ॥ अजाभिर्म्महिषैर्म्मेषैरात्मशोणितसञ्चयैः ॥ ४७ ॥ पक्ष्यादिबलिजातीयैस्तथानानाविधैर्म्मृगैः ॥ पूजयेच्चजगद्धात्रीम्मां
सशोणितकर्द्दमैः ॥ ४८ ॥ रात्रौस्कन्दविशाखस्यकृत्वापिष्टकपुत्रिकाम् ॥ पूजयेच्छत्रुनाशायदुर्ग्गायाःप्रीतयेतथा ॥ ४९ ॥
होमञ्चसतिलैराज्यैर्म्मांसैरपितथाचरेत् ॥ उग्रचण्डादिकाःपूज्यास्तथाष्टौयोगिनीःशुभाः ॥ ५० ॥ योगिन्यश्चचतुःषष्टिस्त
थावैकोटियोगिनोः ॥ नवदुर्ग्गास्तथापूज्यादेव्याःसन्निहिताःशुभाः ॥ ५१ ॥ जयन्त्यादिर्ग्गन्धपुष्पैस्तादेव्यामूर्त्तयोयतः ॥
देव्याःसर्व्वाणिचास्त्राणिभूषणानितथैवच ॥ ५२ ॥ अङ्गप्रत्यङ्गयुक्तानिवाहनंसिंहमेवच ॥ महिषासुरमर्द्दिन्याःपूजयेद्भूत
येसदा ॥ ५३ ॥ पुराकल्पेमहादेवीमनोःस्वायम्भुवेन्तरे ॥ नृणाङ्कृतयुगस्यादौसर्व्वदेवैस्तुतासदा ॥ ५४ ॥ महिषासुर
नाशायजगतांहितकाम्यया ॥ योगनिद्रामहामायाजगद्धात्रीजगन्मयी ॥ भुजैःषोडशभिर्य्युक्ताभद्रकालीतिविश्रुता ॥ ५५ ॥
क्षीरोदस्योत्तरेतीरेबिभ्रतीविपुलान्तनुम् ॥ अतसीपुष्पवर्णाभाज्वलत्काञ्चनकुण्डला ॥ ५६ ॥ जटाजूटसखण्डेन्दुमुकुट
त्रयभूषिता ॥ नागहारेणसहितास्वर्णहारविभूषिता ॥ ५७ ॥ शूलञ्चक्रञ्चखड्गञ्चशङ्खम्बाणन्तथैवच ॥ शक्तिर्व्वज्रञ्चदण्डञ्च

नित्यन्दक्षिणबाहुभिः ॥ ५८ ॥ बिभ्रतीसततन्देवीविकाशिदशनोज्ज्वला ॥ खेटकञ्चम्मंचापञ्चपाशञ्चाङ्कुशमेवच ॥५९॥ घ
ण्टाम्परशुञ्चमुशलम्बिभ्रतीवामपाणिभिः ॥ सिंहस्थानयनैरक्तवर्णैस्त्रिभिरतिज्वला ॥ ६० ॥ शूलेनमहिषम्भित्वातिष्ठन्ती
परमेश्वरी ॥ वामपादेनचाक्रम्यतत्रदेवीजगन्मयी ॥ ६१ ॥ तान्दृष्ट्वासकलादेवाःप्रणम्यपरमेश्वरीम् ॥ नोचुःकिञ्चनतन्दृष्ट्वा
निहतम्महिषासुरम् ॥ ६२ ॥ ततःप्रोवाचदेवाँस्तान्ब्रह्मादीन्परमेश्वरी ॥ स्मितप्रभिन्नवदनाविकाशिवदनोज्ज्वला ॥ ६३ ॥
गच्छन्तुभोःसुरगणाजम्बुद्वीपान्तरम्प्रति ॥ हिमवत्पर्व्वतासन्नेवरङ्कात्यायनाश्रमम् ॥६४॥तत्रैवभवतांसाध्यम्भविष्यतिन
संशयः ॥ इत्युक्त्वासामहादेवीतत्रैवान्तरधीयत ॥६५॥ देवाअपितदाजग्मुःकात्यायनमुनेःपुरम् ॥ आश्रमम्प्रतितेगत्वावि
स्मयाविष्टमानसाः ॥ ६६ ॥ निहतोमहिषोदेव्यादिष्टोस्माभिर्य्यदर्थतः ॥ स्तुताचैषामहादेवीजगद्धात्रीजगन्मयी ॥ ६७॥
किमर्थमाहसादेवीगन्तुङ्कात्यायनाश्रमम् ॥ किमन्यद्वाञ्छितङ्कार्य्यमस्माकव्वाँभविष्यति॥६८॥ इतिब्रुवन्तस्तेसर्व्वेगच्छ
न्तिस्मपरस्परम् ॥ हिमवत्पर्व्वतासन्नम्मुनिङ्कात्यायनाश्रमम् ॥ ६९ ॥ तत्रसेन्द्राःसदिक्पालाब्रह्मविष्णुशिवास्तथा ॥ नि
षेदुःसुचिरम्प्रीतादुर्ग्गादर्शनलालसाः ॥ ७० ॥ ततोरुद्रगणाःसर्व्वेमहिषासुरचेष्टितम् ॥ आगत्यकथयामासुर्द्देवलोकपराभ
वम् ॥ ७१ ॥ ततस्तत्रमहाकोपम्ब्रह्मविष्णुशिवादयः ॥ चक्रुःकोन्योस्तिमहिषोहतोदेव्यासदानवः ॥ ७२॥ पुनर्य्यैने

हक्रियतेजगद्विध्वंसनम्भृशम् ॥ इतिप्रकुप्यतान्तेषांशरीरेभ्यःपृथक्पृथक् ॥ ७३ ॥ निश्चक्रमुश्चतेजाँसिशक्तिरूपाणित
त्क्षणात् ॥ तत्तेजोभिर्द्धृतवपुर्देवीकात्यायनेनवै ॥७४॥ सन्धुक्षितापूजिताचतेनकात्यायनीस्मृता ॥ ततस्तेनैवमन्त्रेणदशबाहु
युतेनवै ॥ ७५॥ पश्चाज्जघानमहिषञ्जगद्धात्रीजगन्मयी ॥ यदास्तुतामहादेवीबोधिताचाश्विनस्यच ॥ ७६ ॥ चतुर्द्दशीकृ
ष्णपक्षेप्रादुर्भूताजगन्मयी ॥ देवानान्तेजसाम्मूर्तिःशुक्लपक्षेसुशोभने ॥ ७७ ॥ सप्तम्यांसाकरोद्देवीअष्टम्यान्तैरलङ्कृता ॥
नवम्यामुपहारैस्तुपूजितामहिषासुरम् ॥ ७८ ॥ निजघानदशम्यान्तुविसृष्टान्तर्हिताशिवा ॥ ७९ ॥ ॥ मार्कण्डेयउवाच ॥
श्रुत्वेमांसगरोराजादेव्याःसङ्गतिमुत्तमाम् ॥ संशयालुश्चतद्रूपेपुनरौर्व्वमपृच्छत ॥ ८० ॥ ॥सगरउवाच ॥ ॥ यदिपश्चा
न्महादेवीजघानमहिषासुरम् ॥ कथम्पूर्व्वम्भद्रकालीरूपाभून्महिषासुरम् ॥ ८१ ॥ तथाहिदर्शनंतस्याःपादाक्रान्तश्चका
रच ॥ हृदिशूलेननिर्भिन्नन्ददृशुःसकलाःसुराः ॥८२॥ एवन्तुसंशयञ्छिन्धिमुनिश्रेष्ठममाधुना ॥ ॥ और्व्वउवाच ॥ ॥ शृणु
त्वन्नृपशार्द्दूलभद्रकालीयथापुरा ॥ ८३ ॥ प्रादुर्भूतामहामायामहिषेणसहैवतु ॥ महिषासुरएवासौनिद्रायान्निशिपूर्व्वतः
॥ ८४ ॥ स्वप्नम्प्रददृशेवीरोदारुणङ्घोरदर्शनम् ॥ महामायाभद्रकालीछित्त्वाखड्गेनमेशिवम् ॥ ८५ ॥ पपौतस्यचरक्तानि
व्यादितास्यातिभीषणा ॥ ततःप्रातर्भययुतःसदैत्योमहिषासुरः ॥ ८६ ॥ तामेवपूजयामाससुचिरंसानुगस्तदा ॥ आरा

धितातदादेवीमहिषेणासुरेणवै ॥ ८७॥ प्रादुर्भूताभद्रकालीभुजैःषोडशभिर्य्युता ॥ ततःप्रणम्यमहिषोमहामायाञ्जगन्म
यीम् ॥८८॥ उवाचेदंवचोनम्रमूर्त्तिर्भक्तियुतोसुरः ॥ ॥ महिषउवाच ॥ ॥ देविखड्गेनसञ्छिद्यशोणितानिशिरोमम ॥८९॥
त्वयाभुक्तानिदृष्टानिमयास्वप्नेननिश्चितम् ॥ अवश्यन्तुत्वयाकार्य्यम्मयाज्ञातम्प्रमाणतः ॥ ९० ॥ एतद्रुधिरपानम्मेतत्रैक
न्देहिमेवरम् ॥ वध्यस्तवाहन्नात्रास्तिसंशयःपरमेश्वरि ॥९१॥ ममापितत्रनोदुःखन्नियतिःकेनलङ्घ्यते ॥ किन्तुत्वयैवसहितः
शम्भुराराधितःपुरा ॥ ९२ ॥ ममपित्रामदर्त्थेनजातःपश्चादहन्ततः ॥ मयाप्याराधितःशम्भुःप्राप्ताचेष्टातथाविधाः ॥ ९३ ॥
मन्वन्तरत्रयय्यावदसुरंराज्यमुत्तमम् ॥ अकन्तृकम्मयाभुक्तमनुतापोनविद्यते ॥ ९४ ॥ कात्यायनेनमुनिनाशप्तोहंशिष्य
कारणात् ॥ सीमन्तिनीविनाशन्तेकरिष्यतिनसंशयः ॥ ९५ ॥ पुरामुनिन्तपस्यन्तंरौद्राश्वन्नामसत्तमम् ॥ मुनेःकात्याय
नाख्यस्यशिष्यंहिमवदन्तिके ॥ ९६ ॥ दिव्यस्त्रीरूपमतुलङ्कृत्वाहङ्कौतुकात्तदा ॥ मयासम्मोहितोविप्रोत्यजत्सद्यस्तदात
पः ॥ ९७ ॥ नदूरात्संस्थितेनाहम्मुनिनाकात्यसूनुना ॥ ज्ञात्वामायान्तदासप्तःशिष्यार्त्थेक्रोधवह्निना ॥ ९८ ॥ यस्मा
त्त्वयामेशिष्योयम्मोहितस्तपसश्च्युतः ॥ कृतस्त्वयास्त्रीरूपेणतत्त्वांस्त्रीनिहनिहनिष्यति ॥ ९९ ॥ इतिमांशप्तवान्पूर्वम्मुनिः
कात्यायनःस्वयम् ॥ तस्यशापस्यकालोयमागत्यसमुपस्थितः ॥ १००॥ देवेन्द्रत्वंमयाप्राप्तम्भुक्तन्त्रिभुवनंसमम् ॥ कि

श्चिन्नशोच्यम्मेत्रास्तिवाञ्छनीयंहियन्मया ॥ १ ॥ तस्मात्त्वाम्वैप्रपन्नोहम्प्रार्त्थ्यंशेषंहियन्मम ॥ तन्देहिदेविदुर्ग्गेत्वम्भूय
भ्यन्नन्नमोनमः ॥ २ ॥ ॥ देव्युवाच ॥ ॥ प्रार्त्थनीयोवरोयस्तेतम्वृणुष्वम्महाऽसुर ॥ दास्यामितेवरम्प्रार्त्थ्यंसंशयोनात्र
विद्यते ॥ ३ ॥ ॥ महिषउवाच ॥ ॥ यज्ञभागमहम्भोक्तुमिच्छामित्वत्प्रसादतः ॥ यथामखेषुसर्व्वेषुपूज्योहंस्यात्तथाकुरु
॥ ४ ॥ त्वत्पादसेवान्नत्यक्ष्येयावत्सूर्य्यःप्रवर्त्तते ॥ एवम्वरद्वयन्देहियदिदेयोवरोमम ॥ ५ ॥ ॥ देव्युवाच ॥ ॥ यज्ञभा
गाःसुरेभ्यस्तुकल्पितावैपृथक्पृथक् ॥ भागोनविद्यतेचान्योयन्दास्यामितवाऽधुना ॥ ६ ॥ किन्तुत्वयिमयायुद्धेनिहतेमहि
षासुर ॥ नैवत्यक्षसिमत्पादंसततन्नात्रसंशयः ॥ ७ ॥ ममप्रवर्त्ततेपूजायत्रयत्रचतत्रते ॥ पूज्यश्चिन्त्यश्चतत्रैवकायोयत्तवदा
नव ॥ ८ ॥ इतिश्रुत्वावचस्तस्याःप्रत्यूचेमहिषासुरः ॥ वरम्प्राप्येहमुदितःप्रसन्नवदनस्तदा ॥ ९ ॥ उग्रचण्डेभद्रकालि
दुर्ग्गेदेविनमोस्तुते ॥ प्रभूतामूर्त्तयोदेविभवत्यांसकलात्मिकाः ॥ १० ॥ काभिस्तेमूर्त्तिभिःपूज्योयज्ञेहम्परमेश्वरि ॥ तत्स
माचक्ष्वयदिमेभवत्येहकृपाकृता ॥ ११ ॥ ॥ देव्युवाच ॥ ॥ यानिनामानिप्रोक्तानित्वयेहमहिषासुर ॥ तासुमूर्त्तिषु
संम्पृष्टःपूज्योलोकेभविष्यति ॥ १२ ॥ उग्रचण्डेतियामूर्त्तिर्भद्रकालीत्यहम्पुनः ॥ ययामूर्त्यात्वांहनिष्येसादुर्ग्गेतिप्रकी
र्त्तिता ॥ १३ ॥ एतासुमूर्त्तिषुसदापादलग्नोन्नृणाम्भवान् ॥ पूज्योभविष्यतिस्वर्ग्गेदेवानामपिरक्षसाम् ॥ १४ ॥ आदि

सृष्टावुग्रचण्डामूर्त्यात्वन्निहतःपुरा ॥ द्वितीयसृष्टौतुभवान्भद्रकाल्यामयाहतः ॥ १५ ॥ दुर्ग्गारूपेणाधुनात्वांहनिष्यामिसहा
नुगम् ॥ किन्तुपूर्व्वन्नगृहीतस्त्वम्मयापादयोस्तले ॥ १६ ॥ अधुनाप्रार्थितवरोगृहीतःपूर्व्वकामयाः ॥ ग्रहीतव्यश्चपश्चा
त्वय्यँज्ञभागोपभुक्तये ॥ १७ ॥ और्व्वउवाच ॥ इत्युक्त्वासामहामायाउग्रचण्डाहयातनुम् ॥ दर्शयामासचतदामहिषाया
सुरायवै ॥ १८ ॥ यामूर्तिःषोडशभुजाभद्रकालीतिविश्रुता ॥ तथैवमूर्त्तिम्बाहुभ्यांअपराभ्यान्तुबिभ्रती ॥ १९ ॥ दक्षि
णाधोगदाव्वाँमपाणिनापादपात्रकम् ॥ सुरापूर्णञ्चशिरसामुण्डमालाव्विलेशयम् ॥ २० ॥ भिन्नाञ्जनचयप्रख्याप्रचण्डासिं
हवाहिनी ॥ रक्तनेत्रामहाकायायुक्ताष्टादशबाहुभिः ॥ २१ ॥ उग्रचण्डाभद्रकालीदेव्यामूर्त्तिद्वयन्तथा ॥ महिषःप्रणना
माशुदृष्ट्वाविस्मयमागतः ॥ २२ ॥ ततोयथापदाक्रम्यनिहतोमहिषासुरः ॥ तथैवजगृहेपादतलेदेवीद्वयंतुतम् ॥ २३ ॥
हृदिशूलेननिर्भिन्नम्माहिषव्विँशिरस्ककम् ॥ गृहीतकेशन्देव्यातुनिर्य्यांदात्रविभूषितम् ॥ २४ ॥ वमद्रक्तम्महाकायन्दृष्ट्वापू
र्व्वतनुंस्वकम् ॥ भयम्प्राप्यासुरःसोथशुशोचचमुमोहच ॥ २५ ॥ ततस्तुक्षणमात्मानंसंस्तभ्यसतुदानवः ॥ प्रणम्यव
चनन्देवीमिदमाहसगद्गदम् ॥ २६ ॥ ॥ महिषउवाच ॥ ॥ यदिदेविप्रसन्नासियज्ञभागाश्चकल्पिताः ॥ तदाममान्यदानाशए
वमेतद्भवेनहि ॥ २७ ॥ यथाहन्नसुरैःसार्द्धङ्करिष्येवैरमद्भुतम् ॥ तथामाङ्कुरुओदेविनजन्मप्रलभेयथा ॥ २८ ॥ ॥ देव्युवाच ॥

आराधिताहम्भवतावरोदत्तोमयातव ॥ वध्यश्चत्वम्ममैवेहनात्रकार्य्याविचारणा ॥२९॥ यत्त्वयाप्रार्थितश्चापिसर्व्वैःसुरगणैः
सह ॥ विरोधीमेसदामाभूदितिचापिभविष्यति ॥ १३० ॥ मत्पादनलसंस्पर्शाच्छरीरन्तवदानव ॥ यज्ञभागोपभोगायविशि
र्णन्नभविष्यति ॥३१॥ तवजीवात्मभिःप्राणाःसर्व्वएवमहासुर ॥ हरस्यपादसय्योगाच्चिरंस्थास्यतिकेवलम् ॥३२॥ कल्पको
टिसहस्राणित्रिंशत्वम्महिषासुर ॥ शतानिचाष्टावन्यानिजन्मतेनभविष्यति ॥३३॥ इतिदेवीवरन्दत्वामहिषायासुरायवै ॥
प्रणतातेनशिरसातत्रैवान्तरधियत ॥३४॥ महिषोपिनिजस्थानम्पुनःप्रायात्समोहितः ॥ माययाचासुरम्भावमादायनृपपूर्व्व
वत् ॥३५॥ ॥ सगरउवाच ॥ ॥ अनेकेनिहतादैत्यामाययालोकभूतये ॥ नतेपुनःप्रगृहीतातेभ्योदत्तावरानव ॥ ३६ ॥ तेनवा
कारणेनयम्प्रगृहीतोवराःकथम् ॥ दत्तास्तस्मैसमाचक्ष्वममसम्यग्द्विजोत्तम ॥३७॥ और्व्वउवाच ॥ आराधितोमहादेवोर
म्भेणासुरवैरिणा ॥ चिरेणसचसुप्रीतस्तपसातस्यशङ्करः ॥३८॥ अथतुष्टोमहादेवःप्रत्यक्षंरम्भमूचिवान् ॥ प्रीतोस्मितेवरं
रम्भवरयस्वयथेप्सितम् ॥३९॥ एवमुक्तःप्रत्युवाचरम्भस्तञ्चन्द्रशेखरम् ॥ अपुत्रोहम्महादेवयदितेमय्यनुग्रहः ॥१४०॥ म
मजन्मत्रयेपुत्रोभवान्भवतुशङ्कर ॥ अवध्यःसर्व्वभूतानाञ्जेताचत्रिदिवौकसाम् ॥४१॥ चिरायुश्चयशस्वीचलक्ष्मीवान्सच
शङ्कर ॥ एवमुक्तस्तुदैत्येनप्रत्युवाचवृषध्वजः ॥ ४२ ॥ भवन्त्येतद्वाञ्छितन्तेभविष्यामिसुतस्तव ॥ इत्युक्त्वासमहादेवस्तत्रै

वान्तरधीयत ॥ ४३ ॥ रम्भोपियातःस्वस्थानंहर्षोत्फुल्लविलोचनः ॥ पथिगछन्त्सरम्भोथददर्शमहिषींशुभाम् ॥४४॥ त्रिहा
यणींश्चित्रवर्णांसुन्दरीमृतुशालिनीम् ॥ सतान्दृष्ट्वाथमहिषींरम्भःकामेनमोहितः ॥ ४५ ॥ दोर्भ्यांङ्गृहीत्वाचतदाचकारसुरतो
त्सवम् ॥ तयोःप्रवृत्तेसुरतेतदासातस्यतेजसा ॥ ४६ ॥ दधारमहिषीगर्भन्तदाभून्महिषासुरः ॥ तस्यांस्वांशेनगिरिशस्त
त्पुत्रत्वमवाप्तवान् ॥ ४७ ॥ ववृधेसतदाराम्भिःशुक्लपक्षेसमुद्रवत् ॥ तञ्चकात्यायनमुनिःशप्तवान्महिषासुरम् ॥ ४८ ॥
दुर्णयव्वींक्ष्यशिष्यार्थेशिष्यानुग्रहकारकः ॥ कात्यायनेनशप्तन्तव्विँज्ञायमहिषासुरम् ॥ ४९ ॥ प्राहप्रणायपूर्व्वन्तुचण्डिका
श्चन्द्रशेखरः ॥ ॥ ईश्वरउवाच ॥ ॥ देविकात्यायनेनायंशप्तोद्यमहिषासुरः ॥ १५० ॥ योषिद्विनाशकर्त्रीतिभु
वितेतिजगन्मय ॥ निःसंशयमृषेर्व्वाक्यम्भविष्यतिनसंशयः ॥ ५१ ॥ मदीयोमहिषःकायस्त्वयादेविजगन्मयि ॥ हन्त
व्यःसततय्योंगयुक्तःपूर्व्वेपरेपिच ॥ ५२ ॥ हरिर्हरिस्वरूपेणनत्वाम्बोढुङ्क्षमोधुना ॥ ममायम्माहिषःकायस्तववोढाभविष्य
ति ॥ इतिपूर्व्वम्महादेवोदेवीम्प्रार्त्थितवान्पुरा ॥ ५३ ॥ तेनदेवीमहादेवञ्चग्राहमहिषासुरम् ॥ त्रिषुजन्मसुपुत्रोभूद्रम्भ
स्यभगवान्हरः ॥ ५४ ॥ सृष्टित्रयेसरम्भोपिरम्भएवव्यजायत ॥ आसुरन्ताद्दशन्तेपेतपःपरमदारुणम् ॥ ५५ ॥ त
थैवाराधितःशम्भुःपुत्रार्त्थेप्रददौवरम् ॥ तथैवमहिषीम्भेजेप्रथमंसुरतायसः ॥ ५६ ॥ तस्यान्तथाभवद्वीरोदानवोमहिषा

सुरः ॥ तथैवशेषेभगवान्मुनिःकात्यायनस्तुतम् ॥ ५७ ॥ इतिप्रवृत्तेपूर्व्वेस्मिन्परस्मिन्सतुजन्मनि ॥ महिषःपूजयित्वाथ
देवीम्वरमयाचत ॥ ५८ ॥ तृतीयेजन्मनिवरम्प्राप्यकल्पानशेषतः ॥ नेहमेजन्मभवितेत्येवम्वरमयाचत् ॥ ५९ ॥ तेनदेवी
पादतलेतिष्ठत्येषोसुरोधुना ॥ नोत्पत्तिरपितस्यास्तिसर्व्वंत्तान्तानुहूनृप ॥ ६० ॥ एवन्देवीप्रसादेनमहादेवांशसम्भवः ॥
परामवापसततम्प्रतिपत्तिम्महासुरः ॥ ६१ ॥ इतितेकथितंराजन्यथासमहिषासुरः ॥ देवीपादतलम्प्राप्ययथासोद्यापि
मोदते ॥ ६२ ॥ प्रस्तुतशृणुभोराजन्कथयामिनृपोत्तम ॥ ६३ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इतिवःकथितंराजासगरःसहि
तोयथा ॥ और्वेणचक्रेसर्व्वांदन्देवीमहिषयोजने ॥ ६४ ॥ पुनर्य्यदाहभूयायसगरायमहात्मने ॥ तच्छृण्वन्तुमुनिश्रेष्ठागुह्या
द्गुह्यतरम्परम् ॥ ६५ ॥ ॥ इतिकालिकापुराणेमहिषासुरोपाख्यानेद्विषष्टितमोध्यायः ॥ ६२ ॥ ॥ और्व्वउवाच ॥ ॥
यथाहभगवान्देवोभैरवायमहात्मने ॥ वेतालायनृपश्रेष्ठतथा त्वम्प्रस्तुतंशृणु ॥ १ ॥ ॥ भगवानुवाच ॥ ॥ उग्रचण्डाचया
मूर्त्तिरष्टादशभुजाभवत् ॥ सानवम्याम्पुराकृष्णपक्षेकन्यांगतेरवौ ॥ २ ॥ प्रादुर्भूतामहामायायोगिनीकोटिभिःसह ॥
आषाढस्यतुपूर्णयांसत्रन्द्वादशवार्षिकम् ॥ ३ ॥ दक्षःकर्त्तुंसमारेभेवृताःसर्व्वेदिवाकसः ॥ ततोहन्नवृतस्तेनदक्षेणसुमहात्म
ना ॥ ४ ॥ कपालीतिसतीचापितज्जायेतिचनोवृताः ॥ ततोरोषसमायुक्ताप्राणाँस्तत्याजसासती ॥ ५ ॥ त्यक्तदेहा

सतीचापिचण्डमूर्त्तिस्तदाभवत् ॥ ततःप्रवृत्तेयज्ञेपितस्मिन्द्वादशवार्षिके ॥ ६ ॥ नवम्याङ्कृष्णपक्षेतुकन्यायाञ्चणुमूर्त्ति
धृक् ॥ योगनिद्रामहामायायोगिनीकोटिभिःसह ॥ ७ ॥ सतीरूपम्परित्यज्ययज्ञभङ्गमथाकरोत् ॥ शङ्करस्यगणैः
सर्व्वैःसहिताशङ्करेणच ॥ ८ ॥ स्वयव्वँभञ्जसादेवीमहासत्रम्महात्मनः ॥ ततोदेव्यामहाक्रोधेव्यतीतेत्रिदिवौकसः ॥
॥ ९ ॥ पूजयाञ्चक्रुरतुलान्देवीम्पूर्व्वोदितेनवै ॥ पूर्व्वोदितविधानेनपूजामस्यादिवौकसः ॥ १० ॥ कृत्वैवपरमामापुर्निर्व्वृ
त्तिन्दुःखहानये ॥ एवमन्यैरपिसदाकार्य्यन्देव्याःप्रपूजनम् ॥ ११ ॥ विभूतिमतुलाम्प्राप्तुञ्चतुर्व्वर्गप्रदायिकाम् ॥ यो
मोहादथवालस्याद्देवीन्दुर्ग्गाम्महोत्सवे ॥ १२ ॥ नपूजयतिदम्भाद्वाद्वेषाद्वाप्यथभैरव ॥ क्रुद्धाभगवतीतस्यकामानिष्टान्नि
हन्तिवै ॥ १३ ॥ परत्रचमहामायाबलिम्भूत्वाप्रजायते ॥ अष्टम्यांरुधिरैश्चैवमहामांसैःसुगन्धिभिः ॥ १४ ॥ पूजयेद्बहुजाती
यैर्ब्बलिभिर्भोजनैःशिवाम् ॥ सिन्दूरैःपट्टवासोभिर्नानाविधविलेपनैः ॥ १५ ॥ पुष्पैरनेकजातीयैर्फलैर्ब्बहुविधैरपि ॥ उपवा
सम्महाष्टम्याम्पुत्रवान्नसमाचरेत् ॥ १६ ॥ यथातथैवपूतात्माव्रतीदेवीम्प्रपूजयेत् ॥ पूजयित्वामहाष्टम्यान्नवम्याम्बलिभि
स्तथा ॥ १७ ॥ विसर्ज्जयेद्दशम्यान्तुश्रवणेसावरोत्सवैः ॥ अन्त्यपादोदिवाभागेश्रवणस्ययदाभवेत् ॥ १८ ॥ तदासम्प्रेषण
न्देव्यादशम्यांकारयेद्बुधः ॥ वासिनीभिःकुमारीभिर्व्वेश्याभिर्न्नर्त्तकैस्तथा ॥ १९ ॥ शङ्खतूर्य्यनिनादैश्चमृदङ्गैःपटहैस्तथा ॥ ध्व

जैर्व्वस्त्रैर्ब्बहूविधैर्ल्लाजपुष्पप्रकीर्णकैः ॥ २० ॥ धूलिकर्द्दमविक्षेपैः क्रीडाकौतुकमङ्गलैः ॥ भगलिङ्गाभिधानैश्च भगलिङ्गप्रगीतकैः
॥ २१ ॥ भगलिङ्गादिशब्दैश्च क्रीडयेयुरलज्जनाः ॥ परैर्न्नाक्षिप्यते यस्तु यः परान्नाक्षिपेद्यदि ॥ २२ ॥ क्रुद्धा भगवती तस्य शापन्द
द्यात्सुदारुणम् ॥ आदिपादो निशाभागे श्रवणस्य यदा भवेत् ॥ २३ ॥ तदा देव्याः समुत्थानन्नवम्यान्न पुनर्द्दिवा ॥ अन्त्यपादो नि
शाभागे श्रवणस्य यदा भवेत् ॥ २४ ॥ तदा देव्याः समुत्थानन्नवम्यान्दिनआगतः ॥ विसर्ज्जनमनेनैव मन्त्रेण वत्स भैरव ॥ २५ ॥
कर्त्तव्यमम्भसि स्थाप्य विसृज्य च विभूतये ॥ उत्तिष्ठ देवि चण्डेशे शुभाम्पूजाम्प्रगृह्य च ॥ २६ ॥ कुरुष्व मम कल्याणमष्टाभिः श
क्तिभिः सह ॥ गच्छ गच्छ परं स्थानं स्वस्थानन्देवि चण्डिके ॥ २७ ॥ यत्पूजितम्मया देवि परिपूर्ण्णन्तदस्तु मे ॥ व्रज त्वं स्रोतसि जले
तिष्ठ गेहे च भूतले ॥ २८ ॥ निमज्ज्याम्भसि सन्त्यज्य पत्रिकावर्ज्जिते जले ॥ पुत्रायुर्द्धनवृद्ध्यर्थं स्थापितासि जले मया ॥ २९ ॥ इ
त्यनेन तु मन्त्रेण देवीं संस्थापयेज्जले ॥ सर्व्वलोकहितार्थाय सर्व्वलोकविभूतये ॥ ३० ॥ दुर्ग्गातन्त्रेण मन्त्रेण पूजितव्ये उभे अ
पि ॥ भद्रकालीमुग्रचण्डां महामायाम्महोत्सवे ॥ ३१ ॥ नेत्रबीजन्तु सर्व्वासाम्पूजने परिकीर्त्तितम् ॥ योगिनीनान्तु सर्व्वा
सांन्मूलमन्त्रैस्तथैव च ॥ ३२ ॥ मन्त्रन्तथोग्रचण्डायाः पृथक्त्वं शृणु भैरव ॥ आद्यद्वयन्नेत्रबीजम्मन्त्रस्योपान्तमन्तरे ॥
॥ ३३ ॥ वह्निनान्तः स्वरेणेन्दुबिन्दुभ्यान्नत्रमौग्रकम् ॥ नेत्रबीजन्द्वितीयन्तु द्विधावर्त्तितमुच्यते ॥ ३४ ॥ भद्रकाल्यास्तु मन्त्रोय

न्धर्म्मकामार्थसिद्धये ॥ यदातुवैष्मवीदेवीमहामायाजगन्मयी ॥ ३५ ॥ पूज्यतेवैष्णवीदेवीतन्त्रोक्ताअष्टयोगिनी ॥ ताःप्रो
क्ताःशैलपूज्याश्चपुर्व्वकल्पेचभैरव ॥ ३६ ॥ उग्रचण्डादयश्चाष्टौदुर्गातन्त्रस्यकीर्तिताः ॥ भद्रकाल्यास्तुमन्त्रेणभद्रकालीम्प्र
पूजयेत् ॥ ३७ ॥ पूजयेद्भूतिवृद्ध्यर्थमेताएवाष्टयोगिनीः ॥ जयन्तीम्मङ्गलाङ्कालीम्भद्रकालीङ्कपालिनीम् ॥३८॥ दुर्गाशिवा
ङ्क्षमान्धात्रीन्दलेष्वष्टासुपूजयेत् ॥ यदोग्रचण्डातन्त्रेणसादेवीतत्रपूज्यते ॥ ३९ ॥ योगिन्यस्तत्रपूज्याःस्युरष्टावन्याश्चभैर
व ॥ कौशिकीशिवदूतीचउमाहैमवतीश्वरी ॥ ४० ॥ शाकम्भरीचदुर्गाचसप्तमीचमहोदरी ॥ उमायाःसौम्यमूर्तेस्तुतन्त्रन्त्वं
शृणुभैरव ॥ ४१ ॥ पादिःसमाप्तिसहितःफडन्तोनान्तएवच ॥ एकाक्षरस्यक्षरश्चउमातंत्रइतिस्मृतः ॥ ४२ ॥ सुवर्णसदृशी
ङ्गौरीम्भुजद्वयसमन्विताम् ॥ नीलारविन्दंवामेनपाणिनाबिभ्रतींसदा ॥ ४३ ॥ शुक्लन्तुचामरन्धृत्वाभर्गस्याङ्केथदक्षिणे ॥
विन्यस्यदक्षिणंहस्तन्तिष्ठन्तीम्परिचिन्तयेत् ॥ ४४ ॥ विनापिशम्भुंरुद्राणीम्भक्तस्तुपरिचिन्तयेत् ॥ द्विभुजांस्वर्णगौराङ्गी
म्पद्मचामरधारिणीम् ॥ ४५ ॥ व्याघ्रचर्म्मस्थितेपद्मेपद्मासनगतांसदा ॥ एतस्याःपूजनेप्रोक्ताअष्टौवेतालभैरव ॥ ४६ ॥
योगिन्योनायिकाश्चापिपृथक्केनव्यवस्थिताः ॥ जयाचविजयाचैवमातङ्गीललितातथा ॥ ४७ ॥ नारायण्यथसावित्रीस्व
धास्वाहातथाऽष्टमी ॥ पूर्व्वंशुम्भेनिशुम्भश्चदानवौभ्रातरावुभौ ॥ ४८ ॥ बभूवतुर्महासत्त्वौमहाकायौमहाबलौ ॥ अन्व

कस्यसुतौद्वौतौदन्तिनाविवदुर्म्मदौ ॥४९॥ मयाविनिहितेतस्मिन्नन्धकाख्येमहाबले ॥ ससैन्यवाहनौतौतुपातालतलमाश्रि
तौ ॥५०॥ बभूवतुर्म्महाकायौमहासत्वौमहाबलौ ॥ ततस्तत्वातपस्तीव्रंब्रह्माणन्तौमहासुरौ ॥ ५१ ॥ सम्यक्तदातोषयतांस
सुप्रीतोवरन्ददौ ॥ तौब्रह्मवरदत्तौतुसमासाद्यजगत्त्रयम् ॥५२॥ इन्द्रत्वमकरोच्छुम्भश्चन्द्रत्वञ्चनिशुम्भकः ॥ सर्व्वेषामेवदे
वानाय्यँज्ञभागानुपाहरत् ॥५३॥ स्वयंशुम्भोनिशुम्भश्चदिक्पालत्वञ्चतौगतौ ॥ सर्व्वेसुरगणाःसेन्द्रास्ततोगत्वाहिमाचल
म् ॥५४॥ गङ्गावतारनिकटेमहामायाम्प्रतुष्टुवुः ॥ अनेकशःस्तुतादेवीतदासर्व्वामरोत्करैः ॥५५॥ मातङ्गवनितामूर्त्तिर्भूत्वा
देवानपृच्छत ॥ युष्माभिरमरैरत्रस्तूयतेकाचभाविनी ॥ ५६ ॥ किमर्थमागतायूयम्मतङ्गस्याश्रमम्प्रति ॥ एवम्ब्रुवन्त्यामात
ङ्ग्यास्तस्यास्तुकायकोपतः ॥५७॥ समुद्भूताब्रवीद्देवीमांस्तुवन्तिसुराइति ॥ शुम्भोनिशुम्भोत्थसुरौबाधेतेसकलान्सुरान्
॥५८॥ तस्मात्तयोर्व्वधायाहंस्तूयेतैःसकलैःसुरैः ॥ विनिःसृतायान्देव्यान्तुमातङ्ग्याःकायकोपतः ॥५९॥ भिन्नाञ्जननिभाकृ
ष्णासाभूद्गौरीक्षणादपि ॥ कालिकाख्याभवत्सापिहिमाचलकृताश्रया ॥६०॥ तामुग्रतामृषयोवदन्तीहमनीषिणः॥ उग्राद
पिभयात्त्रापियस्माद्भक्तान्सदाम्बिका ॥६१॥ एतस्याःप्रथमम्बीजँक्कथितन्त्रयमेवच ॥ एषैवेकजटाख्यातुयस्मात्तस्माज्जटै
किकाम् ॥ ६२ ॥ शृणुतश्चिन्तनञ्चास्याःसम्यग्वेतालभैरवौ ॥ यथाध्यात्वामहादेवीम्भक्तःप्राप्नोत्यभीप्सितम् ॥६३॥ चतु

र्भ्वृंजाङ्कृष्णवर्णाम्मुण्डमालाविभूषिताम् ॥ खड्गन्दक्षिणपाणिभ्याम्बिभ्रतीन्दीवरन्त्वधः ॥ ६४ ॥ कर्त्रीञ्चखर्परञ्चैवक्रमा
द्वामेनबिभ्रतीं ॥ द्यांल्लिखन्तीञ्जटामेकाम्बिभ्रतींशिरसास्वयम् ॥ ६५ ॥ मुण्डमालाधरांशीर्षेग्रीवायामपिसर्व्वदा ॥ वक्षसा
नागहारन्तुबिभ्रतींरक्तलोचनाम् ॥ ६६ ॥ कृष्णवस्त्रधराङ्कट्याव्याघ्राजिनसमन्विताम् ॥ वामपादंशवहृदिसंस्थाप्यदक्षि
णम्पदम् ॥६७ ॥ विन्यस्यसिंहपृष्ठेतुलेलिहानांशवंस्वयम् ॥ साट्टहासाम्महाघोरांदावयुक्तातिभीषणाम् ॥ ६८ ॥ चिन्त्योग्र
तारासततम्भक्तिमद्भिःसुखेप्सुभिः ॥ एतस्याःसम्प्रवक्ष्यामियाअष्टौयोगिनिस्मृताः ॥ ६९ ॥ महाकालाथरुद्राणीउग्राभी
मातथैवच ॥ घोराचभ्रामरीचैवमहारात्रिश्चसप्तमी ॥ ७० ॥ भैरवीचाष्टमीप्रोक्तायोगिनीस्ताःप्रपूजयेत् ॥ याकायकोषान्निः
सृताकालिकायास्तुभैरव ॥ ७१ ॥ साकौशिकीतिविख्याताचारुरूपामनोहरा ॥ सृताहृदयाद्देव्यारसनाग्रेणचण्डिका
॥ ७२ ॥ नैतस्याःसदृशीमूर्त्त्याचारुरूपेणविद्यते ॥ त्रिषुलोकेषुकान्त्यावानास्यास्तुल्याभविष्यति ॥ ७३ ॥ योगनिद्राम
हामायायामूलप्रकृतिर्म्मता ॥ तस्याःप्राणस्वरूपेयन्देवीयाकौशिकीस्मृता ॥ ७४ ॥ नेत्रबीजन्तथैतस्याःबीजन्तुपरिकीर्ति
तम् ॥ तन्त्रमस्याःप्रवक्ष्यामिमूर्तिरूपञ्चभैरव ॥ ७५ ॥ समाप्तिनान्त्यदन्त्यस्तुषड्वर्ग्गादिसबिन्दुभिः ॥ षष्टस्वरेणसंस्पृ
ष्टोन्बिदुनासमलङ्कृतः ॥७६॥ कौशिकीमन्त्रतन्त्रोयंसर्व्वकामार्थदायकः ॥ तस्यास्तुसम्प्रवक्ष्यामियामूर्तिरिहभैरव ॥७७॥

शृणुष्वेकमनाभूत्वाजगदाह्लादकारकम् ॥ धम्मिल्लसर्य्यंतकचाविघोश्चाधोमुखोङ्कलाम् ॥ ७८ ॥ केशान्तेतिलकस्योर्द्धेदध
तीसुमनोहरा ॥ मणिकुण्डलसङ्घृष्टगण्डामुकुटमण्डिता ॥ ७९ ॥ सज्ज्योतिःकर्णपूराभ्याङ्कर्णमापूर्य्यसङ्गता ॥ सुवर्णम
णिमाणिक्यनागहारविराजिता ॥ ८० ॥ सदासुगन्धिभिःपद्मैरम्लानैरतिसुन्दरीम् ॥ मालाम्बिभर्त्तिग्रीवायांरत्नकेयू
रधारिणी ॥ ८१ ॥ मृडालायतवृत्तैस्तुबाहुभिःकोमलैःशुभैः ॥ राजन्तीकञ्चुकोपेतपीनोन्नतपयोधरा ॥ ८२ ॥ क्षीणम
ध्यापीतवस्त्रात्रिवलीप्रख्यभूषिता ॥ शूलंवज्रञ्चबाणञ्चखड्गंशक्तिन्तथैवच ॥ ८३ ॥ दक्षिणैःपाणिभिर्देवीगृहीत्वातुविराजि
ता ॥ गदाङ्घण्टाञ्चचापञ्चचर्म्मशङ्खन्तथैवच ॥ ८४ ॥ उर्द्धादिक्रमतोदेवीदधतीवामपाणिभिः ॥ सिंहस्योपरितिष्ठन्तीव्याघ्र
चर्म्माणिकौशिकी ॥ ८५ ॥ बिभ्रतीरूपमतुलंससुरासुरमोहनम् ॥ एतस्याःशृणुवत्सलव्याँपूज्याअष्टयोगिनीः ॥ ८६ ॥ ताः
पूजिताश्चकुर्व्वन्तिचतुर्व्वर्गन्नृणांसदा ॥ ब्रह्माणीप्रथमाप्रोक्तातत्तोमाहेश्वरीमता ॥ ८७ ॥ कौमारीचैववाराहीवैष्णवीपञ्चमी
तथा ॥ नारसिंहितथैवैन्द्रीशिवदूतीतथाष्टमी ॥ ८८ ॥ एताःपूज्यामहाभागायोगिनीकामदायिनीः ॥ देव्याललाटनिःक्रा
न्तायाकालीतिचविश्रुता ॥ ८९ ॥ तस्यामन्त्रम्प्रवक्ष्यामिकामदंशृणुभैरव ॥ समाप्तिसहितोदन्त्यःप्रान्तस्तस्मात्पुरःसरः ॥
॥ ९० ॥ षष्ठस्वराग्निविन्दिन्दुसहितःसदिरेवच ॥ कालीतन्त्रमितिप्रोक्तन्धर्म्मकामार्थदायकम् ॥ ९१ ॥ एतन्मूर्त्तिम्प्रवक्ष्या

मिवत्सैकाग्रमनाःशृणु ॥ नीलोत्पलदलश्यामाचतुर्बाहुसमन्विता ॥ ९२॥ खट्वाङ्गञ्चन्द्रहासञ्चबिभ्रतीदक्षिणेकरे ॥ वामेच र्म्मञ्चपाशञ्चऊर्ध्वाधोभावतःपुनः ॥ दधतीम्मुण्डमालाञ्चव्याघ्रचर्म्मधराम्बराम् ॥ ९३ ॥ कृष्णाङ्गीदीर्घदंष्ट्राचअतिदीर्घातिभीषणा ॥ लोलजिह्वानिम्नरक्तनयनानादभैरवा ॥ ९४ ॥ कबन्धवाहनापीनाविस्तारश्रवणानना ॥ एषाताराह्वयादेवीचामुण्डेतिचगीयते ॥ ९५ ॥ एतस्यायोगिनीश्चाष्टौपूजयेच्चिन्तयेद्यदि ॥ त्रिपुराभीषणाचण्डिकर्त्रींहर्त्रींविधानिका ॥ ९६ ॥ करालाशूलिनीचेतिअष्टौताःपरिकीर्त्तिताः ॥ एषातिकामदादेवीजाड्यहानिकरीसदा ॥ ९७ ॥ एतस्याःसदृशीकाचित्कामदानहिविद्यते ॥ कौशिक्याहृदयादेवीनिःसृताध्यायतोहरेः ॥ ९८ ॥ शिवदूतीतिसाख्यातायाचदेवशतैर्वृता ॥ मन्त्रमस्याःप्रवक्ष्यामिधर्म्मकामार्थदायकम् ॥ ९९ ॥ यच्छ्रुत्वासाधकोयातिदुर्ल्लभंशिवमन्दिरम् ॥ यामाराध्यमहादेवींशिवदूतींशिवात्मिकाम् ॥ १०० ॥ नचिराल्लभतेकामान्नरःसर्व्वजयीभवेत् ॥ अन्तःसमाप्तिसहितोविन्द्विन्दुभ्यांदशावरः ॥१॥ स्वरेणोपान्तदन्त्येनसंस्प्रष्टोन्तेनपूर्व्वशः ॥ सएवविन्दुयुगलपूर्व्वस्थोपान्तपावकः ॥ २ ॥ षष्ठस्वरकलाशून्यैःसहितःप्रथमस्थितः ॥ मन्त्रोयंशिवदूत्यास्तुशिवदूतीजयप्रदः ॥ ३ ॥ रूपमस्याःप्रवक्ष्यामिशृणुवत्सैकसम्मतः ॥ चतुर्भुजम्महाकायंसिन्दूरसदृशद्युति ॥ ४ ॥ रक्तदन्तम्मुण्डमालाजटाजूटार्द्धचन्द्रधृक् ॥ नागकुण्डलहाराभ्यांशोभितन्नखरोज्ज्वलम् ॥ ५ ॥ व्याघ्रचर्मप

रीधानन्दक्षिणेशूलखड्गधृक् ॥ वामेपाशन्तथाचर्म्मविभ्रदूर्द्ध्वापरक्रमात् ॥ ६ ॥ स्थूलवक्त्रञ्चपीनौष्ठन्तुङ्गमूर्त्तिभयङ्करम् ॥
निःक्षिप्यदक्षिणम्पादंसन्तिष्ठत्कुणयोपरि ॥ ७॥ वामपादंशृगालस्यपृष्ठेफेरुशतैर्वृतम् ॥ ईदृशींशिवदूत्यास्तुमूर्त्तिन्ध्यायेद्वि
भूतये ॥ ८ ॥ ध्यानमात्रादथैतस्याःनरःकल्याणमाप्नुयात् ॥ पूजनादचिराद्देवीसर्व्वान्कामान्ददातिच ॥ ९ ॥ यःशि
वाविरुतंश्रुत्वाशिवदूतींशुभप्रदाम् ॥ प्रणमेत्साधकोभक्त्यातस्यकामाःकरेस्थिताः ॥ ११० ॥ यदाजघानजगतांरक्त
बीजंहितायैव ॥ महादेवीमहामायातदास्याःकायतःसृता ॥ ११ ॥ दूतम्प्रस्थापयामासुशिवंशुम्भायसाम्बिका ॥ तेनसा
शिवदूतीतिदेवैःसर्व्वैःप्रगीतये ॥ १२ ॥ क्षेमङ्करीचशान्ताचवेदमातामहोदरी ॥ करालाकामदादेवीभगस्यभगशालि
नी ॥ १३ ॥ भगोदरीभगाहाराभगजिह्वाभगातथा ॥ एताद्वादशयोगिन्यःपूजनेपरिकीर्त्तिताः ॥ १४ ॥ एताद्वादशयो
गिन्यःशिवदूत्याःसदैवहि ॥ विचरन्तीस्वयन्देवीयत्रतत्रैवगच्छति ॥ १५ ॥ योगिन्योह्यथसख्यःस्युर्य्यथान्यासान्तथा
पुनः ॥ चण्डिकायास्तुयोगिन्यःसख्योत्रपरिकीर्त्तिताः ॥ १६ ॥ इतिनोह्यत्वङ्गमन्त्राणिकथितानिसमासतः ॥ कामख्या
याश्चमाहात्म्यङ्कल्पन्तन्त्रञ्चैवदामिनो ॥ १७ ॥ इतिकालिकापुराणेकामाख्यामाहात्म्येत्रिषष्ठितमोध्यायः ॥ ६३ ॥ ॥ भग
वानुवाच ॥ ॥ कामार्त्थमागतायस्मान्मयासार्द्धम्महागिरौ ॥ कामाख्याप्रोच्यतेदेवीनीलकूटेरहोगता ॥ १ ॥ कामदा

कामिनीकामाकान्ताकामाङ्गदायिनी ॥ कामाङ्गनाजिनीयस्मात्कामाख्यातेनचोच्यते ॥ २ ॥ एतस्याःशृणुमाहात्म्यङ्का
माख्यायाविशेषतः ॥ यासाप्रकृतिरूपेणजगत्सर्व्वन्नियोजयेत् ॥ ३ ॥ मधुकैटभनाशायमहामायाविमोहितः ॥ यदासय्यु
युधेविष्णुस्तदैषामोहयद्दृढम् ॥ ४ ॥ दैनन्दिनेतुप्रलयेप्रसुप्तेगरुडध्वजे ॥ तस्यश्रवणविड्जातावसुरौमधुकैटभौ ॥५॥ कूर्म्म
पृष्ठेस्थितादेवीविशीर्णैवाभवज्जलैः ॥ ताव्विँशीर्णाय्योगँनिद्रामहामायाव्यलोकयत् ॥ ६ ॥ ताव्वैँदृढतराम्पृथ्वीङ्कर्त्तुम्प्रति
तदेश्वरी ॥ उपायश्चिन्तयामासकथम्पृथ्वीभवेद्दृढा ॥ ७ ॥ इदानीमाज्यवत्पृथ्वीप्रवृत्ताकोमलाजलैः ॥ सृष्टिकालेजना
न्सोढुङ्कथंशक्ताभविष्यति ॥८॥ इतिसञ्चिन्त्यसामायाजगतांसृष्टिरूपिणी ॥ उपगम्यतदाविष्णुमाससादसनिद्रितम् ॥९॥
तत्तुसुप्तंसमासाद्यजगन्नाथञ्जगत्पतिम् ॥ वामहस्तकनिष्ठाग्रन्तस्यकर्णेन्यवेशयत् ॥ १० ॥ निवेश्यनखराग्रेणप्रोद्धृत्यश्रा
वणम्मलम् ॥ चुर्णीचकारसादेवीयोगनिद्राजगत्प्रसूः ॥ ११ ॥ तत्कर्णमलचूर्णेभ्योमधुर्न्नामासुरोभवत् ॥ ततोदक्षिणहस्त
स्यकनिष्ठाग्रन्तुदक्षिणम् ॥ १२ ॥ कर्णेन्यवेशयद्देवीतस्माद्प्युधृतम्मलम् ॥ तच्चापिक्षोदयामासकरशाखाद्वयेनतु ॥ १३ ॥
ततोभूत्कैटभोनामबलवान्त्सोऽसुरोमहान् ॥ उत्पन्नःसचपानार्थय्यँस्मान्मृगितवान्मधु ॥ १४ ॥ ततस्तस्यमहादेवीम
धुनामाकरोत्तदा ॥ उत्पन्नःकीटवद्भातिमहामायाकरेयतः ॥ १५ ॥ ततोस्यकैटभन्नाममहामायातदाकरोत् ॥ महामाया

मोहितौतौविष्णुगात्रन्तदागतौ ॥ १६ ॥ भ्रममाणौददृशतुर्न्नाभिपद्मेस्थितव्विँधिम् ॥ तमूचतुस्तौधातारंहनिष्यावोद्यत्वा
मिह ॥ १७ ॥ त्वञ्जागरयवैकुण्ठय्यँदिजीवितुमिच्छसि ॥ ततोब्रह्मामहामायाय्यौगनिद्राञ्जगत्प्रसूम् ॥ १८ ॥ प्रसाद
यामासतदास्तुतिभिर्व्वहुभिर्भ्भयात् ॥ चिरंस्तुताऽथसादेवीब्रह्मणाजगदात्मना ॥ १९ ॥ प्रसन्नातरसाव्यग्रमुवाचचय
थाविधिम् ॥ किम्मर्त्थंसँस्तुताचाहङ्किङ्करिष्याम्यहन्तव ॥ २० ॥ तद्व्वम्महाभागकरिष्याम्यहमद्यते ॥ ततस्तेनमहा
मायाप्रोक्ताधात्रामहात्मना ॥ २१ ॥ बोधयजगन्नाथय्यँावन्नोमांहरिष्यतः ॥ सम्मोहयदुराधर्षावसुरौमधुकैटभौ ॥ २२ ॥
इत्युक्तासातदादेवीब्रह्मणाजगदात्मना ॥ बोधयामासवैकुण्ठम्मोहयामासतौतदा ॥ २३ ॥ ततःप्रबुद्धःकृष्णास्तुददर्शं
भयशालिनम् ॥ ब्रह्माणन्तौतदाघोरावसुरौमधुकैटभौ ॥ २४ ॥ ततस्ताभ्यांसयुयुधेह्यसुराभ्याञ्जनार्द्दनः ॥ नाशकद्धा
रितुव्वीँरावसुरौमधुकैटभौ ॥ २५ ॥ अनन्तोपिफणाग्रेणातान्नोधर्त्तुङ्क्षमोभवत् ॥ युद्ध्यमानान्महावीरान्वैकुण्ठम्मधुकैटभा
न् ॥ २६ ॥ अथब्रह्माशिलारूपांस्थितिशक्तिन्तदाकरोत् ॥ अर्द्धयोजनविस्तिर्णामर्द्धयोजनमायताम् ॥ २७ ॥ तस्यां
शिलायाङ्गोविन्दोयुयुधेनृपसत्तम ॥ सहताभ्यांशिलासातुप्रविवेशजलान्तरम् ॥ २८ ॥ तस्यातुशक्त्यामग्नायान्तोयेसयुयु
धेहरिः ॥ पञ्चवर्षसहस्राणिबाहुयुद्धैर्न्निरन्तरम् ॥ २९ ॥ यदावैनाशकद्धर्तुन्तौविष्णुर्ज्जगताम्पतिः ॥ पराश्चिन्तान्तदावा

पविधानापिभयात्ततः ॥ ३० ॥ ततस्तावेवतब्विँष्णुमूचतुर्ब्बलदर्प्पितौ ॥ पुनःपुनर्ज्जगन्मातृमहामायाविमोहितौ ॥३१॥
तुष्टौस्वस्त्वन्नियुद्धेनवरम्वरयमाधव ॥ तवेष्टंसम्प्रदास्यावःसत्यमेतद्ब्रवोधुना ॥ ३२ ॥ तयोस्तद्वचनंश्रुत्वामाधवोजगता
म्पतिः ॥ उवाचतौयुवाम्वध्यौभवताम्मेमहाबलौ ॥ ३३ ॥ इतिदेहिवरम्मह्यन्दातव्यय्यँदिविद्यते ॥ तौतदाप्राहतुर्न्नाशस्त्व
त्तोनौशोभनोऽधुना ॥ ३४ ॥ तत्रावाञ्जँहिनोयत्रतोयंसम्प्रतिविद्यते ॥ तयोस्तद्वचनंश्रुत्वामाधवोजगताम्पतिः ॥ ब्रह्मा
णम्माञ्चशीघ्रेणप्राहेदञ्चात्मसंज्ञया ॥ ३५ ॥ ब्रह्मशक्तिशिलांशीघ्रमुत्पृत्याध्रियताय्यँथा ॥ तवस्थित्वामहाघोरौहनिष्या
मिमहाबलौ ॥ ३६ ॥ ततोब्रह्माह्यहञ्चैवउद्दधारशिलान्नुताम् ॥ तस्याम्मध्येपूर्व्वभागेत्वहम्पर्व्वतरूपधृक् ॥ ३७ ॥
ऊर्द्ध्वेस्थित्वाशिलाम्भित्वाप्रविवेशरसातलम् ॥ ऐशान्यामभवत्कूर्म्मःपर्व्वतश्चाग्रहीच्छिलाम् ॥ ३८ ॥ वायव्याञ्चतथान
न्तोनैःऋत्याञ्चसुरेश्वरौ ॥ महामायाजगद्धात्रीशैलरूपप्रधारिणी ॥ ३९ ॥ आग्नेय्याञ्चतथाविष्णुरेकरूपेणसंस्थितः ॥
ब्रह्मशक्तिशिलाग्रह्णन्भगवान्परमेश्वरः ॥ ४० ॥ मध्येब्रह्मात्वहञ्चैववराहश्चतथापरः ॥ ततोवराहपृष्ठास्यचरमेजगता
म्पतिः ॥ ४१ ॥ स्थित्वाशिलामवष्टभ्यब्रह्मशक्तिमथोगताम् ॥ वामोरुज[illegible]ादारोप्यशिरसीतयोः ॥ ४२ ॥ जगदाधा
रभूतःससर्व्वयत्नेनसय्युँतः ॥ सर्व्वैर्बलैःसमाक्रम्यचिच्छेदचपृथक्पृथक् ॥ ४३ ॥ मधुकैटभयोःसम्यग्ग्रीवयोःपृथिवीमृ

ते ॥ तस्यचाक्रमतस्थाम्नाब्रह्मशक्तिरधोगता ॥४४॥ म्रियमाणापिदेवोघैर्य्यत्नादपिमुहुर्म्मुहुः ॥ ततस्तयोस्तुमृतयोःशरीरेज
गताम्पतिः ॥४५॥ ब्रह्मशक्तिंसमद्धृत्यन्यधात्तस्याम्प्रयत्नतः ॥ उद्धृतायाम्पृथिव्यान्तुतयोर्म्मेदोविलेपनैः ॥४६॥ सुदृढामक
रोत्पृथ्वीङ्क्लेदितान्तोयराशिभिः ॥ मेदोविलेपनाद्यस्माद्गीयतेमेदिनीचसा ॥४७॥ अद्यापिपृथिवीदेवीदेवराक्षसमानुषैः ॥ अ
थकालेबहुतिथेऽव्यतीतेप्राणिसर्ज्जने ॥ ४८ ॥ अगृह्णान्दक्षतनयाम्भार्य्यार्थेहम्वधूम्वराम् ॥ सामेभूत्प्रेयसीभार्य्याप्रादाय
समर्य्यम्पतुः ॥४९॥ अनिष्टकारीत्वञ्चेत्स्याःप्राणाँस्त्यक्ष्येतदात्वहम् ॥ ततोयज्ञेसमस्ताँस्तुसचवत्रेचराचरम् ॥ ५० ॥ नमा
न्नापिसतीत्वँव्रेतदनिष्टान्मृतातुसा ॥ ततोमोहंसमात्रस्तामादायमृतामहम् ॥५१॥ प्राप्तःपीठवरन्तन्तुभ्रममाणइतस्ततः ॥
तस्यास्त्वङ्गानिपर्य्यायात्पतितानियतोयतः॥५२॥ तत्तत्पुण्यतमञ्जातय्योगनिद्राप्रभावतः ॥ तस्मिँस्तुकुब्जिकापीठेसत्यास्त
द्योनिमण्डलम् ॥५३॥ पतितन्तत्रसादेवीमहामायाऽव्यलीयत ॥ लीनायाय्योँगनिद्रायाम्मपिपर्वतरूपिणी ॥५४॥ सनीलव
र्णःशैलोभूत्पतितेयोनिमण्डले ॥ सतुशैलोमहातुङ्गःपातालतलमाविशत्॥५५॥तस्याआक्रमणाद्गाढन्धन्तस्थंद्रुहिणोत्यधा
त् ॥ सतुपूर्व्वम्ब्रह्मशक्तिंशिलान्धर्त्तुञ्चतुम्मुखः ॥५६॥ शैलरूपोभवत्तेनशैलरूपेणमामधात् ॥ ब्रह्मापर्व्वतरूपीसमयिपर्व्वत
रूपिणी ॥५७॥सशक्तोऽधोगमद्गाढमाक्रान्तोमाययाविधेः॥ ततोवराहसंशक्तोमयिमांसतुमाधव॥५८॥ शैलरूपःशैलरूपन्ध

त्तुंसमुपचक्रमे ॥ सोप्यधोयान्मयासार्द्धन्तङ्गापर्व्वतरूपिणा ॥५९॥ आक्रम्यदेवीम्पृथिवीँस्थितोभुविनिखान्धतः ॥ शतंशतं
योजनानान्तुङ्गमासीद्गिरित्रयम् ॥ ६० ॥ तदाक्रान्तम्महादेव्यासर्व्वमेवत्यधोगतम् ॥ क्रोशमात्रस्थितन्तुङ्गशेषन्तन्त्रित
यस्यतु ॥ ६१ ॥ एकासमस्तजगताम्प्रकृतिःसायतस्ततः ॥ ब्रह्मविष्णुशिवैर्द्देवैर्द्धृतासाजगताम्प्रसूः ॥६२॥ तत्रपूर्व्वोब्रह्मशै
लःश्वेतइत्युच्यतेसुरैः ॥ मद्रूपधारीशैलस्तुनीलइत्युच्यतेतथा ॥६३॥ सतुमध्यगतःपीठस्त्रिकोणोलूखलाकृतिः ॥ विभ्राजमा
नःसततम्मध्येब्रह्मवराहयोः ॥६४॥ वराहःशैलरूपोयःसचित्रइतिकथ्यते॥ सर्व्वेषाँसंस्थितःपश्चाद्दीर्घःसर्व्वेभ्यएवतु ॥६५॥
ऐशान्याय्योँभवत्कूर्म्मःशैलरूपोमहाद्युतिः ॥ मणिकर्णःसमाम्नातुख्यातोदेवौघसेवितः ॥ ६६ ॥ योऽनन्तरूपःशैलस्तुवाय
व्यांसमवस्थितः ॥ मणिपर्व्वतसंज्ञोसौपर्व्वतोमाधवप्रियः ॥ ६७ ॥ महामायागिरेर्य्यस्तुनैर्ऋत्यांसमवस्थितः ॥ सगन्धमा
दनोनाम्नासर्व्वदाशङ्करप्रियः ॥ ६८ ॥ वराहपृष्ठचरमेयतच्छिन्नौमहासुरौ ॥ हरिणातत्रसंय्याँतःपाण्डुनाथइतिस्मृतः ॥
॥ ६९ ॥ ब्रह्मशक्तिशिलायास्तुपूर्व्वभागेतुमध्यतः ॥ यस्तुपर्व्वतरूपोहंसतुभस्माचलाह्वयः ॥ ७० ॥ एवम्पुण्यतमेपीठेकु
ब्जिकापीठसंज्ञके ॥ नीलकूटेमयासार्द्धन्देवीरहसिसंस्थिता ॥ ७१ ॥ सत्यास्तुपतितन्तत्रविशीर्णंयोँनिमण्डलम् ॥ शिलात्व
मगमच्छैलेकामाख्यातत्रसंस्थिता ॥७२॥ संस्पृश्यतांशिलाम्मर्त्योह्यमरत्वमवाप्नुयात् ॥ अमर्त्योब्रह्मसदनंतत्स्थोमोक्षम

वाप्नुयात् ॥ तस्याःशिलायामाहात्म्यय्यँत्रकामेश्वरीस्थिता॥ ७३॥ अद्भुतय्यँस्यगुह्येतुलोहम्भस्मभवेद्ध्रुतम्॥ साचापिप्रत्य
हन्तत्रपञ्चमूर्त्तिधराभवत्॥ ७४॥ मोहार्थंसर्व्वंलोकानाम्ममापिप्रीतयेशिवा॥ अहम्पञ्चमुखेनाशुपञ्चभागेऽव्यवस्थितः॥७५॥
ईशानःपूर्व्वभागस्थःकामेश्वर्य्याःप्रधानतः॥ ऐशान्याम्वैतत्पुरुषोह्यघोरस्तस्यसन्निधौ॥ ७६॥ सद्योजातोऽथवायव्यांव्वाँ
मदेवस्तुसङ्गतः ॥ देव्याश्चापिनरश्रेष्ठपञ्चरूपाणिभैरव ॥ ७७ ॥ शृणुवेतालगुह्यानिदेवैरपिसदैवहि ॥ कामाख्यात्रिपुराचै
वतथाकामेश्वरीशिवा ॥७८॥ शारदाऽथमहालोकाकामरूपगुणैर्य्युता ॥ मयिलिङ्गत्त्वमापन्नेशिलायाय्योनिमण्डले ॥७९॥
सर्व्वेशिलात्त्वमगमञ्छैलरूपाश्चनिर्ज्जराः ॥ यथाहन्निजरूपेणरमेवैसहकामया ॥ ८० ॥ शिलारूपप्रतिच्छन्नास्तथासर्व्वा
स्तुदेवताः॥शिलारूपप्रतिच्छन्नाःशैलेशैलेऽव्यवस्थिताः ॥ ८१ ॥ रमन्तेचस्वरूपेणनित्यंरहसिसङ्गताः ॥ ब्रह्माविष्णुहरश्चो
त्रदिक्पालाःसर्व्वएवते ॥ ८२ ॥ अन्येप्यत्रस्थितादेवाःसानुकूलाःसदामयि ॥ उपासितुन्तदादेवीङ्कामाख्याङ्कामरूपिणीम्
॥८३॥नीलशैलस्त्रिकोणस्तुमध्यनिम्नःसदाशिवः ॥ तन्मध्येमण्डलञ्चारुत्रिंशच्छक्तिसमन्वितम्॥८४॥योनिस्तस्याञ्छिला
यान्तुशिलारूपामनोहरा ॥ वितस्तिमात्रविस्तीर्णएकविंशाङ्गुलीयुता ॥८५ ॥ क्रमसूक्ष्मविनम्रासाभस्मशैलानुगामिनी ॥
सिन्दूरकुङ्कुमारक्तासर्व्वकामप्रदायिनी ॥ ८६ ॥ तस्याय्योनौपञ्चरूपानित्यङ्क्रीडतिकामिनी ॥ महामायाजगद्धात्रीमूल

भूताशनातनी ॥ ८७ ॥ तत्रोष्टौयोगिनीर्न्नित्यानूतनूताःसनातनीः ॥ पूर्व्वोक्ताःशैलपुत्र्याद्याःस्थितादेव्याःसमन्ततः
॥ ८८ ॥ तासान्तुपीठनामानिशृणुचैकत्रभैरव ॥ गुप्तकामाचश्रीकामातथान्याविन्ध्यवासिनी ॥ ८९ ॥ कोटीश्वरीवनस्था
तुपादद्दुर्ग्गातथापरा ॥ दीर्घेश्वरीक्रमादेवप्रकटाभुवनेश्वरी ॥ ९० ॥ स्वयोगिन्यःपीठनाम्नाख्याताअष्टौचदेवता ॥ सर्व्वं
तीर्थानिचैकत्रजलरूपाणिभैरव ॥ ९१ ॥ स्थितानिनाम्नासौभाग्यसरस्यल्पापिपुण्यदा ॥ विष्णुस्तुतीरेतस्यास्मना
म्नाकमलइत्युत ॥ ९२ ॥ कामुकाख्यस्तुबटुकःकामाख्याभ्यर्णसंस्थितः ॥ लक्ष्मीःसरस्वतीदेव्यौदेव्याःसङ्गेव्यवस्थि
तेः ॥ ९३ ॥ ललिताख्याभवल्लक्ष्मीर्मातङ्गीतुसरस्वती ॥ गणाध्यक्षःपूर्व्वभागेतस्यशैलस्यसंस्थितः ॥ ९४ ॥ सिद्धः
सनाम्नाविख्यातोद्वारेदेव्याःप्रियःसुतः ॥ कल्पवृक्षःकल्पवल्लीतिन्तिडीचापराजिता ॥ ९५ ॥ भूत्वातस्मिन्महाशैले
स्थितौदेव्याधृतप्रिये ॥ वराहःपाण्डुनाथाख्यःस्थितस्तत्रहरिर्य्यतः ॥ ९६ ॥ जघनेशिरसीकृत्वाजघानमधुकैटभौ ॥
तस्यासन्नेब्रह्मकुण्डम्ब्रह्मणानिर्म्मितम्पुरा ॥ ९७ ॥ ईशानाख्यःशिवोयत्रतत्सिद्धेश्वरसंज्ञकम् ॥ शिलारूपंसिद्धकुण्ड
म्मध्यस्थव्विद्धिभैरव ॥ ९८ ॥ तस्यासन्नेगयाक्षेत्रङ्क्षेत्रव्वाँराणसीतथा ॥ योनिमण्डलसङ्काशङ्कुण्डम्भूत्वाव्यवस्थितः
॥ ९९ ॥ तत्रैवाऽमृतकुण्डतुसुधासंघप्रपूरितम् ॥ ममप्रियार्त्थमिन्द्रेणस्थापितंसहनिर्ज्जरैः ॥ १०० ॥ वामदेवाह्वयंशी

षँश्रीकामेश्वरसंज्ञकम् ॥ कामकुण्डम्महापुण्यन्तस्यासन्नेव्यवस्थितम् ॥ १ ॥ केदारसंज्ञकक्षेत्रम्मध्यस्थंसिद्धकामयोः ॥
दीर्घश्चतुर्दशव्यामच्छायाक्षत्राह्वयन्तुतत् ॥ २ ॥ तस्यासन्नेशैलपुत्रीगुप्तकामाह्वयातुसा ॥ गुप्तकुण्डस्यमध्यस्थाकामेशग्रा
णिसङ्गता ॥ ३ ॥ कामेश्वरशिलाशक्ताकामाख्यासंज्ञितासदा ॥ पूर्व्वभागेणसंसक्तायोनेस्तुपरमागतः ॥ ४ ॥ कामका
माख्ययोर्म्मध्येकालरात्रिर्व्यवस्थिता ॥ पीठेदीर्घेश्वरीनाम्नासीमाभागेप्रचण्डिका ॥ ५ ॥ कामाख्याप्रस्तरप्रान्तेरीकूष्माण्डी
नामयोगिनी ॥ पीठेकोटीश्वरीनाम्नायोनिरूपेणसंस्थिता ॥ ६ ॥ यज्ञाघोराह्वयंशीर्षन्तत्कामायास्तुदक्षिणे ॥ पिठेभैर
वनामातुगीयतेपरमार्थिभिः ॥ ७ ॥ चामुण्डाभैरवीनाम्नाभैरवासन्नसंस्थिता ॥ नाईकाकामदाभक्तेचण्डमुण्डविनाशि
नी ॥ ८ ॥ कामाभैरवयोर्म्मध्येस्वयन्देवीसुरापगा ॥ हितायसर्व्वजगतान्देव्यास्तुप्रीतयेसदा ॥ ९ ॥ सद्योजाताह्व
यंशीर्षम्पीठेत्वाम्रातकेश्वरम् ॥ भैरवाख्येगह्वरेतुस्थितन्देवर्षिसेवितम् ॥ ११० ॥ विद्धितत्रैवदुर्ग्गाख्यान्नायिकाय्योँग
रूपिणिम् ॥ सिद्धकामेश्वरीनाम्नाख्यातादेवेषुनित्यशः ॥ ११ ॥ अजीर्णपत्रःसुच्छायोवृक्षस्तत्रसुसंस्थितः ॥ आम्रात
कःकल्पवृक्षःकल्पवल्लीसमन्वितः ॥ १२ ॥ पीठेतुसिद्धगङ्गाख्यास्वयंगङ्गासमुत्थिता ॥ आम्रातकस्यनिकटेममप्रीति
विवृद्धये ॥ १३ ॥ पुष्कराख्यान्तुतत्क्षेत्रम्पीठेत्वाम्रातकाह्वयम् ॥ ऐशान्यान्तत्पुरुषाख्यम्ममशीर्षंव्यवस्थितम् ॥ १४ ॥

भुवनेश्वरनाम्नातुपीठेख्यातश्चभैरव ॥ गह्वरम्भुवनेशस्यभुवनानन्दसंज्ञकम् ॥ १५ ॥ तस्यासन्नेतुसुरभिःशिलारूपेणसं
स्थिता ॥ कामधेनुरितिख्यातापीठेकामप्रदायिनी ॥ १६ ॥ योसौशरभमूर्तिर्म्मेमध्यखण्डप्रचण्डकः ॥ महाभैरवनामाभू
त्कोटिलिङ्गाह्वयस्तुसः ॥ १७ ॥ मूर्त्तिभिःपञ्चभिःपञ्चभागेषुममास्थितः ॥ अहम्पश्चादतिप्रीत्याभैरवाख्यस्थितोऽधरे
॥ १८ ॥ महागौरीतुयादेवीयोगिनीसिद्धरूपिणी ॥ साब्रह्मपर्व्वतेचास्तेशिलारूपेणचोद्धृतः ॥ १९ ॥ अतीवरूपसम्पन्ना
नाम्नासाभुवनेश्वरी ॥ यत्रब्रह्मातुसंशक्तोमयिपर्व्वतरूपिणि ॥ २० ॥ कल्पवल्लीतुतत्रास्तेनाम्नासात्वपराजिता ॥ काम
धेनोरदूरस्थापूर्व्वभागेमहेश्वरी ॥ २१ ॥ श्रीकामाख्यायोनिरूपाचचण्डिकासातुयोगिनी ॥ आग्नेय्याँत्रिँद्धितांसंस्थांस
र्व्वकामप्रदांशुभाम् ॥ २२ ॥ योगिनीचन्द्रघण्डाख्यापीठेभूर्द्धिध्यवासिनी ॥ योगिनीस्कन्दमातातत्पीठेभूद्रनवासिनी
॥ २३ ॥ कात्यायनीपीठनाम्नापाददुर्ग्गेतिगद्यते ॥ नैर्ऋत्यान्नीलशैलस्यप्रान्तेसासंस्थिताशिवा ॥ २४ ॥ योसौनन्दी
ममतनुःसतुपाषाणरूप ॥ धृकूसंस्थितःपश्चिमद्वारिहनूमान्पीठनामतः ॥ २५ ॥ ॥ और्व्वउवाच ॥ ॥ इतित
स्यवचःश्रुत्वाशम्भोरमिततेजसः ॥ भैरवस्तन्तुपप्रच्छवेतालेऽपिसमुत्सुकः ॥ २६ ॥ ॥ इतिकालिकापुराणे
चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥ वेतालभैरवावूचतुः ॥ श्रुतःपीठक्रमस्तातदेव्याःपूजाक्रमस्तुतः ॥ श्रोतुमिच्छामिमूर्त्तिनाम्प

ञ्चनामपिशङ्कर ॥१॥ रूपाणिपञ्चमूर्त्तीनाम्मन्त्रागिवसमन्ततः ॥ तत्रमन्त्राणितन्त्राणिवदनौवृषभध्वज॥२॥ ॥ ईश्वरउ
वाच ॥ ॥ शृणुवक्ष्यामिवेतालमन्त्रन्तन्त्रम्पृथकपृथक् ॥कामाख्यापञ्चमूर्त्तीनांरूपङ्कल्पञ्चभैरव ॥३॥कामस्यङ्कामनध्य
स्थङ्कामदायपुटीकृतम् ॥ कामेनकामयेत्कामीकामङ्कामेनियोजयेत्॥४॥ज्येष्ठन्तुव्यञ्जनम्ब्रह्मन्परःशान्ततदुच्यते॥प्रथमङ्क
मतःकुर्य्यात्तसंशक्तंसुधामयम्॥५॥प्रजापतिस्तथाशक्रबीजंसंस्थादिसय्युँतम् ॥चन्द्रार्द्धसदितम्बीजङ्कामाख्यायाःप्रचक्ष्य
ते॥६॥इदन्धर्म्मप्रदङ्काममोक्षार्थानाम्प्रदायकम् ॥ इदंरहस्यम्परममन्यत्रतुसुदुर्ल्लभम्॥७॥ श्रोत्रेणोदम्यँशृणुयाद्गुरुवक्त्रान्न
रोत्तमः ॥ सकामानखिलान्प्राप्यशिवलोकेमहीयते ॥ ८ ॥ श्रुतिसकलितसारन्देवकण्ठौघहारंसकलकलुषहारि श्रीधरानन्द
कारि ॥सुनयशुभयोभिर्व्वाजयेद्यद्यशोभिस्तदिहशिवसमस्तव्विँघ्नहन्त्रीङ्गितार्थम्॥९॥नयनकरभकारिध्यानिनाञ्चोपकारि
प्रणयिसुनयसंस्थन्देवसत्याह्निकस्थम् ॥ परमपदविशीर्णंशर्व्वदौर्भाग्यजीर्णंशृणुशिवपदरूपङ्कामदेव्याःस्वरूपम् ॥ १० ॥
श्रवणगगनमात्रार्द्दितय्यँस्यनामप्रभवतिबहुभूत्यैनीतिमार्ग्गैकधाम ॥ सुरगणगणनायाङ्कुण्डलीयस्यशक्तिस्तदिहपरमरू
पञ्चिन्तनीयङ्कृतीशैः ॥ ११ ॥ रविशशियुतकर्णाकुङ्कुमापीतवर्णामणिकनकविचित्रालोलकर्णात्रिनेत्रा ॥ अभयवरदहस्ता
साक्षसूत्रप्रशस्ताप्रणतसुरनरेशासिद्धकामेश्वरीसा ॥ १२ ॥ अरुणकमलसंस्थारक्तपद्मासनस्थानवतरुणशरीरामुक्तके

शीसुहारा ॥ शवहृदिपृथुतुङ्गन्यस्तयुग्मामनोज्ञाशिशुरविसमवस्त्रासिद्धकामेश्वरीसा ॥ १३ ॥ विपुलविभवदात्रीस्मेरव
क्त्रासुकेशीदलितकरकदत्तासामिचन्द्रावनम्रा ॥ मनसिजदृषदिस्थायोनिमुद्रालसन्तीसकलगगनशक्तासंश्रुतस्तालभागा
॥१४॥चिन्त्याचैवविद्युदग्निप्रकाशाधर्म्मार्थाद्यंसाधकैर्व्वाञ्छितार्थैः ॥ कल्पन्तन्त्रण्यस्तस्यंदसम्यगर्थंवेतालतरम्भैवश्रीप्र
तिष्ठम्॥ तस्मिन्नाद्यम्मण्डलन्द्विपश्चात्कार्य्यञ्चैतच्चन्दनैःपुष्पयुक्तैः ॥१५॥ पर्य्यायोयोलेखनेपूर्व्वयुक्तोदेवीतन्त्रेसोत्रपूर्व्वोदितोवेधे
यः॥ १६ ॥ इतिकालिकापुराणेपञ्चषष्ठितमोऽध्यायः ॥ ६५॥ ॥ईश्वरउवाच ॥ ॥ वैष्णवीतन्त्रमन्त्रस्ययथापूर्व्वम्मयोदि
तम् ॥ मण्डलम्प्रतिपत्स्वातुपर्य्यायोमण्डलस्ययः ॥ १ ॥ सएवम्प्रथमङ्कार्य्यःशिलायाम्पुष्पचन्दनैः ॥ पात्रादीनाम्प्रतिष्ठान्न
न्तथैवात्रापियोजयेत् ॥ २ ॥ वैष्णवीतन्त्रमन्त्रस्यप्रोक्तायाप्रतिपत्तयः ॥ अत्रताःसकलायोज्याआसनादैश्चपूजनम् ॥ ३॥
तेभ्योन्योयोविशेषोत्रतद्वक्ष्येशृणुभैरव ॥ प्रथमम्भास्करायार्घ्यम्प्रदद्याच्छ्वेतसर्षपैः ॥ ४ ॥ पुष्पचन्दनसर्व्वौतैसगणायमा
हात्मने ॥ आसनार्च्चनशेषेतुपीठोक्ताःसर्व्वदेवताः ॥५॥ पीठनाम्नातुसर्व्वयुज्यामण्डलस्यतुमध्यतः ॥ ध्यानस्वरूपम्भिन्नन्त
द्वैष्णव्यासहभैरव ॥६॥ कामायाःसर्व्वमन्यत्तुमहामायास्तवोदितम् ॥ योगिनीस्तुचतुःषष्टिपूजयेच्चपृथक्पृथक् ॥ ७ ॥ गु
ह्याम्मनोभवाश्चापिमहत्सोहान्तथासखोम् ॥ अनन्तरम्पूजयेत्तुदिक्पालांश्चनवग्रहान् ॥८॥ रूपतस्तान्समुद्दिश्यपूजयेदिष्ट

सिद्धये ॥ पूर्व्वद्वारेगणपतिंप्रथमन्तुप्रपूजयेत् ॥ ९ ॥ नन्दिनञ्चहनुमन्तम्पश्चिमद्वारिपूजयेत् ॥ भृङ्गीचोत्तरतःपूज्योमहा
कालस्तुदक्षिणे ॥ १० ॥ एतेममद्वारपालादेव्याद्वारेप्रपूजयेत् ॥ पात्रामृतीकृतिविधौकुर्य्याद्वैकाममुद्रया ॥ ११ ॥ भूता
पसारणङ्कुर्य्यात्पूर्व्वन्तालत्रयेणतु ॥ वामहस्तेदक्षिणेनपाणिनातालमाहरेत् ॥ १२ ॥ हुँहुँफडितिमन्त्रेणवेतालादींश्चसारये
त् ॥ सर्व्वमुत्तरतन्त्रोक्तन्तन्त्रङ्कुर्य्यात्तुसाधकः ॥ १३ ॥ अत्रोक्तेनस्वरूपेणप्राणायामंतथाचरेत् ॥ स्नापयेत्प्रथमन्देवीम्मू
लमन्त्रेणपूजकः ॥१४ ॥ मधुक्षीराज्यदधिभिर्गोमूत्रैर्गोमयैस्तथा ॥ रत्नोदकैःशर्कराभिर्गुडरतङ्कुशोदकैः ॥ १५॥ शित
सर्षपयुक्ताभ्यान्तिलक्षीरैस्तथायवैः ॥ रक्तचन्दनपुष्पैश्चदूर्व्वाभीरोचनायुतैः ॥ १६ ॥ नवभिर्व्वितरेदर्घ्यंशिलाय्यांयोनिस
न्निधौ ॥ आसनम्पाद्यमर्घ्यञ्चततआचमनीयकम् ॥ १७॥ मधुपर्कंस्नानजलव्वँस्त्रञ्चन्दनभूषण ॥ पुष्पन्धूपञ्चदीपञ्चनेत्राञ्ज
नमतःपरम् ॥१८ ॥ नैवेद्याचमनीयेचप्रदक्षिणनमस्कृती ॥ एतेषोडशनिर्दिष्टाउपचारास्तुपीठतः ॥ १९ ॥ आवाहये
न्महादेवीङ्कायत्र्याकामयोगया ॥ तामेवविद्धिवेतालगुह्यम्भैरवदैवतम् ॥ २० ॥ कामाख्येत्वमिहागच्छयथावन्ममसन्नि
धौ ॥ पूजाकर्म्मणिसान्निध्यमिहकल्पयकामिनि ॥ २१ ॥ कामाख्यायैचविद्महेकामेश्वर्य्यैतुधीमहि ॥ ततःकुर्य्यान्महादेवी
ततश्चानुप्रचोदयात् ॥ २२ ॥ एषातुकामगायत्रीपूजयेदनयाशुभाम् ॥ पूजावसानेचबलीन्देव्याःप्रीत्यैनिवेदयेत् ॥२३ ॥

रुद्राक्षमालयाजाप्यमादायैवसमाचरेत् ॥ नाक्षरैर्म्मूलमन्त्रस्यत्रिधावृत्तैःप्रपूजयेत् ॥ २४ ॥ कामाख्यायाषडङ्गानिआह्वाना
नन्तरेतथा ॥ वैष्णवीतन्त्रमन्त्रस्यकराङ्गन्यासयोश्चये ॥ २५ ॥ सुराःप्रोक्ताःस्तैःसुरैस्तुसार्द्धचन्द्रैःसबिन्दुकैः ॥ मूलमन्त्रा
द्यक्षराभ्याय्युँगपत्तुनियोजितैः ॥ २६ ॥ कनिष्ठादिक्रमेणैवत्वङ्गन्यासंसमाचरेत् ॥ अङ्गन्यासकरन्यासौकृत्वापश्चात्तु
साधकः ॥ २७ ॥ हृच्छिरस्तुशिखावर्म्मनेत्रस्योदरपृष्ठतः ॥ बाह्वोःपाण्योर्ज्जङ्घयोश्चपादयोश्चापिविन्यसेत् ॥ २८ ॥ अ
भयव्वँरदंहस्तमक्षमालांचसूत्रकम् ॥ पूजयेच्छशिनंसूर्य्यंशिरश्चान्द्रकलान्तथा ॥ २९ ॥ रक्तपद्मंशवञ्चैवलौहित्यम्ब्रह्मपुत्र
कम् ॥ मनोभवंशिलान्तत्रशक्तिस्थांशवमध्यतः ॥ ३० ॥ देव्याःप्रपूजयेद्भक्तःकरवालञ्चपार्श्वतः ॥ पीठादिदेवतास्तत्रयजे
त्कामेश्वरींशुभाम् ॥ ३१ ॥ त्रिपुराम्पूजयेन्मध्येपीठप्रत्यधिदेवताम् ॥ शारदाञ्चमहोत्साहाम्मध्यएवप्रपूजयेत् ॥ ३२ ॥ चण्डे
श्वरीमहादेवीदेव्यानिर्म्माल्यधारिणी ॥ योनिमुद्रासमाख्याताकामाख्यायाविसर्ज्जने ॥ ३३ ॥ इदन्द्रव्यन्तुसिन्दूरचन्दनागु
रुकङ्कुमैः॥ इतियोक्रमयाप्रोक्तोविशेषःपरिपूजने ॥३४॥ एभिर्व्विशेषैःसहितव्वैंष्णवीतन्त्रगोचरम्॥ सर्व्वङ्कृत्यंसमासाद्यका
माख्याम्परिपूजयेत् ॥ ३५ ॥ अनेनैवविधानेनकामाख्याय्यँस्तुपूजयेत् ॥ मनोभवगुहामध्येसयातिपरमाङ्गतिम् ॥ ३६॥ ब्र
ह्माणीचण्डिकारौद्रीगौरीन्द्राणीतथैवच ॥ कौमारीवैष्णवीदुर्ग्गानारसिंहीचकालिका ॥ ३७॥ चामुण्डाशिवदूतीचवाराही

कौशिकीतथा ॥ माहेश्वरीशाङ्करीचजयन्तीसर्व्वमङ्गला ॥ ३८ ॥ कालीकपालिनीमेधाशिवाशाकम्भरीतथा ॥ भीमाशान्ता
भ्रामरीचरुद्राणीचाम्बिकातथा ॥ ३९ ॥ क्षमाधात्रीतथास्वाहास्वधापर्णामहोदरी ॥ घोररूपामहाकालीभद्रकालीभयङ्करी
॥ ४० ॥ क्षेमङ्करीचोग्रचण्डाचण्डोग्राचण्डनायिका ॥ चण्डाचण्डवतीचण्डिमहामोहाप्रियङ्करी ॥ ४१ ॥ कलविकरिणीदेवी
बलप्रमथिनीतथा ॥ मदनोन्मथिनीदेवीसर्व्वभूतस्यदामनी ॥ ४२ ॥ उमातारामहानिद्राविजयाचजयातथा ॥ पूर्व्वोक्ताःशै
लपुत्र्याद्यायोगिन्यष्टौचयाःक्रमात् ॥ ४३ ॥ ताभिरेभिश्चसहिताचतुःषष्टीचयोगिनीः ॥ पूजयेन्मण्डलस्यान्तःसर्व्वकामार्थ
सिद्धये ॥ ४४ ॥ नानाविधन्तुनैवेद्यंपानम्पायसमेवच ॥ मोदकापूपपिष्टादिदेव्यैसम्यक्प्रदापयेत् ॥ ४५ ॥ एवन्तुपूजयेद्देवी
ङ्कामाख्याव्वँरदायिनीम् ॥ भक्तियुक्तोनरोयस्तुससर्व्वाँल्लँभतेप्रियान् ॥ ४६ ॥ महोत्साहातुयादेवीमहामायातुसास्मृता ॥
वैष्णवीतन्त्रमन्त्रेणसापूज्यायोनिमण्डले ॥ ४७ ॥ तदेवमण्डलञ्चास्यत्वङ्गन्यासन्तथैवच ॥ साएवपूजापर्य्यायतद्ध्यानंसैवदे
वता ॥ ४८ ॥ तन्त्रन्तदेवमुक्तन्तुतस्मान्नान्यंतुकिञ्चन ॥ मण्डलादिविसृष्ट्यर्थंमहामायामहोत्सवे ॥ ४९ ॥ यत्प्रोक्तन्तेनतान्दे
वीमहोत्साहान्तुमण्डले ॥ स्नानपूर्व्वम्पूजयेत्तुमध्वाज्यादिभिरासवैः ॥ ५० ॥ शृण्वतन्त्रिपुरामूर्त्तेःकामाख्यायाम्प्रपूजनम् ॥
एतस्या मूलमन्त्रन्तुपूर्व्वमुत्तरतन्त्रके ॥५१॥ युवयोरिष्टयोःसम्यक्रमात्तत्प्रतिपादितम् ॥ वाग्भवङ्कामराजन्तुडामरश्चेतितत्र

यम् ॥ ५२ ॥ सर्व्वधर्म्मार्थकामादिसाधकङ्कुण्डलीयुतम् ॥ त्रीण्यस्मात्पुरतोदद्याद्दुर्ग्गाध्यातामहेश्वरी ॥ ५३ ॥ त्रिपुरेतिततः ख्याताकामाख्याकामरूपिणी ॥ तस्यास्तुस्नापनय्याँदक्कामाख्यायाःप्रकीर्त्तितम् ॥ ५४ ॥ तेनैवस्नापनङ्कुर्य्यान्मूलमन्त्रेणपूजकः ॥ त्रिगुणम्मण्डलञ्चास्यास्त्रिपुरन्तुत्रिरेखकम् ॥ ५४ ॥ मन्त्रन्तुत्र्यक्षरञ्ज्ञेयन्तथारूपन्त्रयन्पुनः ॥ त्रिविधाकुण्डलीशक्तिस्त्रिदेवानाञ्चसृष्टये ॥ ५६ ॥ सर्व्वन्त्रयन्त्रयय्यँस्मात्त्रिपुरातेनसास्मृता ॥ उदीच्याद्यथपूर्व्वान्तारेखाःकार्य्यास्तुमण्डले ॥ ५७ ॥ त्रिस्त्रिरेखास्तुकर्त्तव्यास्ताएवपुष्पचन्दनैः ॥ ऐशान्यामथनैर्ऋत्याम्मन्त्रङ्कृत्वातुसल्लिखेत् ॥ ५८ ॥ नैर्ऋत्याञ्चैववायव्यान्ततोत्वैशान्यगान्पुनः ॥ एवन्त्रिकोणव्विँलिखेन्मण्डलस्यान्तरेपुनः ॥ ५९ ॥ ऐशान्याद्यास्तुयारेखा सातुशक्तिर्न्निगद्यते॥ नैर्ऋत्यांवायवींयाताततोत्वैशान्यगातुया॥६०॥ सातुशम्भुस्समाख्याताशक्त्याशम्भुव्विँभेदयेत् ॥ शक्त्याविभिन्नम्भूतेशव्वेँष्टयेत्कमलेनतु ॥ ६१ ॥ अष्टपत्रेणतान्ध्यात्वात्रिवर्णाम्प्राक्प्रपूजयेत् ॥ त्रिभिस्त्रिभिस्तुरेखाभिःशक्तिंशम्भुञ्चवेष्टयेत् ॥ ६२ ॥ स्थानस्याभ्युक्षणंसम्यङ्मार्ज्जनल्लिँखनन्तथा ॥ अस्त्रमन्त्रप्रयोगाणाम्भूतानामपसारणम् ॥ ॥ ६३ ॥ वैष्णवीतन्त्रमन्त्रोक्तन्तथैवोत्तरतन्त्रके ॥ यत्प्रोक्तन्तत्तुसामान्यम्प्राक्कुर्य्यात्साधकोनरः ॥ ६४ ॥ त्रिपुरायाविशेषेण सहितम्पूजनक्रमम् ॥ एतत्त्रिकोणन्देवानान्त्रयाणांस्थानमिष्यते ॥ ६५ ॥ ऐशान्यांतुतथेशानोनैर्ऋत्याञ्चतुराननः ॥ वाय

व्यान्तुतथाब्रह्माषट्कोणेषुप्रकीर्त्तिता ॥ ६६ ॥ दलन्त्वेकपुरम्प्रोक्तङ्केशरञ्चापरम्पुरम् ॥ पुरंशेषान्त्रिकोणन्तुत्रिपुरम्मण्ड
लंस्मृतम् ॥ ६७ ॥ दलेषुकेशरेचापित्रिकोणेचत्रिधात्रिधा ॥ रेखास्तुविहितासम्यक्कुर्य्यात्तत्रपुनःपुनः ॥ ६८ ॥ उत्त
रन्तद्ववेद्द्वारन्तस्यवैधनुराकृतिः ॥ पूर्व्वद्वारन्तुषट्कोणञ्चतुःकोणन्तुदक्षिणे ॥ ६९ ॥ पश्चिमन्तोरणाकारय्यँथाचान्यत्रम
ण्डले ॥ ऐशान्याम्पञ्चबाणाँस्तुलिखेद्वह्नौचतद्धनुः ॥ ७० ॥ नैर्ऋत्यांपुस्तकञ्चापिवायव्यामक्षमालिकाम् ॥ एवङ्कृत्वा
मण्डलन्तुधृत्वावामेनपाणिना ॥ ७१ ॥ वाग्वेश्मनेनमइतिमण्डलम्पूजयेत्ततः ॥ पूजयित्वाततोभूतान्कालिकात्रितयेन
तु ॥ ७२ ॥ मूलमन्त्रेणपूर्व्वोक्तैर्म्मन्त्रैरपिसमाचरेत् ॥ नवभिश्छोटिकाभिस्तुत्रिधाकृत्वातुवेष्टनम् ॥ ७३ ॥ अभ्युक्षण
न्ततःकुर्य्याद्भूतानामपसारणम् ॥ प्रतिपत्तिस्युपात्रस्यअर्घार्थन्नवधापुनः ॥ ७४ ॥ पूर्व्ववत्साधकःकुर्य्याद्दहनंप्लवनन्त
था ॥ अमृतीकरणङ्कुर्य्यात्प्रथमन्धेनुमुद्रया ॥ ७५ ॥ योनिमुद्रान्ततःकुर्य्यात्पात्रतोयन्तुत्रिःस्पृशेत् ॥ मार्त्तण्डभैरवायार्घ
न्दूर्व्वाभिःसिद्धसर्षपैः ॥ ७६ ॥ रक्तपुष्पैश्चन्दनैश्चसगणायनिवेदयेत् ॥ पाणिकच्छपिकान्त्यक्त्वाचिन्तनय्योँनिमुद्रया
॥ ७७ ॥ आदौमध्येचकर्त्तव्यङ्क्रमाद्वेतालभैरव ॥ अस्त्रमन्त्रेणपात्रस्यस्थापनार्थन्तुमण्डलम् ॥ ७८ ॥ षट्कोणन्तुलिखेत्पूर्व्व
न्तन्मन्त्रस्थापनेपिच ॥ ऐँआँह्रीँइतिमन्त्रेणत्रिधापात्रेजलङ्क्षिपेत् ॥ ७९ ॥ त्रिधागन्धञ्चपुष्पञ्चत्रिधादूर्व्वाक्षतम्पुनः ॥

ओँह्राँक्रीँहूँहूँक्रोँअङ्गुष्ठादिक्रमान्न्यसेत् ॥ ८० ॥ ओँक्राइत्यस्त्रमन्त्रेणपाणिपृष्ठतलेतथा ॥ हृदयादिक्रमात्पश्चान्न्यासङ्कुर्य्या
त्त्रिधात्रिधा ॥ ८१ ॥ सव्येऽँज्यपाण्योःक्रमतश्चाङ्गुष्ठादिद्वयन्द्वयम् ॥ त्रिधात्रिधापृथक्कुर्य्याच्छेषाङ्गानिचविन्यसेत् ॥८२॥
कर्णरन्ध्रेतथाब्रह्मद्वारङ्केशतलन्तथा ॥ नासिकारन्ध्रयुगलञ्जानुयुग्मम्पदद्वयम् ॥ ८३ ॥ त्रिधात्रिधान्यसेदेभिःषड्भिर्म्म
न्त्रैःपृथक्पृथक् ॥ प्राणायामन्ततःकुर्य्यात्पूरकैस्तम्भकैस्तथा ॥ ८४ ॥ रेचकेनापित्रिपुरामूर्त्तिन्देवीव्विचिन्तयेत् ॥ दहन
प्लवनङ्कृत्वाआद्याम्मूर्त्तिंव्विचिन्तयेत् ॥ ८५ ॥ त्रिधादत्वाथहृदयेताम्मूर्त्तिंशृणुभैरव ॥ सिन्दूरपुञ्जसङ्काशान्त्रिनेत्रान्तुचतुर्भु
जाम् ॥ ८६ ॥ वामोर्द्ध्वेपुष्पकोदण्डन्धृत्वाधःपुस्तकन्तथा ॥ दक्षिणोर्द्ध्वेपञ्चबाणानक्षमालान्दधात्यधः ॥ ८७ ॥ चतुर्णाङ्कुण
पानान्तुपृष्ठेन्यङ्कुणपान्तरम् ॥ निधायतस्यपृष्ठेतुसमपादेनसंस्थिताम् ॥ ८८ ॥ जटाजूटार्द्धचन्द्रेणसमाबद्धशिरोधराम् ॥
लग्नान्त्रिवलिभेदेनचारुमध्याम्मनोहराम् ॥ ८९ ॥ सर्व्वालङ्कारसम्पूर्णांसर्व्वाङ्गसुन्दरींशुभाम् ॥ स्रवद्द्रविणसन्दोहांस
र्व्वलक्षणसंयुताम् ॥ ९० ॥ एनान्तुप्रथमन्ध्यात्वात्रिधात्मानन्तुचिन्तयेत् ॥ सद्रूपञ्चततःपश्चात्पुष्पन्तद्वाग्भवेनतु ॥ ९१ ॥
स्वमस्तकेपुनर्दद्यादङ्गन्यासम्पुनस्तथा ॥ मन्त्रद्वयन्त्रिधाजप्त्वावाग्भवाद्यन्तुसाधकः ॥ ९२ ॥ अर्घ्यपात्रस्यतोयेषुतैस्तोयैः
सेचयेच्छिरः ॥ पूजोपकरणञ्चापित्रिरभ्युक्ष्यतथैवतु ॥ ९३ ॥ कामपीठन्ततोध्यात्वापूजयेत्क्रमतस्त्विमान् ॥ गणेशञ्चगणा

ध्यक्षङ्गणनाथन्तथैवच ॥ ९४ ॥ गणक्रीडञ्चपूर्व्वादिद्वारेमन्त्रेणपूजयेत् ॥ हैरम्बबीजमेतेषांमन्त्रस्तुपरिकीर्त्तितः ॥ ९५ ॥
विद्याशान्तिर्न्निवृत्तिश्चप्रतिष्ठाद्वारपालकाः ॥ कलान्ताःपूजयेत्सम्यक्पूर्व्वादिक्रमतस्तथा ॥ ९६ ॥ सिद्धपुत्रञ्ज्ञानपुत्रन्त
थासहजपुत्रकम् ॥ शेषंसमपपुत्रन्तुपूजयेद्बटुकानिमान् ॥ ९७ ॥ प्रत्येकन्तुश्रियंदेवीव्वँटुकानांपरेवरे ॥ श्रोमित्यनेनमन्त्रे
णपूर्व्वादौपूजयेत्क्रमात् ॥ ९८ ॥ सिद्धस्यसहजस्याथज्ञानस्यसमयस्यच ॥ कुमारींपूजयेत्कोणेऐशान्यादौतुमण्डले ॥
॥ ९९ ॥ गोरटण्डामरञ्चैवलोहजङ्घन्तथैवच ॥ भूतनाथङ्क्षेत्रपालमीशानादौप्रपूजयेत् ॥ १०० ॥ मण्डलस्यचमध्येतुपञ्च
बाणान्प्रपूजयेत् ॥ ॥ इतिश्रीकालिकापुराणेपञ्चषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ द्रावणंशोषणञ्चैवबन्ध
नम्मोहनन्तथा ॥ आकर्षणञ्चमध्येनमन्त्रेणैवप्रपूजयेत् ॥ १ ॥ ततस्त्रिष्वथकोणेषुपूजयेत्तुत्रियोगिनीः ॥ भगञ्चभगजिह्वांच
भगास्यामुत्तरादिकम् ॥ २ ॥ क्रमात्तुपूज्यास्तिस्रोन्याअन्यामध्येतुकोणयोः ॥ भगमालिनीन्तुप्रथमेद्वितीयेतुभगोदरीम् ॥ ३ ॥
तृतीयेभगहारान्तुयोगिनीङ्कामरूपिणीम् ॥ अनङ्गकुसुमान्देवीन्तथैवानङ्गमेखलाम् ॥ ४ ॥ अनङ्गमदनाञ्चैवत्वथनङ्गमद
नोद्भवाम् ॥ अनङ्गवेशाञ्चानङ्गमालिनीम्मदनोद्भवाम् ॥ ५ ॥ दलकेशरमध्येतुत्वष्टमीम्मदनाङ्कुशाम् ॥ शैलपुत्र्यादयश्चाष्टौ
त्रिपुरापूजनक्रमे ॥ ६ ॥ एतन्नामभिरव्यग्राबभूवुःकामयोगिनीः ॥ वाग्भवेनतथादुर्गान्नेत्रबीजान्तुकेनतु ॥ ७ ॥ अङ्गन्यासं

समन्त्रैस्तुषड्भिरष्टाविमान्पुनः ॥ पूजयेत्क्षेत्रपालाँस्तुमध्येकिञ्जल्कपत्रयोः ॥ ८ ॥ हेतुकन्त्रिपुरघ्नञ्चअग्निजिह्वस्तथैवच ॥
अग्निवेतालसंज्ञञ्चकालञ्चाऽथकरालकम् ॥ ९ ॥ एकपादम्भीमनाथमुत्तरादिक्रमेणतु ॥ एभिरेवाष्टभिर्म्मन्त्रैःकामराजे
नसय्युँतैः ॥ १० ॥ नवैतानसिताङ्गादीन्नायकान्पूजयेत्क्रमात् ॥ मण्डलस्यचतुर्दिक्षुद्वौद्वौपूर्व्वादिषुक्रमात् ॥ ११ ॥ प
द्ममण्डलयोर्मध्येशेषमेकन्तुपूजयेत् ॥ असिताङ्गोरुरुश्चण्डःक्रोधोन्मत्तोभयङ्करः ॥ १२ ॥ कपालीभीषणश्चैवसंहारीतिश्चेति
नव ॥ ऐशान्यादिक्रमाद्द्वेद्वेनायिकंपूजयेन्नरः ॥ १३ ॥ पद्ममण्डलयोर्म्मध्येअष्टौद्वेचप्रपूजयेत् ॥ ब्रह्माणीम्भैरवीञ्चैवतथामा
हेश्वरीमपि ॥ १४ ॥ कौमारींवैष्णवीञ्चैवनारसिंहीन्तथैवच ॥ वाराहीञ्चतथेन्द्राणीञ्चामुण्डाञ्चण्डिकान्तथा ॥ १५ ॥
आधारशक्तिप्रभृतीन्मण्डलस्यतुमध्यतः ॥ वैष्णवीतन्त्रकल्पोक्तान्सर्व्वान्भैरवपूजयेत् ॥ १६ ॥ शिवस्यपञ्चयाःप्रो
क्ताःसद्योजातादयःपुरा ॥ मूर्त्तयस्ताःपद्ममध्येपञ्चप्रेतलमागताः ॥ १७ ॥ ताःपञ्चपूजयेन्मध्येरक्तपद्मंशवन्तथा ॥ सिं
हञ्चपूजयेत्तत्रजगदाधारसंज्ञितम् ॥ १८ ॥ जयन्तीम्मङ्गलाङ्कालीम्भद्रकालीङ्कपालिनीम् ॥ दुर्ग्गांक्षमांशिवान्धात्रीं
स्वधांस्वाहाञ्चपूजयेत् ॥ १९ ॥ उग्रचण्डाप्रचण्डाचचण्डोग्राचण्डनायिका ॥ चण्डाचण्डवतीचैवचण्डोग्राचण्डनायिका
॥ २० ॥ एताःसम्पूजयेन्मध्येन्मण्डलस्यविशेषतः ॥ आदित्यादीन्ग्रहान्सर्व्वान्नृपतोद्यस्तसय्युँतान् ॥ २१ ॥ क्रमा

त्प्रत्येकमुद्दिश्यपार्श्वेपार्श्वेप्रपूजयेत् ॥ दिक्पालानान्तुमन्त्रेणतथासर्व्वांस्तुदिक्पतीन् ॥ २२ ॥ अस्त्रमन्त्रैस्तुतान्सर्व्वांस्ते
षाम्मन्त्राणिभैरव ॥ नाथङ्कामेश्वरन्तत्रएकवक्त्रश्चतुर्भुजम् ॥ २३ ॥ भस्मश्वेतम्मध्यस्थादिरक्तपुष्पैस्तुकुङ्कुमैः ॥ त्रिशू
लञ्चपिनाकञ्चवामहस्तद्वयेस्थितम् ॥ २४ ॥ उत्पलम्बीजपूरञ्चदक्षिणंद्वितयेतथा ॥ श्वेतपद्मोपरिस्थञ्चध्यात्वामध्येप्र
पूजयेत् ॥ २५ ॥ कामख्यांमूर्त्तितोध्यात्वाकामाख्यामपिपूजयेत् ॥ कामेश्वरीन्तत्रदेवीम्पूजयेत्परमेश्वरीम् ॥ २६ ॥
वक्ष्यमाणेनरूपेणतत्रवेतालभैरवौ ॥ करालङ्क्षेत्रपालञ्चकर्त्रिकर्परधारिणम् ॥ २७ ॥ पूजयेदीशमत्यर्थन्दंष्ट्राभिर्न्नीधरम्भ
षम् ॥ तिन्तिडीङ्कल्पवृक्षञ्चसुच्छायंरत्नभूषितम् ॥ २८ ॥ त्रिकुठङ्कृष्णवर्णञ्चनीलशैलम्महाद्युतिम् ॥ मनोभवाङ्कुहान्त
त्रपञ्चव्यामायतांशुभाम् ॥ २९ ॥ रत्नमण्डलसंयुक्तांरक्तवर्णांसुवर्त्तुलाम् ॥ अपराजिताञ्चवल्लीञ्चव्यामत्रयसुविस्तृताम् ॥
॥ १३० ॥ आरक्तवर्णांसततङ्कुसुमैरुपशोभिताम् ॥ बटुकङ्कम्बलाख्यन्तुस्वर्णगौरञ्जासनम् ॥ ३१ ॥ द्विभुजन्दक्षि
णेदण्डपाणिर्व्वामेकपालकम् ॥ बिभ्रतम्पुरतोदेव्याःपूज्योविघ्नविपत्तये ॥ ३२ ॥ भैरवःपाण्डुनाथश्चरक्तगौरश्चतुर्भु
जः ॥ गदाम्पद्मञ्चशक्तिञ्चचक्रञ्चापिकरेषुच ॥ ३३ ॥ बिभ्रद्देव्याःपुरोभागेपूज्योयर्व्विष्णुरूपधृक् ॥ श्मशानंहेरूकाख्य
ञ्चरक्तवर्णम्भयङ्करम् ॥ ३४ ॥ असिचर्म्मधरंरौद्रम्भुञ्जानम्मनुजामिषम् ॥ तिसृभिर्म्मुण्डमालाभिर्ग्गलद्रक्ताऽभिराजित

म् ॥ ३५ ॥ अग्निनिर्दग्धविगलन्दन्तप्रेतोपरिस्थितम् ॥ पूजयेच्चिन्तनेनैवशस्त्रवाहनभूषणम् ॥ ३६ ॥ महोच्छ्वासायैयोगिनीन्तु
महामायास्वरूपिणीम् ॥ ध्यानतोरूपतस्तान्तुदेव्याअग्रेप्रपूजयेत् ॥ ३७ ॥ पुरीञ्चन्द्रवतीन्देव्यानीलपर्व्वतपूर्व्वतः ॥ यो
जनद्वयविस्तीर्णमर्द्धयोजनमायताम् ॥ ३८ ॥ उच्चैरनेकप्रासादसौधसद्मविभूषिताम् ॥ मणिरत्नसुवर्णौघजातप्रासाद
विस्तृताम् ॥ ३९ ॥ क्रीडासरोवरैःसद्भिःसञ्छन्नाव्विकचैःकचैः ॥ सय्युँक्ताम्पूजयेत्तत्रदेव्याअग्रेसमन्त्रकम् ॥ ४० ॥
लौहित्यंरक्तगौराङ्गन्नीलवस्त्रविभूषितम् ॥ रत्नमालासमायुक्तञ्चतुर्बाहुसमन्वितम् ॥ ४१ ॥ पुस्तकंश्वेतपद्मञ्चबिभ्रतन्द
क्षिणेकरे ॥ वामेशक्तिध्वजञ्चैवशिशुमारस्थितंशुभम् ॥ ४२ ॥ पीठेश्वरानिमान्मध्येमन्त्रैरेतैःप्रपूजयेत् ॥ नाथङ्कामेश्वर
न्देवम्प्रासादेनप्रपूजयेत् ॥ ४३ ॥ कामेश्वर्य्यास्तुमन्त्रेणयजेत्कामेश्वरींशुभाम् ॥ द्वावुपान्तौबलेनैवमदनान्तेचतत्क्रमा
त् ॥ ४४ ॥ योजयेन्नादबिन्दुभ्यामासाकारममन्त्रकम् ॥ चण्डिकानेत्रबीजस्ययच्छेषमक्षरन्तुतत् ॥ ४५ ॥ कल्पन्ति
न्तिडिकावृक्षमन्त्रमेतत्प्रकीर्त्तितम् ॥ उग्रायामध्यबीजन्तुनीलशैलस्यमन्त्रकम् ॥ ४६ ॥ मनोभवस्यबीजन्तुमहादेवे
नसंहितम् ॥ चन्द्रबिन्दुसमायुक्तन्तन्मन्त्रञ्चापराजितम् ॥ ४७ ॥ हयग्रीवस्वरूपस्यविष्णोर्य्यद्बीजमुत्तमम् ॥ कम्बलस्य
तुतन्मन्त्रम्पूजनंपरिकीर्त्तितम् ॥ ४८ ॥ केवलःसप्ररोहादिषष्ठस्वरसमन्वितः ॥ चन्द्रबिन्दुसमायुक्तंहयग्रीवस्यबीजकम् ॥

॥ ४९ ॥ भैरवम्पाण्डुनाथश्चवनमालिस्वरूपिणम् ॥ वाराहेनतुबीजेनपूजयेत्तुविधानतः ॥ ५० ॥ सपरौद्वावनुस्वार
विसर्गाभ्यांसन्नितौ ॥ महाभैरवमन्त्रेणंभैरवान्तेनपूजयेत् ॥ ५१ ॥ महोच्छ्वासाम्महामायान्द्वितीयाष्टाक्षरेणतु ॥ दवीतन्त्रो
दितेनैवपूजयेद्भूतिवृद्धये ॥ ५२ ॥ आद्याक्षरन्तुसामीन्दुबिन्दुभ्यांसमलङ्कृतम् ॥ स्वनाम्नश्चन्द्रवत्यास्तुपूजामन्त्रम्प्रकीर्त्ति
तम् ॥ ५३ ॥ सर्व्वलक्षणसम्पूर्णसर्व्वालङ्कारभूषितम् ॥ लौहित्यनदराजस्यब्रह्मपुत्रस्यभूतिदम्॥ ब्रह्मबीजन्तुमन्मन्त्रव्वँह्नि
भार्य्यान्तमिष्यते ॥५४॥ द्वितीयन्त्रिपुरारूपन्तथैवतुतृतीयकम् ॥ आवाहनार्थन्देव्यास्तुचिन्तयेद्योनिमुद्रया ॥५५॥ बन्धूक
पुष्पसङ्काशाञ्जटाजूटेन्दुमण्डिताम् ॥ सर्व्वलक्षणसम्पूर्णांसर्व्वालङ्कारभूषिताम् ॥५६॥ उद्यद्रविप्रभाम्पद्मपर्य्यङ्केषुसुसंस्थि
ताम् ॥ मुक्तारत्नावलीयुक्ताम्पीनोन्नतपयोधराम् ॥ ५७ ॥ वलीविभङ्गचतुरामासवामोदमोदिताम् ॥ नेत्राह्लादकरीशुभ्राङ्गो
भणीञ्जगतान्तथा ॥ ५८ ॥ त्रिनेत्राय्योँनिमुद्रायामीषद्धाससमायुताम् ॥ नवयौवनसम्पन्नाम्मृडालाभचतुर्भुजाम् ॥
॥ ५९ ॥ वामोर्द्ध्वेपुस्तकंन्धत्तेअक्षमालान्तुदक्षिणे ॥ वामेनाभयदान्देवीन्दक्षिणाधोवरप्रदाम् ॥ ६० ॥ स्त्रवद्रक्तौघसूर्य्याभां
शिरोमालान्तुबिभ्रतीम् ॥ आपादलम्बिनींकल्पद्रुममासाद्यसंस्थिताम् ॥ ६१ ॥ कदम्बोँपवनान्तस्थाङ्कामाह्लादकरींशुभा
म् ॥ द्वितीयान्त्रिपुरान्ध्यायेदेवंरूपाम्मनोहराम् ॥ ६२ ॥ तृतीयान्त्रिपुरारूपंशृणुवेतालभैरव ॥ जपाकुसुमसङ्काशाम्मुक्तके

शींशुभाननाम् ॥ ६३ ॥ सदाशिवंहसन्तन्तुप्रेतवद्विनिधायवै ॥ हृदयेतस्यदेवस्यत्वद्र्दपद्मासनस्थिताम् ॥ ६४ ॥ रक्तोत्पलै
र्म्मिश्रितातुमुण्डमालाम्पदानुगाम् ॥ ग्रीवायान्धारयन्तीन्तुपीनोन्नतपयोधराम् ॥ ६५ ॥ चतुर्भुजान्तथानग्नान्दक्षिणोर्द्ध्वेक्ष
मालिनीम् ॥ वरदान्तदधोवामेजगन्मायान्तथाभयाम् ॥ ६६ ॥ अधस्तुपुस्तकन्धत्तेत्रिनेत्रांहसिताननाम् ॥ स्त्रवद्रुधिरभो
गात्तांतथासर्व्वाङ्गसुन्दरीम् ॥ ६७ ॥ एवंविधन्तृतीयन्तुरूपन्ध्यायेत्तुपूजकः ॥ आद्यन्तुवाग्भवंरूपंद्वितीयङ्कामराजक
म् ॥ ६८ ॥ डामरम्मोहनञ्चापितृतीयम्परिकीर्त्तितम् ॥ एकैकन्तुत्रिरूपाणिप्राग्विचिन्त्याथसाधकः ॥ ६९ ॥ मन्त्रद्व
येनप्रत्येकंहृदिषोडशकैस्तथा ॥ पूजयेदुपचारैस्तुबहिर्य्यद्वत्तथैवच ॥ ७० ॥ मन्त्रत्रयन्तथैकत्रकृत्वाचमनमूर्त्तयः ॥ क
र्त्तव्याएकतस्तत्रमध्यरूपेनिवेशयेत् ॥ ७१ ॥ नासापुटेननिःसार्य्यन्दक्षिणेनाथताम्पुनः ॥ अवतार्य्यकराभ्यान्तुदेवी
मावाहयेत्त्रिधा ॥ ७२ ॥ गायत्रीत्रयमुच्चार्य्यस्नापयेत्प्रथमन्तुताम् ॥ आवाहनेतुमन्त्रोयम्पठितव्यश्चसाधके ॥ ७३ ॥
एहिदेविशुभावर्त्तेयज्ञेस्मिन्ममसन्निधौ ॥ अव्युच्छिन्नान्ततःशुभ्राव्वाँचकण्ठस्यदेहिमे ॥ ७४ ॥ एह्येहिभगवत्यम्बत्रिपु
रेकामदायिनी ॥ इमम्भागबलिम्गृह्यसान्निध्यमिहकल्पय ॥ ७५ ॥ नारायिण्यैविद्महेवाग्वादिन्यैधीमहि ॥ एव
मुक्कातत:पश्चात्तन्नोदेवीप्रचोदयात् ॥ ७६ ॥ नारायण्यैविद्महेत्वाञ्चण्डिकायैचधीमहि ॥ शेषभागेप्रयुञ्जीततन्नःकुब्जिप्रचो

दयात् ॥ ७७ ॥ महामायायैविद्महेत्वांसम्मोहिन्यैचधीमहि ॥ पश्चादेवम्प्रयुञ्जीततन्नश्चण्डिप्रचोदयात् ॥ ७८ ॥ एतास्तु
त्रिपुरान्देव्यागायत्र्याःपरिकीर्त्तिताः ॥ प्रत्येकंस्नापनङ्कुर्य्यात्त्रिपुराणाश्चतिसृभिः ॥ ७९ ॥ वाग्भवेनतुमन्त्रेणप्रथमम्पू
जयेच्छिवाम् ॥ कामराजेनवैपश्चाड्डामरेणापिपूजयेत् ॥ ८० ॥ शेषन्तुमूलमन्त्रेणचाष्टाङ्गानाम्प्रपूजनम् ॥ एकैकम्प्रक्रम
म्पूज्यत्रिपुरायैसमन्ततः ॥ ८१ ॥ नवधापूजयेद्देवीन्त्रिपुराम्कामरूपिणीम् ॥ उत्तरादिचतुःपत्रेपद्मस्वेतान्प्रपूजयेत् ॥ ८२ ॥
ब्रह्माणम्माधवंशम्भुम्भास्करश्चतथैवच ॥ ऐशान्यादिषुतेष्वेवङ्कमाद्देव्याःप्रपूजयेत् ॥ ८३ ॥ जयन्तीम्प्रथमम्पश्चाद्द्वायव्या
मपराजिताम् ॥ नैर्ऋत्यान्विजयाञ्चैवतथाग्नेय्याञ्जयाह्वयाम् ॥ ८४ ॥ त्रिकोणेकेशरस्यान्तेकामम्प्रीतिंरतिन्तथा ॥ पूजये
त्पञ्चबाणांश्चपुष्पञ्चापञ्चपुस्तिकाम् ॥ ८५ ॥ अक्षमालांश्चवद्यत्नासद्मपर्य्यङ्कमेवच ॥ प्रेतसद्मशिरश्चैवसम्यक्तत्रैवपूज
येत् ॥ ८६ ॥ सम्पूज्यपूर्व्ववन्मालांस्फाटिकामेषभैरव ॥ आदायाथोत्तरीयेणतामाच्छाद्यप्रयत्नतः ॥ ८७ ॥ पूर्व्वोद्धृतञ्जपे
त्सम्यक्साधकस्त्रिपुरामहः ॥ जप्त्वास्तुतिम्पठित्वाचप्रणम्यचमुहुर्म्मुहुः ॥ ८८ ॥ त्रिपुरायैबलिन्दद्यात्सम्भवात्तत्रिजातिकम् ॥
सफेनैस्तोयसय्युंक्तैःशर्क्करामधुसैन्धवैः ॥ ८९ ॥ अभ्युक्ष्यरुधिरन्दद्यात्कामराजेनभैरव ॥ छेदयेद्वाग्भवेनैवडामरैर्व्विहरेच्छिरः
॥ १९० ॥ यत्रयत्रबलीन्दद्यात्साधकोदेवतार्च्चने ॥ वैष्णवीतन्त्रकल्पोक्तमादद्यात्पूजनेबलिम् ॥ ९१ ॥ ततोदेव्यैबलीन्द

द्यादेतद्वर्णक्रमात्पुनः ॥ गोक्षीरम्ब्राह्मणोदद्याद्गव्यमाज्यन्तुराजजः ॥ १२ ॥ वैश्यस्तुमाच्छिकन्दद्याच्छूद्रः पुष्पासवाटिका
न्॥ घ्रात्वापुष्पमथैशान्यान्निर्म्माल्यन्निःक्षिपेद्बुधः॥ १३ ॥ निर्म्माल्यधारिणीचास्यादेवीत्रिपुरचण्डिका ॥ विसृज्यादौ
योनिमुद्रांपद्ममुद्रान्तथैवच॥१४॥ अर्द्धमुद्रात्रिमुद्राञ्चप्रत्येकमपिदर्शयेत्॥ निर्म्माल्यमथगृह्णीयात्कामराजाह्वयेनतु ॥१५॥
एवँय्यःपूजयेद्देवीन्त्रिपुराङ्कामरूपिणीम् ॥ सकामानखिलान्प्राप्यदेवीलोकमवाप्नुयात् ॥१६॥ ॥ इतिकालिकापुराणेअष्ट
षष्ठितमोऽध्यायः॥६८॥ ॥ईश्वरउवाच॥ ॥देव्याःकामेश्वरीम्मूर्त्तिंशृणुवक्ष्यामिभैरव॥ यस्याश्चिन्तनमात्रेणसाधको
लभतेप्रियान्॥ १ ॥ तन्त्रन्तस्याःप्रथमतस्ततोनुध्यानगोचरम् ॥ ततःपूजाक्रमव्वँक्ष्येक्रमाद्वेतालभैरव ॥ २ ॥ प्रजाप
तिस्ततोवह्निरिन्द्रबीजन्ततःपरम् ॥ चूडाचन्द्रार्द्धसहितश्चतुर्थस्वरसय्युँतम् ॥ ३ ॥ इदङ्कामेश्वरम्बीजमन्त्रंसर्व्वार्त्थ
साधनम् ॥ स्थानाभ्युक्षणयन्त्रादिपात्रन्यासादिकन्तथा ॥ ४ ॥ भूतापसारणादींश्चवैष्णवीतन्त्रभाषितान्॥ तथोक्तानुत्त
रेतन्त्रेगृह्णीयात्साधकोत्तमः ॥५॥ प्राणायामत्रयंकुर्य्याद्दहनंप्लवनन्तथा ॥ विशेषमण्डलञ्चास्याःशृणुवेतालभैरव ॥ ६ ॥
षट्कोणम्मण्डलङ्कुर्य्याद्रक्तवर्णन्तुचिन्तयेत्॥ विभेदयशक्त्याशम्भुन्तुत्रिपुरातन्त्रवद्बुधः ॥७॥ ततःशक्तिंशम्भुनापिभेदये
त्क्रमतःसुधीः॥ ऐशान्यादिनैर्ऋतान्तांरेखाङ्कलाथदक्षिणे॥ ८॥ पश्चिमात्पूर्व्वगांरेखाम्पूर्व्वादपितथोत्तराम् ॥ उत्तरात्प

श्चिमान्तान्तुकृत्वारेखास्तुयोजयेत् ॥ ९ ॥ धनुस्तोरणसंकाशंद्वारेचोत्तरपश्चिमे ॥ दक्षिणन्तुत्रिकोणंस्यात्षट्कोणम्पूर्व्वमुच्य
ते ॥ १० ॥ जालन्धरंलिखेत्पीठमुत्तरेपश्चिमेलिखेत् ॥ ओष्ठपीठन्दक्षिणेतुकामरूपन्तुपूर्वतः ॥ ११ ॥ देव्याद्वादशगुह्या
नियानिद्वादशभिःकरैः ॥ लिखेन्मण्डलकोणेषुतानिदिक्षुत्रयन्त्रयम् ॥ १२ ॥ षड्भिषड्भिस्तुरेखाभिःकर्त्तव्योमण्डलक्रमः ॥
अन्यदुत्तरतन्त्रोक्तव्वैष्णवीतन्त्रभाषितम् ॥ १३ ॥ मण्डलस्यक्रमंसर्व्वंव्विँद्धिवेतालभैरव ॥ ओंक्लींमण्डलतत्वायनमइत्यत्र
मण्डलम् ॥ १४ ॥ पूजयेत्प्रथमन्ध्यात्वामण्डलय्योँगपीठकम् ॥ पीठेशिलायाव्विँलिखेन्मण्डलंय्योनिमण्डले ॥ १५ ॥
त्रिकोणव्विँलिखेत्पश्चाद्वेष्टयेत्कमलेनतु ॥ रूपन्तुचिन्तयेद्देव्याःकामेश्वर्य्यामनोहरम् ॥ १६ ॥ प्रभिन्नाञ्जनसङ्काशान्नील
स्निग्धशिरोरुहाम् ॥ षड्वक्त्रान्द्वादशभुजामष्टादशविलोचनाम् ॥ १७ ॥ प्रत्येकंषट्सुशीर्षेषुचन्द्रार्द्धकृतशेखराम् ॥ मणिमाणि
क्यमुक्तादिकृतमालामुरस्थले ॥ १८ ॥ कण्ठेचबिभ्रतीनित्यंसर्व्वाऽलङ्कारमण्डिताम् ॥ पुस्तकंसिद्धसूत्रञ्चपञ्चबाणन्तुत
न्तथा ॥ १९ ॥ खड्गंशक्तिञ्चशूलञ्चबिभ्रतीन्दक्षिणैःकरैः ॥ अक्षमालाम्महापद्मङ्कोदण्डञ्चाभयन्तथा ॥ २० ॥ चर्म्मप
श्चातिपिनाकञ्चबिभ्रतीम्वामपाणिभिः ॥ शुक्लंरक्तञ्चपीतञ्चहरितङ्कृष्णमेवच ॥ २१ ॥ विचित्रंक्रमतःशीर्षमैशान्याम्पूर्व्व
मेवच ॥ दक्षिणम्पश्चिमञ्चैवतथैवोत्तरशीर्षकम् ॥ २२ ॥ मध्यञ्चेतिमहाभागक्रमाच्छीर्षाणिवर्णतः ॥ शुक्लम्माहेश्वरीत्रक्रं

ङ्कामाख्यारक्तमुच्यते॥२३॥त्रिपुरापीतसङ्काशाशारदाहरितातथा॥ कृष्णङ्कामेश्वरीवक्रंचण्डायाश्चित्रमिष्यते॥२४॥धम्मि
ल्लसय्युँतकचम्प्रतिशीर्षम्प्रकीर्त्तितम्॥सिंहोपरिसितप्रेतन्तस्मिल्लोहितपङ्कजम्॥२५॥ कामेश्वरीस्थितातत्रईषत्स्महसिता
नना ॥ विचित्रांशुकसंव्वीतांव्याघ्रचर्म्माम्बरान्तथा ॥ २६ ॥ एवङ्कामेश्वरीन्ध्यायेद्धर्म्मकामार्थसिद्धये ॥ पीठेन्यत्राऽथवादे
व्यापूजायाङ्कथ्यतेक्रमः॥२७॥ पीठेविशेषोवक्तव्यःसामान्येत्वन्यदिष्यते॥अङ्गुष्ठादिक्रमादेवसय्योँज्याथयुगय्युँगं॥२८॥
मूलमन्त्रस्याक्षरेणदीर्घस्वरयुतेनच॥ षड्भिरावैर्न्यसेत्पूर्व्वमङ्गुलीयकमेवच॥२९॥ हृच्छिरस्तुशीर्षवर्म्मनेत्रास्त्राणिपुनस्तथा
॥ न्यसेद्दक्षिणहस्तेनषड्भिर्म्मन्त्रैस्तथाक्रमात्॥३०॥आस्यव्वाँहुयुगङ्कुक्षिगुह्यञ्जानुयुगन्तथा ॥ पादयुग्मङ्क्रमात्तैस्तुषड्भिर्म्म
न्त्रैर्न्यसेत्तथा॥३१॥ अष्टधामूलमन्त्रन्तुजप्त्वाऽथार्घाहितेजले ॥ तेनोपकरणन्देयश्चाभ्युक्ष्यक्रममारभेत्॥३२॥दैशिकःपूज
येद्देवीम्पीठेनादैशिकःक्वचित् ॥तस्यैवहिकरस्पर्शाद्देवीनोद्विजतेशिवा॥३३॥यदिदेशान्तराद्यातपीठन्देशान्तरम्प्रति॥तद्देशि
कोपदेशेनतदापूजांसमारभेत्॥३४॥ यद्यन्यतःसमायाताकामरूपाद्गतेनरः॥ तद्देशजोपदेशेनसम्पूज्यफलमाप्नुयात्॥३५॥
यस्मिन्देशेतुयःपीठओडपाञ्चालकादिषु॥ तद्देशजोपदेनत्रपूज्यःपीठेसुरोनरैः॥३६॥ इतोन्यथापूजनेनसम्यक्फलमवाप्नुया
त् ॥ महाविभवसम्पूर्णैर्विहितेनैवभैरव ॥ ३७॥ अनुक्तोयःक्रमश्चात्रवैष्णवीतन्त्रगोचरे ॥ तथैवोत्तरतन्त्रेऽपिप्रोक्तो

ग्राह्यस्तुसाधकैः ॥ ३८ ॥ पूर्व्वंद्वारिप्रथमतःकामतत्वम्प्रपूजयेत् ॥ दक्षिणेप्रीतितत्वन्तुरतितत्वञ्चपश्चिमे ॥ ३९ ॥ उत्तरेमो
हनन्तत्वङ्क्रमादेतानिपूजयेत् ॥ ऐशान्याम्पूजयेद्देवीङ्गणेशन्द्वारपालकम् ॥ ४० ॥ अग्नौतुचाग्निवेतालंनैर्ऋत्याङ्कालमेवच ॥
वायव्यान्नन्दिनञ्चापिपूजयेत्क्रमतस्त्विमान् ॥ ४१ ॥ चतुःकम्पञ्चकषट्कंचतुःकम्पञ्चकञ्चतुः ॥ षट्कारश्चैवयोवेदसयोग्यःपी
ठपूजने ॥ ४२ ॥ ओड्राख्यम्प्रथमम्पीठन्द्वितीयञ्जालशैलकम् ॥ तृतीयम्पूर्णपीठन्तुकामरूपञ्चतुर्थकम् ॥ ४३ ॥ ओड्रपीठ
म्पश्चिमेतुतथैवोड्रेश्वरींशिवाम् ॥ कात्यायनीञ्जगन्नाथमोड्रेशञ्चप्रपूजयेत् ॥ ४४ ॥ उत्तरेपूजयेत्पीठम्प्रशस्तञ्जालशैलकम्
॥ जालेश्वरम्महादेवीञ्चण्डीञ्जालेश्वरीन्तथा ॥ ४५ ॥ दीर्घिकाञ्चोग्रचण्डाञ्चतत्रैवपरिपूजयेत् ॥ दक्षिणेपूर्णशैलन्तुतथापू
र्णेश्वरींशिवाम् ॥ ४६ ॥ पूर्णनाथम्महानाथंसरोजामथचण्डिकाम् ॥ पूजयेद्दमनीन्देवाशान्तामपितथाशिवाम् ॥ ४७ ॥ का
मरूपम्महापीठन्तथाकामेश्वरींशिवाम् ॥ नीलञ्चपर्व्वतश्रेष्ठंनाथङ्कामेश्वरन्तथा ॥ ४८ ॥ पूजयेद्द्वारिपूर्वेतुक्रमादेतास्तुभैर
व ॥ ओड्रादीनान्तुपीठानाङ्क्षेत्रपालान्गुरूंस्तथा ॥ ४९ ॥ अन्याँस्तुद्वारपालादीन्स्वेस्वेस्थानेप्रपूजयेत् ॥ विशेषात्कामरू
पस्यकामेश्वरीम्प्रपूजयन् ॥ ५० ॥ तानेवनीलशैलस्थाञ्छृणुवेतालभैरव ॥ नाथःकामेश्वरोदेवोदेवीकामेश्वरीतथा ॥ ५१ ॥ क
रालःक्षेत्रपालश्चचिञ्चावृक्षस्तथैव ॥ त्रिकुटेनीलशैलस्तुगुहाचापिमनोभवा ॥ ५२ ॥ बटुकःकम्बलोनामवल्लीचैवापराजि

ता ॥ भैरवःपाण्डुनाथश्चश्मशानंहेरुकाह्वयम् ॥ ५३॥ योगिनीचमहोच्छुसातथाचन्द्रवतीपुरी ॥ लौहित्योनदराजश्चप्रान्तादि
करवासिनी ॥ ५४ ॥ जलपीशाख्यस्तुवायव्याङ्केदाराख्योऽथराक्षसे ॥ एतान्सम्पूजयेद्वारितथादेव्यास्तुमण्डले ॥ ५५ ॥
द्वारपालोयोगिनीचबटुकाद्यायथातथा ॥ कामरूपेपीठवरेओड्रादिष्वथतत्तथा ॥ ५६ ॥ मध्येतुमण्डलस्याथद्रावणंशोषणन्त
था ॥ बन्धनम्मोहनञ्चैवतथैवाकर्षणाह्वयम् ॥ ५५ ॥ मनोभवस्यबाणाँस्तुपञ्चैतान्परिपूजयेत् ॥ षट्कोणाग्रेषूत्तरादौभगादि
षट्कमेवच ॥ ५६ ॥ त्रिपुरातन्त्रमन्त्रोक्तम्पूजयेत्क्रमतःसुधीः ॥ गणान्क्रीडादिकन्तद्वत्तथाविद्याकलादिकान् ॥ ५७ ॥ बटुका
न्सिद्धपुत्रादीन्सिद्धाद्याश्चकुमारिकाः ॥ चतुश्चतुकर्षमित्येतच्चतुष्कमितिचोच्यते ॥ ५८ ॥ कामंरतिञ्चप्रीतिञ्चअनङ्गमेष
लादिकम् ॥ सप्तवैत्रिपुरघ्नाद्याअसिताङ्गादयोनव ॥ ५९ ॥ माहेश्वर्य्यादिकादेव्योदशभिःपञ्चभिर्गणैः ॥ द्वितीयम्पञ्चक
म्प्रोक्तम्पीठेकामफलप्रदम् ॥ ६० ॥ आधारशक्तिमुख्यायेनित्यन्तत्रप्रतिष्ठिताः ॥ धर्म्माद्याश्चतथैवाष्टौतथासत्त्वादिकागु
णाः ॥ ६१ ॥ एकत्रग्रहदिक्पालाश्चतुःक्रमपरंस्मृतम् ॥ देव्यास्तथोग्रचण्डाद्यानायिकाम्परिपूजयेत् ॥ ६४ ॥ पूर्व्वोक्तदे
शेमन्त्रेणभक्त्यावेतालभैरव ॥ आवाहनंसोडशोपचाराणाम्प्रतिपादनम् ॥ ६५ ॥ जपञ्चबलिदानञ्चअङ्गास्त्राणाम्प्रपूजनम् ॥
मुद्रापूर्व्वाविसृष्टिश्चषट्कमेतत्प्रकीर्तितम् ॥ ६६ ॥ एतानिसप्तयानानिप्रकारान्पूजकःसुधीः ॥ सएवोड्रादिपीठानिसम्पूज

यितुमर्हति ॥ ६७ ॥ यज्ज्ञात्वासम्यगेतानिकुरुतेपीठपूजनम् ॥ ससम्यक्फलमाप्नोतिहीनायुरपिजायते ॥ ६८ ॥ त्रिपुरा तन्त्रमन्त्रोक्तस्थानेष्वेतेषुभैरव ॥ पूजयित्वाप्रथमतःपूजयेत्परमेश्वरीम् ॥ ६९ ॥ कामेश्वरिइहागच्छसम्मुखीभवचेश्वरि ॥ चिन्तयित्वाथमनसाभ्यर्च्यकामेश्वरींहृदि ॥ ७० ॥ मानसैर्गन्धपुष्पाद्यैस्ततोदक्षिणनासया ॥ निःसार्य्यवायुन्तत्पुष्पमा रोप्यमण्डलान्तरे ॥ ७१ ॥ आवाहयेन्महादेवींसर्व्वकामेश्वरेश्वरीम् ॥ कामेश्वरिइहागच्छसम्मुखीभवसन्निधौ ॥ ७२ ॥ कामेश्वरिविद्महेत्वाङ्कामाख्यायैचधीमहि ॥ तन्नःकुब्जिमहामायेततःपश्चात्प्रचोदयात् ॥ ७३ ॥ एह्येहिभगवत्यम्बलो कानुग्रहकारिणि ॥ कामेशेकामरूपेत्वङ्कामकान्तेप्रसीदमे ॥ ७४ ॥ ततस्तुप्रथमंस्नानञ्जलन्दत्वातुपूजकः ॥ मूलम न्त्रेणवितरेदुपचाँरास्तुषोडश ॥ ७५ ॥ पूजयेन्मध्यभागेतुषडङ्गानिततोर्च्चयेत् ॥ अङ्गन्यासेतुयेमन्त्राःक्रमेपूर्व्वन्तुभा षिताः ॥ ७६ ॥ तैरेवमन्त्रैरङ्गानिदेव्याअपिचपूजयेत् ॥ पूर्व्वाद्यष्टदलेष्वेतायोगिनीःपरिपूजयेत् ॥ ७७ ॥ यथाक्रमेणकामा नांसिद्ध्यर्थङ्कामदायिकाः ॥ गुप्तकामान्तुश्रीकामान्तथैवविन्ध्यवासिनीम् ॥ ७८ ॥ कोटेश्वरीम्वनस्थान्तुयोगिनीम्पादच ण्डिकाम् ॥ दीर्घेश्वरीन्तुप्रकटाम्भुवनेशीङ्क्रमाद्यजेत् ॥ ७९ ॥ वैष्णवीतन्त्रमन्त्रस्ययान्यष्टावक्षराणितु ॥ तानिविन्द्विन्दुयुक्ता निमन्त्रन्यासांश्चप्रक्ष्यते ॥ ८० ॥ मन्त्रेषुषण्णाङ्कोणानाम्षडिमाःपरिपूजयेत् ॥ ऐशान्यादिक्रमेणैवकामाख्यान्त्रिपुरान्तथा

॥ ८१ ॥ दौरदाश्चमहोच्छ्रासाम्प्रकटाम्भुवनेश्वरीम् ॥ सिद्धकामेश्वरीञ्चापिदेव्यारूपाणिभैरव ॥ ८२ ॥ अष्टपुष्पिकं
यादेवीम्पुनःसम्पूज्यचाष्टधा ॥ जप्त्वास्तुत्वाबलिन्दत्वानत्वामुद्राम्प्रदर्श्यच ॥ ८३ ॥ देव्यास्तुसिद्धचण्ड्याँश्चैनिर्म्माल्यम्प्र
तिपाद्यच ॥ विसृज्यमण्डलाद्देवीँस्थापयेद्योनिमण्डले ॥ ८४ ॥ एतत्कामेश्वरीतन्त्रङ्कथितय्युँवयोःसुतौ ॥ शारदायामहा
तन्त्रंसमन्त्रंशृणुभैरव ॥ ८५ ॥ इतिकालिकापुराणेत्रिपुरापूजनन्नामएकोनसप्ततितमोध्यायः ॥ ६९ ॥ ॥ श्रीभग
वानुवाच ॥ ॥ शरत्कालेपुरायस्मान्नवम्याम्बोधितासुरैः ॥ शारदासासमाख्यातापीठेलोकेचमानव ॥ १ ॥ तस्यास्तु
नेत्रबीजाख्याम्मन्त्रम्प्राक्प्रतिपादितम् ॥ दुर्ग्गातन्त्रञ्चतन्मन्त्रमङ्गमन्त्रम्पुरोदितम् ॥ २ ॥ ताभ्यामेवतुमन्त्राभ्याम्पूज
येत्ताञ्जगन्मयीम् ॥ तृतीयम्पीठमन्त्रन्तुशारदायाअनुत्तमम् ॥ ३ ॥ शृणुतञ्चैकमनसाचतुर्व्वर्ग्गप्रदायकम् ॥ चतुर्थस्वरस
य्युँक्तमुपान्तोवह्निनायुतः ॥४॥ कामराजन्तथानान्तमुपान्तस्वरसय्युँतम् ॥ वह्निनाचापिसन्दीप्तःसर्व्वंबिन्दिन्दुसय्युतम् ॥
॥ ५ ॥ हादिःसमाप्तिसहितएतद्वीजञ्चतुर्थकम् ॥ चतुर्भिरेभिःकथितोमन्त्रोक्तैश्चषडक्षरैः ॥ ६ ॥ अयन्तृतीयोमन्त्रस्तुशार
दायाःप्रकीर्त्तितः ॥ अनेनपूजयेत्पीठेसर्व्वांसिद्धिमवाप्नुयात् ॥ ७ ॥ रूपमस्याःपुराप्रोक्तंसिंहस्थन्दशबाहुभिः ॥ तत्रपूजाक्र
मंसम्यक्शृणुतम्पुत्रकौमम ॥ ८ ॥ चतुर्द्वारम्मण्डलन्तुकुर्यात्तत्रविभूतये ॥ महामायामण्डलन्तुशारदायास्तुमण्डलम् ॥ ९ ॥

वैष्णवीतन्त्रकल्पोक्तैर्म्मन्त्रस्थानादिमार्ज्जनम् ॥ कृत्वातुनेत्रबीजेनमण्डलम्प्रस्तरेलिखेत् ॥ १० ॥ योनावष्टदलङ्कृत्वात्रिको
णम्मध्यतोन्यसेत् ॥ अथव्विँशेषःकथितोवैष्णवीमण्डलात्पुनः ॥ ११ ॥ मण्डलाल्लेँखनञ्चैवतथाभूतापसारणम् ॥ पात्रस्य
प्रतिपत्तिस्तुअमृतीकारणन्तथा ॥ १२ ॥ गन्धपुष्पाम्भसाङ्केपआत्मासनप्रपूजनम् ॥ प्राणायामश्चत्रिविधोभूतिशुद्धिप्र
वेशनम् ॥ १३ ॥ दहनप्लवने चैवपाणिकच्छपिकातथा ॥ योगपिठस्यचध्यानव्वैँष्णवीतन्त्रभाषिते ॥ १४ ॥ तथैवोक्तस्त
न्त्रोक्तङ्कुर्य्याद्देव्याःप्रपूजने ॥ अमृतीकरणङ्कुर्य्यात्सलिलेधेनुमुद्रया ॥ १५ ॥ रूपन्त्वेवन्दशभुजम्पूर्व्वोक्तन्तु विचिन्तयेत् ॥
अङ्गन्यासकरन्यासौदुर्ग्गामन्त्रेणभैरव ॥ १६ ॥ नवाक्षरेणवैकुर्य्यादङ्गुष्ठादिक्रमेणतु ॥ हृदयादिक्रमान्पश्चाद्वक्त्रादावपिपू
र्व्ववत् ॥ १७ ॥ एतदेवार्घपात्रेऽष्टधामन्त्रञ्जपेत्सुधीः ॥ तत्तोयैःसेचयेच्छोर्घ्म्पुष्पगन्धादिकन्तथा ॥ १८ ॥ एवम्पूजाक्रम
न्तत्रकुर्य्याद्देव्यास्तुमण्डले ॥ आदित्यश्चण्डिकारूपन्ध्यात्वापूर्व्वांशिलातले ॥ १९ ॥ तस्मैनिवेदयेदर्घ्यंसिद्धार्थाच्छतपु
ष्पकैः ॥ आधारशक्तिप्रभृतीन्हीमन्त्रेणचसाधकः ॥ २० ॥ पूजयेत्प्रथमम्मध्येधर्म्मादीनपिपूर्व्ववत् ॥ सत्वादीन्गुरुपा
दान्तान्पूर्व्वतन्त्रोदितान्बुधः ॥ २१ ॥ पूजयेन्मध्यपद्मेतुसुमेरुमपिमध्यतः ॥ पूर्व्वभागेमण्डलस्यदेव्याःशक्तीःप्रपूजयेत् ॥
॥ २२ ॥ नाथकामेश्वरादींस्तुलौहित्यान्तान्विशेषतः ॥ सर्व्वान्वैपीठदेवाँस्तुमण्डलस्योत्तरेयजेत् ॥ २३ ॥ मणिकूर्चश्चित्ररथ

म्भस्मकूटन्तथैवच ॥ श्वेतन्नीलञ्चचित्रञ्चवाराहङ्गन्धमादनम् ॥२४॥मणिकूर्चन्नन्दनञ्चपश्चिमेपूजयेदिमान् ॥ जल्पीशमथ
केदारन्देवींदिक्करवासिनीम् ॥ २५॥ धात्रींस्वयान्तथास्वाहाम्मानस्तोकेपराजिते ॥ दक्षिणेपूजयेदेताश्चतुःषष्टिश्चयोगिनीः
॥२६॥ ग्रहाँश्चदशदिक्पालाम्पूर्व्वाद्युक्तक्रमेणतु॥ पूर्ववत्पूजयेद्धीमान्भैरवम्भैरवीमपि ॥२७॥ ततःकच्छपिकाम्बद्ध्वापुनरेव
तुपूजकः ॥ ध्यायेच्चपूर्व्ववद्देवींहृदिस्थाम्मनसापिच ॥२८॥मानसैर्ग्गन्धपुष्पाद्यैःपूजयित्वात्हृदिस्थिताम्॥नासापुटेननिःसा
र्य्यदक्षिणेनाथमण्डले ॥२९॥ पुष्पमारोप्यकामाख्यांशारदामाह्वयेन्मुहुः ॥ एह्येहिपरमेशानिसान्निध्यमिहकल्पय ॥ ३० ॥
पूजाभागङ्गृहाणेमम्मरक्षनमोस्तुते॥ दुर्ग्गेदुर्ग्गेइहागच्छसर्व्वैःपरिकरैःसह ॥ ३१॥ पूजाभागङ्गृहाणेमम्मरक्षनमोस्तुते॥
नारायिण्यैचविद्महेत्वाञ्चण्डिकायैतुधीमहि॥३२॥शेषभागेतुगायत्र्यास्तन्नश्चण्डीप्रचोदयात् ॥ दत्वास्नानमनेनैवदत्वातन्त्रे
णवैपुनः ॥ ३३ ॥ नेत्रबीजेनचतथापीठमन्त्रेणचान्तरम् ॥ चतुरक्षरेणशेषेणत्रिभिर्म्मन्त्रैःप्रपूजयेत् ॥३४॥ चतुरक्षरमन्त्रेण
पाद्यादीनथषोडश ॥ वितरेदुपचाराँस्तुपूर्व्वोक्ताँस्तांस्तुभैरव ॥३५॥ दुर्ग्गातन्त्रेणमन्त्रेणदेव्याङ्गानिप्रपूजयेत्॥ दुर्ग्गेत्यनेन
हृदयम्पुनर्दुर्ग्गेत्यनेनकम् ॥३६॥शिखाकवचनेत्रांश्चपादयादींश्चपञ्चभिः ॥ वादिपञ्चाक्षरैःशेषैःपूजयेत्क्रमतःसुधीः ॥३७॥
पूर्व्वाद्यष्टदलेष्वेताःपूजयेन्नायिकाक्रमात् ॥ जयन्तीम्पूर्व्वपत्रेतुआग्नेय्यादौतुमङ्गलाम् ॥ ३८॥ कालीञ्चभद्रकालीञ्चतथा

चैवकपालिनीम् ॥ दुर्ग्गांशिवाङ्क्षामाञ्चैवक्रमादेवतुनामतः॥३९॥केशरस्यतुमध्येतुअष्टावेतास्तुनायिकाः ॥नेत्रबीजस्यमन्त्रे
णबीजेनषट्सुनायिकाः॥ ४० ॥अमीषाञ्चतथैवासौषड्भिरेतान्तराहितैः॥ह्रांह्रींश्रोमित्युपातान्तुप्रान्तामाद्यस्वेरणवै॥४१॥ उ
ग्रचण्डाम्प्रचण्डाञ्चचण्डोग्राञ्चण्डनायिकाम्॥ चण्डाञ्चण्डवतीञ्चैवचण्डरूपाञ्चचण्डिकाम्॥ ४२ ॥त्रिकोणकेशरान्तन्तुकाम
म्प्रीतिंरतिन्तथा ॥ पञ्चबाणान्पुष्पधनुःपूजयेत्काममन्त्रकैः ॥४३ ॥ अष्टपुष्पिकयापश्चात्सम्पूज्यपरमेश्वरीम् ॥ देव्यास्तु
करगत्यानिशस्त्राण्यङ्गानिवाहनम् ॥४४॥ पञ्चाननङ्केशरञ्चदेन्यमग्रेप्रपूजयेत् ॥ पीठदेवींशारदांतुकामाख्यामधिदेवताम्
॥४५॥ त्रिपुराख्यांमहादेवीम्पीठमत्यधिदेवताम्॥ कामेश्वरींमहोत्साहाम्मध्यएवप्रपूजयेत् ॥४६॥चतुरक्षरमन्त्रेणदद्यात्पु
ष्पाञ्जलित्रयम्॥ जप्त्वास्तुत्वाबलिन्दत्वानमस्कृत्यावगुण्यच ॥४७॥ योनिमुद्राम्प्रदर्श्याथनिर्म्माल्यन्दिशिशूलिनः ॥ चण्डे
श्वर्य्यैनमइतिनिःक्षिप्यर्चाविसर्ज्जयेत् ॥ ४८॥ ततस्तुभास्करायार्घ्यन्दद्यादच्छिद्रधारणाम्॥ देवीञ्चहृदयेस्थाप्यस्थापयेद्यो
निमण्डले॥४९॥ एवन्देविन्तुकामाख्याय्योँनिमुद्राञ्जगन्मयीम्॥ शारदाख्याम्महादेवींयोगेनविधिनाजयेत्॥ ५० ॥ सर्व्वां
कामान्सुसम्प्राप्यशिवलोकमवाप्नुयात् ॥ यदिपीठव्विँनान्यत्रपूजयेत्कामरूपिणीम्॥ ५१ ॥ नीलकूटेतदाप्येतत्सर्व्वमेवस
माचरेत् ॥ यदान्यत्रयजेद्देवींजलेवास्थण्डिलेपिवा ॥५२॥ शिलादिषुचवह्नौवादेवीपीठेयथेच्छया ॥ यजेद्वानयजेद्वापिपीठेव

श्यम्प्रपूजयेत्॥५३॥एवय्यँः पञ्चभिर्म्मन्त्रैः पञ्चमूर्त्तिधरांशिवाम्॥एकैकेनाथवातस्यस्वयंस्याद्वरदायिका॥ ५४॥ विघ्रानतस्य जायन्तेनाधयोव्याधयस्तथा ॥ नतस्यसदृशोन्यःस्याद्धनधान्यसमृद्धिभिः ॥ ५५ ॥ गवाङ्कोटिप्रदानात्तुयत्फलञ्जायते नृणाम् ॥ तत्फलंसमवाप्नोतिकामाख्याम्पूजयन्नृणाम् ॥ ५६ ॥ दशपूर्व्वान्दशपरान्वंशानुद्धृत्यपापतः ॥ सकृत्सम्पूजनेनैव ममलोकमवाप्नुयात् ॥ ५७ ॥ द्विःसम्पूज्यमहादेवीङ्कामाख्यायोँनिमण्डले ॥ शतव्वँशान्समुद्धृत्यदेवीलोकमवाप्नुयात् ॥ ५८ ॥ यस्त्रिवारान्पूजयेत्तुविधिनानेनमानवः ॥ नीलपर्व्वतमारुह्यकामाख्यायोँनिमण्डले॥ ५९ ॥ ससहस्रन्तुवंशानामुद्धृत्यपापकोपतः ॥ इहलोकेसुखैश्वर्य्यंचिरायुष्यमवाप्नुयात् ॥ ६० ॥ देहान्तेमद्गृहम्प्राप्यगणानामधिपोभवेत् ॥ यस्याङ्कस्यामथाष्टम्यान्नवम्याव्वाँपिसाधकः ॥ ६१ ॥ पञ्चरूपान्तुकामाख्याम्पञ्चमन्त्रैःसतन्त्रकैः ॥ पूजयेद्वरदान्देवीम्मण्डलैश्चपृथक्पृथक् ॥ ६२ ॥ ध्यात्वातुपञ्चरूपाणिजप्त्वामन्त्राणिपञ्चवै ॥ सकल्पकोटिलक्षाणिममलोकेचमानवः ॥ ६३ ॥ स्थित्वादेवीप्रसादेनपरेनिर्व्वाणमाप्नुयात् ॥ इहलोकेवाञ्छितार्थंसुखम्प्राप्ययशस्तथा ॥ ६४ ॥ रिपूञ्जित्वासधर्म्मात्मामातङ्गानिवकेसरी ॥ चिरायुःपुत्रपौत्रैश्चवित्तैश्च समन्वितः ॥ ६५ ॥ क्रीडयित्वाथनरवद्युवतीभिश्चसादरात् ॥ यक्षरक्षःपिशाचानाम्मेताभवतिनित्यशः ॥ ६६ ॥ सर्व्वान्कामानवाप्यैवद्विजराजसमोभवेत् ॥ ६७ ॥ ॥इतिकालिकापु

राणेसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ छ ॥ ॥ और्वउवाच ॥ ॥ एतत्तन्त्रंसमस्तन्तुश्रुत्वावेतालभैरवौ ॥
पप्रच्छतुस्त्र्यम्बकञ्चहर्षोत्फुल्लविलोचनौ ॥ १ ॥ ॥ वेतालभैरवावूचतुः ॥ ॥ कामाख्यायाःश्रुतन्तन्त्रंसाङ्गंयुष्मत्प्र
सादतः ॥ नमस्कारन्तथामुद्राम्बलिदानन्तथैवच ॥ २ ॥ तथैवमातृकान्यासम्पूजायाश्चान्यतःक्रमम् ॥ एतत्सर्व्वंस
माचक्ष्वविस्तरेणजगत्प्रभो ॥ ३ ॥ शृण्वतोर्न्नेहिनौतृप्तिर्ज्जायतेमोदभूमिषु ॥ ॥ श्रीभगवानुवाच ॥ ॥ वक्ष्यामियद
हम्पृष्टोभवद्भ्याम्पुत्रकोत्तमौ ॥ ४ ॥ शृणुतन्नरशार्दूलावेकाग्रमनसाधुना ॥ त्रिकोणमथषट्कोणमर्द्धचन्द्रम्प्रदक्षिणम् ॥ ५ ॥
दण्डमष्टाङ्गमुग्रञ्चसप्तधानतिलक्षणम् ॥ ऐशानीवाथकौबेरीदिक्कामाख्याप्रपूजने ॥ ६ ॥ प्रशस्तास्थण्डिलादौचसर्व्वम्मू
र्त्तेश्चसर्व्वतः ॥ त्रिकोणादिव्यवस्थातुयदिपूर्व्वमुखोयजेत् ॥ ७ ॥ पश्चिमाच्छाम्भवीङ्गत्वाव्यवस्थान्निर्द्दिशेत्तदा ॥ य
दोत्तरामुखःकुर्य्यात्साधकोदेवपूजनम् ॥ ८ ॥ तदायाम्यान्तुवायव्याङ्गत्वाकुर्य्यात्तुसंस्थितिः ॥ दक्षिणाद्वायवीङ्गत्वादि
शन्तस्माच्चशाम्भवीम् ॥ ९ ॥ ततोपिदक्षिणङ्गत्वानमस्कारस्त्रिकोणवत् ॥ त्रिकोणाख्योनमस्कारस्त्रिपुराप्रीतिदायकः ॥
॥ १० ॥ दक्षिणाद्वायवीङ्गत्वावायव्याच्छाम्भवीन्ततः ॥ ततोपिदक्षिणाङ्गत्वातान्त्यक्त्वाग्नौप्रविश्यच ॥ ११ ॥ अ
ग्नितोराक्षसीङ्गत्वातत्पश्चादुत्तरान्दिशम् ॥ उत्तरांचतथाग्नेयीम्भ्रमणन्द्वित्रिकोणवत् ॥ १२ ॥ षट्कोणोयंनमस्कारःश्री

तिदः शिवदुर्ग्गयोः ॥ दक्षिणाद्वायवीङ्गत्वातस्मादावृत्यदक्षिणम् ॥ १३ ॥ गत्वायोसौनमस्कारःसोर्द्धचन्द्रःप्रकीर्त्तितः ॥ सकृत्प्रदक्षिणङ्कृत्वावर्त्तुलाकृतिसाधकः ॥ १४ ॥ नमस्कारःकथ्यतेसौप्रदक्षिणइतिद्विजैः ॥ त्यक्त्वास्वमासनस्थानम्पश्चाद्दुर्ग्गानमस्कृतिः ॥ १५ ॥ प्रदक्षिणव्विँनायातुनिपत्यभुविदण्डवत् ॥ दण्डइत्युच्यतेदेवैःसर्व्वदेवौघमोददः ॥१६॥ पूर्व्ववद्दण्डवद्भूमौनिपत्यहृदयेनतु ॥ चिबुकेनमुखेनाथनासयाहनुकेनच ॥ १७ ॥ ब्रह्मरन्ध्रेणकर्णाभ्याय्यँद्भूमिस्पर्शनङ्क्रमात् ॥ सचाष्टाङ्गइतिप्रोक्तोनमस्कारोमनीषिभिः ॥१८॥ प्रदक्षिणत्रयङ्कृत्वासाधकोवर्त्तुलाकृतिः ॥ ब्रह्मरन्ध्रेणसंस्पर्शःक्षितेर्य्यस्यान्नमस्कृतौ ॥ १९ ॥ सउग्रइतिदेवौघैरुच्यतेविष्णुतुष्टिदः ॥ नदानांसागरोयद्वद्द्विपदाम्ब्राह्मणोयथा ॥ २० ॥ नदीनाञ्जाह्नवीयाद्वग्देवानामपिचक्रधृक् ॥ नमस्कारेषुसर्व्वेषुतथैवोग्रःप्रशस्यते ॥ २१ ॥ त्रिकोणाद्यैर्न्नमस्कारैःकृतैरेवतुभक्तितः ॥ चतुर्व्वर्गँल्लँभेद्भक्तोनचिरादेवसाधकः ॥ २२ ॥ नमस्कारोमहायज्ञःप्रीतिदःसर्व्वतःसदा ॥ सर्व्वेषामेवदेवानामन्येषामपिभैरव ॥ २३ ॥ योसावुग्रोनमस्कारःप्रीतिदःसततंहरेः ॥ महामायाप्रीतिकरःसनमस्करणोत्तमः ॥ २४ ॥ उक्तास्तत्रनमस्काराःशृण्वतंपरतोयुवाम् ॥ मुद्राणाम्परिसङ्ख्यानंस्वरूपञ्चयथाक्रमम् ॥ २५ ॥ धेनुश्चसम्पुटश्चैवप्राञ्जलिर्व्विल्वपत्रकौ ॥ नाराचोमुण्डदण्डौचयोनिरर्द्धन्तथैवच ॥ २६ ॥ वन्दनीचमहामुद्रामहायोनिस्तथैवच ॥ भगश्चपुटक

श्चैवमिषङ्गोथार्द्धचन्द्रकः ॥ २७ ॥ अङ्कश्चद्विमुखश्चैवशङ्खमुद्राचमुष्टिकः ॥ वज्रश्चैवतथाबद्धस्मयोनिर्व्विमलन्तथा ॥२८ ॥
घटःशिखरिणीतुङ्गःपुण्ड्रोथत्र्यर्द्धचन्द्रकः ॥ सम्मीलेनीचकुण्डश्चचक्रंशूलन्तथैवच ॥ २९ ॥ सिंहवक्त्रङ्गोमुखश्चप्रोन्नामोन्न
मनन्तथाः ॥ विश्वंम्पाशुपतंशुद्धन्त्यागोथोसारिणीतथा ॥ ३० ॥ प्रसारणीचोग्रमुद्राकुण्डलीव्यूहएवच ॥ त्रिमुखाश्वासिव
ह्लीचयोगोभेदोथमोहनम् ॥ ३१ ॥ वाणोधनुश्चतूणीरम्मुद्राएताश्चसत्तमाः ॥ अष्टोत्तरशतम्मुद्राब्रह्मणाया:प्रकीर्त्तिताः
॥ ३२ ॥ तासान्तुपञ्चपञ्चाशदेताग्राह्यास्तुपूजने ॥ शेषास्तुयास्त्रिपञ्चाशन्मुद्रास्तासमयेषुच ॥ ३३ ॥ द्रव्यानयन
सङ्केतनटनादिषुताःस्मृताः ॥ देवानाञ्चिन्तनेयोगेध्यानेजप्येविसर्जने ॥ ३४ ॥ आद्यास्तुपञ्चपञ्चाशन्मुद्राभैरवकीर्ति
ताः ॥ मुद्राव्विनातुयज्जप्यम्प्राणायामःसुरार्च्चनम् ॥ ३५ ॥ योगोध्यानासनेचापिनिःफलानिचभैरव ॥ प्रत्येकंलक्ष
णन्तेषांश्रृणुतन्तनयोयुवाम् ॥ ३६ ॥ दक्षिणामध्यमाग्रेणसव्यहस्तस्यतर्ज्जनीम् ॥ योजयेत्सव्यमध्यान्तुतर्ज्जन्यादक्षिणे
नवै ॥ ३७ ॥ तथादक्षानामिकयावामहस्तकनिष्ठिकाम् ॥ अनामिकान्तुवामस्यदक्षिणस्यकनिष्ठया ॥ ३८ ॥ योजयेद्भ
क्तिमान्त्सम्यग्दक्षिणावर्तनेनतु ॥ धेनुमुद्रासमाख्यातासर्व्वदेवस्यतुष्टिदा ॥ ३९ ॥ सव्योँज्यद्वौतलौसर्व्वाण्युङ्गुल्यग्राणि
हस्तयोः ॥ सव्योँज्यपार्श्वतोङ्गुष्ठौसम्पुटःप्रोच्यतेसुरैः ॥ ४० ॥ सर्व्वेषामथदेवानासम्पुटःप्रीतिदायकः ॥ ध्यानचिन्तन

योगादौसम्पुटःशस्यतेसदा ॥४१॥निकुब्जयुगलम्पाण्योस्तंसव्योंज्योर्द्ध्वएवच ॥ मध्यशून्यःपुटाकारःप्राञ्जलिःपरिकीर्त्तितः
॥ ४२ ॥ अङ्गुष्ठमन्तरङ्कृत्वापाण्योर्म्मुष्टिंव्विधायच ॥ सव्योँज्यबिल्ववन्तेतुबिल्वमुद्राप्रकीर्त्तिता ॥ ४३ ॥ माणिबन्धादा
करभंसव्योँज्यकरयोर्द्वयोः ॥ अङ्गुष्ठेचापिसव्योँज्यतथैवचकनिष्ठके ॥ ४४ ॥ तिस्रस्तिस्रोस्तयोः पाण्योरङ्गुलीर्व्विरला
स्तयः ॥ पद्ममुद्रासमाख्याताचतुर्व्वर्ग्गफलान्नृणाम् ॥ ४५ ॥ अङ्गुष्ठाग्रेणतर्ज्जन्यासव्योँज्याथोर्द्ध्वरेखया ॥ अन्याङ्गुलीस्त
थानम्यनाराचःस्यात्प्रसार्य्यते ॥ ४६ ॥ ममचैवशिवायाश्चप्रीतिदेयम्प्रियङ्करी ॥ नाराचमुद्रासततम्प्रीत्यैवेतालभैर
व ॥ ४७ ॥ अन्तराङ्गुष्ठमुष्टिञ्चकृत्वावामकरस्यतु ॥ मध्यमायोदक्षिणस्यतथानम्यप्रयत्नतः ॥ ४८ ॥ मध्यमेनाथतर्ज्ज
न्याअङ्गुष्ठाग्रानियोज्यच ॥ दक्षिणव्योँजयेत्पाणिव्वाँममुष्टौचसाधकः ॥ ४९ ॥ दर्शयेद्दक्षिणेभागेमुण्डमुद्रेयमिष्यते ॥ इय
न्तुगणनाथस्यप्रीतिदामुद्रिकोत्तमा ॥ ५० ॥ सर्व्वेषामपिदेवानान्तुष्टिदासर्व्वकर्म्मसु ॥ अङ्गुष्ठमध्यमादींश्चसम्यगानम्य
तर्ज्जनीम् ॥ ५१ ॥ प्रसार्य्यदण्डमुद्रेतिदक्षिणेस्यकरस्यच ॥ सर्व्वाङ्गुलीस्तुसव्योँज्यकरयोरुभयोरपि ५२॥ संवेष्ट्यरज्जुव
द्वेतिपाण्योरपिकनिष्ठिके ॥ वामस्यानाममूलेवैउदग्रंव्विँनियोजयेत् ॥ ५३ ॥ दक्षस्यमध्यमामूलेतथाग्रंव्वाँममेवच ॥ यो
जयद्योजनात्पश्चादावर्त्यकरशाखिकाः ॥ ५४ ॥ योन्याकारन्तुतन्मध्यव्योँनिमुद्राप्रकीर्त्तिता ॥ कामाख्यायाःपञ्चमूर्त्ते

दुर्ग्गायाअपिभैरव ॥ ५५ ॥ प्रीतिदायोनिमुद्रेयम्ममकामस्यचप्रिया ॥ संसक्ताअङ्गुलोःसर्व्वाःप्रसार्य्याङ्गुष्ठपर्व्वणा ॥ ५६ ॥
अग्रेणचकनिष्ठायाअग्रेणापिचयोजयेत् ॥ करस्यदक्षिणस्यैवमर्द्धयोनिःप्रकीर्त्तिता ॥ ५७ ॥ महायोनिस्तुकथितावैष्णवीत
न्त्रणेवरे ॥ सम्पुटम्प्राञ्जलिर्व्वापियदिशीर्षेप्रदर्शयेत् ॥ ५८ ॥॥ वन्दनीयासमाख्यातामुद्राविष्णुप्रमोदिनी ॥ ५९ ॥ सैव
चेच्छ्रवणासक्तामहामुद्राप्रकीर्त्तिता ॥ दक्षिणाङ्गेतुसासक्तावैष्णवीपरिकीर्त्तिता ॥ ६० ॥॥ महायोनिस्तुकथितावैष्णवीत
न्त्रगोचरे ॥ द्वयोर्म्मूलेङ्गुष्ठाग्रमङ्गुलीञ्चकनिष्ठयोः ॥ ६१ ॥ नियोज्यप्रसृतीकृत्यद्वौपाणीयोजयेत्पुनः ॥ भगमुद्रासमाख्या
तालक्ष्मीवाणीशिवप्रिया ॥ ६२॥ सर्व्वाङ्गुलीनामग्रौघन्दक्षिणस्यकरस्यच ॥ सय्योज्यैकत्रपुरतोनिर्द्दिशःपुटकःस्मृतः ॥
॥ ६३ ॥ कनिष्ठिनामिकाङ्गुष्ठाङ्गुलीनायोजयेद्बुधः ॥ अग्राण्येकत्रमध्यान्तुतर्ज्जनीञ्चप्रसार्य्यवै ॥ ६४ ॥ कुब्जीकृत्यकरद्वन्द्व
न्पृथगग्रेनिदर्शयेत् ॥ निःसङ्गनाममुद्रेयन्नरसिंहवराहयोः॥६५॥कनिष्ठानामिकामध्यामाकुञ्चदक्षिणेनतु॥ करस्यतर्ज्जन्यङ्गु
ष्ठेप्रसार्य्यक्रियतेतुया ॥६६॥ सामुद्राद्यर्द्धचन्द्राख्याग्रहाणाम्प्रीतिदायिनी ॥ उर्द्ध्वीकृत्यतथाङ्गुष्ठङ्करस्यदक्षिणस्यतु॥६७॥
कृत्वामध्यान्तदङ्गुष्ठव्वाँममुष्टिन्तथोर्द्ध्वतः ॥ उर्द्ध्वाङ्गुष्ठन्तथाकुर्य्यादगमुद्राप्रकीर्त्तिता ॥ ६८ ॥ एतस्याएवमुद्रायाकनिष्ठादि
वियोगतः ॥ अष्टौमुद्रासमाख्यातानामतासाम्पृथक्शृणु॥६९॥द्विमुखञ्चैवमुष्टिश्चवज्रमाबद्धमेवच ॥ विमलश्चघटश्चैवतुङ्गः

पुण्ड्रस्तथैवच ॥ ७० ॥ नवानाव्विँष्णुमूर्त्तीनांसार्द्धमङ्केनमुद्रिकाः ॥ क्रमान्नवसमाख्यातानायिकानान्तथैवच ॥७१॥ सव्यँौ
ज्यकरयोःपृष्ठेतथावर्त्यतुवैसमम्॥ प्रसार्य्यंतर्ज्जनीयुग्मंसव्युँकंसर्व्वतःपुनः॥७२॥अङ्गुष्ठौचतथासक्तौशङ्खमुद्राप्रकीर्त्तिता॥
उत्तानमञ्जलिङ्कृत्वाअङ्गुष्ठेद्वेकनिष्ठयोः॥ ७३ ॥ मूलेनिःक्षिप्यतुकरौसव्योँज्याथप्रदर्शयेत्॥ सायोनिरितिविख्यातामुद्रादे
वौघतुष्टिदा ॥७४॥ मुष्टिर्द्दक्षिणहस्तस्ययदोर्द्ध्वाङ्गुष्ठिकाभवेत्॥ सास्याच्छिखरणीमुद्राब्रह्मसूर्य्यप्रियाचसा ॥७५॥ अनामि
केकनिष्ठेचसव्योँज्यवायुनापुनः ॥ मध्यमातर्ज्जनीनान्तुधेनुमुद्रेवबन्धनम्॥७६॥सार्द्धधेनुरितिख्याताचन्द्रप्रीतिविवर्द्धिनी ॥
करयोरङ्गुलीनान्तुसर्व्वाग्राण्येकतःस्थिता ॥७७॥ नियोज्यद्वेतलेचैवतदधोपिनियोज्यच ॥ अग्रैरग्रैर्योजयेत्तुमुद्रासम्मीलनी
तुसा॥७८॥औमभूमिमुनीशानामियम्प्रीतिविवर्द्धिनी ॥ सर्व्वाङ्गुलीस्तुसव्योँज्यदक्षिणस्यकरस्यच ॥७९ ॥ कियद्भागन्तथा
नम्यतलङ्कुर्य्यात्तुकुण्डवत्॥ समाख्याताकुण्डमुद्रावुधवाणीशिवप्रिया॥८०॥ सर्व्वाङ्गुलीनाम्मध्यन्तुवामहस्तस्यचाङ्गुलीः॥
प्रसार्य्याङ्गुष्ठयुगलंसव्योँज्याग्रेणभैरव ॥८१॥ तदङ्गुष्ठद्वयङ्कार्य्यंसम्मुखंव्विवर्तयेत्ततः ॥ चक्रमुद्रासमाख्यातागुरुविष्णुशिव
प्रिया॥८२॥ अङ्गुष्ठंमध्यमाञ्चैवनामयित्वाकरस्यतु ॥ दक्षिणस्यपरास्तिस्रोयोजयेदग्रतःपुनः॥ ८३॥ शूलमुद्रातुसाख्याता
ममशुक्रगुहप्रिया ॥ निकुब्जीकृत्यतुकरौवामाङ्गुलिगणस्यतु ॥ ८४॥ अग्राणियोजयेन्मध्येतलस्यासव्यहस्ततः ॥ अधःकृ

त्वावामहस्तम्मुद्रासिंहमुखीस्मृता ॥ ८५॥ इयम्प्रीत्यैतुदुर्गायाःसूर्यपुत्रस्यचक्रिणः ॥ भगमुद्राकर्णमूलेगोमुखाख्याप्रकी
र्त्तिता॥८६॥ममविष्णोस्तथाराहोस्सर्व्वदाप्रीतिदायिनी ॥ मुष्टिद्वयमथोत्तानङ्कृत्वासय्योँज्यपार्श्वतः ॥ ८७ ॥ दक्षिणस्यक
निष्ठादीन्प्रसार्य्यक्रमतःपुनः ॥ तथावामकनिष्ठाभ्यामेकैकेनप्रसारयेत् ॥ ८८ ॥ अष्टौमुद्रासमाख्यातनामतःक्रमतःशृणु ॥
प्रोल्लासोन्नमनञ्चैवबिम्बंपाशुपतन्तथा॥८९॥शुद्धन्त्यागःसारणीचतथाचैवप्रसारणी ॥ आकुञ्चकरशाखास्तुदक्षिणासातुमु
द्रिका॥९०॥ उग्रमुद्रासमाख्यातास्वहस्तस्यविपर्य्ययात् ॥ इन्द्रादिलोकपालानान्दशमुद्राःप्रकीर्त्तिताः ॥ ९१ ॥ सर्व्वेषामे
वदेवानाम्परमप्रीतिवर्द्धनाः ॥ अङ्गुष्ठाग्रन्तुतर्ज्जन्याअग्रेभागेनयोजयेत् ॥ ९२ ॥ आकुञ्चमध्यमाद्यास्तुदक्षहस्तस्यचाङ्गु
लीः ॥ दर्शयेत्कुण्डलाकारङ्कुण्डलीशक्तितुष्टिदम्॥९३॥सर्व्वेषामपिदेवानाय्यँथातुष्टिकरम्महत्॥ अङ्गुष्ठतर्ज्जनीमध्याअग्रभा
गेनियोज्यच ॥९४॥ मध्यमाञ्चकनिष्ठाञ्चआकुञ्च्यदक्षिणेकरे ॥ त्रिमुखाख्यासमाख्याताविश्वदेवप्रियासदा ॥९५॥ केतोः
प्रियेयंसततम्मातृणामपितुष्टिदा॥ तर्ज्जन्यङ्गुष्ठयोरग्रभागौसय्योँज्यचाङ्गुलीः ॥ ९६ ॥ अन्याआकुञ्चयेतिस्रःसासिवल्लीप्रकी
र्त्तिता ॥ पितृणामथसाध्यानांरुद्राणांविश्वकर्म्मणः ॥ ९७॥ सर्व्वदाप्रीतिजननीसासिवल्लीप्रकीर्त्तिता ॥ पादौतलाभ्यांस
य्योँज्यतदङ्गुष्ठद्वयन्ततः ॥ ९८ ॥ उर्द्ध्वंसय्योँजयेन्नाभौतस्योपरितथाञ्जलिः ॥ योगमुद्रासमाख्यातायोगिनान्तत्वदायिनी ॥

॥ ९९ ॥ सर्व्वैषामपिदेवानाम्पूजनेचिन्तनेतथा ॥ योगमुद्रासमाख्यातातुष्टिप्रीतिकरीसदा ॥ १०० ॥ प्राञ्जलिर्न्नाममुद्रा
तुऊर्द्धाधोभावयोजिताम् ॥ विभिद्यदर्शयेद्धस्तौउर्ध्वाधःप्रसृतीकृतौ ॥ १ ॥ भेदमुद्रासमाख्याताममविष्णोर्व्विधेः
प्रिया ॥ अङ्गुष्ठेद्वेतुनिःक्षिप्यकरयोरुभयोरपि ॥ २ ॥ अग्रेणयोजयेत्पश्चात्कनिष्ठायुगलन्ततः ॥ उभयोर्हस्तयोश्चा
न्यास्तर्जन्याद्याश्चयोजयेत् ॥ ३ ॥ अग्राग्रैस्तुपृथक्कृत्यदर्शयेत्तुकनिष्ठिकाम् ॥ मुद्रासम्मोहनन्नामकामदुर्ग्गारमाप्रिया
॥ ४ ॥ सर्व्वैषामिहदेवानाम्मोहनम्प्रीतदंस्मृतम् ॥ आनम्यासव्यहस्तस्यमध्यमानामिकेतथा ॥ ५ ॥ तयोःपृष्ठसु
सर्य्योज्यअङ्गुष्ठाग्रन्ततःपरम् ॥ कनिष्ठान्तर्जनीश्चैवअग्रेणायोजयेत्ततः ॥ ६ ॥ बाणमुद्रासमाख्यातासर्व्वदेवस्यतुष्टि
दा ॥ सर्व्वाङ्गुलीस्तुसङ्कोच्यअङ्गुष्ठमथतर्ज्जनीम् ॥ ७ ॥ प्रसार्य्यकरयोःपश्चादङ्गुष्ठाग्रन्तुयोजत् ॥ अङ्गुष्ठाग्रेणतर्ज्जन्या
अग्रेणापिचतर्ज्जनीम् ॥ ८ ॥ यथाशक्तिप्रसार्य्यापिधेनुमुद्राप्रकीर्त्तिता ॥ सर्व्वाङ्गुलीनामग्राणिब्राह्मतीर्थेनियोजयेत् ॥
॥ ९ ॥ अनामिकायाःपृष्ठेतुअङ्गुष्ठाग्रन्नियोज्यच ॥ शून्यंतूणीरवत्कृत्वातेषामंतस्तुभैरव ॥ तूणीरमुद्राचाख्यातासर्व्वेषा 
म्प्रीतिवार्द्धनी ॥ ११० ॥ मुद्रासुसंस्थितापूजामुद्रासुपरिचिन्तनम् ॥ मुद्रासुसंस्थिदघ्नेयमोदकरास्ततः ॥ ११ ॥ य
दायदापूजनेषुचिन्तनेध्यानकर्म्मणि ॥ यज्ञादौस्तवनेवापिहस्तकृच्छन्नावद्यते ॥ १२ ॥ तदाम्लन्वितङ्कुर्य्यादिष्टापूर्तंकरद्वय

म् ॥ यज्ञकृत्येषुचेच्छक्तोहस्तोमुद्रासुचक्षमः ॥ १३ ॥ तदामुद्राम्विधायैवतन्तुकृत्यंसमाचरेत् ॥ मुद्राविमुक्तहस्तन्तुक्रियते
कर्म्मदैविकम् ॥ १४ ॥ कृत्वार्यान्निष्फलय्यँस्मात्तस्मान्मुद्रान्वितोभवेत् ॥ विसर्ज्जनेतुदेवानाय्यँस्ययापरिकीर्तिता ॥ १५॥ मु
द्रांताम्पूजनादौतुतस्यचैवप्रयोजयेत् ॥ विसृज्योक्तामृतेमुद्राम्मुद्रायुक्तःसमाचरेत् ॥ १६ ॥ पूजनादिसमस्तन्तुकर्म्मत्वद्धोवि
चक्षणः ॥ अतोमुद्रापरन्नाममुद्रापुण्यप्रदायिनी ॥ १७ ॥ देवानाम्मोददामुद्रातस्मात्ताय्यँत्नतश्चरेत् ॥ अर्द्धयोनिर्म्महायोनि
र्य्योनिर्ब्राह्मीचवैष्णवी ॥ १८ ॥ मुद्राविसर्ज्जनेप्रोक्ताशिवात्रिपुरयोःसदा ॥ दुर्ग्गायाःसर्व्वरूपेषुमुद्राएताःप्रकीर्त्तिताः ॥ १९ ॥
योनिश्चसम्पुटैश्चवमहायोनिंतथैवच ॥ वर्ज्जयित्वाव्यस्तभावादुक्तादन्यत्रयोजयेत् ॥ २० ॥ भवेद्यस्तुत्रिपञ्चाशद्न्यामुद्राःस
मन्ततः ॥ ताव्यस्तभावाद्वामास्युर्मुद्रामोदकराःपराः ॥ २१ ॥ एवव्वाँङ्कथितामुद्राःपूजनेपूज्यतुष्टिदा ॥ क्रमस्तुबलिदानस्य
शृणुवैतालभैरव ॥ २२ ॥ इतिकालिकापुराणेएकसप्ततितमोध्याय ॥ ७१ ॥ ॥ श्रीभगवानुवाच ॥ क्रमस्तुबलिदानस्यस्व
रूपंरुधिरादितः ॥ यथास्यात्प्रीतयेसम्यक्तत्त्वाव्वँक्ष्यामिपुत्रकौ ॥ १ ॥ वैष्णवीतन्त्रकल्पोक्तःक्रमःसर्व्वत्रसर्व्वदा ॥ साधकैर्बलि
दानस्यग्राह्यःसर्व्वसुरस्यच ॥ २ ॥ पक्षिणःकच्छपाग्राह्यामत्स्यानवविधामृगाः ॥ महिषोगोधिकागावच्छागोबभ्रुश्चसूकरः
॥ ३ ॥ खड्गश्चकृष्णसारश्चगोधिकाशरभोहरिः ॥ शार्दूलश्चनरश्चैवस्वगात्ररुधिरन्तथा ॥ ४ ॥ चण्डिकाभैरवादीनाम्बलयःपरिकी

र्तिता: ॥ बलिभिः साध्यते मुक्तिर्बलिभिः साध्यते दिवम् ॥ ५ ॥ बलिदानेन सततञ्जयेच्छत्रून्नृपान्नृपः ॥ मत्स्यानाङ्कच्छपानान्तु
रुधिरैः सततं शिवा ॥ ६ ॥ मासैकन्तृप्तिमाप्नोति ग्राहैर्म्मासांस्तु त्रीनथ ॥ मृगाणां शोणितैर्द्देवी नराणामपि शोणितैः ॥ ७ ॥ अष्टौ
मासानवाप्नोति तृप्तिङ्कल्याणदा च सा ॥ गोधिकानाञ्च रुधिरैर्व्वार्षिकीन्तृप्तिमानुयात् ॥ ८ ॥ कृष्णसारस्य रुधिरैः शूकरस्य च शो
णितैः ॥ प्राप्नोति सततन्देवी तृप्तिन्द्वादशवार्षिकीम् ॥ ९ ॥ अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम् ॥ महिषाणाञ्च खड्गानां रुधि
रैः शतवार्षिकीम् ॥ १० ॥ तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा ॥ सिंहस्य शरभस्याथ स्वगात्रस्य च शोणितैः ॥ ११ ॥ देवी तृप्ति
मवाप्नोति सहस्रम्परिवत्सरान् ॥ मांसैरपि तथा प्रीती रुधिरैर्य्यस्य यावती ॥ १२ ॥ कृष्णसारं मृगङ्खड्गन्तथा मत्स्यञ्च रोहितम् ॥
वार्द्ध्रीनसयुगञ्चापि फलन्तेयाम्पृथक्पृथक् ॥ १३ ॥ कृष्णसारस्य मांसेन तथा खड्गेन चण्डिका ॥ वर्षाणाञ्च शतान्येव तृप्ति
माप्नोति केवलम् ॥ १४ ॥ रोहितस्य तु मत्स्यस्य मांसैर्व्वार्द्ध्रीनसस्य च ॥ तृप्तिम्प्राप्नोति वर्षाणां शतानि त्रीणि मत्प्रिया ॥ १५ ॥
त्रीपिबन्त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ॥ वार्द्ध्रीणसः प्रोच्यते सौह व्यकव्ये च सत्कृतः ॥ १६ ॥ नीलग्रीवो रक्तशीर्षः
कृष्णपादः सितच्छदः ॥ वार्द्ध्रीणसस्यात्पक्षी च मम विष्णोरपि प्रियः ॥ १७ ॥ नरेण बलिना देवी सहस्रम्परिवत्सरान् ॥ वि
धिदत्तेन चाप्नोति तृप्तिं लक्षन्त्रिभिर्न्नरैः ॥ १८ ॥ नारेणैवाथ मांसेन त्रिसहस्रञ्च वत्सरान् ॥ तृप्तिमाप्नोति कामाख्या भैरवी मम

रूपधृक् ॥ १९ ॥ मन्त्रपूतंशोणितन्तुपीयूषञ्जायतेसदा ॥ मस्तकञ्चापितस्यात्तिमांसञ्चापितथाशिवा ॥ २० ॥ तस्मा
त्तुपूजनेदद्याद्बलेःशीर्षञ्चलोहितम् ॥ भोज्येहोमेचमांसानिनियुञ्जीयाद्विचक्षणः ॥ २१ ॥ पूजासुनाममांसानिदद्याद्वैसा
धकःक्वचित् ॥ ऋतेतुलोहितंशीर्षममृतन्तन्तुजायते ॥ २२ ॥ कूष्माण्डमिक्षुदण्डञ्चमद्यमासवमेवच ॥ एतेबलिसमाःप्रो
क्तास्तृप्तौछागसमाःसदा ॥ २३ ॥ चन्द्रहासेनकर्त्र्यावाछेदनम्मुख्यमिष्यते ॥ दात्रासिधेनुक्रकचशङ्कुलाभिस्तुमध्यमम्
॥ २४ ॥ क्षुरक्षुरप्रभल्लैश्चवाधमम्परिकीर्तितम् ॥ एभ्योन्यैःशक्तिबाणाद्यैर्बलिश्छेद्यःकदापिन ॥ २५ ॥ नाप्तिदेवीबलि
न्तन्तुदातामृत्युमवाप्नुयात् ॥ हस्तेनछेदयेद्यस्तुप्रोक्षितंसाधकःपशुम् ॥ २६ ॥ क्षीणव्याँब्रह्मवध्यामवाप्नोतिमुरुदुःसहाम् ॥
नामन्त्र्यखड्गन्तुबलिन्नियुञ्जीतविचक्षणः ॥ २७ ॥ खड्गस्यामन्त्रणेमन्त्रायावन्तःकथिताःपुरा ॥ महामायाबलौतेवैयोज्या
स्तत्रोदिताबुधैः ॥ २८ ॥ तैःसार्द्धमेतेमन्त्रास्तुयोज्याःखड्गादिमन्त्रणे ॥ पूजनेशारदादीनाङ्कामाख्यायाविशेषतः ॥ २९ ॥
द्विःकालीतिततोदेव्यावज्रेश्वरिपदन्ततः ॥ ततोनुलोहदण्डायैनमःशेषेतुयोजयेत् ॥ ३० ॥ सम्पूज्यानेनमन्त्रेणखड्गमादाय
पाणिना ॥ कालरात्र्यास्तुमन्त्रेणतत्खड्गमभिमन्त्रयेत् ॥ ३१ ॥ नेत्रबीजस्यमध्यन्तुद्विरावर्त्यप्रयोजयेत् ॥ ततोनुकालिकाली
तिकरालोष्ट्रीस्ततःपरम् ॥ ३२ ॥ हान्तादीश्चतृतीयेनस्वरेणैकादशेनवै ॥ योजितोनादबिन्दुभ्यांद्वौतत्पश्चान्नियोजयेत् ॥

॥ ३३ ॥ फेत्कारिणिपदन्तस्मात्खादयछेदयेत्यतः ॥ सर्व्वान्दुष्टानितिततोह्निम्मारयलुलायकं ॥ ३४ ॥ खड्गेनच्छिन्धिछिन्धी
तिततःकिलकिलेतिवै ॥ ततःकिचिकिचित्येवन्ततःपिबपिबेतिच ॥ ३५ ॥ ततोनुरुधिरञ्चेतिस्फैँस्फौँस्फौ किरिकिरीतिच ॥
कालिकायैनमइतिकालराव्यास्तुमन्त्रकम् ॥ ३६ ॥ इत्यनेनतुमन्त्रेणकरवालेभिमन्त्रिते ॥ कालरात्रीस्वयन्तत्रप्रसीद
त्यरिहानये ॥ ३७ ॥ बलेःपूर्व्वोदितामन्त्रानित्यङ्गाद्यास्तुसाधकैः ॥ अयम्मन्त्रस्तुवक्तव्यस्तस्यहत्याविहानये ॥ ३८ ॥
यज्ञार्थेपशवःसृष्टाःस्वयमेवस्वयम्भुवा ॥ अतस्त्वाङ्घातयिष्यामितस्माद्यज्ञेवधोवधः ॥ ३९ ॥ ततोदैवतमुद्दिश्यका
ममुद्दिश्यचात्मनः ॥ छेदयेत्तेनखड्गेनबलिम्पूर्व्वाननन्तुतम् ॥ ४० ॥ अथवोत्तरवक्रन्तंचस्वयम्पूर्व्वमुखस्तथा ॥ पूर्व्वो
क्तान्त्सैन्धवादीस्तुवक्केवश्यन्नियोजयेत् ॥ ४१ ॥ सौवर्णराजतन्ताम्रंदैत्यम्पत्रपुटञ्चवा ॥ माहेयङ्कांस्यमथवायज्ञका
ष्ठमयञ्चवा ॥ ४२ ॥ पात्रंरुधिरदानायकर्त्तव्यंव्विभवावधि ॥ नलौहेवल्कलेवापिवैत्रेराङ्कथसैकसे ॥ ४३ ॥ दद्या
द्रक्तम्बलीनान्तुभूमौश्रुचिश्रुवेतथा ॥ नघटेभूतलेवापिदेयन्क्षुद्रेनभाजने ॥ ४४ ॥ रुधिराणिप्रदद्यात्तुभूतिकामोनरो
त्तमः ॥ नरस्यतुसदारक्तम्माहेयेतैजसेथवा ॥ ४५ ॥ दद्यान्नरपतिस्तत्तुनपटादौकदाचन ॥ हयमेधम्रतेदद्यान्नकदा
चिद्धयम्बलिम् ॥ ४६ ॥ तथादिक्पालमेधेतुगजन्दद्यान्नराधिपः ॥ नकदाचित्तदादेव्यैप्रदद्याद्धयहस्तिनौ ॥ ४७ ॥

हयाकर्षैंचामरन्तुबलिंदद्यान्नराधिपः ॥ सिंहव्यॉंघ्रन्नरञ्चापिस्वगात्ररुधिरन्तथा ॥ ४८ ॥ नदद्याद्ब्राह्मणोमद्यम्महादेव्यै
कदाचन ॥ सिंहव्यॉंघ्रन्नरन्दत्वाब्राह्मणोनरकव्व्रँजेत् ॥ ४९ ॥ इहापिस्यात्सहीनायुःसुखसौभाग्यवर्जितः ॥ स्वगा
त्ररुधिरन्दद्याच्चात्मवध्यामवाप्नुयात् ॥ ५० ॥ मद्यन्दत्वाब्राह्मणास्तुब्राह्मणादेवहीयते ॥ नकृष्णसारव्विँतरेद्बलिन्तुक्ष
त्रियादिकः ॥ ५१ ॥ ददतःकृष्णसारन्तुब्रह्महत्यामवेद्यतः ॥ यत्रसिंहस्यव्याघ्रस्यनरस्यविहितोवधः ॥ ब्रह्मणोक्तातुब
ल्यादौतत्रायव्विँहितःक्रमः ॥ ५२ ॥ कृत्वाघृतमयव्यॉंघ्रन्नरंसिंहञ्चभैरव ॥ अथवापूपविकृतय्यँवक्षोदमयञ्चवा ॥ ५३ ॥
घातयेच्चन्द्रहासेनतेनमन्त्रेणसंस्कृतम् ॥ प्रभूतबलिदानेतुद्वौवात्रीन्वाग्रतःकृतान् ॥ ५४ ॥ पूजयेत्प्रमुखान्कृत्वासर्व्वान्म
न्त्रेणसाधकः ॥ सामान्यपूजाकथिताबलीनाम्पूर्व्वतोमया ॥ ५५ ॥ विशेषोयत्रयत्रास्तितन्मत्तःशृणुभैरव ॥ महिषम्प्रद
देहेव्यैभैरव्यैभैरवायवै ॥ ५६ ॥ अनेनैवतुमन्त्रेणतदातम्पूजयेद्बलिम् ॥ यथावाहम्भवान्द्वेष्टियथावहसिचण्डिकाम् ॥ त
थाममरिपून्हिंसशुभाव्व्हँलुलायक ॥२७॥ यमस्यवाहनस्त्वन्तुवररूपधराव्यय ॥ आयुर्व्वित्तय्यँशोदेहिकासरायनमोस्तुते ॥
॥ ५८ ॥ खड्गस्यतुयदादानङ्क्रियतेतन्त्रमन्त्रकम् ॥ जलेनाभ्युक्ष्यकुर्व्वीतगुहाजातेतिभाषयन् ॥ ५९ ॥ दैवेपैत्रेचशुभगःखड्ग
स्त्वङ्खड्गसन्निभः ॥ च्छिन्धिविघ्नान्महाभागगुहाजातनमोस्तुते ॥६०॥ प्रदानेकृष्णासारस्यमन्त्रोयम्परिकीर्तितः ॥ कृष्ण

सारब्रह्ममूर्त्तेब्रह्मतेजोविवर्द्धन ॥६१॥ चतुर्व्वेदमियंप्राज्ञप्रज्ञान्देहियशोमहत् ॥ तथासरभपूजायाम्मन्त्रमेतत्प्रकीर्त्तितम् ॥
॥ ६२ ॥ त्वमष्टपादोविभ्रंसचन्द्रभागसमुद्भव ॥ अष्टमूर्त्तेमहाबाहोभैरवाख्यनमोस्तुते ॥ ६३ ॥ यथाभैरवरूपेणवाराहोनि
हतस्त्वया ॥ तथाशरभरूपेणरिपून्विघ्नान्निषूदय ॥ ६४ ॥ हरिस्त्वंहररूपेणयथावहसिचण्डिकाम् ॥ तथाशुभानिमेनित्यव्वँ
हुविघ्नाँश्चसूदय ॥ ६५ ॥ त्वंहरिःसिंहरूपेणजगन्मृत्युहरूपिणम् ॥ जघानयेनसत्येनहिरण्यकशिपुंहरन् ॥ ६६ ॥ इत्येवं
सिंहपूजायाङ्क्रमउक्तोमयानघ ॥ नरेस्वगात्ररुधिरेपर्य्यायंशृणुभैरव॥६७॥पीठेचेद्दीयतेमर्त्योव्वँलिन्दद्यात्श्मशानके ॥श्मशा
नेहेरुकाख्यन्तुतत्पूर्व्वम्प्रतिपादितम् ॥ ६८ ॥ कामाख्यानिलयेशैलेओड्रादौविहितक्रमम् ॥ ममरूपंश्मशानन्तद्भैरवाख्य
ञ्चकथ्यते ॥६९॥ तत्राङ्गत्वन्तपःसिद्धौत्रिभागन्तुभविष्यति ॥ पूर्व्वाङ्गेभैरवाख्येतुसमुत्सृष्टिर्न्नरस्यतु ॥ ७० ॥ दक्षिणाङ्गे
शिरोदद्याद्भैरव्यामुण्डमालया ॥रुधिरम्पश्चिमाङ्गेतुहेरुकाख्येनियोजयेत्॥७१॥दत्वासम्पूज्यतुनरव्विसृज्यागमनक्रमे॥पी
ठश्मशानेषुबलिन्नेक्षेत्तुबलिदायकम् ॥ ७२ ॥ अन्यत्रापियतोयत्रदीयतेयन्महाबलिः ॥ तत्राप्यन्यत्रचोत्सृज्यछित्वान्यत्रशि
रोस्मृतम्॥७३॥नियोजयेत्साधकस्तुविसृज्यनविलोकयेत् ॥ सुस्नातम्मनुजन्दीप्तम्पूर्व्वाह्णनियताशनम् ॥७४॥मांसमैथुनभो
ग्येनहीनंस्रक्चन्दनोक्षितम् ॥ कृत्वोत्तरामुखन्तन्तुतदङ्गेष्वङ्गदेवताः ॥ ७५ ॥ पूजयेत्तन्तुनाम्नातुदैवतेनचमानुषम् ॥ तद्ब्रह्मर

न्ध्रेब्रह्माणन्तन्नासायाश्चमेदिनीम् ॥ ७६॥ कर्णयोस्तुतथाकाशञ्जिह्वायांसर्व्वतोमुखम्॥ज्योतींषिनेत्रयोर्विष्णुर्व्वदनेयपरिपू
जयेत् ॥७७॥ ललाटेपूजयेच्चन्द्रंशक्रन्दक्षिणगण्डतः ॥ वामगण्डेतथावह्निङ्ग्रीवायांसमवर्त्तिनम् ॥७८॥ केशाग्रेनिर्ऋतिम्मध्ये
भ्रुवोश्चापिप्रचेतसम् ॥ नासामूलेतुश्वसनंस्कन्धेचापिधनेश्वरम् ॥७९॥ हृदयेसर्प्पराजन्तुपूजयित्वापठेदिदम् ॥ नरवर्य्यम
हाभागसर्व्वदेवमयोत्तम ॥ ८० ॥ रक्षमांशरणापन्नंसपुत्रपशुबान्धवम् ॥ सराज्यम्मांसहामात्यश्चतुरगसमन्वितम् ॥ ८१॥
रक्षपरित्यजप्राणान्मरणेनियतेसति ॥ महातपोभिर्ज्ञानैश्चयज्ञैर्य्यत्साध्यतेमृतम ॥ ८२ ॥ तन्मेदेहिमहाभागत्वञ्चापिप्राप्नु
हिश्रियम् ॥ राक्षसाश्चपिशाश्चवेतालाद्याःसरीसृपाः ॥ ८३ ॥ नृपाश्चरिपवश्चान्येनमान्तेघ्नन्तुत्वत्कृते ॥ त्वत्कण्ठनाल
गलितैःशोणितैरङ्गसम्युतैः ॥ ८४ ॥ आप्यायस्वात्मवन्मृत्वामरणेनियतेसति ॥ एवंसम्पूज्यविधिवत्पूर्व्वतन्त्रैश्चपूज
येत् ॥ ८५ ॥ पूजितोमत्स्वरूपोयन्दिक्पालाधिष्ठितोभवेत् ॥ अधिष्ठितस्तथान्यैश्चब्रह्माद्यैःसकलैःसुरैः ॥ ८६ ॥ कृ
तपापोपिमनुजोनिःपाप्मासतुजायते ॥ तस्यनिष्कलुषस्याशुपीयूषंशोणितम्भवेत् ॥ ८७ ॥ प्रीणातिचमहादेवीजग
न्माताजगजन्मयी ॥ सोपिकायम्परित्यज्यमानुषन्नचिरान्मृतः ॥ ८८ ॥ भवेद्गणानामधिपोमयापिबहुसत्कृतः ॥ इतो
न्यथापापयुक्तम्मलमूत्रवशायुतम् ॥ ८९ ॥ तम्बलिन्नहिगृह्णातिकामाख्यान्यापिनामतः ॥ अन्येषाम्महिषादीनांबली

नामथपूजनात् ॥ ९० ॥ कायोमेध्यत्वमायातिरक्तकृद्धातिवैशिवा ॥ अन्येभ्योपिचदेवेभ्योयदायत्तुत्रदीयते ॥ ९१ ॥
तदर्चितम्प्रदद्यात्तुपूजितायसुरायवै ॥ काणम्पङ्गुञ्चातिवृद्धंरोगिणञ्चगलद्व्रणम् ॥ ९२ ॥ क्लीबंहीनाङ्गमथवावृद्धलिङ्गकु
लक्षणम् ॥ श्वित्रिणञ्चातिह्रस्वञ्चमहापातकिनन्तथा ॥ ९३ ॥ अष्टादशकवर्षीयंशिशुसूतकसंयुतम् ॥ ऊर्द्ध्वसंवत्स
राच्चापिमहागुरुनिपातिनम् ॥ ९४ ॥ बलिकर्म्मणिचैतांस्तुवर्जयेत्पूजितानपि ॥ पशूनाम्पक्षिणाञ्चापिनराणाञ्चविशे
षतः ॥ ९५ ॥ स्त्रियन्नदद्यात्तुबलीन्दत्वानरकमाप्नुयात् ॥ सञ्ज्ञातबलिदानेषुयोषितम्पशुपक्षिणोः ॥ ९६ ॥ बलिन्दद्या
न्मानुषीन्तुत्यक्त्वासञ्ज्ञातपूजितम् ॥ नत्रिमासीयकान्यूनम्पशुन्दद्याच्छिवाबलिम् ॥ ९७ ॥ नचत्रैपक्षिकान्यूनम्प्रदद्या
द्वैपतत्रिणम् ॥ काणव्यङ्गादिदुष्टन्तुनपशुम्पक्षिणन्तथा ॥ ९८ ॥ देव्यैदद्यात्तथामर्त्त्यन्तथैवपशुपक्षिणौ ॥ छिन्नलाङ्गूलं
कर्णादीन्भग्नदन्तन्तथैवच ॥ ९९ ॥ भग्नशृङ्गादिकंवापिनदद्यात्तुकदाचन ॥ नब्राह्मणबलिन्दद्याच्चाण्डालमपिपार्थि
व ॥ १०० ॥ नोत्सृष्टन्द्विजदेवेभ्योभूपतेस्तनयन्तथा ॥ रणेनविजितन्दद्यात्तनयंरिपुभूभृतः ॥ १ ॥ स्वपुत्रम्भ्रातर
वांपिपितरञ्चाविरोधिनम् ॥ विट्पतिञ्चनदद्यात्तुभागिनेयञ्चमातुलम् ॥ अनुक्तान्नापिदद्यात्तुतथाज्ञातान्मृगद्विजान् ॥ २ ॥
उक्तालाभेप्रदद्यात्तुगर्दभञ्चोष्ट्रमेवच ॥ लाभन्येषान्नवितरेद्व्याघ्रमुष्ट्रकरन्तथा ॥ ३ ॥ सम्पूज्यविधिवन्मर्त्यम्पशुम्प

क्षिणमेववा ॥ संछिन्नश्चापिमन्त्रेणमन्त्रेणैवनिवेदयेत् ॥ ४ ॥ नारंमर्त्यशिरोरक्तन्देव्याःसम्यङ्निवेदयेत् ॥ छागन्तुवाम
तोदद्यान्माहिषव्विँतरेत्पुरः ॥ ५ ॥ पाक्षिणव्वाँमतोदद्यादग्रतोदेहशोणितम् ॥ क्रव्यादानाम्पशूनान्तुपक्षिणान्तुशिरोऽसृ
जम् ॥ ६ ॥ वामेनिवेदयेत्पार्श्वेजलजानाञ्चसर्व्वशः ॥ कृष्णसारस्यकूर्म्मस्यखड्गस्यशशकस्यच ॥ ७॥ ग्राहाणामथमत्स्या
नामग्रएवनिवेदयेत् ॥ सिंहस्यदक्षिणेदद्यात्खड्गिनोऽपिचदक्षिणे ॥ ८ ॥ पृष्ठदेशेनदद्यात्तुशिरोवारुधिरव्बँलेः ॥ नैवेद्यन्द
क्षिणेवामेपुरतोनतुपृष्ठतः॥ ९ ॥ दीपन्दक्षिणतोदद्यात्पुरतोवानवामतः ॥ वामतस्तुतथाधूपमग्रेवानतुदक्षिणे ॥ १०॥ निवे
दयेत्पुरोभागगन्धम्पुष्पञ्चभूषणम् ॥ मण्डलेचेन्मध्यभागेवामदक्षादिपूर्व्ववत् ॥ ११ ॥ मदिराम्पृष्ठतोदद्यादन्यत्पानन्तु
वामतः ॥ अवश्यव्विँहितय्यँत्रमद्यन्तत्रद्विजःपुनः ॥ १२ ॥ नारिकेलजलंकाँस्येताम्रेवाविसृजेन्मधु ॥ नापद्यपिद्विजोमद्यङ्क
दाचिद्विसृजेदपि ॥१३॥ ऋतेपुष्पासवादुक्तागृञ्जनाद्वाविशेषतः॥ राजपुत्रस्तथामात्यःसचिवःसौप्तिकादयः ॥ दद्युर्न्नरबलि
म्भूपसम्पत्याविभयायच ॥१४॥ नृपाननुमतेमर्त्त्यन्ददत्पापमवाप्नुयत् ॥ उपप्लवेरणेवापियथेच्छव्विँतरेन्नरः ॥१५॥यःकश्चि
द्राजपुरुषोनान्यस्त्वपिकदाचन ॥ बलिदानदिनात्पूर्व्वन्दिवसेतुबलिन्नरम् ॥ १६ ॥ मानस्तोकेतिमन्त्रेणदेवीसूक्तनयेनच ॥
गन्धद्वारेत्यनेनापिखड्गशीर्षेनिधायच ॥१७॥तस्मिन्न्खड्गेसुगन्धादिदत्वातेनाधिवासयेत् ॥ गन्धादिकन्तुखड्गस्थङ्लेतस्य

प्रदापयेत् ॥ १८ ॥ अम्बेऽम्बिकेतिमन्त्रेणरौद्रेणभैरवस्यच ॥ एवन्तुसंस्कृतेमर्त्यैर्देवीरक्षतितव्वँलिम् ॥ १९ ॥ नतस्य
व्याधयश्चापिक्षुन्नतारजनौनच ॥ नसूतकन्दूषयेत्तज्ज्ञात्युत्पत्तिमृतादिकम् ॥ १२० ॥ छिन्नन्नरस्यशीर्षन्तुपतितय्यँत्रय
त्रच ॥ यच्छुभञ्चाशुभव्वाँपिपश्वादीनाञ्चतच्छृणु ॥ २१ ॥ छिन्नंशिरस्तथैशान्यान्नारन्दिश्यथराक्षसे ॥ पतितंराज्यहानिञ्च
विनाशञ्चविनिर्द्दिशेत् ॥ २२ ॥ पूर्व्वाग्नियाम्यवारुण्यवायव्यादिगतङ्क्रमात् ॥ श्रियम्पुष्टिम्भयंलाभम्पुत्रलाभन्धनन्तथा
॥ २३ ॥ क्रमाद्विनिर्द्दिशेन्नारञ्छिन्नशीर्षन्तुभैरव ॥ उत्तरादिक्रमादेवमाहिषस्यापिमस्तकः ॥ २४ ॥ पतितोवायुकाष्ठा
न्तञ्छूचयेद्यच्छृणुष्वतत् ॥ भाग्यहानिस्तथैश्वर्य्यव्वित्तंरिपुजयम्भयम् ॥ २५ ॥ राज्यलाभंश्रियञ्चापिक्रमाद्विद्धिभैरव ॥
पशूनाञ्चैवसर्व्वेषाञ्छागादीनामशेषतः ॥ २६ ॥ एवम्फलङ्क्रमाद्विद्यादृतेजलभवाण्डजौ ॥ जलजानाम्पक्षिणान्तुयाम्यनैर्ऋ
त्ययोर्भयम् ॥ २७ ॥ अन्यत्रतुश्रियन्दद्यात्पतितंशातितंशिरः ॥ यःस्यात्कटकटाशब्दोदन्तानाञ्छिन्नमस्तके ॥ २८ ॥ नराणा
म्पशुपक्ष्यादिग्राहादीनाञ्चरोगदः ॥ लोतकञ्चक्षुषोर्ज्जातय्यँदिश्रवतिमस्तके ॥ २९ ॥ छिन्नेनरस्यराज्यस्यतदाहानिर्व्वि २२९
निर्द्दिशेत् ॥ माहिषेमस्तकेनेत्राद्यदिश्रवतिलोतकम् ॥ १३० ॥ छिन्नेनिवेदितंवैरिभूपमृत्युन्तदादिशेत् ॥ अन्येषामथप
श्वादिबलीनांशिरसोर्दितात् ॥ ३१ ॥ निर्ग्गतंल्लोतकन्धत्तेपराद्धीतिकृदन्तथा ॥ हसतिछिन्नशीर्षञ्चेन्नारंस्यात्तुरिपुक्षयम्

॥३२॥ श्रीवृद्धिरायुषोवृद्धिःसदादातुरसंशयः ॥ यद्यद्वाक्यन्निगदतितथाभवतिचाचिरात् ॥३३॥हुङ्काराद्राज्यहानिःस्यात्श्ले
ष्मश्रवाच्चपञ्चताम् ॥ देवानाय्यँदिनामानिभाषतेछिन्नमस्तकः ॥३४॥ विभूतिमतुलाम्विद्यात्षण्मासाभ्यन्तरेतदा ॥ रुधिरा
दानकालेतुसकृन्मूत्रेयदिश्रवेत् ॥ ३५ ॥ कायन्तदाधश्चोर्द्ध्वंवाँदातुःस्यान्मरणन्तदा ॥ आक्षेपाद्वामपादस्यमहारोगःप्रजाय
ते ॥ अन्यदाक्षेपचलनैःकल्याणमुपजायते ॥३६॥ माहिषस्यतुरक्तस्यमानुषस्यतुसाधकः ॥ अङ्गुष्ठानामिकाभ्यान्तुकिञ्चिदु
द्धृत्यभूतले ॥३७॥ महाकौशिकमन्त्रेणनिःक्षिपेद्बलिमुत्तमम् ॥ देवेभ्यःपूतनादिभ्योनैर्ऋत्यान्दिशिपूर्व्वतः ॥३८॥ महिषःप
ञ्चवर्षीयःपञ्चविंशतिवार्षिकः ॥ बलिर्देयोनरोदेव्यैतस्यरक्तन्तुभूतये ॥३९ ॥ नेत्रबीजत्रयङ्कामबीजंहन्ताप्रजापतिः ॥ वह्नि
बीजङ्घट्स्वराभ्यांसंपृक्तश्चतथापरः ॥ १४०॥ सएवैतास्तथैतावदादिवर्गान्तसय्युँतः ॥ षष्ठस्वरशिखाबिन्दुश्चन्द्रयुक्तस्त
थापरः ॥ ४१ ॥ द्विर्न्नासिकाबीजकान्तःकौशिकीत्यभिमन्त्रणम् ॥ एषबलिःस्वाहेतिमन्त्रोयङ्कौशिकीस्मृतः ॥ ४२ ॥ नृ
पोवैरिबलिन्दद्यात्खड्गमामंत्र्यपूर्व्वतः ॥ ४३ ॥ महिषाञ्चाथछागव्वावैरिनाम्नाभिमंत्र्यच ॥ सूत्रेणवदनेबद्धत्रिधातस्यतु
मन्त्रकैः ॥४४॥ छित्वातस्योत्तमाङ्गन्तुदेव्यैदद्यात्प्रयत्नतः ॥ यदायदारिपोर्व्वृद्धिबलिदानंतदापरम् ॥ ४५ ॥ दद्यात्तदाशिर
श्छित्वारिपोस्तस्यक्षयायच ॥ प्राणप्रतिष्ठाञ्चरिपोःकुर्य्यात्तस्मिन्यशावथ ॥४६॥ तस्मिन्क्षीणेरिपोःप्राणाःक्षीयन्तेविपदा

युताः ॥ आःदौविरुद्धरूपाणिचण्डिकेचततःपरम् ॥४७॥ वैरिणन्त्वमुकञ्चेतियाहीत्याम्रेडितम्पुनः ॥ वह्निभार्य्यांततःपश्चा
तूखड्गमन्त्रम्प्रकीर्तितम् ॥४८॥ स्वयंसवैरीयोद्वेष्टितमिमम्पशुरूपिणम् ॥ विनाशयमहामारिस्पैंस्फैंखादयखादय ॥ ४९ ॥
इत्यनेनतुमन्त्रेणबलेःशिरसिपुष्पकम् ॥ दद्यात्ततस्तद्रुधिरन्द्व्यक्षराभ्यांनिवेदयेत् ॥१५० ॥ महानवम्यांशरदियद्येवन्दीयते
बलिः ॥ तदातदष्टाङ्गभवैर्म्मांसैर्होमंसमाचरेत् ॥ ५१ ॥ दुर्ग्गातन्त्रेणमन्त्रेणप्रणीतेदहनेशुचौ ॥ एवन्दत्वाबलिम्मर्त्त्योरिपुक्ष
यमवाप्नुयात् ॥ ५२ ॥ नाभेरधस्ताद्रुधिरम्पृष्ठभागस्यचश्रिये ॥ स्वगात्ररुधिरन्दद्यान्नकदाचनसाधकः ॥ ५३ ॥ नोष्ठस्य
चिबुकस्यापिनेन्द्रियाणाञ्चमानवः ॥ कण्ठाधोनाभितश्चोर्द्ध्वम्बाहोःपाणिमृतेतथा ॥ ५४ ॥ प्रदद्याद्रुधिरञ्ज्ञातन्नातिकुर्य्याच्च
साधकः ॥ गण्डयोश्चललाटस्यभ्रुवोर्म्मध्यस्यशोणितम् ॥ ५५ ॥ ॥ कर्णाग्रस्यचबाह्वोश्चतलयोरुदरस्यच ॥ कण्ठतोनाभि
तश्चोर्द्ध्वंहृद्भागस्ययतस्ततः ॥ ५६ ॥ पार्श्वयोश्चापिरुधिरन्दुर्ग्गायैविनिवेदयेत् ॥ नगुल्फतोऽसृक्प्रदद्यान्नजत्रोर्नापिवक्त्र
तः ॥ ५७ ॥ नचरोगबिलादङ्गान्नान्यघाताच्चभैरव ॥ तदर्थंचकृताघातोद्यत्सश्रद्धोक्षुब्धमानसः ॥ ५८ ॥ श्रुतेरक्तम्प्रद
द्यात्तुपद्मपुष्पस्यपत्रके ॥ सौवर्णेराजतेकांश्येलौहेफालेचवानरः ॥ ५९ ॥ निधायदेव्यैदद्यात्तुतद्रक्तम्मन्त्रपूर्व्वकम् ॥
खननञ्छूरिकाखड्गंसङ्कुलादियदस्त्रकम् ॥ ६० ॥ घातेनब्रह्दस्त्रस्यमहाफलमवाप्नुयात् ॥ पद्मपुष्पस्यपत्रन्तुयावद्गृह्णाति

शोणितम् ॥ ६१ ॥ तत्प्रमाणेचतुर्भागाधिकंरक्तन्तुसाधकः ॥ नकदाचित्प्रदद्यात्तुनाङ्गच्छेदमथाचरेत् ॥ ६२ ॥ यःस्वहृदयस
ञ्जातमांसम्माषप्रमाणतः ॥ तिलमुद्गप्रमाणाद्वादेव्यैदद्यात्तुभक्तितः॥६३॥ षण्मासाभ्यन्तरेतस्मात्काममिष्टमवाप्नुयात् ॥ बा
ह्वोस्तुस्कन्धयोर्व्वापियोदद्याद्दीपवर्त्तिकाम् ॥ ६४ ॥ हृदयेवास्नेहपात्रव्विँनाभक्त्यातुसाधकः ॥ क्षणमात्रेणतद्दीयप्रदानस्यफ
लंश्शृणु ॥६५॥ भुक्त्वाचविपुलान्भोगान्देवीगेहेयदृच्छया ॥ कल्पत्रयन्तुसंस्थायसार्व्वभौमोनृपोभवेत् ॥६६ ॥ महिषस्यशि
रच्छिन्नंसप्रदीपंशिवापुनः ॥ हस्ताभ्यामर्घ्यंःसमादायअहोरात्रन्तुतिष्ठति ॥ ६७ ॥ सचिरायुःपूतमूर्त्तिरिहभुक्त्वामनोरमान् ॥
भोगानन्तेमद्गृहेगोगणानामधिपोभवेत् ॥६८ ॥ नरस्यशीर्षमादायसाधकोदक्षिणेकरे ॥ वामेनरौधिरम्पात्रङ्गृहीत्वानिशिजा
ग्रतः ॥ ६९ ॥ यावद्रात्रंस्थितोमर्त्त्योराजाभवतिचेहवै ॥ मृतेममगृहम्प्राप्यगणानामधिपोभवेत् ॥ ७० ॥ क्षणमात्रबली
नार्घ्यंःशिरोरक्तङ्करद्वये ॥ गृहीत्वाचिन्तयेद्देवीम्पुरस्तिष्ठतिमानवः ॥ ७१ ॥ सकामानिहसम्प्राप्यदेवीलोकेमहीयते ॥ महा
मायेजगन्नाथेसर्व्वकामप्रदायिनि ॥ ७२ ॥ ददामिदेहरुधिरंप्रसीदवरदाभव ॥ इत्युक्त्वामूलमन्त्रेणनतिपूर्व्वम्विचक्षणः
॥ ७३ ॥ स्वगात्ररुधिरन्दद्यान्मानवःसिद्धसन्निभः ॥ येनात्ममांसंसत्येनददामीश्वरिभूतये ॥ ७४ ॥ निर्व्वाणन्तेनसत्येनदे
हिहँहँनमोनमः ॥ इत्यनेनतुमन्त्रेणस्वमांसंव्विँतरेद्बुधः ॥ ७५ ॥ सौभाग्यंसुखसम्पन्नम्प्रदीपम्परमंरुचिः ॥ दीपयेन्मांसमि

हजंदीपंह्रौँह्रौंनमोनमः॥ ७६॥ इत्यनेनतुमन्त्रेणदीपन्दद्याद्विचक्षणः॥ महानवम्यांशरदिरात्रौस्कन्धविशाखयोः॥७७॥
यवचूर्णमयङ्कृत्वारिपुंमृन्मयमेववा॥ शिराश्छित्वाबलिन्दद्यात्कृत्वातस्यतुमन्त्रतः॥ ७८॥ अनेनैवतुमन्त्रेणखड्गमामन्त्र्य
यत्नतः॥ रक्तक्लिकिलिकिलीघोरघोराघारविहिंसकः॥७९॥ब्रह्मशिष्याम्बिकाशिष्यममुकश्चारिसत्तम्॥ मान्तोविसर्गसहितः
सचबिन्दुयुतोपरः॥८०॥शिरश्छित्वाबलिन्दद्यात्कृत्वातस्यतुमन्त्रतः॥ अनेनैवतुमन्त्रेणबिन्दुनाचसमन्वितः॥८१॥ब्रह्माग्नि
योगचन्द्रेणबिन्दुनाचसमन्वितः॥ फडन्तोबलिषुप्रोक्तःखड्गस्कन्दविशाखयोः॥ ८२॥ रक्तद्रवैःशोचयित्वाकृत्रिमन्तंब्बलिं
रिपुम्॥ कुचन्दनस्यतिलकल्ललाटेविनिवेश्यच॥ ८३॥ रक्तमाल्यांबरङ्कृत्वारक्तवस्त्रधरन्तथा॥ कण्ठेबध्वारक्तसूत्रैर्नां
श्चौशल्यञ्चकृत्रिमम्॥ ८४॥ दत्वोत्तरशिरस्कन्धङ्कृत्वाखड्गेनछेदयेत्॥ शिरस्तस्यततोदद्यात्स्कन्दमन्त्रेणमन्त्रितम्॥८५॥
चतुर्द्दशस्वराग्निभ्यांसम्पृक्तःस्यात्पुरःसरम्॥ परतःपरतःपूर्व्वंश्चन्द्रबिन्दुसमन्वितम्॥ ८६॥ स्कन्दस्यमूलमन्त्रोयन्ते
नतस्मैबलिंसृजेत्॥ चतुर्द्दशस्वराग्निभ्याम्पत्रितीयन्तुपूर्व्ववत्॥ ८७॥ प्रोक्तोविशाखमन्त्रोयन्तेनतस्मैबलिंसृजेत्॥ कुटि
लाक्षौकृष्णपिङ्गवर्णौरक्ताङ्गधारिणौ॥ ८८॥ त्रिशूलङ्करवालञ्चपाणिभ्यान्दक्षिणेतथा॥ बिभ्रतौनृकपालञ्चकर्त्रृकञ्चापि
वामतः॥ ८९॥ त्रिनेत्रोनरमुण्डानाम्मालामुरसिबिभ्रतौ॥ विकटौदशनैर्भ्भीमैर्ग्गणेशौद्वारपालकौ॥ १९०॥ ध्यानेन

चिन्तयेद्देव्याः पुरतः संस्थितां सदा ॥ चैत्रे मासि सिते पक्षे चतुर्द्दश्या विशेषतः ॥ ११ ॥ बलिभिर्म्महिषैश्छागैर्म्मांसैश्च भैरव
रूपिणम् ॥ तोषयेन्मधुभिर्म्मांसैस्तेन तुष्याम्यहं सुत ॥ १२ ॥ चण्डिकाबलिदाने तु बलः शीर्षञ्च लेनच ॥ अभिषिच्य तु म
न्त्रेण मूलेनैव निवेदयेत् ॥ १३ ॥ ईषत्प्राणन्तु बहुधा चलितम्पूर्व्वमाहितम् ॥ वीक्षेत्कापसमृद्धिन्तु सिद्धभावञ्च साधकः
॥ १४ ॥ सितप्रेतोरथस्तेयय्योगँपीठस्य सन्निभः ॥ ध्यायाम्यस्मिन्महामाये सिद्धिम्बोधयते नमः ॥ १५ ॥ अनेनाम
न्त्रितं शीर्षन्नचिराद्यदि वेपते ॥ तत्कार्य्यस्य तदा सिद्धिरसिद्धिस्तु विपर्य्ययात् ॥ १६ ॥ एवन्दद्याद्बलिम्वीरो यथोक्तविधिनामु
ना ॥ बलिदानादेव चतुर्व्वर्ग्गमाप्नोत्यसंशयम् ॥ १७ ॥ एवं बलिप्रदानस्य क्रमे रूपन्तथैव च ॥ कथितो रुधिराध्याय उपचा
राञ्छृणुष्व मे ॥ १८ ॥ ॥ इति कालिकापुराणे बलिदानविवरणं नाम द्विसप्ततितमोध्यायः ॥ ७२ ॥ ॥छ॥ ॥ श्रीभग
वानुवाच ॥ ॥ उपचारान्प्रवक्ष्यामि शृणु षोडश भैरव ॥ यैः सम्यक्तुष्यते देवी देवोप्यन्यो हि भक्तितः ॥ १ ॥ आसनम्प्रथ
मन्दद्यात्पौष्पयन्दारवमेव वा ॥ वाग्रव्वाँ चार्म्मणङ्कौशम्मण्डलस्योत्तरे सृजेत् ॥ २ ॥ यद्देवदीयते पद्मे मण्डलस्य तदुत्सृजे
त् ॥ वाक्पुष्पतोयैः कुसुमव्विँनायच्छादकम्भवेत् ॥ ३ ॥ पद्मस्य तद्बहिर्द्देशे द्वारादौ विनिवेदयेत् ॥ अर्घ्यम्पाद्यञ्चाचमनं स्ना
नीयन्नेत्ररञ्जनम् ॥ ४ ॥ मधुपर्क्कञ्च गन्धञ्च पुष्पम्पद्मे निवेदयेत् ॥ प्रतिमासु च यद्योग्यं गात्रे दातुञ्च तत्तनौ ॥ ५ ॥ दद्यादयो

ग्यम्पुरतोनैवेद्यम्भोजनादिकम् ॥ पौष्ण्यासवय्यँद्विहितय्यँस्यतद्यदिगभंकम् ॥ ६ ॥ निवेदयेत्तदापश्चाद्विपुलंद्वारि चोत्सृजे
त् ॥ पौष्प्यम्पुष्पौघरचितङ्कुशसूत्रादिसय्युँतम् ॥ ७॥ अतिप्रीतिकरन्देव्याममाप्यन्यस्यभैरव ॥ यज्ञकाष्ठसमुद्भूतमास
नम्मसृणंशुभम् ॥ ८ ॥ नोच्छ्रायन्नातिविस्तीर्णमासनव्विँनियोजयेत् ॥ अन्यद्दारुभवञ्चापिदद्यादासनमुत्तमम् ॥९॥ सकण्ट
कङ्क्षीरयुतन्दारुसारविवर्जितम् ॥ चैत्यश्मसानसंम्भूतवर्ज्जयित्वाविभीतकम् ॥१०॥ वल्कलङ्कोषजम्फालव्वँस्त्रमेतत्त्रयम्म
तम् ॥ रोमजकम्बलश्चैतदनेनतुचतुष्टयम् ॥११॥ अनेनरचितन्दद्यादासनञ्चेष्टभूतये ॥ वस्त्रेषुकम्बलंशस्तमासनन्देवतुष्ट
ये॥ १२ ॥ राङ्कवञ्चार्म्मणंश्रेष्ठन्दारवञ्चन्दनोद्भवम् ॥ यच्चासनङ्कुशमयन्तदासनमनुत्तमम् ॥ १३ ॥ सर्व्वेषामपिदेवाना
मृषीणाञ्चयतात्मनाम् ॥ योगपीठस्यसदृशमासनंस्थानमुच्यते ॥ १४ ॥ आसनस्यप्रदानेनसौभाग्यम्मुक्तिमाप्नुयात् ॥
शर्व्वँरोरोहितोरामोन्यङ्कुरङ्कुशशोरुरुः ॥१५॥ एणश्चहरिणश्चेतिमृगानवविधामताः ॥ हरिणश्चापिविज्ञेयःपञ्चभेदोत्रभैरव
॥ १६ ॥ ऋष्यःखड्गोरुरुश्चैवपृषतश्चमृगस्तथा ॥ एतेबलिप्रदानेषुचर्म्मदानेषुकीर्तिताः ॥ १७॥ सर्व्वेषान्तैजसानाञ्चआ
सनंश्रेष्ठमुच्यते ॥ आयसव्वँर्ज्जयित्वातुकांस्यशीशकमेववा ॥ १८ ॥ शिलामयम्मणिमयन्तथारत्नमयम्मतम् ॥ आसनन्दे
वताभ्यस्तुभुक्त्यैमुक्त्यैसमुत्सृजेत् ॥ १९ ॥ अत्रैवसाधकानाञ्चआसनंश्रृणुभैरव ॥ यत्रासीनःपूजयँस्तुसर्व्वसिद्धिमवाप्नु

यात् ॥ २० ॥ ऐन्धनञ्चामणँवाँस्त्रन्तैजसञ्चचतुष्टयम् ॥ आसनंसाधकानाञ्चसततम्परिकीर्तितम् ॥ २१ ॥ तत्सर्व्वम्मास
नंशस्तम्पूजाकर्म्मणिसाधके ॥ नयथेष्टासनोभूयात्पूजाकर्म्मणिसाधकः ॥ २२ ॥ काष्ठादिकासनङ्कुर्य्यात्सतमेवसदाबुधः॥
चतुर्व्विंशत्यङ्गुलेनदीर्घङ्काष्ठासनम्मतम् ॥२३॥ षोडशाङ्गुलविस्तीर्णमुच्छ्रायञ्चतुरङ्गुलम् ॥ षडङ्गुलव्वाँकुर्य्यात्तुनोच्छ्रितञ्चा
तआचरेत् ॥ २४ ॥ पूर्व्वोक्तव्वँर्ज्जयेद्वर्ज्यमासनम्पूजनेष्वपि ॥ वस्त्रन्द्विहस्तान्नोदीर्घंसार्द्धहस्तान्नविस्तृतम् ॥ २५ ॥
नत्र्यङ्गुलात्तथोच्छ्रायंपूजाकर्म्मणिसंश्रयेत् ॥ यथेष्टञ्चार्म्मणङ्कुर्य्यात्पूर्व्वोक्तंसिद्धिदायकम् ॥ २६ ॥ षडङ्गुलाधिकङ्कुर्य्या
न्नोच्छ्रितञ्चकदाचन ॥ काम्बलञ्चार्म्मणंशैलंमहामायाप्रपूजने ॥ २७ ॥ प्रशस्तमासनम्प्रोक्तङ्कामाख्यायास्तथैवच ॥
त्रिपुरायाश्चसततंव्विष्णोश्चापिकुशासनम् ॥ २८ ॥ बहुदीर्घम्बहूच्छ्रायन्तथैवबहुविस्तृतम् ॥ दारुभूमिसमम्प्रोक्तमश्मा
पिसर्व्वकर्म्मणि ॥ २९ ॥ पृथक्पृथक्कल्पयेत्तुबहिर्द्वारिस्तथासनम् ॥ नपत्रमासनङ्कुर्य्यात्कदाचिदपिपूजने ॥ ३० ॥
नप्राण्यङ्गसमुद्भूतमस्थिजंद्विरदादृते ॥ मातङ्गदन्तसञ्जातङ्कामिकेष्वासनञ्चरेत् ॥ ३१ ॥ चार्म्मंपूर्व्वोदितङ्कुर्य्यान्तथाग
न्धमृगस्यच ॥ सलिलेयदिकुर्व्वीतदेवतानाम्प्रपूजनम् ॥ ३२ ॥ तत्राप्यासनआसीनोनोत्थितस्तुकदाचन ॥ तोयेशिला
मयङ्कुर्य्यादासनङ्कौशमेववा ॥३३॥ दारवन्तैजसव्वाँपिनान्यदासनमाचरेत् ॥ आसनारोपसंस्थानंस्थानाभावेतुपूजकः॥

॥ ३४ ॥ आसनङ्कल्पयित्वातुमनसापूजयेज्जले ॥ यद्यासितुन्नसंस्थानंव्विँद्यतेतोयमध्यतः ॥ ३५ ॥ अन्यत्रवातदास्थि
त्वादेवपूजांसमाचरेत् ॥ इत्येतत्कथितम्पुत्रपूज्यपूजकसङ्गतम् ॥ ३६ ॥ आसनम्पाद्यमधुनाशृणुवेतालभैरव ॥ पाद्यार्थमु
दकम्पाद्यङ्केवलन्तोयमेवतत् ॥ ३७ ॥ तत्तैजसेनपात्रेणशङ्खेनापिप्रदापयेत् ॥ धर्म्मार्थकाममोक्षाणांसंस्थानम्पाद्यमिष्य
ते ॥३८॥ तदासनोत्तरंदद्यान्मूलमन्त्रेणसर्व्वतः ॥ कुशपुष्पाक्षतैश्चैवसिद्धार्थैश्चन्दनैस्तथा ॥३९ ॥ तोयैर्ग्गन्धैर्य्यथालब्धै
रर्घन्दद्यात्तुसिद्धये ॥ अर्घ्येणलभतेकामानर्घ्येणलभतेधनम् ॥४०॥ पुत्रायुःसुखमोक्षाणिदानादर्घ्यस्यवैलभेत् ॥ नदद्याद्भा
स्करायार्घ्यंशङ्खतोयैर्व्विचक्षणः ॥ ४१ ॥ तथानशुक्तिपात्रेणविष्णवेर्घ्यन्निवेदयेत् ॥ दद्यादाचमनीयन्तुसुगन्धिसलिलैःशु
भैः ॥४२॥ कर्प्पूरवासितैर्व्वापिकृष्णागुरुविधूपितैः ॥ यथातथासुगन्धैर्व्वाप्रसन्नैःफेनवर्ज्जितैः ॥४३॥ तत्तैजसेनपात्रेणश
ङ्खेनापिप्रदापयेत् ॥ उदकन्दीयतेयत्तुप्रसन्नम्फेनवर्जितम् ॥ ४४ ॥ आचमनायदेवेभ्यस्तदाचमनमुच्यते ॥ केवलन्तो
यमात्रेणतद्वांदद्यान्नमिश्रितम् ॥४५ ॥ वासितन्तुसुगन्धाद्यैःकर्त्तव्यय्यँदिलभ्यते ॥ आयुर्ब्बलय्यँशोवृद्धिंप्रदायाचमनीयक
म् ॥४६॥ लभतेसाधकोनित्यङ्कामाँश्चैवयथोत्थितान् ॥ दधिसर्पिर्जलंक्षौद्रंसिताताभिश्चपञ्चभिः ॥४७॥ प्रोच्यतेमधुपर्क
स्तुसर्व्वदेवौघतुष्टये॥जलन्तुसर्व्वतःस्वल्पंसितादधिघृतंसमम्॥सर्व्वेभ्यश्चाधिकंक्षौद्रम्मधुपर्केप्रयोजयेत॥४८॥ तद्दद्यात्काँ

स्यपात्रेणरौक्मश्वेतमयेनवा ॥ ज्योतिष्टोमाश्वमेधादौपूर्व्वेचेष्टेचपूजने ॥४९॥ मधुपर्क्कःप्रतिष्टोयंसर्व्वदेवौघतुष्टिदः ॥ धर्म्मा
र्थकाममोक्षाणांसाधकःपरिकीर्त्तितः ॥५०॥ मधुपर्क्कःसौख्यभोग्यतुष्टिपुष्टिप्रदायकः ॥ पिष्टातकोथकस्तूरीरोचनङ्कुङ्कुमन्त
था ॥५१॥ गुडःक्षौद्रम्पञ्चगव्यंसर्व्वौषधिगणस्तथा ॥ सितानिर्णेजनन्तैलंस्निग्धस्नेहेनतत्तिलाः ॥ ५२॥ प्रान्तेतोयमितिप्रो
क्तंस्नानीयङ्कल्पकोविदैः ॥ स्वर्णरत्नोदकञ्चैवकर्प्पूराद्यधिवासित् ॥५३॥ तैजसैःकांश्यपात्रैर्व्वाशङ्खैर्व्वातन्निवेदयेत् ॥ मण्ड
लेकेशरेदेयमादित्यप्रतिमासुच ॥ ५४ ॥ शिवलिङ्गेतथाभोगेपीठेदेवतनौतथा ॥ सद्यःस्निग्धेमृन्मयेवासार्प्पिसिन्दूरजेतथा
॥५५॥ श्रीचन्दनप्रतिष्ठेवालेपयेत्प्रतिमातनौ ॥ अन्तिकस्थापितेखड्गेस्नापयेद्दर्प्पणेथवा ॥५६॥ एवन्दद्यातुस्नानीयम्महादे
व्यैविशेषतः ॥ रविविष्णुशिवेभ्योवायत्रतत्रप्रपूजने ॥ ५६ ॥ पूजकःस्नानदानात्तुचिरायुरुपजायते ॥ सम्यक्स्नानप्रदानात्तु
कल्पान्तंस्वर्ग्गभाग्भवेत् ॥५७॥ यदेवदीयतेपाद्यङ्गन्धपुष्पादिकन्तथा ॥ उपचारांस्तथासर्व्वानर्घ्यपात्राहितैर्जलैः ॥५८ ॥
अमृतीकरणाद्यैस्तुसंस्कृतैस्त्वभिषिच्यतैः ॥ प्रदद्यादिष्टदेवेभ्योगृह्णातिचततःस्वयम् ॥५९॥ अर्घ्यपात्राणितैस्तोयैर्व्विनाय
द्विनिवेदनम् ॥ दीयतेचेष्टदेवेभ्यसर्व्वन्तन्निष्फलम्भवेत् ॥ ६० ॥ रागाल्लोभात्प्रमादाद्वाह्यर्घ्यम्पात्रामृतीकृतम् ॥ तोयंश्रुतं
स्यात्पात्रात्तुपुनःकुर्य्यात्तदामृतम् ॥६१॥ स्वल्पावशषेतोयेतुपात्रस्थस्यमृतीकृते ॥ तत्रान्यदुदकन्दद्यात्तत्तेनैवामृतम्भवेत् ॥

॥ ६२ ॥ बहूनियदिपुष्पाणिमालावाप्रचुरायदि ॥ दीयन्तेचार्घ्यपात्रस्थैर्जलैःसंसिच्यचोत्सृजेत् ॥ ६३ ॥ अन्यतोयैर्य्यदुत्सृ
ष्टमर्घ्यपात्रस्थितेतरैः ॥ तन्नगृह्णातीष्टदेवोदत्तंविधिशतैरपि ॥ ६४ ॥ संस्कृतेत्वर्घ्यपात्रेतुनवभिःप्रतिपत्तिभिः ॥ तिष्ठन्ति
सर्व्वतीर्थानिपीयूषाणिचसर्व्वतः ॥ ६५ ॥ तस्मात्तत्रस्थितैस्तोयैरभ्युक्ष्योपचरान्त्सृजेत् ॥ नयोग्यमर्घ्यपात्रेषुनिधायविनि
वेदयेत् ॥ ६६ ॥ इदन्तेभैरवप्रोक्तंषड्क्षैवासनादिकम् ॥ वस्त्रादिदशवक्ष्यामिशृणुविज्ञानवृद्धये ॥ ६७ ॥ इतिश्रीकालिकापु
राणेत्रिसप्ततितमोध्यायः ॥७३॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥ ॥ कार्प्पासकम्बलव्वाँलकक्षौमजव्वँस्त्रमिष्यते ॥ त
त्पूर्व्वम्पूजयित्वैवमन्त्रैर्देवायचोत्सृजेत् ॥ १ ॥ निर्दशम्मलिनञ्जीर्णञ्छिन्नङ्गात्रावलिङ्गितम् ॥ परकीयंत्व्याखुदष्टंसूचीविद्धन्त
थोषितम् ॥ २ ॥ उप्तकेशव्विधौतञ्चश्लेष्ममूत्रादिदूषितम् ॥ प्रदानेदेवताभ्यश्चदैवेपित्र्येचकर्म्मणि ॥ ३ ॥ वर्ज्जयेत्स्वोपयो
गेनयज्ञादावुपयोजने ॥ उत्तरीयोत्तरासङ्गनिचोलोमोदचेलकः ॥ ४ ॥ परिधानञ्चपञ्चैतान्यस्यूतानिप्रयोजयेत् ॥ शाण
वस्त्रन्निशारञ्चतथैवातपवारणम् ॥५॥ चण्डातकन्तथादृश्यम्पञ्चस्यूतान्यदुष्टये ॥ पताकाध्वजकुण्डादौस्यूतव्वँस्त्रम्प्रयोजयेत्
॥ ६ ॥ अन्यत्रावरणादौचतद्विनाशस्यतेनतत् ॥ रक्तङ्कौशेयवस्त्रञ्चमहादेव्यैप्रशस्यते ॥ ७ ॥ पीतन्तथैवकौशेयव्वाँ
सुदेवायचोत्सृजेत् ॥ रक्तन्तुकम्बलन्दद्याच्छिवायपरमात्मने ॥ ८ ॥ विचित्रंसर्व्वदेवेभ्योदेवीभ्योंशुन्निवेदयेत् ॥ कार्प्पा

संसर्व्वतोभद्रन्दद्यात्सर्व्वेभ्यएवच ॥ ९ ॥ नैकान्तरक्तन्दद्यात्तुवासुदेवायचैलकम् ॥ तथानैकान्तरक्तन्तुशिवायविनिवेदय
ते ॥ १० ॥ नीलीरक्तन्तुयद्वस्त्रन्तत्सर्व्वत्रविवर्ज्जितम् ॥ दैवेपैत्र्येत्वोपयोगेवर्ज्जयेत्तुविचक्षणः ॥११॥ नीलीरक्तम्प्रमादात्तुयो
दद्याद्विष्णवेबुधः ॥ निष्फलातस्यतत्पूजातदाभवतिभैरव॥१२॥विचित्रेवाससिपुनर्लग्नन्नीलीविरञ्जितम् ॥ वस्त्रन्दद्यान्नमां
देव्यैनान्यस्मैतुकदाचन ॥ १३ ॥ द्विपदाम्ब्राह्मणोयद्वद्दोपानाव्वाँसवोयथा ॥ तथाभूषणवर्ग्गेषुवस्त्रमुत्तममुच्यते ॥ १४ ॥
वस्त्रेणजीयतेलज्जावस्त्रेणहीयतेत्वघम् ॥ वस्त्रात्स्यात्सर्व्वतःसिद्धिश्चतुर्व्वर्ग्गप्रदञ्चतत् ॥ १५ ॥ वस्त्रान्तेकथितम्पुत्रसर्व्वप्री
तिप्रदायकम् ॥ भोग्यंभूषोत्तमन्नित्यम्भूषणानिशृणुष्वमे ॥ १६ ॥ किरीटञ्चशिरोरत्नङ्कुण्डलञ्चललाटिका ॥ तालपत्रञ्चहार
श्चग्रैवेयकमथोर्म्मिका ॥ १७ ॥ प्रालम्बिकारत्नसूत्रमुत्तङ्गोतर्क्षमालिका ॥ पार्श्वद्योतोनखद्योतोत्यङ्गुलीच्छादकस्तथा ॥
॥ १८ ॥ जूटालकम्बम्माणवकोमूर्द्धतारातलन्तिका ॥ अङ्गदोबाहुवलयःशिखाभूषणलिङ्गिनः ॥ १९ ॥ प्रागण्डबन्धमुद्रा
सनाभिपूरोथमालिका ॥ सप्तकीशृङ्खलञ्चैवदन्तपत्रञ्चकर्णकः ॥ २० ॥ उरुसूत्रंचनीवींचमुष्टिबद्धम्प्रकोर्णकं॥पादाङ्गदंहंसक
श्चनूपरङ्क्षुद्रघटिका ॥२१॥ सुखपण्टमितिप्रोक्ताअलङ्काराःसुशोभनाः ॥ चत्वारिंशदमीप्रोक्तालोकेवेदेतुसौख्यदाः ॥ २२ ॥
अलङ्कारप्रदानेनचतुर्व्वर्गप्रसाधका ॥ एतेषाम्पूजनङ्कृत्वाप्रदद्यादिष्टसिद्धये ॥ २३ ॥ तेषान्दैवतमुच्चार्य्यपूजयेत्तुविचक्ष

णः ॥ शिरोगतानिवादद्यात्सौवर्णानितुसर्व्वदा ॥ २४ ॥ चूडारत्नादिकानीहभूषणानितुभैरव ॥ ग्रैवेयकादिहंसान्तंसौवर्णंरा
जतञ्चवा ॥ २५ ॥ निवेदयेत्तुदेवेभ्योनान्यत्तैजससम्भवम् ॥ रीतिरङ्गादिसञ्जातम्पात्रोपकरणादिकम् ॥ २६ ॥ दद्यादायस
मर्ज्जन्तुभूषणंनकदाचन ॥ घण्टाचापरकुम्भादिपात्रोपकरणादिकम् ॥ २७ ॥ तद्भूषणान्तरेदद्यादस्मात्तदुपभूषणम् ॥ सर्व्व
न्ताम्रमयन्दद्याद्यत्किञ्चितद्भूषणादिकम् ॥ २८ ॥ सर्व्वत्रस्वर्णवत्ताम्रमर्घपात्रेततोधिकम् ॥ पूजार्घपात्रन्नैवेद्याधारपात्रञ्च
पानकम् ॥ २९ ॥ औदुम्बरंसदाविष्णोःप्रीतिदन्तोषदन्तथा ॥ ताम्रेदेवाःप्रमोदन्तेताम्रेदेवाःस्थिताःसदा ॥ ३० ॥ सर्व्वप्रीति
करन्ताम्रन्तस्मात्ताम्रम्प्रयोजयेत् ॥ स्वोपयोगेनरःकुर्य्यांदेवानामपिभैरव ॥ ३१ ॥ ग्रीवोर्द्ध्वदेशेरौप्यन्तुनकदाचिच्चभूषण
म् ॥ प्रावारःपानपात्रञ्चगण्डकोगृहमेवच ॥ ३२ ॥ पर्य्यङ्कादियदन्यच्चसर्व्वन्तदुपभूषणम् ॥ अयोमयम्मृतकांश्यम्मृतेयद्भू
षणम्भवेत् ॥ ३३ ॥ स्वर्णरौप्यस्यचाभावेत्वधःकायेनियोजयेत् ॥ एतेषाम्भूषणादीनाय्यँद्दातुंशक्यतेनरैः ॥ ३४ ॥ त
द्दद्यात्सम्भवेतुसर्व्वमेवप्रदापयेत् ॥ चतुर्व्वर्गप्रदावित्यम्भूषणंसर्व्वसौख्यदम् ॥ ३५ ॥ तुष्टिपुष्टिप्रीतिकरय्यँथाशक्तीष्टयेसृजे
त् ॥ इदव्वाँभूषणम्प्रोक्तंसर्व्वदेवस्यतुष्टिदम् ॥ ३६ ॥ गन्धञ्चसम्यक्शृणुतम्पुत्रौवेतालभैरवौ ॥ चूर्णिकृतोवाघृष्टोवा
दाहाकर्षितएववा ॥ ३७ ॥ रसःसम्मर्दजोवापिप्राण्यङ्गोद्भवएववा ॥ गन्धःपञ्चविधःप्रोक्तोदेवानाम्प्रीतिदायकः ॥ ३८ ॥

गन्धचूर्णङ्गन्धपत्रचूर्णंसुमनसास्तथा ॥ प्रशस्तगन्धयुक्तानांपत्रचूर्णानियानितु ॥ ३९ ॥ तानिगन्धावयानिस्युःसगन्धः
प्रथमस्मृतः ॥ घृष्टोमलयजोगन्धःसचूर्णीकृतमेरुणा ॥ ४० ॥ अगुरुप्रभृतिश्चापियस्यपङ्कःप्रदीयते ॥ गन्धोदृष्टामघृ
ष्टोयन्द्वितीयःपरिकीर्तितः ॥ ४१ ॥ देवदार्व्वगुरुर्ब्रह्मशालसारान्तचन्दनाः ॥ प्रियादीनाञ्चयोदग्ध्वागृह्यतेदाहजोरसः
॥ ४२ ॥ सदाहाकर्षितोगन्धस्तृतीयःपरिकीर्तितः ॥ सुगन्धकरवीबिल्वगन्धीनितिलकन्तथा ॥ ४३ ॥ प्रभृतीनांरसोयो
सौनिःपीड्यपरिगृह्यते ॥ ससम्मर्दोद्भवोगन्धःसम्मर्दजइतीष्यते ॥ ४४ ॥ मृगनाभिसमुद्भूततत्कोषोद्भवएववा ॥ गन्धःप्रा
ण्यङ्गजःप्रोक्तोमोदृदःस्वर्ग्गवासिनाम् ॥ ४५ ॥ कर्प्पूरगन्धसाराद्याःक्षोदेघृष्टेचसंस्थिताः ॥ चन्द्रभागादयश्चापिरसेपङ्के
चसङ्गता ॥ ४६ ॥ गन्धसारंतुसर्व्वरसङ्गन्धादौचप्रयुज्यते ॥ मृगनाभिर्भवेद्दष्टश्चूर्णोप्यन्यस्ययोगतः ॥ ४७ ॥ एवंसर्व्व
स्तुसर्व्वत्रगन्धोभवतिपञ्चधा ॥ घृष्टादिभावादन्योन्यङ्गन्धःप्रीतिकरःपरः ॥ ४८ ॥ गन्धस्यविस्तरोभेदःप्रोक्तःकालीयका
दयः ॥ सर्व्वःपञ्चविधेष्वेवप्रविष्टोभवतिक्षणात् ॥ ४९ ॥ गन्धोमलयजोयस्तुदैवेपैत्र्येचसम्मतः ॥ तत्पङ्कोरसोवापिचूर्णोवावि
ष्णुतुष्टिदः ॥ ५० ॥ सर्व्वेषुगन्धजातेषुप्रशस्तोमलयोद्भवः ॥ तस्मात्सर्व्वप्रयत्नेनदद्यान्मलयजंसदा ॥ ५१ ॥ कृष्णागुरुः
सकर्प्पूरःसहितोमलयोद्भवैः ॥ वैष्णवीप्रीतिदोगन्धःकामाख्यायाश्चभैरव ॥ ५२ ॥ कुङ्कुमागुरुकस्तूरीचन्द्रभागैःसमीकृतैः ॥

त्रिपुराप्रीतिदोगन्धस्तथाचण्ड्याश्चशस्यते ॥५३॥ दैवत्तोद्देशपूर्व्वेणगन्धंसम्पूज्यसाधकः ॥ देवायेद्यापवितरेत्सर्व्वसिद्धिप्रदं सदा ॥ ५४ ॥ गन्धेनलाभतेकामान्गन्धोधर्म्मप्रदःसदा ॥ अर्थानांसाधकोगन्धोगन्धेमोक्षःप्रतिष्ठितः ॥ ५५ ॥ अयव्वाँङ्क थितोगन्धःपुत्रौवेतालभैरवौ ॥ पुष्पाणिदेव्यावैष्णव्याःप्रियाणिशृणुसम्प्रति ॥ ५६ ॥ बकुलैश्चैवमन्दारैःकुन्दपुष्पैःकुरुण्टकैः ॥ करवीरार्क्कपुष्पैश्चशालमलैश्चापराजितैः ॥ ५७॥ दमनैःसिन्धुवारैश्चसुरभीकुरुबकैस्तथा ॥ लताभिर्ब्रह्मवृक्षस्यदूर्व्वाङ्कुरैश्चकोमलैः ॥ ५८ ॥ मञ्जरीभिःकुशानाञ्चबिल्वपत्रैःसुशोभनैः ॥ पूजयेद्वैष्णवीन्देवीङ्कामाख्यान्त्रिपुरान्तथा ॥ ५९ ॥ अन्याश्चयाःशिवाप्रीत्यैजायतेपुष्पजातयः ॥ ताइमाःशृणुकृत्यन्तेमयावेतालभैरव ॥ ६० ॥ मालतीमल्लिकाजातीयूथिकामाधवीतथा ॥ पाटलाकरवीरश्चयवानर्क्कारिकातथा ॥ ६१ ॥ कुब्जकस्तगरश्चैवकर्णिकारोथरोचनाः ॥ चम्पकाम्रातकौबाणोवर्व्वरामल्लिकातथा ॥ ६२ ॥ अशोकोलोध्रतिलकौअटरूषशिरीषकौ ॥ शमीपुष्पश्चद्रोणश्चपद्मोत्पलबकारुणाः ॥ ६३ ॥ श्वेतारुणैस्त्रिसन्ध्येचपलाशःखदिरस्तथा॥ वनमालाथसेवन्तीकुमुतोथिकदम्बकः ॥६४॥ चक्रंकोकनदश्चैवभण्डिलोगैरिकर्णिका ॥ नागकेशरपुन्नागौकेतक्याञ्जलिकातथा ॥ ६५ ॥ दोहदाबीजपूरश्चनमेरुःशालएवच ॥ त्रपुषीचण्डबिल्वश्चझिण्टीपश्चविधास्तथा ॥ ६६ ॥ एवमाद्युक्तकुसुमैःपूजयेद्वरदांशिवाम् ॥ अपामार्ग्गस्यपत्रन्तुततोभृङ्गारपत्रकम् ॥ ६७॥ ततोपिग

न्धिनीपत्रम्बलाहकमतः परम् ॥ तस्मात्खदिरपत्रन्तुवञ्जुलस्तबकस्तथा ॥ आम्रन्तुबकगुछन्तुजबूँपत्रन्ततः परम् ॥ ६८ ॥
बीजपूरथपत्रन्तुततोपिकुशपत्रकम् ॥ दूर्व्वाङ्कुरन्ततः प्रोक्तंशमीपत्रमतः परम् ॥ ६९ ॥ पत्रमामलकन्तस्मादामनंपत्र
मन्ततः ॥ सर्व्वतोबिल्वपत्रन्तुदेव्याः प्रीतिकरम्मतम् ॥ ७० ॥ पुष्पङ्कोकनदम्पद्मय्यँवाबन्धूकएवच ॥ पत्रम्बिल्व
स्यसर्वेभ्योवैष्णवीतुष्टिदम्मनम् ॥ ७१ ॥ सर्व्वेषाम्पुष्पजातीनांरक्तपद्ममिहोत्तम् ॥ रक्तपद्मसहस्रेणयोमालांसम्प्रयच्छ
ति ॥ ७२ ॥ भक्तियुक्तोमहादेव्यैतस्यपुण्यफलंशृणु ॥ कल्पकोटिसहस्राणिकल्पकोटिशतानिच ॥ ७३ ॥ स्थित्वा
ममपुरेश्रीमास्ततोराजाक्षितौभवेत् ॥ पत्रेषुबिल्वपत्रन्तुदेवीप्रीतिकरम्मतम् ॥ ७४ ॥ तत्सहस्रकृतामालापूर्व्ववत्फल
दाभवेत् ॥ किञ्चात्रबहुनोक्तेनसामान्येनेदमुच्यते ॥ ७५ ॥ उक्तानुक्तैस्तथापुष्पैर्जलजैः स्थलसम्भवैः ॥ पत्रैः सर्व्वैर्य्यथा
लाभंसर्व्वौषधिगणैरपि ॥ ७६ ॥ वनजैः सर्व्वपुष्पैश्चपत्रैरपिशिवाय्यँजेत् ॥ पूजयेत्परमेशानीम्पुष्पाभावेपिपत्रकैः ॥ ७७ ॥
पत्राणामप्यभावेतुतृणगुल्मौषधादिभिः ॥ औषधीनामभावेतुतत्फलैरपिपूजयेत् ॥ ७८ ॥ अक्षतैर्व्वाजलैर्व्वापितदभा
वेतुसर्षपैः ॥ सितैस्तस्याप्यलाभेतुमानसीम्भक्तिमाचरेत् ॥ ७९ ॥ राजिदन्तकपत्रैश्चपुष्पौघैरपिपूजयेत् ॥ तुलसीकु
सुमैः पत्रैरर्च्चयेच्छ्रीविवृद्धये ॥ पुरश्चरणकार्य्येषुबिल्वपत्रयुतैस्तिलैः ॥ ८० ॥ साक्षतैः सघृतैर्व्वापिशिवामुद्दिश्ययत्नतः ॥

जुहुयादनलव्वृँद्धंसंस्कृतङ्कामवृद्धये ॥८१॥ सङ्कल्पितःकामसिद्ध्यैसंख्ययायःकृतोजयः ॥ तदन्तेपूजनव्यँत्तुविहितङ्क्रियतेद्वि
जैः ॥८२॥ पुरश्चरणसञ्ज्ञन्तुकीर्त्तितन्द्विजसत्तमैः ॥ तस्मिन्पुराणकेपूर्वंपूर्व्वोक्तैर्व्विस्तरशोदितैः ॥८३॥ विधानैःपूजयेद्देवीङ्का
माख्यांव्वैष्णवीमपि॥यथासम्भवमेवात्रदद्यात्षोडशसाधकः॥८४॥उपचारांस्तथैवोक्तान्विधिकृत्यान्नलङ्घयेत् ॥ संम्पूर्णम्पू
जनङ्कृत्वाकल्पोक्तंशतधाजपेत् ॥८५॥ जपान्तेजुहुयादग्निंहोमान्तेतुबलित्रयम् ॥ त्रिजातीयन्तुवितरेत्तोर्य्यंत्रिकमतःपरम्॥
॥८६॥ पत्नीस्वयव्वाँभ्रातावागुरुर्व्वाविनियोजयेत् ॥ नैवेद्यादीनिसर्व्वाणिसुपुत्रःशिष्यएववा॥८७॥ यज्ञावसानेदद्यात्तुगु
रवेदक्षिणांशुभाम्॥चामीकरन्तिलाङ्गाश्चतदशक्तौतुचेलकम्॥८८॥अष्टम्यांशुक्लपक्षस्यब्रह्मचारीजितेन्द्रियः ॥ नवम्यांव्वाँ
चतुर्दश्याम्महादेव्याःपुरश्चरेत् ॥८९ ॥ आदद्यादुरुवक्तातुविधिनाविस्तरेणतु ॥ कल्पोदितेनसम्पूज्यतिथिष्वेतासुभैरव ॥
॥९०॥सम्पूर्णपूजान्नोकृत्वानदद्यान्मन्त्रमीप्सितम् ॥ नपुरश्चरणव्वाँपिकुर्य्यात्कृत्वावसीदति ॥९१॥निःपूजासातुपुनःसम्पू
र्णर्य्यंदिशक्यते ॥ कल्पोदितम्पूजयितुन्तदाकुर्य्यादतन्द्रितः॥९२॥नचेद्विस्तरशःकर्तुन्देव्याःपूजान्तुभैरव ॥ कल्पोक्तव्वाँन्य
देवस्यतत्रायव्विँधिरुच्यते॥९३॥मार्ज्जनाद्यैस्तुसंस्कृत्यस्थण्डिलेमण्डलल्लिँखेत् ॥ पात्रस्यप्रतिपत्तिन्तुकृत्वादाहम्प्लवन्त
था॥९४॥ध्यायेदात्मानमथचसंस्कृत्याङ्गस्वरूपतः ॥ अङ्गुष्ठाद्येस्त्रपर्य्यन्तन्द्वादशाङ्गस्यशुद्धये॥९५॥ अर्घपात्रेष्ठधाजप्त्वाउ

पचारान्प्रसेचयेत् ॥ आधारशक्तिप्रमुखंमूलवर्णान्प्रयुज्यच ॥ ९६ ॥ हृदिस्थान्देवतान्ध्यात्वाबहिःकृत्यश्चवायुना ॥
आरोप्यमण्डलेदद्यादुपचारान्यथाविधि ॥ ९७॥ पूजयित्वाषडङ्गानितथाष्टौदलदेवताः॥ पुष्पाञ्जलित्रयन्दत्वाजप्त्वास्तुत्वा
प्रणम्यच ॥ ९८ ॥ मुद्रामग्रेप्रदर्श्याथततःपश्चाद्विसर्ज्जयेत् ॥ सर्व्वेषामेवदेवानामेषएवविधिःस्मृतः ॥ ९९ ॥ सम्यक्कल्पोदि
ताम्पूजार्घ्यंदिकर्तुन्नशक्यते ॥ उपचारांस्तथादातुम्पञ्चैतान्वितरेत्तदा ॥ १०० ॥ गन्धम्पुष्पञ्चधूपञ्चदीपन्नैवेद्यमेवच ॥
अभावेपुष्पतोयाभ्यांतदभावेतुभक्तितः ॥ १ ॥ सङ्क्षेपपूजाकथितातथावस्त्रादिकम्पुनः ॥ पुरश्चरणकृत्येचप्रदीपंशृणुभैर
व ॥ २ ॥ दीपेनलोकाञ्जयतिदीपस्तेजोमयःस्मृतः ॥ चतुर्व्वर्गप्रदोदीपस्तस्माद्दीपैर्य्यजेच्छ्रिये ॥ ३ ॥ सततम्पुष्पदी
पाभ्याम्पूजयेद्यस्तुदेवताम् ॥ ताभ्यामेवचतुर्व्वर्गःकथितोनात्रसंशयः ॥ ४ ॥ पुष्पैर्देवाःप्रसीदन्तिपुष्पेदेवाश्चसंस्थिताः
॥ चराचराश्चसकलाःसदापुष्परसास्मृताः ॥ ५ ॥ किञ्चातिबहुनोक्तेनपुष्पस्योक्तिर्मतल्लिका ॥ परञ्ज्योतिःपुष्पगतम्पु
ष्पेनैवप्रसीदति ॥ ६ ॥ त्रिवर्गसाधनम्पुष्पन्तुष्टिश्रीपुष्टिमोददम् ॥ पुष्पमूलेवसेद्ब्रह्मापुष्पमध्येतुकेशवः ॥ ७ ॥ पु-
ष्पाग्रेतुमहादेवःसर्व्वेदेवाःस्थितादले ॥ तस्मात्पुष्पैर्य्यजेद्देवान्नित्यम्भक्तियुतोनरः ॥ ८ ॥ उच्चारितन्नाममात्रंजायते
सर्व्वभूतये ॥ घृतप्रदीपःप्रथमस्तिलतैलोद्भवस्ततः ॥ ९ ॥ सार्षपःफलनिर्य्यासजातोवाराजिकोद्भवः ॥ दधिजश्चाणुज

श्चैवदीपाःसप्तप्रकीर्त्तिताः ॥ ११० ॥ पद्मसूत्रभवादर्भ्भगर्भ्भसूत्रभवाथवा ॥ शणजावादरीवापिफलकोषोद्भवातथा ॥
॥ ११ ॥ वर्त्तिकादीपकृत्येषुसदापञ्चविधाःस्मृताः ॥ तैजसन्दारवंह्लौहंमार्त्तिक्यन्नारिकेलजम् ॥ १२ ॥ तृणध्वजोद्भव
र्व्वापिदीपपात्रम्प्रशस्यते ॥ दीपवृक्षाश्चकर्त्तव्यातैजसाद्यैस्तुभैरव ॥ १३ ॥ वृक्षेषुदीपोदातव्योनतुभूमौकदाचन ॥
सर्व्वंसहावसुमतीसहतेनत्विदन्द्वयम् ॥ १४ ॥ अकार्य्यपादघातश्चदीपतापन्तथैवच ॥ तस्माद्यथातुपृथिवीतापन्नाप्नो
तिवैतथा ॥ १५ ॥ दीपन्दद्यान्महादेव्यैअन्येभ्योपिचभैरव ॥ कुर्व्वन्तम्पृथिवीताप्यौदीपमुत्सृजेन्नरः ॥ १६ ॥ सता
घतापंनरकम्प्राप्नोत्येवशतंसमाः ॥ सुवृत्तवर्त्तिःसुस्नेहःपात्रेमग्रेसुदर्शने ॥ १७ ॥ सूछायेवृक्षकाटौतुदीपन्दद्यात्प्रयत्न
तः ॥ लभ्यतेयस्यतापस्तुदीपस्यचतुरङ्गुलात् ॥ १८ ॥ नसदीपइतिख्यातोव्योघवह्निस्तुसश्रुतः ॥ नेत्राह्लादकरः
स्वार्च्चिर्दूरतापविवर्ज्जितः ॥ १९ ॥ सुशिखःशब्दरहितोनिर्द्धूमोनातिह्रस्वकः ॥ दक्षिणावर्त्तवर्त्तिस्तुप्रदीपःश्रीविवृद्धये
॥ १२० ॥ दीपवृक्षस्थितेपात्रेशुद्धस्नेहप्रपूरिते ॥ दक्षिणावार्तवर्त्यांतुचारुदीप्तःप्रदीपकः ॥ २१ ॥ उत्तमःप्रोच्यतेपुत्रस
र्व्वतुष्टिप्रदायकः ॥ वृक्षेणवर्ज्जितोदीपोमध्यमःपरिकीर्त्तितः ॥ २२ ॥ विहीनःपात्रतैलाभ्यामधमःपरिकीर्त्तितः ॥ शाणर्व्वां
दौरर्व्वांस्त्रजीर्णम्मलिनमेववा ॥ उपयुक्तञ्चनादद्याद्वर्त्तिकार्थन्तुसाधकः ॥ २३ ॥ उपादद्यान्नूनमेवसततंश्रीविवृद्धये ॥

कोषजंरोमजव्वँस्रव्वाँत्तिंकार्थन्नचाददेत् ॥ २४ ॥ नमिश्रीकृत्यदद्यात्तुदीपेस्नेहघृतादिकान् ॥ कृत्वामिश्रीकृतंस्नेहंतामिश्र
न्नरकव्व्रँजेत् ॥ २५ ॥ वसामज्जास्थिनिर्य्यासैःस्नेहैःप्राण्यङ्गसम्भवैः ॥ प्रदीपन्नैवकुर्य्यात्तुकृत्वापङ्केऽवसीदति ॥ २६ ॥ अ
स्थिपात्रेथवापच्येदुर्ग्गन्धास्थिपवासिनि ॥ नैवदीपःप्रदातव्योविबुधःश्रीविद्धये ॥ २७ ॥ नैवनिर्व्वापयेद्दीपङ्कदाचिदपि
यत्नतः ॥ सततल्लँक्षणोपेतन्देवार्थमुपकल्पितम् ॥ २८ ॥ नहरेदज्ञानतोदीपन्तथालोभादिनानरः ॥ दीपहर्त्ताभवेदन्धः
काणोनिर्व्वापकोभवेत् ॥ २९ ॥ उद्दीप्तदीप्तप्रतिमःकाष्ठकाण्डसमुद्भवः ॥ बिल्वेध्मोद्भवमेवाथदीपालाभेनिवेदयेत् ॥ ३० ॥
उन्मुकन्नैवदीपार्थेकदाचिदपिचोत्सृजेत् ॥ प्रसन्नार्थन्तुतन्दद्यादुपचाराद्बहिष्कृतम् ॥ ३१ ॥ एवव्वाँङ्कांथतोदीपोधूपञ्चशृणुतं
सुतौ ॥ नासाक्षिरन्ध्रसुखदःसुगन्धोतिमनोहरः ॥ ३२ ॥ दह्यमानस्यकाष्ठस्यप्रयतस्येतरस्यच ॥ परागस्याथवाधूमोनि
स्तापोयस्यजायते ॥ ३३ ॥ सधूपइतिविज्ञेयोदेवानान्तुष्टिदायकः ॥ राशीकृतैर्न्नचैकत्रतैर्द्दव्यैःपरिपूजयेत् ॥ ३४ ॥ ओघा
न्निवत्तताकृत्वानतत्फलमवाप्नुयात् ॥ श्रीचन्दनञ्चसरलःशालःकृष्णागुरुस्तथा ॥ ३५ ॥ उदयःसुरथस्कन्दोरक्तविद्रुम
एवच ॥ पीतशालःपरिमलोविमर्दीकाशलस्तथा ॥ ३६ ॥ नमेरुर्देवदारुश्चबिल्वसारोथखादिरः ॥ सन्तानःपारिजातश्चहरि
चन्दनवल्लभौ ॥ ३७ ॥ वृक्षेषुधूपाःसर्व्वेषाम्प्रीतिदाःपरिकीर्तिताः ॥ अरालःसहसूत्रेणश्रीवासःपट्टवासकः ॥ ३८ ॥ कर्प्पू

र:श्रीकरश्चैवपराग:श्रीहरामलौ ॥ सर्व्वौषधीवज्ञातीववराहश्चूर्णउत्कल:॥३९॥जातीकोषस्यचूर्णञ्चगन्धःकस्तूरिकातथा ॥
क्षोदेवृत्तेचगदिताधूपाएतेउदाहृत: ॥४०॥ यक्षधूपोवृक्षधूप:श्रीपिष्टोऽगुरुझर्झर:॥ पत्रिवाह:पिण्डधूप:सुगोल:कण्ठएवच
॥४१॥ अन्योन्ययोगानिर्य्यासाधूपाएतेप्रकीर्तिता: ॥ एतैर्व्विधूपयेद्देवान्धूमिभि:कृष्णवर्त्मना॥४२॥येषान्धूमोद्भवैर्घ्राणैस्तु
ष्टिङ्गच्छन्तिजन्तव: ॥ निर्य्यासश्चपरागश्चकाष्ठङ्गन्धन्तथैवच ॥ ४३ ॥ कृत्रिमश्चेतिपञ्चैतेधूपा:प्रीतिकरापरा: ॥ नयक्षधूप
व्विँतरेन्माधवायकदाचन ॥ ४४ ॥ नरक्तव्विँद्रुमंमर्त्यंसुरथङ्कद्रिलन्तथा ॥ यक्षधूप:पुत्रिवाह:पिण्डधूप: सुगोलक: ॥
॥ ४५ ॥ कृष्णागुरु:सकर्प्पूरोमहामायाप्रिय:स्मृत: ॥ वृकधूपेनवादेवीम्महामायाम्प्रपूजयेत् ॥ ४६ ॥ मेदोमज्जासमायु
क्तान्नधूपान्विनियोजयेत् ॥ परकीयाँस्तथाघ्रातांस्तेपिकृत्याभिमर्दितान् ॥४७॥ पुष्पन्धूपञ्चगन्धञ्चउपचाराँस्तथापरान् ॥
घ्रात्वानिवेदयेद्देवेभ्योनरोनरकमाप्नुयात् ॥ ४८ ॥ नभूमौवितरेद्धूपंनासनेनघटेतथा ॥ यथातथाधारगतङ्कृत्वातद्धिनिवेदयेत् ॥
॥ ४९ ॥ रक्तविद्रुमशालौचसुरथ:सूरलस्तथा ॥ सन्तानकोनमेरुश्चकालागुरुसमन्वित: ॥ ५० ॥ जातीकोषाक्षसंयुँक्तो
धूप:कामेश्वरीप्रिय: ॥ त्रिपुण्यायास्तथैवायम्मातृणामपिनित्यश: ॥ ५१ ॥ सर्व्वेषाम्पीठदेवानांरुद्रादीनाञ्चपुत्रक ॥ एषवां
कथितोधूप:शृणुतन्नेत्ररञ्जनम् ॥५२॥ येनतुष्यतिकामाख्यात्रिपुरावैष्णवीतथा ॥ सौवीरञ्जाम्बलन्तुत्थम्मयूरग्रीवकन्तथा॥

॥ ५३ ॥ दार्व्विकामेघनीलश्च अञ्जनानिभवन्तिषट् ॥ सवदूपश्चसौवीरय्याँम्बलप्रस्तरन्तथा ॥ ५४ ॥ मयूरग्रीवकंरत्न
म्मेघनीलस्तुतैजसम् ॥ घृष्टानिगाद्यचैतानिशिलायान्तेजसेथवा ॥ ५५ ॥ प्रदद्यात्सर्व्वदेवेभ्योदेवीभ्यांश्चापिपुत्रक ॥ घृ
ततैलादियोगेनताम्रादौदीपवह्निना ॥ ५६ ॥ यदञ्जनञ्जायतेतुदार्व्विकापरिकीर्त्तिता ॥ सर्व्वाभावेतुतद्दद्याद्देवीभ्योदाहजा
ञ्जनम् ॥ ५७ ॥ महामायाजगद्धात्रीकामाख्यात्रिपुरातथा ॥ आप्नुवन्तिमहातोषंषड्भिरेभिःसदाञ्जनैः ॥ ५८ ॥ विधवा
नाञ्जनङ्कुर्य्यान्महामायार्थमुत्तमम् ॥ नादत्तेत्वञ्जनन्देवीवैष्णवीविधवाकृतम् ॥ ५९ ॥ नमृत्पात्रेयोजयेत्तुसाधकोनेत्ररञ्ज
नम् ॥ नपूजाफलमाप्नोतिमृत्पात्रविहिताञ्जनैः ॥ ६० ॥ चतुर्व्वर्ग्गप्रदोधूपःकामदन्नेत्ररञ्जनम् ॥ तस्माद्द्वयमिदन्दद्याद्दे
वेभ्योभक्तितोनरः ॥ ६१ ॥ इतिवाङ्गदितोधूपस्तथोक्तन्नेत्ररञ्जनम् ॥ नैवेद्यन्तुमहादेव्याःशृण्वैकाग्रमनाधुना ॥ ६२ ॥ इ
तिश्रीकालिकापुराणेचतुःसप्ततितमोध्यायः ॥ ७४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ निवेदनीयय्यँद्द्रव्यम्प्रशस्तम्प्र
यतन्तथा ॥ तद्भक्ष्याद्यम्पञ्चविधन्नैवेद्यमितिगद्यते ॥ १ ॥ भक्ष्यम्भोज्यञ्चलेह्यञ्चपेयञ्चोष्यञ्चपञ्चमम् ॥ सर्व्वत्रचैतन्नैवे
द्यमाराध्येष्टेनिवेदयेत् ॥ २ ॥ तेषुप्रियतरन्देव्याःकथयेशृणुतंस्तुवाम् ॥ भक्ष्यादिपञ्चकैर्द्देवीदत्तैरेवाभितुष्यति ॥ ३ ॥
नादत्तेविधिवत्किञ्चिद्दत्तञ्चैतन्नविद्यते ॥ लाङ्गलञ्चकपित्थञ्चद्राक्षाङ्क्रमुकमेवच ॥ ४ ॥ करकव्वँदरङ्कोलङ्कुष्माण्डम्पनसन्त

था ॥ बकुलञ्चमधूकञ्चरसालाम्रातकोद्भवम् ॥ ५ ॥ आक्षोडम्पिण्डखर्जूरङ्करुणंश्रीफलन्तथा ॥ औदुम्बरञ्चपुन्नागम्भा
धवङ्कर्कटीफलम् ॥ ६ ॥ जाम्बवंपिण्डखर्ज्जूरम्बीजपूरञ्चजम्भलम् ॥ हरीतकीमामलकंषड्विधन्नागरङ्गकम् ॥ ७ ॥ दे
वकम्मधुकम्शीतम्पटोलङ्क्षीरवृक्षजम् ॥ पाटलंशालकेकुम्भमग्निजङ्कदलीफलम् ॥ ८ ॥ तिन्दुकङ्कुसुमम्पीतङ्कारविन्दङ्क
रूषकम् ॥ गर्भावर्त्तञ्चतत्पुष्पङ्क्षीरस्राव्यमनङ्गजम् ॥ ९ ॥ कुमुदानाम्पङ्कजानाम्फलानिविविधानिच ॥ वन्यानांसकलैर्दे
वीम्फलैःपुष्पैःप्रपूजयेत् ॥ १० ॥ ऋतेश्लेष्मातकव्विम्बशैलकव्वैष्णवीन्तथा ॥ सर्व्वेषाम्फलजातीनाम्मध्येदेवीप्रियम्फ
लम् ॥ ११ ॥ लाङ्गलम्मातुलङ्गञ्चकरमर्दंरसालकम् ॥ एवम्फलानिदेयानिकामाख्यायैचभैरव ॥ १२ ॥ त्रिपुरायैतथा
सम्यक्पीठदेवीभ्यएवच ॥ शृङ्गाटकङ्कशेरुञ्चशालूकञ्चमृडालकम् ॥ १३ ॥ शृङ्गरकङ्काञ्चनञ्चस्थूलङ्कन्दम्बकूलकम् ॥ एव
मादीनिकन्दानिदेव्यैसर्व्वाणिचोत्सृजेत् ॥ १४ ॥ परमान्नम्पिष्टकञ्चयावकङ्कृशरन्तथा ॥ मोदकम्पृथुकादीनिकन्दपक्वा
निचोत्सृजेत् ॥ १५ ॥ हविशाल्योदनन्दिव्यमाज्ययुक्तंसशर्करम् ॥ निवेदयेन्महादेव्यैसर्व्वाणिव्यञ्जनानिच ॥ १६ ॥ क्षी
रादीन्यथगव्यानिमाहिष्याणिचसर्व्वशः ॥ अजाविकमृगाणाञ्चक्षीरादीनिनिवेदयेत् ॥ १७ ॥ मध्वादीनिचसर्व्वाणिगुडधा
नांशितान्तथा ॥ अन्नानिचैवपानानिमांसानिविनिवेदयेत् ॥ १८ ॥ सर्व्वंसुरभिगन्धाढ्यंव्यञ्जनंसुमनोहरम् ॥ शाकमां

सादिसम्भूतम्महादेव्यैनिवेदयेत् ॥ १९ ॥ आमिषम्परमान्नञ्चदधिसर्पिसशर्करम् ॥ महादेव्यैनिवेद्याथवाजिमेधफल
ल्लभेत् ॥ २० ॥ सितासम्मिश्रितान्दत्वासुरामधुसमन्विताम् ॥ देवीलोकेचिरंस्थित्वाराजाक्षितितलेभवेत् ॥ २१ ॥ ला
ङ्गलङ्कमुकन्दत्वारुचकङ्करमर्दकम् ॥ सौभाग्यमतुलम्प्राप्यदेवीलोकेमहीयते ॥ २२ ॥ माषान्मुद्गान्मसूरांश्चतिलान्मङ्गाँ
स्तथैवच ॥ यवादीन्यथसर्व्वाणियथायोग्यन्निवेदयेत् ॥ २३ ॥ यथायथाभवेद्भक्ष्यंयथाद्रव्यन्तथातथा ॥ संस्कृत्यवे
शवाराद्यैर्म्महादेव्यैनिवेदयेत् ॥ २४ ॥ महावीरोमुनिर्व्वापिब्राह्मणश्चेतरोथवा ॥ यद्यद्भक्ष्यंस्वमर्थन्तुप्रकल्प्यंस्याद्यथा
यथा ॥ २५ ॥ तथातथामहादेव्यैभक्तियुक्तोनिवेदयेत् ॥ संस्कार्य्याण्यथसंस्कृत्ययथासंस्कारकम्भवेत् ॥ २६ ॥ संस्का
र्य्यैश्चयथातस्यात्तत्तद्दद्यात्तथातथा ॥ यत्पूतिगन्धसय्युँक्तन्दग्धम्भोज्यविवर्जितम् ॥ २७ ॥ तदुक्तमपिनोदद्यान्महादे
व्यैकदाचन ॥ ताम्बूलङ्गन्धसय्युँक्तङ्कर्पूरादिविवासितम् ॥ २८ ॥ सञ्चूर्णैर्ज्जलजानाञ्चसंस्कृतर्व्विंनिवेदयेत् ॥ बलिदानेषु
विहितायएवमृगपक्षिणः ॥२९॥ तेषांमांसानिमत्स्यानाम्मांसानिचनिवेदयेत् ॥ खड्गवार्ध्रीणसच्छागमांसैर्म्मिश्रीकृतैकृतम्
॥ ३० ॥ व्यञ्जनस्वादुगन्धाढ्यव्वाँसितंसुमनोहरम् ॥ सकृद्दत्वामहादेव्यैसार्व्वभौमोनृपोभवेत् ॥ ३१ ॥ मूलकैरेणमांसेन
लोहपात्रेसुसंस्कृतम् ॥ व्यञ्जनङ्गन्धिनन्दत्वादेवीलोकमवाप्नुयात् ॥३२॥ खर्ज्जूरपिण्डखर्ज्जूरयवचूर्णञ्चसाज्यकम् ॥ वैष्ण

ण्यैविनिवेद्यैवराजसूयफलल्लँभेत् ॥ ३३ ॥ कृशरान्नप्रदानेनसौभाग्यमतुलम्भवेत् ॥ दत्वैवनारिकेलाम्बुवह्निष्टोमफलल्लँभे
त् ॥३४॥ जाम्बवल्लवलीधात्रीश्रीफलानिनिवेद्यच ॥ वह्निष्टोमफलल्लँब्ध्वादेवीलोकमवाप्नुयात् ॥ ३५॥ द्राक्षांसितासमायु
क्तान्नागरङ्गकसय्युँताम् ॥ विनिवेद्यमहादेव्यैलक्ष्मीवान्रूपवान्भवेत् ॥ ३६ ॥ धानाश्चपृथुकन्देव्यैदत्वाथश्रीमवाप्नुयात् ॥
इक्षुदण्डम्मुमद्दण्डंनवनोतन्निवेद्यच ॥ ३७॥ सौभाग्यमुत्तलम्प्राप्यदेवीलोकेमहीयते ॥ नवनीतसमायुक्तन्तिलन्देव्यैनि
वेद्यच ॥ ३८ ॥ इहकामानवाप्यैवमृतोमोक्षमवाप्नुयात् ॥ अभक्ष्यवर्ज्जंसर्व्वान्नंण्यँअनेनसमन्वितम् ॥ ३९ ॥ भोज्य
वत्परिकल्प्याथमहादेव्यैनिवेदयेत् ॥ रत्नतोयसमायुक्तंसलिलन्नारिकेलजम् ॥ ४० ॥ क्षीराज्यमधुभिर्म्मिश्रंसितादधि
समन्वितम् ॥ यस्तैजसेनपात्रेणपेयन्देव्यैनिवेदयेत् ॥ ४१ ॥ भक्तिप्रवणचित्तेनतस्यपुण्यफलंशृणु ॥ कल्पकोटिसह
स्राणिकल्पकोटिशतानिच ॥ ४२ ॥ स्थित्वादेवीपुरेधीरःसार्व्वभौमोभवेत्क्षितौ ॥ ततःपरन्तुकैवल्यमाप्नोतिचयथेच्छया
॥ ४३ ॥ कलायश्चसनीवारङ्कथितन्दधिसय्युँतम् ॥ महादेव्यैनिवेद्यैवकाममिष्टमवाप्नुयात् ॥ ४४ ॥ मरीचम्पिप्पलीको
षश्चीरकतन्तुभन्तथा ॥ संस्कारेचसमक्षेचमहादेव्यैनिवेदयेत् ॥ ४५ ॥ तिंतिडींखण्डसंय्युँक्ताम्भक्तियुक्तोनिवेद्यच ॥
ज्योतिष्टोमफलल्लँब्ध्वादेवीलोकमवाप्नुयात् ॥ ४६ ॥ राजमाषम्मसूरञ्चपालङ्कञ्चाथपोतिकाम् ॥ कालशाकङ्कलापञ्चब्रा

ह्रीमूलकमेवच ॥ ४७ ॥ वास्तूकञ्चकलम्बीञ्चकञ्चुकंहिलमोचिकाम् ॥ चक्रंव्विँद्रुमपत्रञ्चतथैवचपुनर्न्नवाम् ॥ ४८ ॥ शाका
नेतान्महादेव्यैयोजयेद्भक्तिसय्युँतः ॥ सोतुलांश्रियमाप्नोतिममलोकेमहीयते ॥ ४९ ॥ श्रद्धापरीष्टिसंस्कारभक्तिद्रव्याभि
सम्भ्रमम् ॥ रागाधिक्यात्फलाधिक्यंहीनाद्धैहीनताव्व्रँजेत् ॥ ५० ॥ मन्त्रकालविरुद्धानिनैवेद्यानिकदाचन ॥ देवेभ्योनोप
युञ्जीतगुरुताताहितानिच ॥ ५१ ॥ राजतेवाथसौवर्णेताम्रेवाप्रस्तरेपिच ॥ पद्मपत्रेथवादद्यान्नैवेद्यम्मत्प्रियाप्रियम् ॥ ५२ ॥
तैजसेषुचपात्रेषुसौवर्णन्तम्रामेववा ॥ प्राशनार्थमुपादद्यादर्घ्यपात्रार्थमेववा ॥ ५३ ॥ यज्ञदारुमयव्वाँपिपात्रंमध्यममिष्य
ते ॥ सर्व्वालाभेतुमाहेयंस्वहस्तघटितय्यँदि ॥ ५४ ॥ एतद्वाङ्कथितौपुत्रौनैवेद्यवैष्णवीप्रियम् ॥ कामाख्यायास्तथादेव्यात्रिपु
रायाविशेषतः ॥ प्रदक्षिणनमस्कारौसाम्प्रतंशृणुतय्युँवाम् ॥ ५५ ॥ ॥ इतिश्रीकालिकापुराणेपञ्चसप्ततितमोध्यायः ॥ ७५ ॥
॥ श्रीभगवानुवाच ॥ ॥ प्रसार्य्यदक्षिणंहस्तंस्वयंनम्रशिराःपुनः ॥ दक्षिणन्दर्शयन्पार्श्वम्मनसापिचदक्षिणः ॥ १ ॥ स
कृत्त्रिव्वाँवेष्टयेयुर्देव्याःप्रीतिःप्रजायते ॥ सचप्रदक्षिणोज्ञेयःसर्व्वदेवौघतुष्टिदः ॥ २ ॥ अष्टोत्तरशतय्यँस्तुदेव्याःकुर्य्यात्प्रदक्षि
णम् ॥ ससर्व्वकाममासाद्यपश्चान्मोक्षमवाप्नुयात् ॥ ३ ॥ मनसापिचयोदद्याद्देव्यैभक्त्याप्रदक्षिणम् ॥ प्रदक्षिणाद्यमगृहेनर
काणिनपश्यति ॥ ४ ॥ कायिकोवाग्भवश्चैवमानसस्त्रिविधःस्मृतः ॥ नमस्कारःश्रुतस्तज्ज्ञैरुत्तमाधममध्यमः ॥ ५ ॥ प्रसार्य्य

पादौहस्तौचपतिताद्दण्डवत्क्षितौ॥जानुभ्यामवनिङ्गत्वाशिरसास्पृश्यमेदिनीम्॥क्रियतेयोनमस्कारउत्तमःकायिकस्तुसः॥
॥ ६ ॥ जानुभ्यांसक्षितिंस्पृष्ट्वाशिरसास्पृश्यमेदिनीम्॥ क्रियतेयोनमस्कारोमध्यमःकायिकःस्मृतः॥ ७॥ पुटीकृत्यकरौशी
र्षेदीयतेयद्यथातथा॥ अस्पृष्ट्वाजानुशीर्षाभ्याङ्क्षितिंसोऽधमउच्यते ॥ ८ ॥ यास्वयङ्गद्यपद्याभ्याङ्घटिताभ्यान्नमस्कृतिः॥
क्रियतेभक्तियुक्तेनवाचिकस्तूत्तमस्तुसः॥ ९॥ पौराणिकैर्व्वैदिकैर्व्वामन्त्रैर्व्वाक्रियतेनतिः॥ समध्यमोनमस्कारोभवेद्वाच
निकःसदा॥ १०॥ यत्तुमानुषवाक्येननमनङ्क्रियतेसदा॥ सवाचिकोऽधमोज्ञेयोनमस्कारेषुपुत्रकौ॥ ११॥ इष्टमध्यानिष्ठ
गतैर्म्मनोभिस्त्रिविधम्पुनः॥नमनम्मानसम्प्रोक्तमुत्तमाधममध्यमम्॥ १२॥ त्रिविधेचनमस्कारेकायिकश्चोत्तमःस्मृतः॥का
यिकैस्तुनमस्कारैर्देवास्तुष्यन्तिनित्यशः ॥ १३ ॥ अयमेवनमस्कारोदण्डादिप्रतिनामभिः॥ प्रणामइतिविज्ञेयःसपूर्व्व
म्प्रतिपादितः॥ १४ ॥ मनसापिचयोदद्याद्देव्यैभक्त्याप्रदक्षिणम्॥ सदक्षिणेयमगृहेनरकाणिनपश्यति ॥ १५॥ देव
मानुषगन्धर्व्वायक्षराक्षसपन्नगाः॥ नमस्कारेणतुष्यन्तिमहात्मानःसमन्ततः॥ १६॥ नमस्कारेणलभतेचतुर्व्वर्गम्महाम
तिः॥ सर्व्वत्रसर्व्वसिद्ध्यर्थंनतिरेवप्रशस्यते॥ १७॥ नत्याविजयतेलोकान्नत्यायुरपिवर्द्धते॥ नमस्कारेणदीर्घायुरच्छिन्नालभ
तेप्रजाः॥ १८॥ नमस्कुरुमहादेव्यैप्रदक्षिणमथोकुरु॥ नैवेद्यन्देहिनितरामितियोभाषतेमुहुः॥ १९॥ सोपिकामानवाप्येह

ममलोकेप्रमोदते ॥ विदधातिचनैवेद्यम्महादेव्यैसुभक्तिमान् ॥२०॥ दातुम्प्रतिनरःसोपिदेवीलोकमवाप्नुयात् ॥ इतिवांकथि
ताःसम्यगुपचारास्तुषोडश ॥ २१ ॥ किमन्यद्रुचितम्वान्तत्कथयिष्यामिपृच्छतोः ॥२२॥ इतिकालिकापुराणेषोडशोपचार
निर्णयेषट्सप्ततितमोध्यायः ॥ ७६ ॥ ॥श्रीभगवानुवाच ॥ ॥ कामाख्यायाश्चमाहात्म्यंशृणुतञ्चवदामिवाम् ॥ साङ्गन्त
त्सरहस्यञ्चशृणुवेतालभैरव ॥ १ ॥ एकदागरुडेनाशुविष्णुर्विष्णुपरायणौ ॥ गच्छन्देवीन्तुकामाख्यान्नीलस्थामाससाद
ह ॥ २॥ आसाद्यतङ्गिरिश्रेष्ठमवज्ञायसकेशवः ॥ गच्छगच्छेतिगरुडञ्चोदयामासतङ्गतौ ॥ ३ ॥ तञ्चदेवीमहामायाकामा
ख्याजगताम्प्रसूः ॥ गरुडेनसमङ्कृष्णस्तम्भयामासरोदसि ॥ ४ ॥ सतुगन्तुम्महामायामाययापरिमोहितः ॥ नगन्तुमथ
वागन्तुमशकद्द्ववत्स्थितः ॥ ५ ॥ अशक्तङ्गरुडन्दृष्ट्वागमनेगरुडध्वजः ॥ क्रुद्धस्थम्पर्व्वतश्रेष्ठमुत्सारयितुमुद्यतः ॥ ६ ॥ ततः
कराभ्यान्तंशैलङ्क्रोडीकृत्यजगत्पतिः ॥ अमूत्क्षमश्चालयितुंमनागपिनकेशवः ॥ ७ ॥ तञ्चिचालयिषुंशैलङ्कामाख्याक्रोधत
त्परा ॥ सिद्धसूत्रेणवैकुण्ठम्बबन्धगरुडेनह ॥ ८ ॥ तम्बद्ध्वासिद्धसूत्रेणग्राहोग्रेलवणार्णवे ॥ चिक्षेपहेलयादेवीसंक्षेपात्प्रापत
त्तलम् ॥ ९ ॥ तंसागरतलम्प्राप्तम्पुनरेवस्वमायया ॥ यन्त्रयित्वासमाक्रम्यजग्राहाब्धितलस्थितम् ॥ १० ॥ सप्रयत्ने
नमहतानोत्प्लुतिङ्कर्त्तुमिष्टवान् ॥ महायत्नम्प्रकुर्व्वाणःपुनरुन्मज्जनेहरिः ॥ ११ ॥ तस्यासारम्प्रसारञ्चकामाख्याप्रत्यपे

धयत् ॥ ज्ञानोद्गमनमप्यस्यसादेवीप्रत्यपेधयत् ॥१२॥ ततःप्रज्ञानरहितःप्रसारासारवर्जितः ॥ गरुडेनसमन्तोयंतलेशीर्णां
मसच्चिरम् ॥ १३ ॥ मार्ग्गमाणस्तुतंस्रष्टासागरान्तरसंस्थितम् ॥ हरिमासादयामासविशीर्णम्प्राकृतय्यथा ॥१४॥ तमासा
द्यसताक्ष्र्यन्तुस्रष्टालोकपितामहः ॥ हस्ताभ्यान्तंसमादायवोल्लावयितुमिष्टवान् ॥१५॥ तमुल्लावयितुंशक्तोनाभूल्लोकपिता
महः ॥ स्वयञ्चदेवीमायाभिर्बद्धःसन्विस्मयनूस्थितः॥१६॥ मार्ग्गमाणास्तुतौसर्व्वेदेवाःशक्रपुरोगमाः ॥ चिरेणचाऽथकाले
नसमासेदुर्ज्जलान्तरे ॥ १७॥ तावासाद्यततःसर्व्वेसुराःशक्रपुरोगमाः ॥ समुल्लावयितुय्यँत्नञ्चक्रुर्न्नाशक्नुवंश्चते ॥१८॥ ततः
सर्व्वेपितेदेवामोहितामाययाभृशम् ॥ विधिविष्णूस्थितौयद्वत्तद्वत्तेतत्रसंस्थिताः ॥ १९ ॥ मार्ग्गमाणोथतान्सर्व्वान्देवान्देव
गुरुस्तदा ॥ बृहस्पतिर्म्मौहिमवत्यासदसानुसंस्थितम् ॥ २० ॥ समासाद्यसदेवानाँवृत्तांन्तन्देवपूजितः ॥ पृष्टवान्सादरं
सम्यक्स्तुत्वानत्वायथाविधि ॥ २१ ॥ गुरुरुवाच ॥ महादेवजगद्धामजगत्प्रशमकारण ॥ शक्रादिन्मार्ग्गमाणोहन्देवाँस्त्वां
समुपस्थितः ॥ २२ ॥ ब्रह्माविष्णुश्चनब्रह्मसदनेनापिनाकतः ॥ संस्थितौनापिकुत्रापिज्ञायेतेत्वन्यदायथा ॥ ३३ ॥ 
तमिमंसंशयन्देवछिन्धित्वन्देवदेवताः ॥ कुत्रतिष्ठन्तिकस्माद्वातथाभूत्वाव्यवस्थिताः ॥२४॥ अनुयास्यामितान्सर्व्वानुपदे
शात्तवप्रभो ॥ तेषांस्थितिन्त्वङ्कथययदितेवर्ततेदया ॥ २५ ॥ तस्यतद्वचनंश्रुत्वातदुद्देशमहम्पुनः ॥ तत्सर्व्वमुक्तवान्कर्म्मथ

थाबद्धाश्चमायया ॥ २६ ॥ अवज्ञातामहादेवीमहामायाजगन्मयी ॥ तेनतन्माययाबद्धोविष्णुस्तिष्ठतिसागरे ॥ २७॥ तम्मा
र्ग्गमाणास्त्रिदशाब्रह्माद्याःमाययापुनः ॥ निबद्धानिकटेतस्यस्थिताश्चात्यर्थसंय्यँताः ॥ २८॥ ताँस्तुमार्ग्गयितुय्याँमियदि
हत्वम्मयाविना ॥ बद्धस्तथैवत्वञ्चापिनायातुभविताप्रभुः॥२९ ॥ तस्माद्गच्छाम्हन्तत्रयत्रास्तेगरुडध्वजः ॥ ब्रह्मेन्द्राद्यास्त
थागुप्तान्मोचयिष्येचतान्क्रमात् ॥ ३० ॥ इत्युक्त्वागुरुणासार्द्धंसम्भूयसवृषध्वजः ॥ देवौघायत्रतिष्ठन्तिगतस्तत्रमहेश्वरः ॥
॥ ३१ ॥ तत्रगत्वामहादेवोविष्णुमाभाष्यवेधसम् ॥ सर्व्वांस्तान्परिपप्रच्छकिमर्थंसंस्थितास्त्विह ॥ ३२ ॥ गतागतविही
नाश्चजडवज्ज्ञानवर्ज्जिताः ॥ किमर्थमभवन्देवास्तन्मेभाषन्तुसम्प्रति ॥ ३३॥ तस्यतद्वचनंश्रुत्वामहादेवस्यकेशवः ॥ शनैर्भ्म
र्गमुवाचेदम्ब्रह्मादीनाम्पुरस्तदा ॥३४॥ भगवानुवाच ॥ नीलकूटस्यशिखराद्दूर्द्ध्वभागेनगच्छता ॥ वियतागरुडस्थेनमयानी
लोमहागिरिः ॥३५॥ धृतःकरेणचोद्वत्तुङ्गरुडागतिवारणे ॥ तत्रमांसामहामायाकामाख्याकामरूपिणी ॥ ३६॥ योगनिद्रास्व
यन्धृत्वाचिच्छेदाम्बुधिपुष्करे ॥ ततोहन्तलमासाद्यतोयराशेःसवाहनः ॥ ३७ ॥ पतितोनिवसाम्यत्रचिरमन्धकसूदन ॥
निवसामिचिरञ्चाहमत्रसागरतोयके ॥ ३८ ॥ नाद्यापिसामहामायानुदतेमांमहेश्वर ॥ मदर्थमागतादेवाब्रह्मेन्द्राद्याःसमन्त
तः ॥ ३९ ॥ तेपिबद्धामहादेव्यामायापाशेनवैहठात् ॥ तस्मान्नोद्यनुगृह्णोष्वनयेदानींशिवालये ॥ ४० ॥ ताञ्चप्रसादय

ष्याम:सम्यग्बन्धविहिंसया ॥ हरेस्तद्वचनंश्रुत्वात्यहञ्चकरुणायुतः ॥ ४१ ॥ उवाचपरमप्रीत्याविधिर्विष्णूप्रतिस्वयम् ॥ ई
श्वर्य्याःकामपूर्व्वायाःकवचंसुमनोहरम् ॥ ४२ ॥ बद्ध्वाशरीरेचाष्टाङ्गपश्चाद्गच्छन्तुताम्प्रति ॥ अहन्निबद्धकवचःस्तेनाहम्मा
ययात्विह ॥ ४३ ॥ नबद्धोममसंसर्गात्तथाचेहबृहस्पतिः ॥ तस्माच्छ्रूयन्तुकवचंशृणुध्वम्वदनान्मम ॥ ४४ ॥ येनसौख्या
त्समुल्लुत्यद्रक्ष्यामःपरमेश्वरीम् ॥ ओंकामाख्याकवचस्यमुनिर्बृहस्पतिःस्मृतः ॥ ४५ ॥ देवीकामेश्वरीतस्य अनुष्टुप्छ
न्दइष्यते ॥ विनियोगःसर्व्वसिद्धौतञ्चशृण्वन्तुदेवताः ॥ ४६ ॥ शिवःकामेश्वरीदेवीकामाख्याचक्षुषीमम ॥ शारदावर्णयु
गलन्त्रिपुरावदनन्तथा ॥ ४७ ॥ कण्ठेपातुमहामायाहृदिकामेश्वरीपुनः ॥ कामाख्याजठरेपातुशारदामान्तुनाभितः ॥ ४८ ॥
त्रिपुरापार्श्वयोःपातुमहामायातुमेहने ॥ मुदेकामेश्वरीपातुकामाख्योरुद्वयेतुमाम् ॥ ४९ ॥ जानुनोःशारदापातुत्रिपुरापा
तुजङ्घयोः ॥ महामायापादयुगेनित्यंरक्षतुकामदा ॥ ५० ॥ केशेकोटेश्वरीपातुनासायाम्पातुदीर्घिका ॥ भैरवीदन्तसङ्घा
तेमातङ्ग्यवतुचाङ्गयोः ॥ ५१ ॥ बाह्वोर्म्मांललितापातुपाण्योस्तुवनवासिनी ॥ विन्ध्यवासिन्यङ्गुलीषुश्रीकामानखकोटिषु ॥
॥ ५२ ॥ रोमकूपेषुसर्व्वेषुगुप्तकामासदावतु ॥ पादाङ्गुलीपार्ष्णिभागेपातुमाम्भुवनेश्वरी ॥ ५३ ॥ जिव्हायाम्पातुमांसेतुःकः
कण्ठाभ्यन्तरेवतु ॥ नःपातुचान्तरेवक्षःइःपातुजठरान्तरे ॥ ५४ ॥ सामीन्दुःपातुमांवस्तौबिन्दुर्बिन्द्वन्तरेवतु ॥ ककारस्त्वचि

माम्पातु रकारोस्थिषुसर्व्वदा ॥ ५५ ॥ लकारःसर्व्वनाडीषुईकारःसर्व्वसन्धिषु ॥ चन्द्रःस्नायुषुमाम्पातुबिन्दुर्मज्जासुस
न्ततम् ॥ ५६ ॥ पूर्व्वस्यान्दिशिचाग्नेय्यान्दक्षिणेनैर्ऋतेतथा ॥ वारुणेचैववायव्याङ्कौबेरेहरमन्दिरे ॥ ५७ ॥ अकराद्या
स्तुवैष्णव्याअष्टौवर्णास्तुमन्त्रगाः ॥ पान्तुतिष्ठन्तुसततंसमुद्भवविवृद्धये ॥ ५८ ॥ ऊर्द्ध्वाधःपातुसततम्मान्तुसेतुद्वयंसदा ॥
नवाक्षराणिमन्त्रेषुशारदामन्त्रगोचरे ॥ ५९ ॥ नवस्वरन्तुमान्नित्यंनासादिषुसमन्ततः ॥ वातपित्तकफेभ्यस्तुत्रिपुराया
स्तुत्र्यक्षरम् ॥ ६० ॥ नित्यंरक्षतुभूतेभ्यःपिशाचेभ्यस्तथैवच ॥ तत्सेतूसततम्पाताक्रव्याद्भ्योमान्निवारकौ ॥ ६१ ॥ न
मःकामेश्वरीदेवीम्महामायांजगन्मयीं ॥ याभूत्वाप्रकृतिर्नित्यन्तनोतिजगदाद्यताम् ॥ ६२ ॥ कामाख्यामक्षमाला
भयवरदकरांसिद्धसूत्रैकहस्तांश्वेतप्रेतोपरिस्थाम्मणिकनकयुताङ्कुङ्कुमांपीतवर्णाम् ॥ ज्ञानध्यानप्रतिष्ठामतिशयविनयांब्र
ह्मशक्रादिवन्द्यामग्नौबिन्द्वतमन्त्रप्रियतमविषयान्नौमिसिद्धैरतिस्थाम् ॥ मध्येमध्यस्यभागेसततविगमिताभावहावावली
यालीलालोकस्यकोष्ठेसकलगुणयुताव्यक्तरूपैकनम्रा ॥ ६३ ॥ विद्याविद्यैकशांताशमनशमकरीक्षेमकर्त्रींवरास्यानित्य
म्पातात्पवित्रप्रणववरकराकामपूर्व्वेश्वरीनः ॥ ६४ ॥ इतिहरकवचन्तनुस्थितंशमयतेशमनन्तथायदि ॥ इहगृहाणयतस्व
विमोक्षणेसहितएषविधिःसहचामरैः ॥ ६५ ॥ इतीदङ्कवचय्यँस्तुकामाख्यायाःपठेद्बुधः ॥ सकृत्तन्तुमहादेवीत्वनुव्रजति

नित्यदा ॥ ६६ ॥ नाधिव्याधिभयन्तस्यनकव्याभ्योभयन्तथा ॥ नाग्नितोनापितोयेभ्योनरिपुभ्योनराजतः ॥ ६७ ॥ दी
र्घायुर्बहुभोगीचपुत्रपौत्रसमन्वितः ॥ आवर्त्तयन्नशतन्देवीमन्दिरेमोदतेपरे ॥ ६८ ॥ यथातथाभवेद्बद्धःसङ्ग्रामेन्यत्रवाबुधः ॥
तत्क्षणादेवमुक्तःस्यात्स्मरणात्कवचस्यतु ॥ ६९ ॥ ॥ ईश्वरउवाच ॥ ॥ इतिश्रुत्वातुकवचंहरिर्ब्रह्मासुरास्तथा ॥ श
क्रोऽपिकवचंन्यासन्देहेचक्रुःपृथक्पृथक् ॥ ७० ॥ तेतुविन्यस्तकवचामहामायाप्रभावतः ॥ उत्प्लुत्यसागरस्याम्भआसेदुःक्षि
तिमञ्जसा ॥ ७१ ॥ आसाद्यपृथिवींसर्व्वेब्रह्माविष्ण्वादयःसुराः ॥ नीलकूटंसमासाद्यकामाख्यान्द्रष्टुमागताः ॥ ७२ ॥ दृष्ट्वा
कामेश्वरीन्देवीङ्केशवस्ताञ्जगन्मयीम् ॥ इदमाहस्वयञ्ज्ञात्वाप्रभावन्तत्प्रतिष्ठितम् ॥ ७३ ॥ त्वमेवप्रकृतिर्देवीत्वमेवपृथिवी
जलम् ॥ त्वमेवजगताम्माताप्त्वमेवचजगन्मयी ॥ ७४ ॥ त्वङ्कर्त्रीसर्व्वंजगताम्विद्यात्वम्मुक्तिदायिनी ॥ परापरात्मिकादेवी
स्थूलसूक्ष्मात्मिकातथा ॥ ७५ ॥ प्रसीदत्वम्महादेवीप्रसन्नायाशुभेत्वयि ॥ देवाःसर्व्वेप्रसीदन्तिचतुर्व्वर्गप्रदेऽनघे ॥ ७६ ॥
इतिश्रुत्वावचस्तस्यकेशवस्यमहात्मनः ॥ प्रत्यक्षरूपाकामाख्याहरिमाभाष्यचाब्रवीत् ॥ ७७ ॥ ॥ देव्युवाच ॥ ॥ के
शवब्रह्मणासार्द्धंसर्व्वैर्देवैस्तथा ॥ मद्योनिसलिलेष्वद्यस्नानम्पानङ्कुरुद्रुतम् ॥ ७८ ॥ ततस्त्वन्निरहङ्कारःपरवीर्य्यसमन्वि
तः ॥ आरुह्यगरुडय्याँहित्रिदिवंसहवेधसा ॥ ७९ ॥ एवमुक्तोमहादेव्याकेशवःसहवेधसा ॥ योनिमण्डलतोयेषुस्नानम्पान

श्चकारह ॥ ८० ॥ कृतस्नावास्ततोदेवाःकृतस्नानश्चकेशवः ॥ गतादेव्याश्चसम्मत्या त्रिदिवम्प्रतिहर्षिताः ॥८१॥ गच्छ
न्तस्तेदेवगणाःसहिताःकेशवेनच ॥ ब्रह्मणाचतदाद्राक्षुःकामाख्यान्ताव्वियद्गताम् ॥८२॥ नीलकूटसहस्राणियोनिभिःसह
सङ्गतः॥ उर्द्ध्वाधोभागयोगेनददृशुःसंस्थितानिच ॥८३॥ तानिप्रत्येकतोदेवाआरुह्य ारुह्यतत्क्षणात् ॥ पपुःसस्नुःपूर्व्व
वत्तेप्रीतिमापुस्तथातुलाम् ॥८४॥ निरामयास्तथाजग्मुर्व्विस्मयाक्लिष्टचेतनाः ॥ स्तुवन्तःप्रस्तुवन्तश्चकामाख्यायोनिम
ण्डलम् ॥ ८५ ॥ ततोदेवगुरुर्न्नत्वामांस्तुत्वाचभयात्पुनः ॥ विसृष्टस्त्रिदिवय्यातोहर्षोत्फुल्लविलोचनः ॥ ८६ ॥ माहात्म्यमी
दृशन्देव्याःकामाख्यायास्तुभैरव ॥८७॥ कवचञ्चेदृशम्प्रोक्तन्तत्त्वमासाद्यपुत्रक ॥ यथेष्टविनियोगेनतामासाद्यसुखीभव
॥८८॥कामाख्यायाश्चमाहात्म्यङ्किमन्यत्कथयामिते ॥ यस्यायोनिशिलायोगाल्लोहाद्यायान्तिस्वर्णताम् ॥८९॥ यद्योनिम
ण्डलेस्नात्वासकृत्पीत्वाचमानवः ॥ नेहोत्पत्तिमवाप्नोतिपरन्निर्व्वाणमाप्नुयात् ॥ ९० ॥ ॥ इतिकालिकापुराणेकामाख्याक
वचमाहात्म्यवर्णनन्नामषट्सप्ततितमोध्यायः ॥ ७६ ॥ छ ॥ ॥ भगवानुवाच ॥ ॥ मातृकान्यासमधुनाश्रृणुवेतालभैरव ॥
येनदेवत्वमायातिनरोऽपिविहितेनवै ॥ १ ॥ वाग्ब्रह्माणीमुखादेव्योमातृकाःपरिकीर्त्तिताः ॥ तासाम्मन्त्राणिसर्व्वाणि
व्यञ्जनानिस्वरास्तथा ॥ २ ॥ चन्द्रबिन्दुप्रयुक्तानिसर्व्वकामप्रदानिच ॥ ऋषिस्तुमातृमन्त्राणाम्ब्रह्मैवपरिकीर्त्तितः ॥ ३ ॥

प्रोक्ताच्छन्दश्चगायत्रीदेवताचसरस्वती ॥ शरीरशुद्धिप्रमुखंसर्व्वकामार्थसाधने ॥ ४ ॥ विनियोगःसमुद्दिष्टोमन्त्राणान्यू
नपूरणे ॥ अकारेणसमङ्कादिर्व्वर्ग्गोयःप्रथमःस्मृतः ॥ ५ ॥ तैश्चन्द्रबिन्दुसय्युँक्तैस्तत्रस्थैरक्षरैर्बहिः ॥ आकारश्चतथोच्चा
र्य्यअङ्गुष्ठाभ्यान्नमस्तथा ॥ ६ ॥ प्रथमम्मातृकामन्त्रअङ्गुष्ठद्वयतोन्यसेत् ॥ परवर्ग्गाःस्वरैःसार्द्धय्येर्वान्येन्यासकर्म्मणि ॥
॥ ७ ॥ तेसर्व्वेचन्द्रबिन्दुभ्याय्युँक्ताःकार्य्यास्तुसर्व्वतः ॥ ह्रस्वेकारश्चवर्ग्गेणदीर्घेकारान्तगेनतु ॥ ८ ॥ तर्ज्जन्योर्विन्यसेत्स
म्यक्स्वाहान्तेनतुपूर्व्ववत्॥ ह्रस्वोकारष्टवर्ग्गेणदीर्घोकारान्तकेनतु ॥९ ॥ मध्यमायुगलेसम्यग्वषडन्तेनविन्यसेत् ॥ एका
रादिचवर्ग्गन्तुऐकारान्तेनचैवहुं ॥१० ॥ न्यसेदनामिकायुग्मेनियतन्तत्रभैरव ॥ ओँकारादिपवर्ग्गन्तुऔँकारान्तशेषितः ॥
॥ ११ ॥ वौषडन्तकनिष्ठायाव्विँन्यसेत्कार्य्यसिद्धये ॥ अंकारादियकारादिवर्गेणक्षान्तकेनतु ॥ १२ ॥ अइत्यन्तेनतलयो
र्व्विन्यसेत्पाणिपृष्ठयोः ॥ वषड्कारःशेषभागेअस्त्रन्यासेनियोजयेत् ॥ १३ ॥ हृदयादिषडङ्गेषुपूर्व्ववत्क्रमतोन्यसेत् ॥ अङ्गु
ष्ठाद्युक्तवर्ग्गैस्तुक्रमात्षड्भिस्तथाविधैः ॥ १४ ॥ पुनस्तथापादजानुसक्थिगुल्फेषुपार्श्वयोः ॥ बस्तौचविन्यसेन्मन्त्रान्क्र
मात्पूर्व्ववदक्षरैः ॥ १५ बाव्होःपाण्योस्तथाकट्यान्नाभौचजठरेतथा ॥ स्तनयोरपिविन्यासन्तथाषड्भिःसमाचरेत् ॥ १६ ॥
वक्त्रेचचिबुकेगण्डेकर्णयोश्चललाटके ॥ अंशेकक्षेचषड्वर्ग्गैःपूर्व्ववन्न्यासमाचरेत् ॥ १७ ॥ रोमकूपेब्रह्मरन्ध्रेगुदेजङ्घायुगे

तथा ॥ नखेषुपादपाण्योंश्चतथापूर्व्ववदाचरेत् ॥ १८ ॥ एवन्तुमातृकान्यासय्यँःकुर्य्यान्नरसत्तमः ॥ ससर्व्वयज्ञोथपू
जासुपूतोयोग्यस्तुजायते ॥ १९ ॥ नातःपरतरन्मन्त्रव्विँद्यतेक्वचिदेवहि ॥ यःसर्व्वकामदम्पुण्यञ्चतुर्व्वर्ग्गप्रदम्परम् ॥
॥ २० ॥ वाग्देवतांहृदिध्यात्वामूर्त्तिसर्व्वाक्षराणिच ॥ त्रिधाचमातृकामन्त्रैःसक्रमैश्चपिबेज्जलम् ॥ २१ ॥ सवाग्मीपण्डि
तोधीमाञ्जायतेचवरःकविः ॥ चन्द्रबिन्दुसमायुक्तान्स्वरान्पूर्व्वम्पठेद्बुधः ॥ २२ ॥ व्यञ्जनानितुसर्व्वाणिकेवलानिपठे
त्ततः ॥ अकारादिक्षकारान्तान्येवंश्वासैश्चपूरकैः ॥ २३ ॥ जलङ्करतलेगृह्यपठित्वाक्षरसंघकम् ॥ अभिमन्त्र्यतुतत्तोयम्प्रथ
मम्पूरकैःपिबेत् ॥ २४ ॥ कुम्भकेनद्वितीयन्तुतृतीयन्त्वथरेचकैः ॥ एवंसकृत्त्रिवारन्तुपीत्वातोयव्विँचक्षणः ॥ २५ ॥ दृ
ढाङ्गःपण्डितोभूयात्पुत्रपौत्रसमन्वितः ॥ त्रिसन्ध्यमथपीत्वैवमातृकामन्त्रमन्त्रितम् ॥ २६ ॥ तोयङ्कवित्वमाप्नोतिसर्व्वा
न्कामास्तथैवच ॥ सततङ्कुरुतेयस्तुमातृकामन्त्रमन्त्रितम् ॥ २७ ॥ तोयपानम्महाभागपूरकुम्भकरेचकैः ॥ ससर्व्वकामा
न्तसम्प्राप्यपुत्रपौत्रसमृद्धिमान् ॥ २८ ॥ भूत्वामहाकविर्लोकेबलवान्सत्यविक्रमः ॥ सर्व्वत्रवल्लभोभूत्वाचान्तेमोक्षमवा
प्नुयात् ॥ २९ ॥ राजानमथवाराजपुत्रम्भार्य्यामथापिवा ॥ वशीकरोतिनचिरान्मन्त्रिकामन्त्रपानतः ॥ ३० ॥ न्यासः
क्रमेक्रमःप्रोक्तोवर्ग्गक्रमइहैवतु ॥ अक्षराणाङ्क्रमेणाथतोयपानंसमाचरेत् ॥ ३१ ॥ येयेमन्त्रादेवतानामृषीणामथरक्षसाम् ॥

तेमन्त्रामातृकामन्त्रैर्नित्यमेवप्रतिष्ठिताः॥ ३२॥ सर्व्वंमन्त्रमयश्चायंसर्व्ववेदमयस्तथा ॥ ३३ ॥ चतुर्व्वर्गप्रदश्चायम्मातृ
कामन्त्रउच्यते॥ इतितेकथितम्पुत्रमातृकान्यासमद्भुतम्॥ ३४॥ विभागमथमुद्राणांशृणुवेतालभैरव ॥ ३५ ॥ इतिकालि
कापुराणेचतुःसप्तसप्ततितमोध्यायः॥७७॥ ॥श्रीभगवानुवाच॥ ॥यायोनिमुद्राकथितामुद्राविभजनेपुरा॥ अ
ष्टधायोनिमुद्रास्यात्प्रथमासातुकीर्त्तिता॥ १॥ द्वितीयाखेचरीमुद्राकामाख्यायास्तुभैरव॥ ताम्विद्धिचाद्भुतङ्कुर्य्यंयेनतुष्यति
चण्डिका॥ २॥ अनामिकान्दक्षिणस्यतर्ज्जन्यावाँमतोन्यसेत्॥ वामानामान्दक्षिणस्यतर्ज्जन्याविँनिवेशयेत्॥ ३ ॥ तेद्वेत
थातर्ज्जनीभ्याव्वेंष्टयेदग्रतोग्रतः॥ मध्याद्वयन्तुविन्यस्यचोर्द्ध्वंभागेत्वनामयोः ॥ ४॥ तदग्राग्रेणसय्योंगात्तथैवचकनिष्ठिके॥
अग्रेणैवचसंय्युँक्तेतन्मूलेङ्गुष्ठकेन्यसेत्॥ ५॥ इयन्तेखेचरीयोनिर्य्योनिमुद्रातुकामदा ॥ एषैवाधःकनिष्ठेद्वेनियोज्ययदियु
ज्यते॥ ६॥ गुह्ययोनिस्तुसाख्याताकामेश्वर्य्यास्तुतुष्टिदा ॥ सर्व्वैष्ट्यपूर्व्ववत्पाण्योर्द्वेकनिष्ठेत्वनामिके ॥ ७॥ अधोभागे
नियोज्याथमध्यमेचोर्द्धतस्तथा ॥ तासाम्परस्परश्चाग्रैरन्योन्यय्योँजयेद्यदि ॥ ८ ॥ मध्यामध्येतथाङ्गुष्ठेनिःक्षिप्याग्रेनि
योजयेत् ॥ योनिस्तुशाङ्करीप्रोक्तात्रिपुरातुष्टिदासदा॥ ९॥ मध्येद्वेचतथावेष्ट्यपूर्व्ववच्चाप्यनामिका॥ कनिष्ठाभ्याम्पुरोन्य
स्यअङ्गुष्ठौमूलयोस्तयोः॥ १०॥ मुद्रेयंशारदीप्रोक्ताशारदायास्तुतुष्टिदा॥ मूलयोनिस्तुकथितावैष्णवीतन्त्रगोचरे॥ ११॥

त ज्जंन्यनामिकंमध्येकनिष्ठेपिक्रमादपि ॥ करयोर्य्योजयित्वैवकनिष्ठामूलदेशतः ॥१२॥ अङ्गुष्ठाग्रन्तुनिःक्षिप्यमाहायोनिःप्र
कीर्त्तिता ॥ अङ्गुष्ठौचाथसंवेष्ट्यसंय्युंज्याथकराङ्गुली ॥१३॥अग्रभागैर्म्मध्यशून्यन्तत्रकुर्य्यात्करद्वयम् ॥ इयन्तुयोगिनीयो
निर्य्योगिनीनाम्प्रियङ्करी ॥ १४ ॥ एताअष्टौसमाख्यातायोन्यःकामेश्वरीप्रिया ॥ मूर्त्तिभेदेनचान्येषान्देवानामपितुष्टिदा
॥१५॥ यात्रायाय्युंद्धविषयेवाग्वादेकलहेतथा ॥ अष्टौयोनिःस्मरेद्यस्तुजयस्तस्यसनातनः ॥१६ ॥ विसर्ज्जनेपूजेनचस्मरणे
कर्म्मभेदतः ॥ एतायोन्यःसमाख्याताश्चण्डिकापूजनेषुच॥१७॥एतास्तुकथितायोन्यःक्रमात्क्रमविसर्ज्जने॥रहस्यव्वाँमदाक्षि
ण्यम्मन्त्रशुद्धिंशृणुष्वमे ॥१८॥ मन्त्रेणक्रियतेयत्तुशारीरम्मन्त्रमुत्तमम्॥तद्रहस्यमितिप्राहुर्म्मन्त्रेषुमन्त्रकोविदाः ॥१९॥ का
माख्यायास्तुषट्कोणंमण्डलस्यदलान्तरे ॥ त्रिधालिखेन्मूलमन्त्रमूर्द्धन्त्रिष्वपिसन्धिषु॥२०॥अथत्रिसन्धिषुपुनर्व्विधिंशक्रंहर
स्तथा ॥ संहितम्मदनेनैवलिखेद्भूर्ज्जंत्वचित्रिधा॥२१॥तस्तुमादायसहस्रन्तुदक्षिणनकरेणवै॥मालामपिसमादायसञ्जपेदुत्तरा
मुखः ॥२२॥ तद्भुजेदक्षिणेधार्य्यम्बाहौवासाधकोत्तमैः ॥ जपान्तेलिखितय्यँन्त्रन्तेनसर्व्वंजयीभवेत् ॥ २३ ॥ दीर्घायुःसर्व्व
वशकृद्धनधान्यसमृद्धिमान्॥मृतोदेवीगृहेयातियन्त्रयन्त्रितबुद्धिमान् ॥२४ ॥ षट्कोणानन्तरकृतंवेष्टिताष्टदलेष्वथ॥लिखित्वा
भूर्ज्जपत्रेषुविलीनैर्य्यावकोदकैः ॥ २५ ॥ उत्तरादिक्रमेणेववैष्णवीतन्त्रसङ्गतान्॥ अष्टौवर्णन्मध्यभागेपूर्व्ववत्कामराजकम्

॥२६॥त्रीन्वर्णान्नेत्रबीजस्यत्रिकोणस्याग्रतोलिखेत् ॥ एवन्त्रिधाकृतय्यँन्त्रङ्कृत्वावामकरेस्थितः ॥ २७ ॥ जपेत्त्रीणिसहस्रा
णिमालामादायदक्षिणे ॥ जपान्तेवैष्णवीरूपध्यानङ्कुर्य्यादतन्द्रितः ॥२८॥प्राणायामसहस्रन्तुततस्तल्लिखितोत्तमम् ॥ ग्रीवा
यान्धारयेद्यन्त्रंतेनसर्व्वजयीभवेत् ॥ २९ ॥ राजपुत्रोभवेद्राजातदन्यांसचिवोभवेत् ॥ द्विजराजोभवेद्विद्वान्कविर्व्वाग्मीचवा
भवेत् ॥ ३० ॥ राक्षसेभ्यःपिशाचेभ्योभूतेभ्योचापिचान्यतः ॥ साधुसर्व्वँद्यतेतस्यनकदाचित्पराजयः॥३१॥ दीर्घायुर्व्वलवा
न्प्राज्ञोमृतेमोक्षमवाप्नुयात् ॥ सम्पूर्णम्मण्डलङ्कृत्वाअष्टपत्रसमन्वितम्॥३२॥भूर्ज्जत्वचिश्रीफलस्यनिर्य्यासैस्तस्यमध्यतः ॥
षट्कोणव्विँलिखेत्तस्यप्रागग्रेष्वथत्रिष्वपि॥३३॥विलिखेत्त्रिपुरावर्णानधोबीजन्तुनेत्रकम् ॥दलेष्वष्टासुतुपुनर्व्वैष्णवीतन्त्रस
ङ्गतान्॥३४॥अष्टौवर्णाँस्तुविलिखेत्तथाद्वाषुचतुर्ष्वपि ॥ षष्वाणपूत्तराङ्कोद्यैकक्रमेणैकाग्रमानसः ॥३५॥तद्धृत्वादक्षिणकरेवै
ष्णवीतन्त्रमन्त्रकम् ॥ जपेत्त्रिभिर्द्दिनैरेवायुतंसय्यँतमानसः॥३६॥प्राणायामसहस्राणित्रीणिकृत्वातुहर्षितः ॥ सन्ध्याकाले
नवम्यान्तुशीर्षेनधारयेद्बुधः॥३७॥शतायुःसर्व्वदमनोमतिमान्पण्डितोत्तमः ॥ बलीवीर्य्यधनैश्वर्य्ययुक्तःपार्थिवएववा ॥३८॥
प्रत्यक्षतोमहामायाङ्कामाख्यान्त्रिपुरामपि ॥ नित्यम्पश्यतिमेधावीमहोच्छ्वासाञ्चशारदाम्॥३९॥सिंहव्याघ्रोभुजङ्गोवायेन्ये
वातस्यासिंहकाः ॥ सर्व्वेतस्यतनुम्प्राप्यविषीदन्तिनसंशयः॥४०॥जयहेतुरतोन्यस्मात्सङ्ग्रामेशास्त्रवादतः ॥ नाविद्यतेत्रिभु

वनेतस्मात्कुर्य्यात्तुयन्त्रकम् ॥४१॥ अन्तेदेवीगृहम्प्राप्यततोमोक्षवाप्नुयात् ॥ महामायाशारदाख्याकामाख्यात्रिपुरातथा ॥
॥ ४२ ॥ महोत्साहातथैतेषाम्मन्त्राणाङ्योगणोभवेत् ॥ मण्डलञ्चाष्टदलकन्तन्मध्येविलिखेन्पुनः ॥ ४३ ॥ लिखित्वा
पूर्व्ववत्पूर्व्वम्प्रोक्तम्मन्त्रगणंसमम् ॥ अन्येद्वयन्द्वारदेशेकोणेष्वक्षरतोलिखेत् ॥ ४४॥ शुक्लकौशेयवस्त्रेषुरसैर्व्वह्निशिखस्यतु॥
उत्तरीयन्तुतद्वस्त्रङ्कृत्वाजप्यंसमाचरेत् ॥ ४५ ॥ कृतोपवासःशुद्धश्चमातृकान्यासपूर्व्वकम् ॥ पञ्चानामपिवर्ग्गाणांसहस्रा
णितुपञ्चवै ॥ ४६ ॥ दिवसैःपञ्चभिर्जप्त्वातदन्तेचसमाचरेत् ॥ प्राणायामसहस्राणिपञ्चवैपञ्चभिर्दिनैः ॥ ४७॥ अन्तेतुक
वचन्यासङ्कात्यायन्याःसमाचरेत् ॥ ततस्तुमातृकामन्त्रैःश्वासरोधनपूर्व्वकम् ॥ ४८ ॥ त्रिःपिबेत्कपिलाक्षीरञ्चागवाँश्चतदा
निशि ॥ एवय्यँःकुरुतेयन्त्रंशरीरेशुक्लवाससा ॥ ४९ ॥ सोष्टसिद्धिमवाप्नोतिदेवीलोकञ्चगच्छति ॥ यउत्तरीयम्बिभृयाद्वस्त्र
म्मन्त्रेणमन्त्रितम् ॥ ५० ॥ नित्यमेवमहाभागप्रभावन्तस्यवैशृणु ॥ नतस्यदेहेशस्त्राणिप्रवेक्ष्यन्तिकदाचन ॥ ५१ ॥ नाग्निर्द
हतितत्कायन्नापःसंक्लेदयन्तिच ॥ राक्षसाश्चपिशाचाश्चभूताद्यायेतुहिंसकाः ॥ ५२ ॥ तेतन्दृष्ट्वामहाभागभुवङ्गच्छन्तिवैभि
या ॥ गच्छेदवारितःसोपिसर्व्वत्रसाकोधत्तमः ॥५३॥ वशीकरोतिदेवाँश्चनृपानन्याश्चयोषितः ॥ उत्सहेद्यदिमेधावीवाग्मी
राजाचसोभवेत् ॥५४॥ चिरजीवीमहाभागोधनधान्यसमृद्धिमान् ॥ कविःप्रज्ञासमायुक्तस्सोभेद्योजायतेरिभिः ॥ ५५ ॥ य

स्मिन्पुरेसनिवसेद्वज्रपातोनतत्रवै ॥ रसोशरीरंशस्त्राणिदृढहस्तोज्झितान्यपि ॥ ५६ ॥ एनन्नघ्नन्तिसततञ्चयसर्व्वत्रभैरव ॥
अपराध्यन्तिसततन्तस्यसर्व्वत्रभैरव ॥ ५७ ॥ नाधयोव्याधयस्तस्यजायन्तेतुकदाचन ॥ देवीपुत्रःसमतिमान्मृतोमो
क्षमवाप्नुयात् ॥ ५८ ॥ यन्त्रितास्वामिनायन्त्रय्यीँदधातिपतिव्रता ॥ पुत्रैश्वर्य्यमवाप्नोतिदीर्घायुःसावधूर्भवेत् ॥ ५९ ॥
प्रत्येकमेकंसंहत्यावर्द्धनासहितेनच ॥ क्रमाद्विंशतिमन्त्राणिकथितानिमयेहवै ॥ ६० ॥ तानिप्रत्येकतोबुध्यायोन्यसे
त्सर्व्वदाहृदि ॥ लिखित्वासर्व्वयन्त्राणिबिभृयाद्योथवागले ॥ ६१ ॥ देवेन्द्रोजायतेसोवैप्रभावेणेहभूतले ॥ पूर्व्वोक्तानिस
मस्तानिफलान्याप्नोतितत्क्षणात् ॥ ६२ ॥ पिहितःसर्व्वलोकाँस्त्रीन्नित्यमेवप्रपश्यति ॥६३॥ एवंसार्द्धय्यँन्त्रवर्ग्गैःसमस्तैरष्टा
भिर्य्यत्पूर्व्वमुक्तंसहस्रम् ॥ शुक्लेवस्त्रेसल्लिखित्वास्वदेहेधृत्वानित्यम्प्राप्नुयाद्वैसमस्तम् ॥ ६४ ॥ यःक्षत्रजातिर्हृदयेसकु
र्य्यात्सङ्ग्रामकालेकवचेष्टधाम्नि ॥ मन्त्राक्षराण्यादिकृतानिदेव्याअष्टौबहिर्ग्गात्रविशेषतश्च ॥६५॥ गलेहरिव्वँक्षसिवैलि
खेद्विधिंस्तनद्वयेपुत्रयुतम्महेश्वरम् ॥ बाह्वंशसन्ध्योश्चहरिञ्चवैष्णवीम्बाह्वोस्तुलक्ष्मीञ्चसरस्वतीञ्च ॥ ६६ ॥ एवंरणाष्टाङ्ग
मिदव्विँधायगात्रेसवर्म्मण्यनुचिन्तयेच्छिवाम् ॥ लिखेल्ललाटेतिलकान्तरेनरःसमस्तमन्त्राक्षरयन्त्रमुत्तमम् ॥ ६७ ॥
ततोजपेदष्टधातुपाणिन्दत्वाष्टधामसु ॥ वैष्णवीतन्त्रमन्त्रन्तुततोगच्छेद्रणाजिरम् ॥ सतुवीरोममसमःसङ्ग्रामेषुचजायते ॥

॥ ६८ ॥ तृणानीवपरास्त्राणितस्याग्नेरिवजायते ॥ विनिस्मरन्तिरिपवस्तद्वद्याद्रविणायथा ॥ ६९ ॥ सिंहाग्रान्नरशा
र्दुलोवीर्य्यवान्बलवान्भवेत् ॥ इदंरहस्यङ्कथितङ्कामाख्यायास्तुभैरव ॥ ७० ॥ वैष्णव्यातन्त्रमुख्येषुत्रिपुरायास्ततः
शृणु ॥ तस्यास्तुसर्व्वमन्त्राणित्रयोदशयुतानिवै ॥ ७१ ॥ विंशतिन्तुसहस्त्राणितन्त्राद्यव्वाँग्भवंस्मृतम् ॥ द्वितीयङ्कामरा
जाख्यम्मोहनञ्चतृतीयकम् ॥ ७२ ॥ आम्रेडितव्वाँग्भवन्तुचतुर्थम्परिकीर्त्तितम् ॥ नेत्रबीजन्द्वितीयन्तुद्विरुक्तव्वाँग्भवन्त
था ॥ ७३ ॥ आद्यन्तत्पञ्चमम्प्रोक्तञ्चतुर्भिंरपिचाक्षरैः ॥ नेत्रबीजन्द्वितीयन्तुप्रथमम्परिकीर्त्तितम् ॥ ७४ ॥ द्वितीय
ङ्कामबीजन्तुतृतीयव्वाँग्भवन्तथा ॥ एभिस्त्रिभिस्तुयन्मन्त्रन्तत्षष्ठम्परिकीर्त्तितम् ॥ ७५ ॥ नेत्रबीजन्द्वितीयन्तुवाग्भवा
न्तेनसप्तमम् ॥ तदेवंवाग्भवाद्यन्तुअष्टमम्परिकीर्त्तितम् ॥ ७६ ॥ वाग्भवङ्कामबीजञ्चदेताभ्यान्नवमंस्मृतम् ॥ कामबी
जन्तथैवाद्यन्द्वितीयञ्चैवमोहनम् ॥ ७७ ॥ एकादशमिदम्प्रोक्तम्डामराद्यन्तुवाग्भवम् ॥ द्वादशङ्कीर्त्तितम्मन्त्रंशेषतस्त्रैपुर
म्महः ॥७८॥ तन्महस्त्रैपुरम्मन्त्रश्शृणुष्वैकमनास्त्विदम् ॥ प्रान्तादिस्तस्यचाप्यादिर्व्वह्निर्व्वाग्भवसन्धितः ॥ ७९॥ आद्यंत्रिपु
रभैरव्याबीजमाद्यम्प्रकीर्त्तितम् ॥ उपान्तश्चतदादिश्चव्यञ्जनाद्यव्वँषाननः ॥ ८० ॥ चतुर्थस्वरबिन्द्विन्दुयुताश्चैतत्तृतीयक
म् ॥ उपान्तश्चतदादिश्चवह्निशेषस्वरस्तथा॥८१॥ समाप्तिबिन्दुसहितासंहितस्तुतृतीयकः ॥ एतत्तत्त्वंव्विँजानातियोनरोभु

विभूमणिः ॥ ८२ ॥ सिद्धविद्याधरेभ्यस्तु सोऽधिकोमत्समोभवेत् ॥ एतत्त्रयोदशप्रोक्तामन्त्रामन्त्रेषुचोज्वलाः ॥८३॥ विंशते
स्तुसहस्रेभ्यःपराश्चैतेप्रकीर्त्तिताः ॥ विंशतेस्तुसहस्राणामाद्यमेतत्प्रकीर्त्तितम् ॥ ८४॥ त्रिपुरायास्तुबालायामन्त्रन्तच्छृणुभै
रव ॥ वाग्भवःकामराजस्तुउपान्तादिःसबिन्दुकः ॥ ८५ ॥ शेषस्वरसमाप्तिभ्याम्मन्त्रमेतत्प्रकीर्त्तितम् ॥ एषातुत्रिपुराबाला
मध्याप्रोक्तापुरैवहि ॥ ८६ ॥ शेषातेजस्विनीप्रोक्तायेयन्त्रिपुरभैरवी ॥ मध्यायाःपूजनम्प्रोक्तम्बालायाःशृणुसाम्प्रतम् ॥८७
तथात्रिपुरभैरव्याःसर्व्वसिद्धिप्रदायकम् ॥ विभिद्यशक्त्याशम्भुन्तुशक्तिञ्चापिविभेदयेत् ॥८८ ॥शाम्भवेवर्णषट्कोणङ्केशरन्त
न्त्रसल्लिखेत् ॥ मध्यायास्त्रिपुरायास्तुयादृशेद्वारमण्डले ॥ ८९ ॥ तादृशेत्रापिकर्त्तव्यंकोणेषुलिखितन्तथा ॥ पापोत्सार
णकर्म्माणिभूम्यादीनाव्विँशोधनम् ॥ ९० ॥ पूर्व्वमुत्तरतन्त्रोक्तन्त्रिपुरापीठभाषितम् ॥ कामाख्यापूजनेप्रोक्तंसर्व्वङ्कुर्य्या
त्तुसाधकः ॥ ९१ ॥ दहनप्लवनादीनिप्रतिपत्तिश्चपात्रके ॥ सर्व्वन्तुपूर्व्ववत्कार्य्यङ्कामाख्यापुजनेयथा ॥ ९२ ॥ कृत्वात्र
देहन्यासन्तुमन्त्रवर्णैस्तथाक्षरैः ॥ सर्व्वैस्स्वरैस्तथाकाद्यैस्ततोरूपव्विँचिन्तयेत् ॥ ९३ ॥ चतुर्भुजांरक्तवर्णांरक्तवस्त्रविभू
षिताम् ॥ दक्षिणोर्द्ध्वेस्त्रजञ्चाधोबिभ्रतीम्पुस्तकोत्तमम् ॥ ९४ ॥ अभयव्वाँमहस्ताभ्याव्वँरञ्चदधतीन्तथा ॥ सहस्रसूर्य्य
सङ्काशान्त्रिनेत्राङ्गजगामिनीम् ॥ ९५ ॥ पीनतुङ्गस्तनयुगंसितप्रेतासनस्थिताम् ॥ स्मितप्रसन्नवदनांसर्व्वालङ्कारसय्युँ

ताम् ॥ ९६॥ तिसृभिर्म्मुण्डमालाभिः शिरोवक्षःकटीषु च ॥ त्रिगुणन्त्रिगुणीभूतैः प्रत्यैकम्परिभूषिताम् ॥ ९७॥ मदिराघूर्ण नयनां रक्तदन्तच्छदद्वयाम् ॥ चिन्तयेद्वरदान्देवीमेवन्त्रिपुरभैरवीम् ॥ ९८॥ बालायास्त्रिपुरायास्तुरूपम्पूर्व्वम्प्रपूजने ॥ उक्तः क्रमः पीठयोगे तन्त्रादि शृणु भैरव ॥ ९९ ॥ पुष्पबाणांस्तु पाशञ्च धत्ते पौष्पं शरासनम् ॥ पापंञ्च कुणपारूढा सा बाला त्रिपुरा स्मृता ॥१००॥ मन्मन्त्रे त्रिपुरे देवि विद्महे पदमादितः ॥ कामेश्वरी धीमहि अनु तन्नः प्रचोदयात् ॥ १ ॥ एषा त्रिपुरगायत्री आवाहनस्य शेषतः ॥ स्नानाद्यैः पूजयेत्सम्यग्बालामन्याञ्च भैरवीम् ॥ २ ॥ अस्याः क्रमे विशेषो यो न्यासे चोत्तरकर्म्मणि ॥ तत्सर्व्वं सह मन्त्रौघैः शृणु वेतालभैरव ॥३॥ ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेन्परमङ्गुरुम् ॥ ततो नु स्वगुरुं शुद्धन्ततस्त्रिपुरभैरवीम् ॥ ४॥ चतुर्भुजां शुक्लवर्णांव्वँरदाभयपुस्तकाम् ॥ अक्षमालाञ्च क्रमतो धत्ते वामे च दक्षिणे ॥५ ॥ सुवर्णरत्नखचिते संस्थिताम्प्रवरासने ॥ सौवर्णमुत्तरीयन्तु धत्ते सौवर्णकुण्डले॥६॥ स्वगुरुव्वँर्णतो ध्यानात्तथैव परिचिन्तयेत् ॥ भैरवीश्चिन्तयित्वा तु तत उत्थाय चाचरेत् ॥ ७॥ मैत्रमाचमनञ्चैव दन्तानां शोधनन्तथा ॥ प्रातःस्नानन्ततः कुर्य्यात्त्रैपुरर्य्यैँ जयन्क्रमन् ॥ ८ ॥ सर्व्वत्र देवीमन्त्रेषु वैदिकेष्वपि भैरवीम् ॥ त्रिपुराश्चिन्तयेन्नित्यन्देवमन्त्रेषु चक्रमात् ॥९ ॥ त्रिभिस्तु त्रिपुराबीजैस्त्रिधा मज्जनमाचरेत् ॥ देवानामपि सर्व्वेषु भैरवेषु पदं सदा ॥ १०॥ कुर्य्याद्विशेषणन्नित्यन्नोच्चार्य्यन्निर्व्विशेषणम् ॥ आपः पुनन्तु पृथिवीमुक्त्वा त्रिपुरभैरवीम्॥११॥

कुर्य्यादाचमनव्विँप्रोद्रुपदायान्तथाचरेत् ॥ इदव्विँष्णुर्भैरवस्तुविचक्रमइतीरितम् ॥ १२ ॥ मृदालम्भनकृत्येषुनित्यमेवाप्यु
दीरयेत् ॥ गायत्रीन्त्रिपुराद्यान्तुभैरवीमाह्वयेच्छिवाम् ॥ १३ ॥ मार्तण्डभैरवायेतिसूर्य्यायार्घन्निवेदयेत् ॥ उदुत्यञ्जात
वेदसन्देवव्वँहन्तिकेतवः ॥ १४ ॥ दृशेविश्वायसूर्य्यंशेषेभैरवमीरयेत् ॥ तर्प्पणादौप्रयुञ्जीततृप्यताम्ब्रह्मभैरवः ॥
॥ १५ ॥ आवाहनेस्वपितॄन्भैरवानितिकीर्तयेत् ॥ तृप्यताम्भैरवीमातःपितर्भैरवतृप्यताम् ॥ १६ ॥ आदौचत्रिपुरापूर्व्व
न्तर्प्पणेपिप्रयोजयेत् ॥ ज्योतिष्टोमाश्वमेधादौयत्रयय्यँम्प्रपूजयेत् ॥ १७ ॥ तत्रभैरवरूपेणदेवीमपिचभैरवीम् ॥ मदि
रापात्रमालोक्यरक्तवस्त्रांस्त्रियस्तथा ॥ १८ ॥ शिरोनरस्यदृष्ट्वातुभैरवीञ्चिन्तयेद्द्विज ॥ स्त्रियोदृष्ट्वाह्यथैकत्रयुवतीःसुमनो
हराः ॥ १९ ॥ ताभ्यस्त्रिपुरभैरव्याःप्रीतयेचन्दनादिकम् ॥ दद्याद्भक्तास्तुमनसाचिन्तयन्नथभैरवीम् ॥ २० ॥ भैरवीम्प्र
तिगृह्णामिभैरवोहम्प्रतिग्रही ॥ कन्यायाम्भावयेद्धीमान्त्रिपुरायाःप्रपूजकः ॥ २१ ॥ भैरवायददाम्यद्यदेवीन्त्रिपुरभैरवी
म् ॥ इतीरयेत्प्रदानेतुकन्यायास्त्रिपुरान्ततः ॥ २२ ॥ तस्याःपूजोपकरणपात्राद्यञ्चान्यपूजने ॥ आसनाद्यञ्चसततन्नो
पयोज्यङ्कदाचन ॥ २३ ॥ सकृत्तुदापयेदन्यैर्म्मदिरांसाधकोद्विजः ॥ शूद्रादयस्तुसततन्दद्युरासवमुत्तमम् ॥ २४ ॥
एवन्तुवामभावेनयजेत्त्रिपुरभैरवीम् ॥ बालान्तुवामदाक्षिण्यभावाभ्यामपिपूजयेत् ॥ २५ ॥ श्मशानभैरवीन्देवीमुग्रता

रान्तथैवच ॥ उच्छिष्टभैरवीञ्चण्डीन्तारान्त्रिपुरभैरवीम् ॥ २६ ॥ एतान्तुवामभावेनपूज्यादक्षिणताव्विँना ॥ ऋषीन्देवा
न्पितॄन्श्चैवमनुष्यान्सुतसञ्चयान् ॥ २७ ॥ योयजेत्पञ्चभिर्य्यज्ञैर्ऋणानिपरिशोधयेत् ॥ विधिवत्स्नानदानाभ्याङ्कुर्व्वन्य
द्विधिपूजनम् ॥ २८ ॥ क्रियतेसरहस्यन्तुतद्दाक्षिण्यमिहोच्यते ॥ सर्व्वंचपितृदेवादौयस्माद्भवतिदक्षिणः ॥ २९ ॥ देवी
चदक्षिणायस्मात्तस्माद्दक्षिणउच्यते ॥ यापुनःपूज्यमानातुदेवादीनाञ्चपूर्व्वतः ॥ ३० ॥ यज्ञभागंस्वयन्धत्तेसाबलातु
प्रकीर्त्तिता ॥ पूजकोपिभवेद्वामस्तत्रैवसततंसुत ॥ ३१ ॥ पञ्चयज्ञान्नवाकुर्य्यांयद्वावाम्यप्रपूजने ॥ अन्यस्यपूजाभागंहि
यतोगृह्णतिवामिका ॥ ३२ ॥ यत्पूजयेद्वामभावैंनतस्याद्दणशोधनम् ॥ पितृदेवनरादीनाञ्जायतेचकदाचन ॥ ३३ ॥
सोभ्यस्यत्रिपुरायोगन्तेनयोगेनसय्युँतः ॥ जायतेयदिसुप्राज्ञस्तदामोक्षमवाप्नुयात् ॥३४॥ सचमोक्षश्चिरेणैवजायतेत्रपुनः
पुनः ॥ ऋणशोधनजैःपापैराक्रान्तश्चैवभैरव ॥ ३५ ॥ इहलोकेसुखैश्वर्य्ययुक्तःसर्व्वत्रवल्लभः ॥ मदनोपमकान्तेनशा
रीरेणविराजता ॥ ३६ ॥ सराष्ट्रकञ्चराजानव्वँशीकृत्यसमन्ततः ॥ मोहयन्वनिताःसर्व्वान्सर्व्वांश्चमदविह्वलाः ॥ ३७ ॥
सिंहान्व्याघ्रांस्तरक्षूँश्चभूतप्रेतपिशाचकान् ॥ वशीकुर्व्वन्विचरतिवायुवेगोद्यतस्ततः ॥३८॥ बालाव्वाँत्रिपुरान्देवीम्मध्या
व्वाँप्यथभैरवीम् ॥ योयजेत्परयाभक्त्यायश्चबाणोपमाकृतिः ॥३९॥ कामेश्वरीन्तुकामाख्याम्पूजयेत्तुयथेच्छया ॥ दाक्षिण्या

द्वामभावाद्वासर्व्वथासिद्धिमाप्नुयात् ॥४०॥महामायांशारदाञ्चशैलपुत्रीन्तथैवच ॥ यथातथाप्रकारेणदाक्षिण्यादेवपूजयेत् ॥
॥ ४१ ॥ योदाक्षिण्यव्विँनाभावम्महामायांसमर्च्चति ॥ सपापःस्वर्ग्गलोकेभ्यश्च्युतोभवतिरोगधृक् ॥ ४२ ॥ अन्यास्तुशि
वदूत्याद्यादेव्योयाःपूर्वमीरिताः ॥ तास्तुवाम्पातुदाक्षिण्याम्पूजितव्यास्तुसाधकैः॥४३॥किन्तुयःपूजकोवामःसोन्यासाम्प
रिवार्ज्जितः ॥ सर्व्वासाम्पूजकःस्यात्तुदक्षिणस्तेनउत्तमः ॥ ४४ ॥ अथत्रिपुरभैरव्यान्यासञ्चशृणुभैरव ॥ येनवैन्यासमा
त्रेणदेववज्जायतेनरः ॥ ४५ ॥ भैरवीतन्त्रमन्त्रस्यऋषिर्द्दक्षिणउच्यते ॥ छन्दःपङ्क्तिःसमाख्यातादेवीत्रिपुरभैरवी ॥ ४६ ॥
कामार्थयोःसाधनेचविनियोगःप्रकीर्त्तितः ॥ हकारव्विँन्यसेन्नाभौमकारंबस्थितोन्यसेत् ॥ ४७ ॥ वकारंशेफेविन्यस्यए
कारञ्चगुदेकथा ॥ पुनरूर्व्वोस्तथैवाद्यञ्जानुयुग्मेद्वितीयकम् ॥ ४८ ॥ तृतीयञ्जङ्घयोर्न्यस्यचतुर्थम्पादयोर्न्यसेत् ॥ त्रि
विधव्विन्यसेद्देवन्नाभ्यादेःपादसङ्गतम् ॥ ४९ ॥ द्वितीयस्यतुबीजस्यआद्यंहृदयेरविन्यसेत् ॥ वामेस्तनेद्वितीयन्तुतृतीयन्द
क्षिणेस्तने ॥ ५० ॥ चतुर्थमुदरेन्यस्यपञ्चमम्पार्श्वयोर्न्यसेत् ॥ षष्ठन्नाभौपरिन्यस्यन्यसेच्चापित्रिधात्रिधा ॥ ५१ ॥ तृती
यस्यतुबीजस्यमूर्द्धिचाद्यन्तुविन्यसेत् ॥ द्वितीयंन्यस्यकेशान्तेतृतीयव्वँदनेन्यसेत् ॥ ५२ ॥ चतुर्थंहृदयेन्यस्ययथास्यात्तु
त्रिधात्रिधा ॥ आद्यादयन्दक्षिणाङ्गुष्ठेद्वितीयन्तर्ज्जनींपुनः ॥ ५३ ॥ तृतीयञ्चमध्यमायामनामायाञ्चतुर्थकम् ॥ तृतीयाद्य

ङ्कनिष्ठायाव्वाँम्माङ्गुष्ठेद्वितीयकम् ॥ ५४ ॥ तृतीयाव्वाँमतर्ज्जन्याञ्चतुर्थम्मध्यमातनौ ॥ अनामायाम्पञ्चमन्तुषष्ठंशेषेतुवि
न्यसेत् ॥ ५५ ॥ एवन्त्रिधातुविन्यस्यतृतीयमथबीजकम् ॥ उभयोर्हस्तयोःकृत्वाअङ्गुष्ठाद्यय्युँगय्युँगम् ॥ ५६ ॥ तृती
यम्बीजवर्णांस्तुविन्यसेत्क्रमतोबुधः ॥ पिण्डितंसर्व्वबीजन्तुविन्यसेत्तुकनिष्ठयोः ॥ ५७ ॥ आद्यन्तुतलयोर्न्नस्यपृष्ठयोश्चद्वि
तीयकम् ॥ तालत्रयन्ततोदत्वातृतीयेनास्त्रवेष्टनम् ॥ ५८ ॥ कर्णयोश्चिबुकेगण्डेमुखेदृग्नासयोस्तथा ॥ स्कन्धयोश्चकपो
लेचजठरेशिश्नमूर्द्धनि ॥ ५९ ॥ पादयोःपार्श्वयोश्चैवहृदयेस्तनयुग्मके ॥ कण्ठदेशेचन्यस्तव्यामन्त्रवर्णक्रमात्पुनः ॥ १६०॥
लिङ्गेरत्यैनमइतिवाग्भवाद्येनविन्यसेत् ॥ ऑक्लींप्रीत्यैनमइतिहृदयेविन्यसेत्ततः ॥ ६१ ॥ नमोभवायेतिततोभ्रुवोर्म्मध्येतृती
यकम् ॥ विन्यसेत्रिपुराबीजंसद्योदेवत्वसिद्धये ॥ ६२ ॥ ऑइँईशानरूपायततोनमोभवायवै ॥ नमइत्यन्ततःप्रोक्तोमुर्द्धी
शानंन्यसेत्पुनः ॥ ६३ ॥ वक्त्रेतत्पुरुषञ्चापिबीजेनमकरध्वजम् ॥ हृदयेघोरकन्दर्प्पमाद्यबीजेनवैन्यसेत् ॥६४॥ शिश्नेवाव्वा
मदेवन्तुमन्मथञ्चापिविन्यसेत् ॥ सद्याजातम्पादद्वयेकामदेवञ्चविन्यसेत् ॥ ६५ ॥ ॐकारञ्चहकारञ्चरेफमेकत्रसन्धितम् ॥
प्रान्तस्वरव्वाँग्भवाद्यंस्वैरैर्ह्रैस्वैस्तुपञ्चभिः ॥ ६६ ॥ एभिस्तुपञ्चभिर्म्मन्त्रैरीशानादीनिविन्यसेत् ॥ वक्त्राणिपूर्व्वपुत्रस्वमु
खोर्द्धेतुपूर्व्वतः ॥ ६७ ॥ दक्षिणोत्तरयोःपश्चात्पश्चिमेचापिविन्यसेत् ॥ हृदयादिषडङ्गानिदीर्घैराद्यस्वरैःपुनः ॥ ६८ ॥

न्यसेत्ततःपञ्चबाणान्मूर्द्धादिष्वथविन्यसेत् ॥ ओँक्लींसौँद्रावणायन्यसेन्मूर्द्धिततःपुनः ॥ ६९ ॥ ओँह्राँक्षोभणबाणायपद्भ्या
न्नमइतीरयेत् ॥ औँक्लींप्लींह्रीसमाप्यन्तुषट्कारान्तार्द्धचन्द्रकैः ॥ ७० ॥ वक्त्रेवशीकृतंलिङ्गेसम्मोहनमथोन्यसेत् ॥ आकर्षण
न्तथाबाणंहृदिमन्त्रैःक्रमान्यसेत् ॥ ७१ ॥ वाग्भवाद्यन्तकारान्तोवषट्कारसमन्वितः ॥ त्रिःशेषस्वरएवात्रचन्द्रार्द्धबिन्दुस
म्युतः ॥ ७२ ॥ एभिस्तुपञ्चभिर्मन्त्रैरष्टशक्तीःक्रमादिमाः ॥ एतेषुचाष्टस्थानेषुविन्यसेन्मन्त्रवित्पुनः ॥ ७३ ॥ सुभ
गाञ्चभगान्देवीन्तृतीयाम्भगरूपिणीम् ॥ भगमालाञ्चतुर्थीन्तुअनङ्गकुसुमान्ततः ॥ ७४ ॥ अनङ्गमेखलाम्पश्चादनङ्गमद
नान्तथा ॥ अष्टमींचतथादेवींमदविभ्रममन्थराम् ॥ ७५ ॥ रूपतोध्यानतश्चैतायथात्रिपुरभैरवी ॥ ललाटभ्रूमध्यभागमु
खकर्णान्तकण्ठके ॥ ७६ ॥ हृन्नाभिलिङ्गेष्वेवात्रन्यस्तव्याअष्टशक्तयः ॥ शिरोललाटभ्रूयुग्मकर्णनेत्रद्वयेषुच ॥ ७७ ॥
गण्डयोरथनासायादन्तवीथ्याम्मुखेतथा ॥ चतुर्द्दशपदेष्वेपुन्यसेच्चतुर्द्दशस्वरान् ॥ ७८ ॥ चिबुकेत्वथग्रीवायाङ्कण्ठदे 
शेतुपार्श्वयोः ॥ स्तनयोःकक्षयोश्चापिकफोण्योर्हस्तयोस्तथा ॥ ७९ ॥ तत्पृष्ठयोस्तथानाभौलिङ्गेचोरुद्वयेतथा ॥ अष्ठीवदो
र्जङ्घयोस्तुस्फिचोस्तुपदमूलयोः ॥ ८० ॥ चरणाङ्गुष्ठयोःकादिरान्वान्वर्णांस्तुविन्यसेत् ॥ मेखलायाङ्कण्ठदेशेबाहुभू
षणभागतः ॥ ८१ ॥ हारस्रजिकुण्डलेचकेशबन्धेतथैवच ॥ चूडामणौचन्यस्तव्यानकराद्याःक्रमान्पुनः ॥ ८२ ॥ म

न्त्राक्षराणित्रीण्येवसन्धितानिपुनस्तथा ॥ प्रातिलोम्येनविन्यस्यमन्त्रैर्म्मूर्द्धिन्त्रिधात्रिधा ॥ ८३ ॥ अमृतार्ध्यौयोगिनींवि
श्वयोगिनीञ्चाक्षरक्रमात् ॥ ततोबीजत्र्यक्षराणिमूर्द्धिन्बाहौतथाहृदि ॥ ८४ ॥ विन्यस्यपूर्व्ववत्पूजामारभेन्मन्त्रविद्बुधः ॥
पूर्व्ववत्पूजयेद्देवीम्पीठदेवविवर्जिताम् ॥ ८५ ॥ विशेषतोऽष्टशक्तीःक्रमात्तुस्वभगादिकाः ॥ मण्डलस्याष्टदिग्भागेपूर्व्वादौ
परिचिन्तयेत् ॥८६॥ त्रिकोणाग्रेमृताद्यास्तुसम्पूज्यास्तुत्रियोनयः ॥ मध्येष्टभूषणान्येवपूजयेदन्ततःपुनः ॥ ८७॥ ईशाना
दीनिवक्त्राणिममभैरवमध्यतः ॥ पूजयेत्तुतथातत्रमनोभवमुखानपि॥८८॥ अन्यच्चपूजनेतत्रक्रमःपूर्व्वोदितश्चयः ॥ सएव
सतनङ्गाद्यःत्रिपुरापरिपूजने ॥८९॥ निर्म्माल्यधारिणीदेवीवैतस्याःशृणुभैरवी॥विसर्ज्जनञ्चोत्तरस्यान्त्यक्त्वानिर्म्माल्यमाचरे
त् ॥१९०॥ त्रिमूर्त्तिम्पूजयेत्तत्तुदेवीन्त्रिपुरभैरवीम् ॥ नजपेत्त्रिशतान्न्यूनंसाधकस्तुकदाचन ॥९१॥ अङ्गुष्ठमध्यमानामाङ्गुली
भिस्तिसृभिःपुनः॥सदापुष्पादिकन्दद्यान्मालान्तुत्रिगुणाञ्चरेत्॥९२॥ चर्म्मासनमधिष्ठायपश्चात्कृत्वापदद्वयम्॥पूजयेन्निर्ज्ज
नेदेशेसाधकोनन्यमानसः ॥९३॥ आसादयेत्तुपुष्पादिनैवेद्यादिचयद्भवेत्॥तद्वामहस्तमुख्येनसततंसाधकोबुधः ॥९४॥ त्रि
छिद्रात्रिपुराप्रोक्तानसम्यक्पूजितायदि ॥ शरीरेनिन्दितव्याधिर्जीयतेवश्यमेवहि ॥ ९५ ॥ अवश्याःपुत्रदाराश्चभृत्याद्याश्च
भवन्तिहि ॥ अस्त्राद्दोताभवेत्स्वस्यप्राणत्यागोनसंशयः ॥ ९६ ॥ त्रिछिद्रदायिनीचैवमन्यथापूजितायदि ॥ इतःप्रका

रान्सततंसम्यग्वेतालभैरव ॥१७॥ एषाचत्रिपुरादेवीयाश्चान्याःपूर्व्वंभाषिताः ॥ सर्व्वास्तुमायाभैरव्यायोगनिद्राजगत्प्रसूः ॥१८॥तस्याःप्रपंचरूपैस्तुबहुभिःसैवक्रीडति ॥ माहामायामूलभूतातत्तस्तुशारदापुरा ॥१९॥उमाततःशैलपुत्रीमत्प्रियायास्ततस्त्विमाः ॥ उग्रचण्डाप्रचण्डाद्यास्त्रिपुराद्यास्तथैवच ॥२००॥तासाञ्चापिसदैवाहम्महाभैरवरूपधृक् ॥ नायकस्तुतरान्ताभिर्न्नित्यन्नित्यव्वैसेद्बुधः ॥ १ ॥ ममभैरवरूपस्यमन्त्रःपूर्वंमयोदितः ॥ रूपञ्चोक्तम्पूजनेषुत्रिपुरायाःक्रमस्मृतः॥२॥महाभैरवविद्महेकालरुद्रायधीमहि ॥ तन्नःकामोभैरवस्तुक्केदीन्नित्यम्प्रचोदयात् ॥३॥ एषाभैरवरूपस्यगायत्रीमेप्रष्ठिता ॥ यथेष्टमांसमद्यादिभोजनादिमयाधृतः ॥४॥ महाभैरवकायोयन्तथास्त्रीरतिसङ्गमे ॥ अयन्तुवाम्यभावेनपुज्योमद्यादिभिःसदा ॥५॥ वामःकायोब्राह्मणोपिमांसमद्यादिमुक्तये ॥ कृतोमहामोहनामाचार्व्वाकादिप्रवर्तकः॥६॥विष्णोर्व्वामात्मिकामूर्तिन्नारसिंहाहूयाभवत् ॥ सतुदाक्षिण्यवामाभ्याम्पूजनीयःसदाबुधैः ॥७॥ तथैवबालगोपालमूर्त्तिर्ज्जरायुवेष्ठिता ॥ मद्यमांसासनोभोगीलोलुपस्त्रीषुसर्व्वदा ॥ ८ ॥ बह्वयस्तुचण्डिकादेव्यावामिकामूर्त्तयःस्मृताः ॥ लक्ष्म्यास्तुवामिकामूर्त्तिरुक्तादहनभैरवी ॥९ ॥ याग्निदाहंपुरग्राममन्दिरेष्वकरोदियम् ॥ सुपूजितामहालक्ष्मीदहन्यासातुपूजयेत् ॥ २१० ॥ वाग्भैरवीसरस्वत्यावामिकामूर्त्तिरीरिताः ॥ तस्यामन्त्रम्पुराप्रोक्तंशुक्लवर्णातुसास्मृता॥११॥मध्यायास्त्रियापुरायास्तुरूपन्ध्यानमिहोच्यते ॥ पूजाक्रम

स्तथैवोक्तः सर्व्वत्रैवतुभैरव ॥ १२ ॥ मार्त्तण्डभैरवोनाममूर्त्तिःसूर्य्यस्यकीर्त्तिता ॥ गणेशस्याग्निवेतालःकथितोवामनामकः ॥
॥ १३ ॥ एतेवाम्येनभावेनपूजनीयाविशेषतः ॥ त्रिधाद्यस्तुयथापूर्व्वन्नमयैर्बलवैस्तथा ॥ १४ ॥ वान्तैर्द्विरेफैःसर्व्वत्रय
थाकृत्वातथातथा ॥ अनुस्वारविसर्गाभ्याम्प्राक्शेषौपरिकीर्तितौ ॥ १५ ॥ मध्येतुकेवलाःपूर्व्वंसानुस्वारविसृष्टिभिः ॥ प
श्चाद्द्वित्रिक्रमाद्यस्तुवर्णैरेकेनचैवहि ॥१६॥ व्यस्तैःसमस्तैरपिचदकारादिषुसंय्युतैः ॥ आद्यायास्त्रिपुरायास्तुमन्त्रवद्योजितै
स्तथा ॥ १७ ॥ तथात्रिपुरभैरव्यामन्त्रवच्चाक्षरैरपि ॥ १७ ॥ त्रिश्चतुर्दशभिःकृत्वाडादीन्स्त्रीँस्तुविशारयेत् ॥ द्वितीयन्द्विगुण
ङ्कृत्वाशेषेत्रादौचयोजयेत् ॥ १८॥ विंशतिस्तुसहस्राणिशेषेचापित्रयोदश ॥ आद्यमाद्यन्ततःप्रोक्तंवाग्भवाद्यन्ततृतीयकम् ॥
॥ १९ ॥ एवञ्चपरमप्येतन्मन्त्राणाञ्चचतुष्टयम् ॥ एतज्ज्ञात्वानरःकामानखिलान्प्राप्यसङ्गतः ॥ २२० ॥ मृतेदेवीपुरय्याँ
तिक्रमादेवतुभैरव ॥ यःसकृत्तुजपेदेतत्सकलम्मन्त्रसञ्चयम् ॥ २१ ॥ प्रथमङ्कामतोन्यस्यसाधकस्तुत्रिभिर्दिनैः ॥ चिन्त
यन्मनसादेवींसम्यक्त्रिपुरभैरवीम् ॥२२॥ सकामानखिलान्प्राप्यस्वरूपेमदनोपमः ॥ धार्म्मिकोन्नृपतिर्भूयाद्ब्राह्मणोद्विजरा
ट्भवेत् ॥२३॥ आराधितशरीरस्तुपिशाचाद्यैस्सदैवहि ॥ नीरोगश्चचिरायुश्चबलवानपिजायते ॥ २४ ॥ एवन्त्रिपुरभैरव्या
मयाप्रोक्तस्त्वयङ्क्रमः ॥ वैष्णव्यांतुमहादेव्याःसहस्राणितुषोडश ॥२५॥ शृणुभैरवमन्त्राणिशिवैकाग्रमनापुनः ॥ अष्टोतर

सहस्रन्तुचतुःषष्टिस्तथात्रयः ॥ २६ ॥ मन्त्राप्रोक्तामहादेव्यामूर्तिभेदेनताःपुनः ॥ अनुस्वारविसर्गाभ्यान्द्विगुणास्तेपुनःस
माः ॥ २७॥ कादिव्यञ्जनसंयोगाद्दूर्ध्वाधोव्यास्तभावतः ॥ द्वाभ्यान्त्रिभिश्चसततमुद्धरेन्मन्त्रवित्पुनः ॥ २८॥ अष्टावष्टौत
तःकृत्वासमस्तव्यस्तसंयुतैः ॥ विस्वरैःसस्वरैश्चापिसानुस्वारविसर्गकैः ॥२९॥केवलैरपितत्रैवद्विव्यस्तैरन्तरस्तैथा ॥ ए
वमष्टोत्तरय्यॉवत्संयोगायोगभावतः ॥३०॥देव्यास्तुषट्सहस्राणिसहस्राणितथादश ॥ मन्त्रास्तुसङ्ख्ययाख्याताःक्रमाद्वे
तालभैरव ॥ ३१॥ समस्तव्यस्तरूपेणवैष्णव्यायेमयोदिताः ॥ ताञ्ज्ञात्वामानवोयातिममैवसदनम्प्रति ॥३२॥ अष्टम्याञ्च
नवम्याञ्चसहस्राणितुषोडश ॥ योजपेन्मन्त्राबीजानिसकृद्वेतुभैरव ॥ ३३ ॥ ध्यायँस्तुवैष्णवींमूर्त्तिन्तदेकाग्रमनाःशृणु ॥ न
रराजोभवेद्धर्मौपण्डितश्चातिहर्षितः ॥ ३४ ॥ चिरायुःसुखभोगीस्याद्दृद्धिक्तोबलवाहनैः ॥ तान्येवचाष्टधाजप्त्वासार्व्वभौमो
नृपोभवेत् ॥ ३५ ॥ गणाध्यक्षोमृतेसस्यात्ततोमुक्तिमवाप्नुयात् ॥ इतिसकलगुणौघैरस्तदोषस्तुनित्यंभवतिकलुषहन्ताश्री
विवृद्धयैसुमन्त्रः ॥ सततमखिलवेत्तायोभवेदेतयोस्तुसचभवतिजितारीरोगशोकप्रमुक्तः ॥ ३६ ॥ इतिश्रीकालिकापुराणेअष्ट
सप्ततितमोध्यायः ॥ ७८ ॥ श्रीभगवानुवाच ॥ निष्पन्हवद्वादशभिर्ल्लक्षैर्म्मन्त्रजपैस्तथा॥पुरश्चरेत्साधकस्तुकाममिष्टान्तिहे
तवे॥१॥जातीपुष्पञ्चबकुलम्मालतीपुष्पमेवच ॥ नन्द्यावर्त्तम्पाटलञ्चस्थितपद्ममतःपरम्॥२॥आज्यमन्त्रम्पायसञ्चदधिक्षी

रन्तथामधु ॥ लाजाश्चापिसकर्प्पूराअमीएवचतुर्द्दश ॥ ३ ॥ पुरश्चरणसम्भूतात्रिपुरायाःप्रकीर्त्तिताः ॥ द्वादशस्वेवलक्षेषु
जप्तेष्वपिचसाधकः ॥ ४ ॥ एतानिसर्व्वद्रव्याणिजुहुयादनलोज्वले ॥ लक्षत्रयन्तुयोजप्त्वापुरश्चरणमाचरेत् ॥ ५ ॥ सतु
साज्यंसकर्प्पूरञ्जुहुयात्तुचतुष्टयम् ॥ दशभिर्न्नवलक्षेषुद्रव्यैर्म्मन्त्रीपुरश्चरेत् ॥ ६ ॥ जप्तेषुचाष्टभिःपट्टसर्व्वैःसर्व्वत्रचाचरेत् ॥
हस्तमात्रन्तुकुण्डंस्यात्षट्कोणन्त्र्यङ्गुलादिकम् ॥ ७ ॥ त्रिपुरायास्तुमध्यायाबालायाश्चसदैवहि ॥ तथात्रिपुरभैरव्याः
कुण्डमानम्प्रकीर्त्तितम् ॥ ८ ॥ चतुष्कोणम्भवेत्कुण्डंहस्तमात्रद्वयेषुच ॥ अष्टाङ्गुलाधिकम्प्रोक्तंवैष्णव्यास्तुपुरश्चरे ॥ ९ ॥
त्रिकोणंहस्तमात्रन्तुकामाख्यायास्तुकुण्डकम् ॥ एवंसर्व्वप्रपञ्चानामासामपितथातथा ॥ १० ॥ संस्कुर्य्यादनलव्वँह्वविँ
धिवद्वैष्णवीकृतौ ॥ कामाख्यायास्तथाकुर्य्याज्ज्यौतिष्टोमादिवत्सुत ॥ ११ ॥ आदौत्रिपुरभैरव्याश्चतुर्म्बिर्द्दशभिस्त
था ॥ जुहुयादनलेवृद्धेआहुतीश्चचतुर्द्दश ॥ १२ ॥ पश्चात्तुमूलमन्त्रेणअष्टोत्तरशतत्रयम् ॥ होमंयन्नववातेनशतानिनव
वाथवा ॥ १३ ॥ जपान्तेतुबलिन्दद्याद्वैष्णव्याबलिदानतः ॥ रत्नकर्प्पूरकनकान्यत्रैवगुरुदक्षिणाः ॥ १४ ॥ अलाभद
धिपुष्पाज्यालाजैर्द्देव्याःपुरश्चरेत् ॥ लाभेचतुर्द्दशद्रव्यैर्ज्जुहुयाद्विधिपूर्व्वकम् ॥ १५ ॥ अस्यायन्त्रंरहस्येनशृणुवेतालभैर
व ॥ यत्कृत्वैवाखिलान्कामाल्लँभतेनरसत्तम ॥ १६ ॥ षट्कोणम्मण्डलङ्कृत्वातेतुकोणत्रयल्लिखत् ॥ मन्त्रन्त्रिपुरभैरव्यात्रिव

र्णान्तुततस्त्वधः ॥ १७ ॥ आद्यायास्त्रिपुरायास्तुत्रिबीजानिलिखेदनु ॥ मध्याबीजत्रयम्मध्येलिखित्वापीठयन्त्रके ॥ १८ ॥
सर्व्वैस्तुमातृकावर्णैस्त्रिधासंवेष्टयेदनु ॥ लाक्षारसैर्ल्लिखित्वातुत्रिलोहैर्व्वेष्टयेत्ततः ॥ १९ ॥ तद्धार्य्यम्मूर्द्ध्निसततन्तेनसर्व्व
जयीभवेत् ॥ रूपवान्बलवान्वाग्मीधनरत्नयुतःसदा ॥ २० ॥ दीर्घायुःकामभोगीचसुप्रजःसचजायते ॥ मध्येबीजल्लि
खित्वैकम्मूर्द्धिचाधस्तथापरम् ॥२१॥ आद्यायास्तद्वदेवात्रभैरव्यास्तद्वदेवहि ॥ इमानिषट्कमन्त्राणिक्रमाद्वेतालभैरव ॥२२॥
पूर्व्ववत्सँल्लिखित्वैवसँवेष्ट्याथत्रिलोहकैः ॥ वामेबाहौदक्षिणेचहृदिकण्ठेकरेतथा ॥ २३ ॥ मूर्द्ध्निधार्य्याणिक्रमतःफलमेत
च्चतद्द्वयम् ॥ सम्पत्सौभाग्यसंस्तम्भवशीकरणमोहनम् ॥ २४ ॥ कवित्वमथसर्व्वत्रभवेदेतन्नसंशयः ॥ यन्त्रमन्त्राणितन्त्रा
णित्रैपुराणितुभैरव ॥ २५ ॥ सपञ्चसह्स्राणिमन्त्रौघैस्त्रिगुणीकृतैः ॥ तज्ज्ञात्वापूजकोधीमान्परत्रेहनसीदति ॥ मन्त्रौघैस्त
त्रमन्त्रैरविचलितपदन्त्रैपुरय्यँत्प्रधानय्यँद्विप्राद्यैरदेयव्विँगतभयपदय्यँत्कवित्वप्रदात् ॥२६॥ त्रैवर्ग्गीयन्त्रिरूपन्त्रिदिवमथ
सुरायत्रसन्तित्रयोपितज्ज्ञानौघैःसुभूतंसकलशुभफलय्यँन्महत्त्रैपुराख्यम् ॥ २७॥ कवचन्त्रिपुरायास्तुशृणुवेतालभैरव ॥
यज्ज्ञात्वामन्त्रवित्सम्यक्फलमाप्नोतिपूजने॥२८॥ उपचाराःपुराप्रोक्तायेनएवात्रपूजने ॥ प्रतिपत्तिस्तुसैवात्रकीर्तितानित्य
पूजने ॥ कवचस्यचमहात्म्यमहंब्राह्मानकेशवः॥२९॥वक्तुङ्क्षमस्त्वनन्तोपिबहुजिह्वःकदाचन॥ क्रव्याद्भयंनलभतेतथातोयप

रिप्लवे ॥ ३० ॥ कवचस्मरणादेवसर्व्वंकल्याणमाप्नुयात् ॥ त्रिपुराकवचस्यास्यऋषिर्दक्षिणउच्यते ॥ ३१ ॥ छन्दश्चि
त्राह्वयम्प्रोक्तन्देवीत्रिपुरभैरवी ॥ धर्म्मार्थकाममोक्षाणाव्विँनियोगस्तुसाधने ॥ ३२ ॥ यथाद्यात्रिपुराख्यायाबीजानि
क्रमतःसुत ॥ नामतोवाग्भवाद्योनिकीर्त्तितानिमयापुरा ॥ ३३ ॥ तथात्रिपुरभैरव्याबीजानामपिनामतः ॥ वाग्भवःका
मराजश्चतथात्रैलोक्यमोहन ॥ ३४ ॥ अवतुसकलशीर्षंव्वाँग्भवेवाचमुग्रांनिखिलरचितकामान्कामराजोवतान्मे ॥ स
कलकरणवर्गण्डामरःपातुनित्यन्तनुगतबहुतेजोवर्द्धयन्बुद्धिहेतुः ॥ ३५ ॥ कूटैस्तुपञ्चभिरिदङ्कदितंसद्यन्त्रमन्त्रततोनुस
ततम्ममतेजउग्रम् ॥ तेजोमयम्महतिनित्यपरायणस्थन्तन्मेहृदिप्रवितन्तनुतांसुबुद्धिम् ॥ ३६ ॥ आधारेवाग्भवःपा
तुकामराजस्तथाहृदि ॥ भ्रुवोर्म्मध्येचशीर्षेचपातुत्रैलोक्यमोहना ॥ ३७ ॥ विततकुलकलाज्ञाकामिनीभैरवीयात्रिपुरपु
रदहाख्यासर्व्वलोकस्यमाता ॥ वितरतुममनित्यन्नाभिपद्मेसकुक्षौवनगतवनितानांरोगहानिंसुखञ्च ॥ ३८ ॥ योगेर्ज्ज
गन्तिपरिमोहयतीवनित्यञ्जागर्तियात्रिपुरभैरवभाविनीति ॥ सायश्चभावकलिताममपञ्चभागेनासाक्षिकर्णरसनात्वचि
पातुनित्यम् ॥ ३९ ॥आद्यातुत्रिपुरेमय्याँमध्यायाकामदायिनी ॥ त्रिधातुनवतान्नित्यंदेवीत्रिपुरभैरवी ॥ ४० ॥ उद
यदिशिसदामाम्पातुबालातुमाताधमदिशिममध्याभद्रमुग्राव्विँदध्यात् ॥ वरुणपवनकाष्ठामध्यतोभैरवीमामवतुसकलरक्षा

ङ्कुर्व्वंतीसुन्दरीमे ॥ ४१ ॥ महायोनिर्म्महायोनेर्विश्वयोनिःसदैवतु ॥ सापातुत्रिपुरानित्यंसुन्दरीभैरवचया ॥ ४२ ॥
ललाटेसुभगादेवीपूर्व्वस्यान्दिशिकामदा ॥ नित्यन्तिष्ठतुरक्षन्तीसदात्रिपुरसुन्दरी ॥ ४३ ॥ भ्रुवोर्म्मध्येतथाग्नेयान्दिशि
मान्त्रिपुरामया ॥ वर्द्धयन्तीभगगणामाम्पातात्रिपुरभैरवी ॥ ४४ ॥ वदनेदक्षिणस्याञ्चदिशिमाम्भगसर्पिणी ॥ त्रिपु
रायमदूतादीन्वारयन्तीसदावतु ॥ ४५ ॥ कर्णयोःपश्चिमायाञ्चदिशिमाम्भगमालिनी ॥ अयोनिजाजगद्योनिर्ब्बालामा
न्त्रिपुरावतु ॥ ४६ ॥ अनङ्गकुसुमाकण्ठेप्रतीच्यान्दिशिसुन्दरी ॥ त्रिपुराभैरवीमायानित्यम्पातुमहेश्वरी ॥ ४७ ॥ हृदिमारु
तकाष्ठायान्देवीचानङ्गमेखला ॥ नाभावुदीच्यान्दिशिमाम्मातङ्गीत्रिपुरापरा ॥ ४८ ॥ अनङ्गमदनादेवीपातुत्रिपुरभैरवी ॥ ऐ
शान्यान्दिशिलिङ्गेचमदविभ्रममन्थरा ॥ ४९ ॥ वाग्वादिनीरक्षतुमांसदात्रिपुरभैरवी ॥ गुदमेढ्रान्तरेपातुरतिस्त्रिपुरभैरवी ॥
हृदयाभ्यन्तरेप्रीतिःपातुत्रिपुरसुन्दरी ॥ ५० ॥ भ्रूनासयोर्म्मध्यदेशेनित्यम्पातुमनोभवः ॥ द्रावणःशत्रुनःपातुवाणीमान्दुर्ग्ग
मूर्द्धनि ॥ ५१ ॥ क्षोभणोमांसदापातुक्रव्याभ्यो निष्ठभीतितः ॥ वशीकरणवाणीमामग्नितःपातुराजतः ॥ ५२ ॥ आकर्षणा
ह्वयोवाणीमाम्पातुशस्त्रघाततः ॥ मोहनःसर्व्वभूतेभ्यःपिशाचेभ्योजलात्तथा ॥ ५३ ॥ नित्यम्पातुमहाबाणस्तन्वानःकाममुत्त
मम् ॥ मालामांशास्त्रबोधायशास्त्रवादेसदावतु ॥ ५४ ॥ पुस्तकम्पातुमनसिसङ्कल्पव्वँर्द्धयन्मम ॥ वरःपातुसदास्थास्निस्थामते

जोविवर्द्धयन् ॥ ५५ ॥ प्रभयश्चामयन्धत्तांसर्व्वेभ्योभूतिभावनम् ॥ उर्द्धाधोभावभूतस्थिततरकरणैरक्तकीर्णासुचक्राका
लाग्निप्रख्यरोचिःसकलसुरगणैरर्च्चितामुण्डमाला ॥ ज्ञानध्यानैकताना!प्रबलबलकरन्तत्त्वभूतप्रतिष्ठम्पातादूर्द्ध्वंतथाधःसक
लभयभृतोभोगभीरोस्तुविद्या॥ ५६ ॥भूःपातुहृदिमान्नित्यंसःशीर्षेपातुनित्यशः ॥ वःपातुगुह्यदेशेमांसौःपातुकण्ठपार्श्व
योः॥ ५७॥ वकारोममनाडीषुशिरःसौःपातुसर्व्वदा॥ शक्रःपातुसदाकाशेब्रह्मारक्षतुसर्व्वतः ॥ ५८ ॥ विद्याविद्याभाविनी
कामरूपास्थूलासूक्ष्मामाययायादिमाया ॥ ब्रह्मेन्द्राद्यैरर्च्चिताभीतिहन्त्रीरक्षाङ्कुर्य्यात्सर्व्वतोभैरवीमाम् ॥ ५९ ॥ आद्याम
ध्याभाविनीनीतियुक्तासम्यग्ज्ञानज्ञेयरूपापराया ॥ आदावन्तेमध्यभागेवतारापायाद्देवीत्रैपुरीभैरवीया ॥ ६० ॥ यन्मन्त्र
भागतन्त्राणांयन्त्राणामपिकेशवः ॥ ६१ ॥ ब्रह्मारुद्रश्चजानातितत्त्वन्नान्योनमोस्तुताम् ॥ ६२ ॥ त्वम्ब्रह्माणिभवानि
विश्वभवितुर्लक्ष्मीरतिर्य्योगिनीत्वव्वाँग्मीसुभगाभवायुतयुगमन्त्राक्षरन्निष्कलम् ॥ वर्णास्तेनिखिलास्तनावचलितस्त्वङ्का
मिनीकामदात्वंदेवित्रिपुरेकवित्वममलंसौभाग्यमुच्चैःकुरु ॥ ६३ ॥ इदन्तुकवचन्देव्यायोजानातिसमन्त्रवित् ॥ ६४ ॥
नाधयोव्याधयस्तस्यनभयञ्चसदाक्कचित् ॥ इतितेपरमङ्गुह्यमाख्यातंकवचम्परम् ॥ ६५ ॥ तम्भजस्वमहाभागततःसि
द्धिमवाप्स्यसि ॥ इदम्पवित्रम्परम्पुण्यंकीर्त्तिविवर्द्धनम् ॥ ६६ ॥ त्रिपुरायास्त्रिमूर्त्तेस्तुकवचम्मयकोदितम् ॥ यःपठेत्प्रा

तरुत्थायसप्राप्नोतिमनोगतम् ॥ ६७ ॥ लिखितङ्कवचय्यँस्तुकण्ठेगृह्णातिमन्त्रवित् ॥ नतस्यगात्रङ्कन्तन्तिरणेशस्त्राणिभै
रव॥सङ्ग्रामेशास्त्रवादेचविजयस्तस्यजायते ॥ ६८॥ इदङ्कवचमज्ञात्वायोजपेत्त्रिपरान्नरः ॥ सशस्त्रघातमाप्नोतिभैरवींसुन्दरी
मपि ॥ ६९ ॥ बीजमुच्चारयेत्स्वस्थोगतवाग्दोषनिश्चितः ॥ सय्येँगबोधःप्रत्येकभेदश्रवणगोचरः ॥ ७० ॥ यथैवजायतेस
म्यक्यज्ञादिदोषवर्जितः ॥ यस्योच्चारणकृत्येतुसय्योंगोबोधदूषणम् ॥ ७१ ॥ प्रत्येकभिन्नताबोधःसकुष्ठीजायतेनरः ॥ न्या
सानाम्प्रचुरत्वेतुफलानामपिभूरिता ॥ ७२ ॥ उक्तन्यासोनहित्याज्योह्यधिकन्तुसमाचरेत् ॥ मयोक्तन्यासमज्ञात्वानकृत्वा
वाप्रमादतः ॥ ७३ यःकुर्य्यात्पूजनन्देव्याआप्नुयात्समहापदम् ॥ मन्त्राक्षरस्यविन्यासःसर्व्वमन्त्रेषुकीर्त्तितः ॥७४॥ वैष्ण
वेचाथवारौद्रेमहाभागेथवापुनः ॥ मन्त्रेकलेवरगतेमहामायाःप्रपूजने॥७५॥मन्त्रन्यासेनवाकुर्य्यात्कुर्य्याद्वान्यत्रवाचरेत् ॥
अङ्गरागेषुसिन्दुरम्पानेषुमदिरातथा ॥ ७६ ॥ वस्त्रंरक्तन्तुकौशेयन्त्रिपुराप्रीतिदम्मतम् ॥ त्रयोदीपाःप्रदातव्याःपञ्चवासप्त
भैरव ॥ ७७ ॥ इतोन्यूनन्नप्रदद्यात्त्रिपुरायैकदाचन ॥ मल्लिकामालतीकुन्दव्वँकोद्रोणःसिताम्बुजम् ॥७८॥ शुक्लपुष्पाणित्रि
पुराप्रीतिदानितुभैरव ॥ रक्ताम्बुजय्यँवारक्ताकरवीरोथकोमलः ॥ ७९ ॥ रक्तेत्रिपुरभैरव्याःप्रीतिदाःस्नहेकाञ्चनैः ॥इदन्तेक
थितम्पुत्रसङ्क्षेपादेवभैरव ॥ ८० ॥ अवाप्यसिद्धिम्परमांस्वयव्विँस्तारयिष्यसि ॥ आराधयत्वम्महामायामवाप्यचगणेशता

म् ॥ ८१ ॥ कल्पमन्त्रौघमन्त्राणांभविष्यसिवितानकः ॥ अस्यास्त्रिपुरभैरव्याःशुक्लरूपाणियानितु ॥ ८२॥ तानिसार
स्वताख्यानिमन्त्राःसम्यगुदीरिताः ॥ सरस्वतीतुयादेवीवीणापुस्तकधारिणी ॥ ८३ ॥ स्त्रक्कमण्डलुहस्ताचदक्षिणेशु
क्लवर्णिका ॥ महाचेलस्यपृष्ठस्थासितपद्मोपरिस्थिता ॥ ८४ ॥ शुक्लवर्णाशुक्लवस्त्राशुक्लाभरणभूषिता ॥ तस्यास्तुवाग्भ
वाद्याभ्यान्नेत्रबीजन्द्वितीयकम् ॥ ८५ ॥ कृत्वान्तेनियोज्यैवमन्त्रम्प्राक्प्रतिपादितम् ॥ वरदाभयहस्ताचमालापुस्तकधा
रिणी ॥ ८६ ॥ शुक्लपद्मासनगतासापरावाक्सरस्वती ॥ मालाबीजाद्यक्षरन्तुद्विरुक्तञ्चार्द्धचन्द्रकम् ॥ ८७ ॥ मन्त्रमस्याः
पुराप्रोक्तन्तन्त्रंसामान्यमीरितम् ॥ एषातुयारक्तवर्णामुण्डमालाविभूषिता ॥ ८८ ॥ तस्याःप्रोक्तःपुरामन्त्रःसातुरुद्रासर
स्वती ॥ शश्वोमन्त्रस्तथैतस्यास्त्रयोदशनिरूपणे ॥ ८९ ॥ एताःकविस्त्वशास्त्रौघतत्त्ववादविनिश्चये ॥ सुखसम्पत्करप्रो
क्तानित्यमेवतुभैरव ॥९०॥ अस्याप्यस्तैःसमस्तैश्चशुक्लरक्तादिभेदतः ॥ चतुःषष्टिमूर्त्तयश्चत्रिपुरादुतवाग्भवम् ॥९१ ॥ म
हामायायोगनिद्रामूलभूताजगत्प्रसूः ॥ जगन्माताजगद्धात्रीविद्याविद्यापरात्मिका ॥ ९२ ॥ तस्याएवमहाभागत्रिपुराद्या
विभूतयः ॥ प्रस्तुताःकथितानित्यन्ताःस्वयङ्कृतएवहि ॥९३॥ इतितेकथितम्पुत्रमहादेव्याःमनोहरम् ॥ रहस्यव्वाँमदाक्षि
ण्यम्मन्त्रसिद्धिंशृणुष्वमे ॥९४॥ इतिश्रीकालिकापुराणेत्रिपुराकवचमेकोनाशीतितमोध्यायः ॥ ७९ ॥ ॥छ॥ श्रीभगवानु

वाच ॥ ॥ मन्त्रशुद्धिमवेक्ष्यैवगृह्णीयान्मन्त्रमुत्तमम् ॥ तत्रसिद्धंसुसिद्धञ्चसाध्यशात्रत्वमेवच ॥ १ ॥ मन्त्रश्चतुर्विधम्प्रोक्तंत
द्व्यक्षरभेदतः ॥ वर्णक्रमःशाश्वतस्तुयोमयाभाषितंपुरा ॥ २ ॥ तमादौभैरवंज्ञात्वापश्चाच्चक्रंशृणुष्वमे ॥ वर्णानान्तुयुगादी
नाञ्चैणवीतन्त्रसञ्ज्ञकः ॥ ३ ॥ यःप्रोक्तोभून्महामन्त्रस्तस्यासन्यक्षराणितु ॥ मूलभूतानितान्येवततोन्यानिपवर्द्धयेत् ॥
॥४॥ अकारश्चककारश्चचटकारौतथैवच ॥ तपकारौयकारश्चवर्गाद्याःपरिकीर्त्तिताः ॥५॥ आइईऊइउऋलृलॄएतेदीर्घादी
र्घकाः ॥ एऐओऔविसर्गश्चबिन्द्वादिर्य्याज्ञिकस्तथा ॥६॥धनेरन्तरजाश्चेतिकीर्त्तितास्तुस्वराअमी ॥ खकारश्चगकारश्चघ
ङोवर्गःप्रकीर्त्तितः ॥७॥ व्यञ्जनकक्कारादिछजौटकाजौपरस्मृतः ॥ उकारश्चडकारश्चभैरवशब्दादिरेवच ॥८॥ णकारान्त
तृतीयोयव्वर्गाष्टादिःप्रकीर्त्तितः ॥ थकारश्चदकारश्चधर्म्मशब्दादिरेवच ॥ ९ ॥ नवशब्दस्यचैवादिश्चतुर्थोवर्गउच्यते ॥ फ
लशब्दस्ययश्चादिबहुशब्दादिरेवच॥१०॥अकारोमनशब्दादिःपञ्चमोवर्गउच्यते ॥ यकारश्चरकारश्चलकारोवस्तथैवच ॥
॥११॥एभिश्चतुर्वर्गोयंषष्ठोभैरवउच्यते ॥ शषसाहःक्षकारश्चसयोँगपरिवेदकः ॥१२॥ पञ्चभिःशेषस्तुवर्ग्गोयंसप्तमःपरिको
र्तितः॥सद्योँगायोगसल्लोँमप्रतिलोमैरिमेसुत॥१३॥वर्णायुर्मन्त्रनामादौवाङ्मात्रेपिचभैरव॥चतुर्व्वर्गाप्रदावर्णासुखदुःखक
रास्तथा॥१४॥रोगश्चतेजसम्पूज्यपूजकाःपरिकीर्तिताः ॥ अहंविष्णुश्चब्रह्माचगायत्रीब्रह्ममातृकाः ॥१५॥ अपरम्ब्रह्मवर्णा

र्थं परब्रह्मसुखप्रदम् ॥ अपरब्रह्मकुशलःपरम्ब्रह्माधिगच्छति ॥ १६ ॥ सिसृक्षुरीश्वरोवर्णाञ्जगन्तिस्वेच्छयापुनः ॥ ससर्ज्ज ममवक्त्रेतांब्रह्मवक्त्रेचवैन्यधात् ॥१७॥ अहन्तुसकलान्वर्णान्यस्यभैरवतन्त्रकम् ॥ अकारस्तुबहुलम्पुत्रज्ञानमार्ग्गंव्विँवर्धय न् ॥१८॥ तइमेगदितावर्णामयावर्णविनिश्चये ॥ मन्त्रशुद्धिविवेकार्थव्वँर्णचक्रन्ततःशृणु ॥१९॥ शक्तिशम्भुस्वरूपिण्यौरेखेद्वे प्रथमन्यसेत्॥तन्मध्यतःपुनारेखेविष्णुलक्ष्मीतलेतथा ॥२०॥ तयोस्तुरेखयोर्म्मध्येद्वेरेखेसमतोन्यसेत् ॥ तस्यचक्रस्यचारेषु रेखास्तुपरिसङ्ख्यया ॥२१॥ चतस्रस्तुप्रदातव्याःस्वरमध्येतुभैरव ॥ भिन्नानाञ्चतथावर्णान्सन्धयोष्टौप्रकीर्त्तिताः ॥२२॥ ने मयस्तुचतस्रोस्यसन्धिमध्येषुकीर्त्तिताः ॥ अष्टारसय्युँतञ्चक्रञ्चतुर्नेमिसमन्वितम् ॥ २३ ॥ बहिर्व्वेष्टनसंय्युक्तवर्णचक्रप्र कीर्त्तितम् ॥ मेषादीनाञ्चराशीनामुदयास्तप्रतिज्ञया ॥ २४ ॥ इदमेवभवेच्चक्रञ्ज्ञानश्रीवृद्धिकारकम् ॥ इदञ्चक्रल्लिँखित्वा तुसमभूमावुदङ्मुखः ॥ २५ ॥ प्राङ्मुखोवालिखेद्वर्णाञ्छुचिरिष्टन्नमन्गुरुम् ॥ प्रदक्षिणल्लिँखेत्तस्मिन्वर्णांस्तेष्वेवतुक्रमा त् ॥ २६ ॥ पुरोनेमावकारान्तुरकारञ्चापिवैलिखेत् ॥ अकारव्वँर्ज्जयेद्दीर्घमीकारञ्चस्वरेषुवै ॥ २७ ॥ आकारादिक्षका रान्तंङाइनञणवर्जितम् ॥ प्रदक्षिणक्रमादेवलिखित्वावर्णसञ्चयम् ॥ २८ ॥ स्वस्वनामाद्यक्षरंगृह्यकुर्य्यात्तुगणनक्रमम् ॥ मन्त्रस्याद्यक्षरय्यावँत्सिद्धाद्यन्तत्रयोजयेत् ॥ २९ ॥ नवैकपञ्चकेसिद्धःसाध्यःषड्युग्मपङ्क्तिषु ॥ त्रिसप्तैकादशेष्वेवसुसिद्ध

परिकीर्तितः ॥ ३० ॥ द्वादशाष्टचतुर्थेषु शास्त्रेव:परिकीर्तितः ॥ सिद्धेनेवाचिरात्सिद्धिःसाध्याःकालेनसिध्यति ॥ ३१ ॥ क
मान्नाशयतेशत्रुःसुसिद्धःसिद्धेदोचिरात् ॥ यर्व्वर्णक्रमःप्रोक्तोमन्त्रेदाक्षिण्यगोचरे ॥ ३२ ॥ वाम्याराधनमन्त्रेषुक्रमंश्रृणि
हभैरव ॥ ऋलद्वयंङञणनावर्ज्ज्यांश्चवर्णगोचरे ॥ ३३ ॥ लिखेद्वामक्रमेणैवतत्रवर्णांस्तुमन्त्रवित् ॥ नृसिंहार्कवराहा
णांप्रासादप्रणवस्यच ॥ ३४ ॥ एकाक्षरद्व्यक्षराणान्नसिद्धादिविचिंतनम् ॥ बीजेषुचापिसर्व्वेषुदीक्षार्थेषुचभैरव ॥ ३५ ॥ सिद्धा
दिचिन्तानोकार्य्याग्राह्यास्तुदशवश्यकम् ॥ सुसिद्धक्कामदग्राह्यंसाध्यसिद्धविचारणात् ॥ ३६ ॥ नग्राह्यःशात्रवोघोरैर्गृही
त्वाप्नोतिचापदम् ॥ योयस्यैकाक्षरेमन्त्रस्तन्नाम्नासनिगद्यते ॥ ३७ ॥ सहितश्चन्द्रबिन्दुभ्यान्तद्बीजमितिगद्यते ॥ तथा
शक्रोनकारस्यात्सार्द्धचन्द्रःसबिन्दुकः ॥ ३८ ॥ सएवशक्रबीजंस्यात्तथान्यत्रापियोजयेत् ॥ मन्त्रेद्वारेषुसर्व्वत्रपरतः
परतःपुरः ॥ ३९ ॥ पूर्व्वतोपिपरेकार्य्यमनुक्तःपूर्व्वपक्षकः ॥ यदाषोडशसाहस्त्रर्व्वैर्णव्यामन्त्रसञ्चयम् ॥ ४० ॥ चक्रेनिरी
क्ष्यतेतत्रषोडशारस्तुचक्रकम् ॥ विंशतिस्तुसहस्त्राणित्रिपुरायायदेक्षते ॥ ४१ ॥ द्वात्रिंशारन्तत्रचक्रंल्लेखनीयंसदाबुधैः ॥ इद
मेवमहाचक्रंषोडशारादिकङ्कती ॥ ४२ ॥ कुर्य्यादधिकरेखाभिर्म्मन्त्रशुद्ध्यन्तरेसुत ॥ इयन्तेकथितापुत्रमन्त्रासिद्धिरभीष्टदा
॥ ४३ ॥ जानातिसम्यक्यइमांसजयीकाममाप्नुयात् ॥ रहस्यम्परमम्पुत्रप्रयोगादिप्रकारतः ॥ ४४ ॥ वक्ष्यामितत्स

मासेनशृणुवेतालभैरव ॥ दन्तःपक्षबिडालस्यतत्त्वचापरिवेष्टितः ॥४५॥ निर्म्माल्येनतुवैष्णव्यातत्संवेष्ट्यगुणत्रयम् ॥ तत्त

द्वावामसूत्रस्यतत्तन्मन्त्रमन्त्रितम् ॥ ४६ ॥ गृहीत्वादक्षिणेपाणौमन्त्राणांशतमादितः ॥ सञ्चयेदथवैष्णव्या अष्टम्यान्निय

तेन्द्रियः॥४७॥ततस्तुदक्षिणेबाहौधार्य्यंय्यन्त्रोत्तमम्बुधैः ॥ ततोद्वादशसिद्धिःस्याद्धर्त्ताचेत्राभितिस्तिलीम्॥४८॥जयःसङ्ग्रा

मवादेषुशरीरस्याप्यरोगिता ॥ वशकृद्राजपुत्राणांराज्ञामपिचसन्ततम् ॥ ४९ ॥ भूतप्रेतपिशाचाश्चनोयान्तिनेत्रगोचरे ॥

योषितांसमदानान्तुवशकृच्चिन्तनात्सकृत् ॥ ५० ॥ रुधिराणांश्लेष्मणाञ्चधातूनांस्तम्भनन्तथा ॥ तेजसास्तम्भकश्चैवचक्षु

स्तेजप्रदस्तथा ॥५१॥ मूर्द्धिपक्षबिडालस्यहस्तन्दत्वाशतत्रयम् ॥ वैष्णवीतन्त्रमन्त्रन्तु जप्त्वातंस्थापयेद्गृहे॥५२॥तव्विँडाल

न्तुयापश्येन्मलिनीवनितासुत ॥ नापुत्रासाभवित्रीतुकदाचिदपिभैरव ॥ ५३ ॥ तादृक्पक्षबिडालन्तुयस्यतिष्ठतिमन्दिरे ॥ मृ

तापत्यापितद्गेहेजीवपुत्राप्रजायते ॥५४॥ कोकिलोभृङ्गराजोवाचकोरोवाशुकोथवा॥वैष्णवीतन्त्रमन्त्रेणमन्त्रितोयत्रतिष्ठति

॥ ५५ ॥ विघ्नन्नमन्दिरेतस्यभवित्रस्तुप्रजाभवेत् ॥ नसर्प्पास्तत्रगच्छन्तिगताःखादन्तिनोनरान् ॥ ५६॥ नारीनन्वधकीतस्य

मन्दिरेपिप्रजायते ॥ पञ्चमूर्तेश्चण्डिकायानिर्म्माल्यानिचपञ्चमः ॥ ५७॥ तेषांबलीनांमांसेनस्थाल्याम्पक्त्वादिनत्रयम् ॥ अ

ष्टम्यांतत्पुनर्दैव्यैदत्वातन्मन्त्रमन्त्रितैः ॥५८॥ तोयैरभ्युक्ष्यभुञ्जीयान्मनसाचिन्तयेच्छिवाम् ॥ तस्मिन्भुक्तेतुदीर्घायुर्ज्जराशो

कविवर्जितः॥५९॥तेजस्वीशत्रुदमनःकविर्व्वाग्मीचजायते॥ललाटेमूर्द्धिकण्ठेचबाह्वोःपाण्योस्तथाहृदि ॥ ६० ॥ वैष्णवी
तन्त्रमन्त्रस्ययानिचाष्टाक्षराणिच ॥ लिखित्वातानिचैतेषुस्थानेषुमन्त्रविद्बुधः ॥ ६१ ॥ कुङ्कुमंक्षीरमलयजातपङ्कैःसुया
वकैः॥अष्टम्यांसंय्यतोभूत्वानवम्याम्प्रथमन्नरः॥६२॥प्रतिस्थानेन्यस्यकरेमष्टावष्टौजपेद्बुधः॥आवर्त्तनेनमन्त्राणान्ततो
नुपूजयेच्छिवाम् ॥६३॥ततस्तस्मिन्दिनेदेव्यैविजातीयंम्बलित्रयम् ॥ दत्वासहस्रम्मन्त्रस्यसङ्ख्ययाजपमारभेत्॥६४॥
जपान्तेतुहविर्भुक्त्वासय्यतोरजनीन्नयेत् ॥ एवंसकृत्कृतेपुत्ररणेतस्यपराजयः ॥ ६५॥ कदाचिदपिनोभूयान्नचवादेषुशास्त्र
तः ॥ विधिमेवंसकृत्कृत्वारणकालेयथातथा॥६६॥सदालिखेत्क्षत्रियस्तुविजयायरणेषुच॥अपरन्तुरणाष्टाङ्गङ्गुह्यमेतत्प्रकी
र्त्तितम् ॥ ६७ ॥ अनेनैवतुगुह्येनविजयीत्वम्भविष्यसि ॥इतितेकथितंसर्व्वङ्गुह्याद्गुह्यतरमशुभम् ॥ ६८ ॥ सुखस
म्पत्करम्मन्त्रयन्त्रतन्त्रसमन्वितम् ॥ यच्छ्रेतुन्त्रिदशाःसर्व्वेनित्यव्वाँञ्छन्तिचामृतम्॥६९॥ तदिदन्तेसमाख्यातम्पुत्रवे
तालभैरव॥एतत्सर्व्वन्नरोज्ञात्वातत्त्वतःपुत्रभैरव॥ ७० ॥सकामानखिलान्प्राप्यनित्यंकैवल्यमाप्नुयात् ॥शृणोतियःसकृ
दिदङ्कथ्यमानोद्विजोत्तमैः ॥ ७१ ॥ नतस्यविघ्नाजायन्तेनापुत्रःसचजायते ॥ दीर्घायुर्व्वलयुक्तश्चनित्यम्प्रमुदितःकृती
॥ ७२ ॥ वाञ्छितार्थमवाप्योहिदेवीगृहमवाप्नुयात् ॥ गच्छन्तङ्कामरूपान्तःपीठन्नीलाचलाह्वयम् ॥ ७३ ॥ कामाख्यानि

लयङ्कुब्यङ्कुब्जिकापीठसञ्ज्ञकम् ॥ आकाशगङ्गायत्रास्तितज्जलैरभिषिच्यच ॥ ७४ ॥ तत्राराधयतम्पुत्रौमहामायांजग
न्मयीम् ॥ साप्रसन्नाचिराद्देवीवरदानौभविष्यति ॥ ७५ ॥ ॥ और्वउवाच ॥ ॥ इत्युक्त्वावृषभारूढस्तदावेतालभैरवौ ॥
सपुत्रोतुपरित्यज्यतत्रैवान्तरधीयत॥७६॥ ततस्तौनाटकंशैलम्परित्यज्यतपस्विनौ ॥ आसेदतुर्म्महात्मानव्वँसिष्ठम्ब्रह्मणःसु
तम् ॥ ७७ ॥ सतुसन्ध्याचलगतस्तौदृष्ट्वासमुपस्थितौ ॥ सभाजयामासमुनिःशिष्यवत्तौहरात्मजौ ॥ ७८ ॥ ततस्तस्योप
देशेनवसिष्ठस्यमहात्मनः ॥ जग्मतुस्तौमहाशैलन्नीलङ्कामाख्ययागतम् ॥ ७९ ॥ तत्रगत्वामहात्मानौवैष्णवीतन्त्रगोच
रम् ॥ आदायजातान्तान्देवींमहामायांजगन्मयीम् ॥ ८० ॥ भैरवाख्यस्यलिङ्गस्यनिकटस्थौक्षिवात्मनः ॥ आकाशगङ्गामा
ह्लाव्यस्थण्डिलेमण्डलोत्तमम् ॥ ८१ ॥ विधायनरशार्द्दूलौजपतुर्म्मन्त्रमुत्तमम् ॥ तञ्चदेवाविधिवन्मन्त्रंसिद्धमष्टाक्षरात्मक
म् ॥ ८२ ॥ वेतालस्यतथासाध्यमष्टलक्षाणिसङ्ख्यया ॥ त्रिभिर्व्वर्षैस्तुलक्षाणाश्चतुर्णामन्ततस्ततः ॥८३ ॥ त्रिधापुरश्चरण
ञ्चतौभक्त्यासमकुर्व्वताम् ॥ यद्यदोत्तरतन्त्रोक्तकल्पोक्तम्पूजनंकृतम् ॥ ८४ ॥ तत्सर्व्वञ्चक्रतुस्तौतुतन्त्रिहायनसव्वृतैः ॥
कामाख्यात्रिपुरादीनामन्यासामपिपूजनम् ॥ ८५ ॥ सकृत्कृत्वापीठयात्राञ्चेरतुर्व्विधिवत्तदा ॥ एवन्तौबद्धकवचौकृतन्यासौ
हरात्मजौ ॥ ८६ ॥ सुप्रीताचानुजग्राहमहामायाथतौतदा ॥ ध्यानस्थयोस्तुजपतोर्य्यजतोश्चजगन्मयी ॥ ८७ ॥ शिवलिङ्ग

व्विँनिर्भिद्यतदाप्रत्यक्षताङ्गता ॥ तस्याव्विँनिर्ग्गतायान्तुशिवलिङ्गन्त्रिधाभवत् ॥८८॥भैरवोभैरवीचेतिहेरुकश्चतथात्रयः ॥
तान्ददर्शतदादेवीव्वेतालोभैरवस्तदा ॥ ८९ ॥ यथाध्यानगतादृष्टाबहिश्चापितथातथा ॥ तान्दृष्ट्वाचारुसर्व्वाङ्गीम्पीनोन्नत
पयोधराम् ॥ ९० ॥ वरदाभयहस्ताञ्चसिद्धसूत्रासिधारिणीम् ॥ रक्तपद्मप्रतीकाशांसितप्रेतासनस्थिताम् ॥ ९१ ॥ निमी
लयनयनद्वन्द्वन्तदावेतालभैरवौ ॥ त्राहित्राहिमहामायेत्यूचतुस्तांमुहुर्म्मुहुः ॥ ९२ ॥ ततस्तयामहादेव्यातेजसाप्यायितौतु
तौ ॥ परस्पर्शवरहस्तस्यचाग्रभागेनवैष्णवी ॥ ९३ ॥ आप्यायितौततस्तौतुस्पृष्टावपितथापुनः ॥ आसेदतुश्चदेवत्वम्मनुष्य
त्वविहाँयच ॥ ९४ ॥ देवभूतौतदातौतुमहामायाञ्जगन्मयीम् ॥ स्तुतिभिर्न्नतिभिश्चेतितदातुष्टवतुःशिवाम् ॥ ९५ ॥ वेतालभै
रवावूचतुः ॥ जयजयदेविसुरगणार्च्चितपापङ्कजे विश्वस्यभूतिभाविनिशशिमौलिकेलिविभाविनिगिरिजे ॥ ९६ ॥ नेत्रत्रयनिर्ज्जि
तविवस्वद्विधुवह्निकान्तितुलितकमलजे ॥ मध्यनेत्रनतभ्रूभङ्गभक्तरक्तमतिचयज्वायकविमलजे ॥ ९७ ॥ आज्ञाचक्रान्तशा
न्तनवणिकोटिकरोटितुल्यकान्तशान्तशशधरे ॥ बहुमायका यभोगयोगतरङ्गसारस्यपद्मवसुचरे ॥ ९८ ॥ त्रिनाडिनीतमध्य
वद्धत्रिस्किरवल्लभशुभसुषुम्नसमाधारपरे ॥ विबुधरत्नविमोदिविश्वमूर्तिमहोमयानवसिषट्चक्रधरे ॥ ९९ ॥ आदिषोडशचक्रचु
म्बितचारुदेहपीनतुङ्गकुचाचलाचलाङ्कितभूमिमध्यनागशाकगते ॥ सिद्धिसूत्रवराभयासिशान्तपातकपङ्कजातकमूलमणि

चतुर्व्वाहुयुते ॥ १०० ॥ ॥ ज्ञानतालकमन्त्रतन्त्रयोगियोगनिबद्धसारभूतभङ्गविनोदकृते ॥ आत्मतत्त्वपरैकशाररत्नहारक मुक्तिसूक्तिविवेकशितप्रेतरते ॥ १ ॥ रत्नसारसमस्तसङ्गतरङ्गरागवियोगिमन्त्रशान्तपूरविशेषकृते ॥ योगिनीगणनृत्य भृत्यभावननिबद्धनद्धहारकङ्कणमुख्यभूषणपते ॥ २ ॥ साट्टहासविनोदमोदितमुक्तकेशसुरेशनिबद्धदेहपुटे ॥ देहिदे विशोक शोचनबन्धमोचननपापशापशुभगते ॥ ३ ॥ सर्व्वविद्यात्मिकांशुद्धाम्मन्त्रयन्त्रमयींशिवाम् ॥ प्रणमामिमहामायाल्लोकेवेद चकिर्त्तिताम् ॥ ४ ॥ परापरात्मिकान्नित्यांसाध्याधारैकसंस्थिताम् ॥ कामाह्लादकरीङ्कान्तान्त्वान्नमामिजगन्मयीम् ॥ ५ ॥ प्रपञ्चपरमव्यक्तञ्जगदेकविवर्द्धनीम् ॥ प्रभावेनाद्र्वरक्ताङ्गीदेवितुभ्यन्नमोस्तुते ॥ ६ ॥ कामाख्यानित्यरूपाख्यामहामायास रस्वती ॥ यालक्ष्मीर्व्विष्णुवक्षःस्थानमावोत्यच्युतांशिवाम् ॥ ७ ॥ मन्त्राणियस्यास्तन्त्राणिसहस्त्राणिचषोडश ॥ मन्त्रयन्त्रा त्मनेतुभ्यन्नमोस्तुममपार्व्वति ॥ ८ ॥ इतिस्तुताततस्ताभ्याम्महामायाजगत्प्रसूः ॥ उवाचमुदिताचेतिवरव्वँरयतय्युँवाम् ॥ ९ ॥ प्रत्यक्षतोमहामायाम्पूर्व्वंवद्ध्यानगोचराम् ॥ तौदृष्ट्वाभर्ग्गतनयौप्राहतुश्चेदमुत्तमम् ॥ ११० ॥ ॥ वेतालभैर वावूचतुः ॥ ॥ देव्यनेनशरीरेणभवत्याःशाङ्करस्यच ॥ प्रार्थयेशाश्वतींसेवान्नित्यय्यावँद्रविःशशि ॥ ११ ॥ नान्यव्वँ रंसाधयावोमायेत्त्वत्तोजगन्मयि ॥ अन्यथातवभक्त्यैवस्थास्यावोगिरिकन्दरे ॥ १२ ॥ एवमुक्ताततस्ताभ्याम्महामा

याजगन्मयी ॥ एवमस्त्वितिचोवाचभवःदेवम्मुहुर्मुहुः ॥ १३ ॥ एवंसिद्धिजगद्धात्रीप्रोक्तास्वस्याथचूचुके ॥ निष्पीड्य
सारयामासक्षीरधाराद्वयंशिवा ॥ १४ ॥ ततस्तुनिःसृतक्षीरम्पाययामासभैरवम् ॥ वेतालञ्चमहाराजपायतुस्तौचतत्तदा
॥ १५ ॥ पीत्वातौचतदाक्षीरन्देवत्वम्प्राप्यशाश्वतम् ॥ अजरौचामरौभूतौमहातेजस्विनौशुभौ ॥ १६ ॥ तस्यास्तुक्षी
रममृतन्तत्पीत्वातौमहाबलौ ॥ पीयूषपानात्सञ्जातौततस्तौप्राहवैष्णवी ॥ १७ ॥ गणानान्देवदेवस्यभवतञ्चाधिपौयु
वाम् ॥ द्वाःस्थौचनित्यमासन्नौनन्दिवद्भवतंसुतौ ॥ १८ ॥ और्वउवाच ॥ इत्युक्त्वाहरसम्मत्यामहामायाजगन्मयी ॥ योगि
नीगणसय्युँक्तातत्रैवान्तरधीयत ॥ १९ ॥ अन्तर्हितायान्तस्यान्तुतदावेतालभैरवौ ॥ मुदितौपरमप्रोतौकृतकृत्यौबभूव
तुः ॥ १२० ॥ अथागच्छद्देवगणैःसार्द्धंसप्रमथोहरः ॥ सभाजयितुमत्यर्थम्पुत्रौवेतालभैरवौ ॥ २१ ॥ तावासाद्यमहादेव
स्तदानीलाह्वयङ्गिरिम् ॥ सकलन्दर्शयामासपीठन्तुस्थानभेदतः ॥ २२ ॥ कामाख्यायागुहान्तत्रदर्शयित्वामनोभवाम् ॥ त
तःस्वीयाङ्कामगुहाञ्छायाञ्छत्रंस्वमालयम् ॥ २३ ॥ स्वकीयम्पञ्चमूर्त्तीनांसंस्थानञ्चाप्यदर्शयत् ॥ कामरूपस्यसकलम्पी
ठन्देवमयन्तथा ॥ २४ ॥ प्रत्येकन्दर्शयामासक्रमतस्त्रिपुरान्तकः ॥ प्रथमङ्करतोयाख्यांसत्यगङ्गांसदाशिवाम् ॥ २५ ॥ पुण्य
तोयमयींशुद्धान्दक्षिणाब्ध्येकगामिनीम् ॥ ततस्तुकामरूपस्यवायव्यान्त्रिपुरान्तकः ॥ २६ ॥ आत्मनोलिङ्गमतुलञ्जल्पी

शाख्यंव्यदर्शयत् ॥ यत्रनन्दीसमाराध्यमहादेवञ्जगत्पतिम् ॥ २७ ॥ अभिन्नेनशरीरेणगाणपत्यमवाप्नुयात् ॥ नन्दि
कुण्डम्महाकुण्डय्यँत्रनन्दीपुराकरोत् ॥ २८ ॥ अभिषेकंलब्धवरंपीतंतोयमनुत्तमम् ॥ तत्रस्नात्वाचपीत्वाचकृतकृत्योनरो
त्तमः ॥ २९ ॥ हरस्यसदनय्याँतिनन्दिनोपिमहाश्रियः ॥ तस्यासन्नेमहादेवीन्नातिदूरेव्यवस्थिताम्॥१३०॥सिद्धेश्वरीय्यँो
निरूपाम्महामायाञ्जगन्मयीम् ॥ त्र्यम्बकोदर्शयामासभैरवायमहात्मने ॥ ३१ ॥ यत्रनन्दीमहामायामाज्ञयाशशिधा
रिणः ॥ स्तुतिभिर्न्नतिभिःपूज्यगाणपत्यमवाप्नुयात् ॥ ३२ ॥ सुवर्णमानसस्तत्रनदमुख्योमनोहरः ॥ नन्दिनोनुग्र
हायाशुमानसाख्यंसरस्तुतत् ॥ ३३ ॥ स्वागतश्चाज्ञयाशम्भोःपूर्व्वमेवतपस्यतः ॥ जटोद्भवातत्रनदीहिमवत्प्रभवाशुभा
॥ ३४ ॥ यस्यांस्नात्वानरःपुण्यमाप्नोतिजाह्नवीसमम् ॥ गौरीविवाहसमयेसर्व्वैर्म्मातृगणैकृतः ॥ ३५ ॥ जलाभिषेकोभर्ग
स्यजटाजूटेषुयःपुरा ॥ तैस्तोयैरभवद्यस्माज्जटोदाख्यानदीततः ॥ ३६ ॥ चैत्रेमासिसिताष्टम्यांस्नात्वायस्यान्नरोव्रजेत् ॥
पूर्णायव्वाँनरश्रेष्ठशिवस्यसदनम्प्रति ॥ ३७ ॥ द्वापारस्यतुयागङ्गात्रिःस्रोताख्यासरिद्वरा ॥ हिमवत्प्रभवाशुद्धचन्द्र
बिम्बाद्विनिर्ग्गता ॥ ३८ ॥ यस्यांस्नात्वामहामाघ्याम्मात्रयोनौनजायते ॥ चन्द्रसूर्य्यग्रहेस्नात्वाकैवल्यम्प्राप्नुयान्नरः ॥ ३९ ॥
सितप्रभानामनदीमहादेवावतारिता ॥ हिमवत्प्रभवासापिसितादक्षसमुद्रगा ॥ १४० ॥ तस्यान्दशहरायान्तुदशम्यां

शुक्लपक्षके ॥ स्नात्वाविष्णुगृहंयाँतिनरोवैमुक्तपातकः ॥ ४१ ॥ नवतोयानामनदीततःपूर्व्वेस्थितापुरा ॥ नवन्नवन्नव न्नित्यंकुर्व्वन्तीसापुनातिहि ॥ ४२ ॥ नवतोयाततःप्रोक्ताहिमवत्प्रभवैवसा ॥ तस्यांस्नात्वामहामाघ्यान्नरोगच्छतिदेवताम् ॥ ४३ ॥ सम्पूर्णमाघमासन्तुस्नात्वाविष्णुगृहंव्रँजेत् ॥ तासान्नदोनान्तुपतिरगदोनामवैनदः ॥ ४४ ॥ पीठपूर्व्वेस्थितः पुण्योब्रह्मपादसमुद्भवः ॥ हिमवत्प्रभवःसोपिदेवगन्धर्व्वसेवितः ॥ ४५ ॥ तत्रस्नात्वाचपीत्वाचनरोब्रह्मगृहंव्रँजेत् ॥ कार्तिकंसकलम्मासय्योंगदाख्येमहानदे ॥ ४६ ॥ स्नानङ्करोतिमनुजस्तस्यपुण्यफलंशृणु ॥ इहलोकेत्वरोगःसम्प्राप्य चैवोत्तमं सुखम् ॥ ४७ ॥ शेषेब्रह्मगृहम्प्राप्यततोमोक्षमवाप्नुयात् ॥ नन्दिकुण्डेनरःस्नात्वानक्तङ्कुर्य्यात्तदानिशि ॥ ४८ ॥ ततःपरस्मिन्दिवसेगच्छेज्जल्पोशमन्दिरम् ॥ तत्रस्नात्वामहानद्याञ्जल्पीशम्प्रतिपूज्यच ॥४९॥ तस्यान्निशिहविष्याशीसय्यँतस्तान्निशान्नयेत् ॥ ततोनुदिवसेप्रातेगच्छेत्सिद्धेश्वरींशिवाम् ॥ १५० ॥ ताम्पूजयेत्तथाष्टम्यामुपवासन्तथाचरेत् ॥ चतुर्भुजातु सादेवीपीनोन्नतपयोधरा ॥ ५१ ॥ सिन्दूरपुञ्जसङ्काशाधत्तेकर्त्रींञ्चखर्प्परम् ॥ दक्षिणेवामबाहुभ्यामभीतिवरदायिनी ॥५२॥ जटामण्डितशीर्षाचरक्तपद्मोपरिस्थिता ॥ पञ्चाक्षरजपान्तादिर्मन्त्रोस्याःपरिकीर्तितः ॥५३॥ कामाख्यातन्त्रमेवास्याःपूजने तन्त्रमीरितम् ॥ एवङ्कृत्वानरोधीरःपुनर्य्योनौनजायते ॥५४॥ जमदग्न्यभयाद्भीताःक्षत्रियाःपर्व्वमेवये ॥ म्लेच्छछन्नान्युपादा

यजल्पीशंशरणङ्गताः ॥५५॥ तेम्लेच्छवाचःसततमार्घ्यवाचश्चसर्व्वदा ॥ जल्पीशंसवमानास्तेगोपयन्तिचतंहरम् ॥ ५६ ॥
तयेवतुगुणास्तस्यमहाराजमनोहराः ॥ तोषयित्वातथासर्व्वाञ्जल्पीशम्पूजयेन्नरः ॥ ५७ ॥ वरदाभयहस्तोयन्द्विभुजःकुन्द
सन्निभः॥तत्पुरुषस्यतुमन्त्रेणपूजयेद्देवमुत्तमम् ॥ ५८॥ एवम्पुण्यकरःपीठोजलपीशस्यमहात्मनः ॥ एवञ्ज्ञात्वानरोयातिश
ङ्करस्यपुरम्प्रति ॥ ५९ ॥ इतिकालिकापुराणेअशीतितमोध्यायः॥८०॥ ॥ मार्क्कण्डेयउवाच॥ ॥ एतच्छ्रुत्वातुस
र्व्वांदमुत्तमंशङ्करस्यच॥ भैरवस्यतुवेतालसहितस्यमहात्मनः॥ १॥ भूयश्चसगरोराजामुनिमौर्व्वम्महामतिम् ॥ पप्रच्छामो
दसंहृष्टसूनुदेहःतमुत्तमम् ॥ २॥ ॥सगरउवाच॥ ॥ विचित्रमिदमाख्यातम्भगवन्मुनिसत्तम॥ कामरूपस्यपीठस्यसं
स्थानन्निर्णयन्तथा ॥ ३॥ भूयश्श्रोतुमिच्छामिविस्तरेणमहामते ॥ वायव्यस्याथमध्यस्यपूर्वभागस्यनिर्णयम् ॥ ४ ॥
यथायस्मिन्निष्ठितोस्तिमहादेवोम्बिकातथा॥ तत्सर्व्वम्मुनिशार्द्दूलकथयश्रोतुमुत्सहे॥ ५॥ ॥ और्व्वउवाच॥ ॥ उक्तो
वायव्यभागस्यनिर्णयोनृपसत्तम॥ नैर्ऋत्योत्तरमध्याद्रेःशृण्विदानीर्व्विनिर्णयम् ॥६॥ बहुरोकानामनदीकरतोयाप्रदक्षिणे॥
उत्तरश्रावणीचास्तेतत्पूर्व्वङ्कामरूपकम् ॥ ७॥ सुरसोनामजीमूतःकामरूपन्ततःस्थितः ॥ निःसृताबहुरोकेतिनदी
तमस्माद्वृषप्रदा ॥८॥ आसन्नेसुरसाख्यस्यशिवलिङ्गोमहावृषः ॥ माहेश्वरीतत्रदेवीयोनिमण्डलरूपिणी ॥ ९ ॥स्ना

त्वातुबहुरोकायामारुह्यसुरसाचलम् ॥ महावृषम्पूजयित्वामहादेवीम्महेश्वरीम् ॥ १० ॥ धूतपापोजितद्वन्द्वःपुनर्य्योनौन
जायते ॥ चतुर्भुजोवृषारूढोवरदाभयशूलधृक् ॥ ११ ॥ शुद्धस्फटिकसङ्काशोजटावान्समहावृषा ॥ अघोरस्यतुमन्त्रेण
पूजास्यपरिकीर्त्तिता ॥ १२ ॥ कामेश्वर्य्याःस्वरूपन्तुमाहेश्वर्य्याःप्रकीर्त्तितम् ॥ पूजापितद्वदेवास्यास्तद्वत्फलप्रदायिसा ॥
॥ १३ ॥ तत्रवासिष्ठकुण्डन्तुवसिष्ठमुनिसेवितम् ॥ यत्रस्थितोवासिष्ठस्तुनरकेणनिवारितः ॥ १४ ॥ अत्राप्यगन्तुञ्जीमूत
न्नीलाख्यंशसवास्तुतम् ॥ स्वस्नानार्थङ्कृतंतत्रकुण्डंदेवगणार्च्चितम् ॥ १५ ॥ तत्रस्नात्वानरोयातिनाकपृष्ठय्यँथेछया ॥
सुरसस्यचपूर्व्वस्याङ्कृत्तिवासाह्वयोगिरिः ॥१६॥ कृत्तिवासाःस्वय्यँन्तत्रसत्यासहवसत्पुरा ॥ चन्द्रिकाख्यानदीयत्रतस्यांस्ना
त्वादिव्यँव्रजेत्॥१७॥चन्द्रिकायान्नरःस्नात्वासम्पूज्यकृत्तिवाससम् ॥ भाद्रशुक्लचतुर्थ्यांतुनिष्कलङ्कोभवेन्नरः ॥ १८ ॥ पूर्णं
भाद्रपदंमासञ्चन्द्रिकायान्नरोत्तमः ॥ स्नात्वागच्छतिभूतेशन्दृष्ट्वैवकृत्तिवाससम् ॥ १९ ॥ उत्तरस्राविणीनित्यञ्चन्द्रिकाख्या
सरिद्वरा ॥ नातिदूरेचन्द्रिकायाःपूर्व्वस्यान्दिशिफेनिला ॥ २० ॥ सञ्ज्ञयासासरिच्छ्रेष्ठाशतानन्दावतारिता ॥ ब्रह्मणोदु
हितासातुगङ्गापर्व्वतसम्भवा ॥ २१ ॥ फेनिलायान्नरःस्नात्वाब्रह्मोत्थानदिनेपुनः ॥ फाल्गुनेमासिनरकञ्जित्वास्वर्ग्गमवा
प्नुयात् ॥ २२ ॥ ततःसिताह्वयापूर्व्वंसरिदुत्तरगामिनी ॥ तस्यांस्नात्वामहाचैत्र्याङ्गङ्गास्नानफलल्लँभेत् ॥ २३ ॥ ततः

पूर्व्वेसुमदनाथोजनद्वितयान्तरे ॥ नदीजनकराजेनसमाराघ्यवृषध्वजम् ॥ २४ ॥ हितायभैरवाख्यस्यसुतीक्ष्णादवतारि
ता ॥ सुतीक्ष्णङ्गिरिमारुह्यस्नात्वासुमदनाजले ॥ २५ ॥ माघशुक्लचतुर्थ्यान्तुपूजयित्वामहेश्वरम् ॥ सम्प्राप्यसकला
न्कामाञ्छिवलोकायगच्छति ॥ २६ ॥ एतानद्यःकामरूपेनैर्ऋत्यामुत्तरस्रवाः ॥ पीठश्चपूर्व्वतस्तत्रत्रिपुरायत्रपूज्यते
॥ २७ ॥ एवन्तेकथितंराजन्महापुण्यदमुत्तमम् ॥ कामरूपस्यनैर्ऋत्यांयत्रशम्भुःसदाम्बिका ॥ २८ ॥ पुरैवचमहाराज
यानद्योदक्षिणश्रवाः ॥ हिमवत्प्रभवायाताःक्रमशःशृणुभूपते ॥ २९ ॥ अगदस्यनदस्योर्द्ध्वंभद्राख्यातुमहानदी ॥
भाद्रेकृष्णचतुर्द्दश्यांयस्यांस्नात्वादिवंव्रजेत् ॥ ३० ॥ ततःपूर्व्वंसुभद्राख्यानदीपुण्यतमासदा ॥ वैशाखस्यतृतीयायां
यस्यांस्नात्वादिवंव्रजेत् ॥ ३१ ॥ ततस्तुमानसानामनदीपुण्यतमानता ॥ सरसोमानसाख्यात्तुतृणबिन्दूवतारिता
॥ ३२ ॥ वैशाखंसकलम्मासन्तस्यांस्नात्वानरोत्तमः ॥ विष्णुलोकमवाप्यैवततोमोक्षमवाप्नुयात् ॥ ३३ ॥ हिमवन्निकटे
शैलोविभ्राटासमहाद्युतिः ॥ यस्मिन्वसतिभूतेशःसदाभैरवरूपधृक् ॥ ३४ ॥ तस्मात्तुभैरवीनामनदीपुण्योदकाशुभा ॥
प्रङ्गानसाद्याःस्रवतिगङ्गेवफलदायिनी ॥ ३५ ॥ यस्याव्वैसन्तसमयेस्नात्वागच्छतिवैदिवम् ॥ यस्यांसम्पूज्यकामाख्या
मिष्टंज्ञानमवाप्नुयात् ॥ ३६ ॥ सम्पूज्याथमहामायान्द्विगुणम्प्राप्नुयात्फलम् ॥ ऊर्द्ध्वन्ततोदेवगङ्गावर्णासाख्यासरिद्वरा

॥ ३७॥ हिमवत्प्रभवानित्यंफलदामानसोपमा ॥ सुभद्राद्यास्तुयाप्रोक्तावर्णासान्ताःसरिद्वरा ॥ ३८ ॥ हिमवत्प्रभवास्ता
स्तुसर्व्वाएवोत्तरप्लवाः ॥ पूर्व्वस्तुमदनायास्तुब्रह्मक्षेत्रस्यपश्चिमे ॥ ३९ ॥ रविक्षेत्रय्यँत्रदेवआदित्यःसततंस्थितः ॥ भैरव
स्यहितार्थायत्रसर्व्वेश्वराःस्थिताः ॥४०॥ कामरूपेमहापीठेब्रह्मेन्द्रवरुणादयः ॥ तदानत्वाङ्कयेशैलेश्रीसूर्य्योपिव्यवस्थितः
॥ ४१ ॥ त्रिस्रोतानामयस्यास्तिनदीपूर्व्वांदिशिस्थिता ॥ कापोतङ्करणम्पश्चाधस्यकुण्डद्वयंस्थितम् ॥ ४२ ॥ कापोतङ्कुण्डे
विधिवत्स्नात्वाकारणकुण्डके ॥ नत्वाचलंसमारुह्यसम्पूज्यचदिवाकरम् ॥ ४३ ॥ सकृदेवनरोयातिभास्करस्यगृहम्प्रति ॥
सूर्य्यरश्मिसमुद्भूतकापोतकरणामृत ॥ ४४ ॥ पुण्यतोयसाख्यातपापङ्कापोतमेहर ॥ इत्यनेनतुमन्त्रेणस्नात्वाकापोतसं
ज्वरे ॥४५॥करणंसमुपस्पृश्यतत्वशैलेरविय्यँजेत् ॥ त्रिविधंब्रह्मबीजन्तुसहस्रपदमन्ततः ॥४६॥रश्मयेपिचतुर्थ्यन्तुदेवोजा
यातुचेष्टतः ॥ अङ्गबीजमिदंप्रोक्तंआदित्यस्यातिकामदम्॥४७॥पद्मासनःपद्मकरःपद्मागर्भ्भसमद्युतिः ॥सप्ताश्वःसप्तरज्जु
श्चद्विभुजोभास्करःसदा॥४८॥वर्त्तुलम्मण्डलश्चास्यअष्टपत्रसमन्वितम्॥अङ्गुष्ठाद्याङ्गुलीनाञ्चहृदादीनान्तथाचषट्॥४९॥अ
ङ्गमन्त्रेणसहितउपान्तेवह्निसय्युतः ॥ सर्व्वन्यासेसमुद्दिष्टोमन्त्रःसर्व्वफलप्रदः ॥ ५०॥ हृच्छिरस्तुशिखावर्म्मनेत्रास्योदरपृष्ठ
तः ॥ बाह्वोपाण्योर्जंङ्घयोस्तुपादयोश्चापिविन्यसेत् ॥५१॥जघनेचसमस्तानिक्रमान्मन्त्राक्षराणिच ॥क्रमाच्चोत्तरतन्त्रोक्तः

पूजनेपरकीर्तितः ॥ ५२ ॥ विसर्जनन्तथैशान्यांविघ्नाद्यादलशक्तयः ॥ निर्म्माल्यधृक्तत्वचण्डोमाठराद्यास्तुपार्श्वयोः ॥५३॥बीजमुत्तरतन्त्रेस्यपूर्व्वंतःप्रतिपादम् ॥ अनेनविधिनातत्वेपूजयित्वानरोत्तमः ॥ ५४ ॥ सकामानखिलान्प्राप्यइहलोकेत्वरुक्तनुः ॥ सुखीशेषेतथोगच्छेद्भास्करस्यालयम्प्रति ॥५५॥नातिदूरेभास्करस्यदक्षिणास्यांशुभाह्वया ॥ तस्योर्द्ध्वसानौवसतिलिङ्गंशाङ्करमुत्तमम् ॥ ५६ ॥ परिवार्य्यसदायान्तिमाहाकायास्तुवानराः ॥ परिवार्य्यावतिष्ठंतेसेवमानाश्चशङ्करम् ॥ ५७ ॥ तिस्रोतायान्नराःस्नात्वायःपश्येत्तुशुभाचले ॥ महात्मानम्महादेवङ्काममिष्टल्लँभेन्नरः ॥ ५८ ॥ ततःपूर्व्वंसुरनदीनाम्नाकुसुममालिनी ॥ क्षीरोदाख्यापरातस्मात्तेगतेदक्षिणश्चवे ॥ ५९ ॥ एतेअपिमाहाराजपुण्यतोयेमृतश्चवे ॥ तयोःस्नात्वान्नरोयातिशङ्करस्यालयम्प्रति ॥ ६० ॥ ततोपिपूर्वतोदेवीलीलाख्याचापरानदी ॥ यस्यांस्नात्वामहानद्यांशिवलोकायगछति ॥६१॥ ततःपूर्व्वंशिवाचण्डीख्याचण्डिकाख्यामहानदी ॥ निर्य्यातिधवलाख्यान्तुपर्व्वतात्सुमनोहरात् ॥६२॥ शिवलिङ्गद्वयन्तत्रनातिदूरेव्यवस्थितम् ॥ गोलोकश्चाथशृङ्गीचक्रोशमात्रान्तरंस्थितम् ॥ ६३॥ चण्डिकायान्नरःस्नात्वाआरुह्यधवलेश्वरम् ॥ दक्षिणंसागरव्वीक्ष्यपृष्ठागोलोकसंज्ञकं ॥ ६४ ॥ ततोवतीर्य्यचपुनःशृङ्गिणंभूमिपीठगम् ॥ शिवपूजाविधानेनपूजयित्वामहेश्वरम् ॥ ६५ ॥ अश्वमेधस्ययज्ञस्यफलंसम्प्राप्यमानवः ॥ सर्व्वान्कामानवाप्येहदेहान्तेशिवताव्व्रँजेत् ॥ ६६ ॥

एतायाःकथितानद्यःसर्व्वावैदक्षिणश्रवाः॥तस्मादीशानकाष्ठायाम्पर्व्वतोगन्धमादनः॥६७॥ यत्रशृङ्गाह्वयल्लिङ्गंशिवस्यास्ते
महत्तरम्॥ सएवपर्व्वतश्रेष्ठःप्रान्तःक्षेत्रस्यपश्चिमे॥६८॥ धृत्वाब्रह्मशिलांदेवीसाचित्रंप्रतिगामिनी॥ गन्धमादनकस्यान्ते
भृङ्गेशस्यपदद्वयम्॥ ६९॥ स्रवद्गङ्गाजलश्चास्तेकुण्डन्तत्रान्तरालकम्॥ अन्तरालककुण्डेतुस्नात्वापीत्वाचतज्जलम्
॥ ७०॥ भृङ्गेशस्यततोदृष्ट्वाशिलासंस्थम्पदद्वयम्॥ पूजयित्वामहाभृङ्गङ्गाणपत्यमवाप्नुयात्॥ ७१॥ शम्भुपादसमुद्भूतम
न्तरालदृषाकरम्॥वृषध्वजपदानांत्वंसर्व्वेषाँजयमहावृष॥७२॥ इत्यनेनतुमन्त्रेणस्नानङ्कृत्वान्तराजले॥भृङ्गदेवन्ततःपश्येत्कु
ब्जपीठान्तवासिनम्॥ ७३॥॥ मणिकूटस्याथगिरेर्गन्धमादनकस्यच॥ मध्येस्रवतिलौहित्योब्रह्मणाग्निसमुत्थितः॥७४॥
वर्णाशायादक्षिणस्याल्लौहित्योनामसागरः॥ मणिकूटस्थितःपूर्व्वंहयग्रीवोहरिर्य्यतः॥ ७५॥ सहयग्रीवरूपेणविष्णुर्हत्वात्व
रासुरम्॥ निहत्यसहयग्रीवंक्रीडार्थंयत्रसंस्थितः॥ ७६॥ हत्वाज्वरन्तथाविष्णुस्तत्रवासमथाकरोत्॥ नरदेवासुरा
दीनार्य्यँथाभवतिवैहितम्॥ ७७॥ ज्वरेणापीडिततनुञ्ज्वरंहत्वामहासुरम्॥ सर्व्वलोकहितार्थायसोगदस्थानमाहरत्
॥ ७८॥ अगदस्नानसम्भूतःसञ्जातश्चमहासुरम्॥ तस्यस्वयंहयग्रीवोनामचक्रेपुनर्भ्भवम्॥ ७९॥ नपुनर्ज्जायतेय
स्मात्तत्रस्नात्वानरोत्तमः॥ अपुनर्भ्भवसञ्ज्ञंतत्सरस्तुपरिकीर्त्तितम्॥ ८०॥ मणिकूटाचलेविष्णुर्हयग्रीवस्वरूपधृक्॥

शतव्यामप्रमाणेनविस्तरेणैवशोभितम् ॥ ८१ ॥ तस्मात्पूर्व्वेभद्रकामःपर्व्वतस्तुत्रिकोणकः ॥ यत्रकालहयोनामशिव
लिङ्गोत्यवस्थितः ॥ ८२ ॥ तस्यासन्नेदक्षिणस्यामपुनर्ब्भवकुण्डकम् ॥ अपुनर्ब्भूसरस्तीरेपर्व्वतेभद्रकामदे ॥ ८३ ॥
हरवीथीतिविख्याताशिलाब्रह्मस्वरूपिणी ॥ तत्रयोगीमहादेवोयोगज्ञोध्यानतत्परः ॥ ८४ ॥ यन्दृष्ट्वायोगमान्मर्त्यो
मृतोमोक्षमवाप्नुयात् ॥ तस्यामेवशिलायान्तुगोकर्णोनामशङ्करः ॥ ८५ ॥ गोकर्णोनिहतोयेनअन्धकस्यसखापुरा ॥
गोकर्णस्यतथैशान्यांकेदारःशम्भुरन्ततः ॥ ८६ ॥ ततोऽन्धकसमःप्रोक्तःकमलाकरभोगधृक् ॥ यत्रास्तिशम्भुःकेदारः
सगिरिर्म्मदनाह्वयः ॥ तत्रैवकमलःप्रोक्तःसमहात्मालयप्रदः ॥ ८७ ॥ स्नात्वापुनर्ब्भवजलेदृष्ट्वागोकर्णयोगिनौ ॥ केदारकम
लौदृष्ट्वामुक्तिर्म्माधवदर्शने ॥ ८८ ॥ दृष्ट्वातुमाधवन्देवन्ततःकामंविलोकयेत् ॥ कामंविलोक्यतत्रस्थोनिरीक्षेदपुनर्ब्भ
वम् ॥ ८९ ॥ एवङ्कृत्वापीठयात्रामनेनक्रमयोगतः ॥ सप्तपूर्व्वान्सप्तपरानात्मानन्दशपञ्चच ॥ ९० ॥ पितॄनुद्धृत्यत्रिदिवन्न
येत्सपुरुषोत्तमः ॥ विष्णुस्थानसमुद्भूतापुनर्ब्भवहरीश्वर ॥ ९१ ॥ पापंहरस्वर्ग्गहेतोर्जितसङ्गमहोदधे ॥ अनेनैवतुमन्त्रेणस्ना
याद्वीरेपुनर्भवेत् ॥ ९२ ॥ हयग्रीवस्यतन्त्रन्तुपुरैवप्रतिपादितम् ॥ रूपंशृणुमहाराजचिन्तयेत्तस्ययादृशम् ॥ ९३ ॥ कर्प्पू
रकुन्दधवलःसितपद्मोपरिस्थितः ॥ चतुर्ब्भुजःकुण्डलादिनानालङ्कारभूषितः ॥ ९४ ॥ वरदाभयहस्तस्तुवामहस्तद्वयेनतु ॥

पुस्तकंसितपद्मञ्चधत्तेहस्तद्वयेपरे ॥ ९५ ॥ श्रीवत्सकौस्तुभोरस्कःक्वचिच्चगरुडासनः ॥ सर्व्वउत्तरतन्त्रोक्तःक्रमोग्राह्यः
प्रपूजने ॥ ९६ ॥ विष्वक्सेनोहयारेस्तुनिर्म्माल्यधृग्विसर्ज्जने ॥ शिलारूपप्रतिच्छन्नसदारुतेगरुडध्वजः ॥ ९७ ॥ क्रीड
मानोथगन्धर्व्वैःस्थितोलोकहितायच ॥ हयग्रीवस्यमन्त्रस्यसिद्धिर्ल्लक्षद्वयेनतु ॥ ९८ ॥ यावकैःपायसैराज्यैर्होमङ्कुर्व्वन्पु
रश्चरेत् ॥ एकेनैवतुराजेन्द्रपुरश्चरणकर्म्मणा ॥ ९९ ॥ इष्टसिद्धिमवाप्येहविष्णुल्लोकमवाप्नुयात् ॥ मन्त्रैस्तुपञ्चवक्त्राणाम्प
ञ्चमूर्त्तीःसदार्च्चयेत् ॥ १०० ॥ पूर्व्वेतत्पुरुषादीनाङ्कामादीन्पूजकोद्विजः ॥ कामस्तत्पुरुषोज्ञेयोयोगीशानःप्रकीर्त्तितः ॥ १ ॥
अघोरोत्वथगोकर्णःकेदारोवामदेवकः ॥ सद्योजातस्तुकमलामन्त्रैस्तैस्तैःप्रपूजयेत् ॥ २ ॥ पर्व्वतश्चैवकेदारःशिवगङ्गातुका
लिका ॥ हयग्रीवस्यपूर्व्वस्याङ्केदारस्यतुपश्चिमे ॥ ३ ॥ छायाभोगाह्वयस्थानम्पुरीभोगवतीतथा ॥ योगच्छेन्मणिकूटा
ख्याङ्कौतुकाच्चपुनर्भ्भवम् ॥ ४ ॥ ससर्व्वतीर्थयात्राणांफलमाप्नोतिमानवः ॥ ज्यैष्ठेमासिसितेपक्षेपञ्चदश्यष्टमीषुच ॥ ५ ॥
स्नात्वापुनर्भ्भवजलेयःपश्येद्विधिवद्धरिम् ॥ ससर्व्वङ्कुलमुद्धृत्यविष्णुसायुज्यमाप्नुयात् ॥ ६ ॥ ज्यैष्ठन्तुसकलम्मासन्निःप
श्येत्तुयोहरिम् ॥ हरौविलीनताय्याँतिससर्व्वैःसहितःकुलैः ॥ ७ ॥ एतत्तेकथितम्पुण्यंमणिकूटाह्वयम्पदम् ॥ वाराणसीतो
प्यधिकंसिद्धविद्याधरार्च्चितम् ॥ ८ ॥ यःपठेच्छृणुयाद्विप्रोमणिकूटस्यनिर्णयम् ॥ ससर्व्ववेदस्यफलम्प्राप्नोत्येवनसंशयः ॥

॥ १ ॥ ॥ इतिश्रीकालिकापुराणेएकाशीतितमोध्यायः ॥ ८१ ॥ ॥छ॥ ॥ और्व्वउवाच ॥ ॥ ततःपूर्व्वे
महाराजदर्प्पणोनामपर्व्वतः ॥ कुबेरोयत्रवसतिधनपालैःसमंसदा ॥ १ ॥ यस्मिन्नास्तेमध्यभागेरोहितोरोहिताकृतिः ॥
यस्मिल्लौंहादिकंस्पृष्टंस्वर्ण्णताय्याँतितत्क्षणात् ॥ २ ॥ यत्रातिदूरेस्त्रवतिदर्प्पणोनामवैनदः ॥ हिमाद्रिप्रभवोनित्यंल्लौ
हित्यसदृशःफलैः ॥ ३ ॥ समुत्पन्नंहिलौहित्यंसर्व्वैर्देवगणैर्हरिः ॥ सर्व्वतीर्थोदकैःसम्यक्स्नापयामासतंसुतम् ॥ ४ ॥
तस्यस्नानसमुद्भूतःपापदर्प्पस्यपाटनः ॥ तेनायन्दर्प्पणोनामपुरादेवगणैःकृतः ॥ ५ ॥ तस्मिन्स्नात्वानदवरेयोर्च्च
येद्दर्प्पणाचले ॥ कुबेरम्प्रतिपत्तिथ्याङ्कार्त्तिकेशुक्लपक्षके ॥ ६ ॥ सयातिब्रह्मसदनमिहभूतिशतैर्युतः ॥ दर्प्पणाद्दि
शिपूर्व्वस्यामग्निमालाह्वयोगिरिः ॥ ७ ॥ सर्प्पाकारःसप्तशतव्यामदीर्घोर्द्धविस्तृतः ॥ तत्रातिष्ठतिवैवह्निरूर्द्ध्वभागेग्निमण्ड
ले ॥ ८ ॥ सिन्दूरपुञ्जसङ्काशेचारुदारुशिलातले ॥ तस्मिन्निरिन्धनोवह्निर्नित्यमद्यापिकाशते ॥ ९ ॥ भैरवस्यहिता
र्थायकामाख्यापरिसेवने ॥ पूर्व्वमेवस्थितस्तत्रसाक्षाद्वह्निर्गणैःसह ॥ १० ॥ लौहित्यपाथसिस्नात्वात्वग्निमालाह्वय
ङ्गिरिम् ॥ आरुह्यवह्निंसम्पूज्यमोदतेविष्णुमन्दिरे ॥ ११ ॥ पुरस्तादग्निमालस्यकुण्डकर्व्वारुणाह्वयम् ॥ तस्यतीरेगि
रिश्रेष्ठोनाम्नाकंसकरःस्मृतः॥ १२ ॥ वरुणस्तत्रवसतिनित्यमेवजलाधिपः ॥ तस्मिन्कंसकरेसम्यक्पूजयित्वाप्रचेतसम्

॥ १३ ॥ स्नात्वाचवारुणेकुण्डेवारुणंल्लोकमाप्नुयात् ॥ आद्यव्यँजनमेवात्रपञ्चमस्वरसय्युँतम् ॥ १४ ॥ शम्भुचूडाशि
खायुक्तङ्कौबेरम्बीजमुच्यते ॥ सप्तमोयःपकारस्यबिन्दुचन्द्रार्द्धसय्युँतः ॥ १५ ॥ वह्निबीजमितिख्यातन्तेनवह्निम्प्रपूजये
त् ॥ मकारपञ्चमःसोमबिन्दुनावारुणःस्मृतः ॥ १६ ॥ एभिर्म्मन्त्रैरिमान्देवान्नित्यमेवप्रपूजयेत् ॥ वायुकूटोनामगिरिः
पूर्व्वस्याव्वँरुणाचलात् ॥ १७ ॥ द्विखण्डोवायुबीजेनमण्डलेनसमन्वितः ॥ वायुलोकस्थितश्चन्द्रोयस्मान्निःसृत्यमारुतः
॥ १८ ॥ ऊर्द्ध्वाधोभागमासाद्यनित्यव्वँहतिभूपते ॥ तत्रवायुंसमभ्यर्च्यवायुलोकमवाप्नुयात् १९ ॥ पूर्व्वंव्वाँयुगिरेःशैलश्च
न्द्रकूटइतिस्मृतः ॥ त्रिकोणश्चन्द्रसङ्काशस्तदूर्द्ध्वेचन्द्रमण्डलम् ॥ २० ॥ द्वितीयवर्ग्गस्याद्यन्तुबिन्दुनासमलङ्कृतम् ॥ चन्द्रबीज
मितिप्रोक्तन्तेनचन्द्रम्प्रपूजयेत् ॥ २१ ॥ अद्यापिप्रतिदर्शेतुपर्व्वतन्तन्निशापतिः ॥ प्रदक्षिणीकरोत्येवदशभिश्चापिरवेचरैः
॥ २२ ॥ तस्यैवपूर्व्वभागेतुसोमकुण्डाह्वयंसरः ॥ तत्रस्नात्वाचपीत्वाचनरःकैवल्यमश्नुते ॥ २३ ॥ स्वर्ग्गादवतरच्चन्द्रःकामा
ख्यासेवनेयदा ॥ तदातद्रश्मिसञ्जातान्निःसृतास्तोयराशयः ॥ २४ ॥ तैस्तोयैर्व्यासवःकुण्डमकरोदिन्द्रचन्द्रयोः ॥ मध्ये
पुण्यतमेस्थानेस्वयंब्रह्मशिलोपरि ॥ २५ ॥ चन्द्ररश्मिसमुद्भूतचन्द्रकुण्डमहोदधे ॥ यय्यँम्भावंसमासाद्यतश्चन्द्रकलुषं
हरम् ॥ सुधास्रवणमाह्लादत्वञ्चन्द्रकलुषंहर ॥ २६ ॥ इत्यनेनतुमन्त्रेणयःस्नात्वाचन्द्रपाथसि ॥ चन्द्रकूटंसमारुह्यपूजये

यस्तुतन्नरः ॥ २७ ॥ अविच्छिन्नासन्ततिस्तुसुकान्तातस्यजायते ॥ परत्रचन्द्रभवनम्भित्वायातिपरम्पदम् ॥ २८ ॥ तीरेतुचन्द्रकूटस्यनन्दनोनामवैगिरिः ॥ तस्मिन्वसतिशक्रस्तुकामाख्यासेवनेरतः ॥ २९ ॥ पञ्चभावंसमासाद्यसर्व्वंदेवेश्वरोहरिः ॥ सेवितुन्त्रिदशेशानाँसततव्वँर्त्ततेनतः ॥ ३० ॥ चन्द्रकूटस्यतुगिरेर्न्नन्दनस्यतथागिरेः ॥ प्रतिदर्शन्तथाचन्द्रः प्रदक्षिणयतित्रिधा ॥ ३१ ॥ चन्द्रकूटजलेस्नात्वासमारुह्याथनन्दनम् ॥ आराध्यशक्रल्लोँकेशंमहाफलमवाप्नुयात् ॥ ३२ ॥ नन्दनात्पूर्व्वभागेतुभस्मकूटोमहागिरिः ॥ यःस्वयम्भर्गरूपःसंसदाचेच्छान्तमुत्तमम् ॥ ३३ ॥ दक्षिणेभस्मकूटस्यदेवी पीयूषधारिणी ॥ उर्व्वशीनामविख्याताशक्रप्रीतिकरीसदा ॥ ३४ ॥ देवैर्य्यत्स्थापितम्पूर्व्वममृतम्भोजनायवै ॥ कामाख्यायास्तदादायस्वयंस्तिष्ठतिचोर्व्वशी ॥ ३५ ॥ शिलारूपोहरस्तान्तुसमावृत्यैवतिष्ठति ॥ साचैवामृतराशिन्तुकृत्वाकिञ्चनकिञ्चन ॥ ३६ ॥ उपस्थापयतेनित्यङ्कामाख्यायोनिमण्डले ॥ सुधाशिलान्तरस्थातुउर्व्वशीकुण्डवासिनी ॥ ३७ ॥ उर्व्वशी भस्मकूटस्यमध्येकुण्डंसदामृतम् ॥ द्वात्रिंशद्धनुराकीर्णम्पञ्चाशद्धनुरायतम् ॥ ३८ ॥ तत्रस्नात्वाचपीत्वाचनरोमोक्षमवाप्नुयात् ॥ कामाख्यायोनिरैशानोन्दिशय्याँतिसदैवहि ॥ ३९ ॥ भस्मकूटेप्रविशतिउर्व्वशीमपियोगिनी ॥ आप्यायिताचामृतेननित्यंदेवीप्रमोदते ॥ ४० ॥ मोदयुक्तामहादेवीकामेनमोदतेसदा ॥ भस्मकूटस्यचैशान्याम्मणिकूटोमहागिरिः ॥ ४१ ॥

१ सनूचकास्तेशा। २ रमते।

मणिकर्णोनामहरस्तत्रतिष्ठतिलिङ्गकम् ॥ ससद्योजातरूपस्तुमणिकर्णइतीरितः ॥ ४२ ॥ सद्योजातस्यमन्त्रेणपूजितव्यः
सदाशिवः ॥ चन्द्रतीर्थजलेस्नात्वादृष्ट्वाचन्द्रंसवासवम् ॥ ४३ ॥ मणिकर्णेश्वरन्दृष्ट्वामुक्तिर्भूरस्माचलङ्गते ॥ श्वेतःश्वेताम्ब
रधरोदशाश्वोहेमभूषितः ॥ ४४ ॥ गदापाणिर्द्विबाहुश्चकर्त्तव्योवरदःशशी ॥ सहस्रनेत्रोगौराङ्गोद्विभुजोवामहस्तगम् ॥
॥ ४५ ॥ वज्रङ्गदाङ्कुशन्धत्तेदक्षिणेनापिपाणिना ॥ ऐरावतगजस्थस्तुबाणतूणीरबन्धनः ॥ ४६ ॥ धनुश्चकक्षेगृह्णातिसेवमा
नोमहेश्वरीम् ॥ वकारानन्तरोवर्णश्चन्द्रबिन्दुसमन्वितः ॥ ४७ ॥ शक्रबीजमितिप्रोक्तंशक्रन्तेनप्रपूजयेत् ॥ नदीसुमङ्गलानाम
हिमपर्व्वतनिर्ग्गता ॥ ४८ ॥ पूर्व्वस्यांमणिकूटस्यसदास्रवतिशोभना ॥ मणिकूटंसमारुह्ययस्ताम्पश्यतिवैनदीम् ॥ ४९ ॥
सगङ्गास्नानजम्पुण्यमवाप्यत्रिदिवँव्व्रजेत् ॥ मणिकूटाचलात्पूर्व्वम्मत्स्यध्वजकुलाचलः ॥ ५० ॥ निर्दग्धोयत्रमदनोहरनेत्रा
ग्निनापुनः ॥ शरीरम्प्रापतपसासमाराध्यवृषध्वजम् ॥ ५१ ॥ तत्रमत्स्यस्वरूपस्तुकामदेवेनसंस्थितः ॥ अधित्यकायाम्पृथिवी
व्वीक्षमाणःसमन्ततः ॥ ५२ ॥ नदीतुशाश्वतीनामतत्रास्तेदक्षिणस्रवा ॥ सरःकामसरोनामतत्रशैलेव्यवस्थितम् ॥ ५३ ॥
शाश्वत्याव्विँधिवत्स्नात्वापीत्वाकामसरोम्भसि ॥ विमुक्तपापःशुद्धात्माशिवलोकेमहीयते ॥ ५४ ॥ गन्धमादनपूर्व्वस्यांसुका
न्तोनामपर्व्वतः ॥ तत्प्रान्तेवासवकुण्डव्वाँसवामृतभोजनम् ॥ ५५ ॥ यत्रस्थित्वादक्षिणस्याम्पुराशक्रःशचीपतिः ॥ अमृतंश्रान्त

देहस्तुकामरूपान्तरेपपौ ॥ ५६ ॥ स्नात्वातुवासवेकुण्डेसमारुह्यसुकान्तकम् ॥ वासवस्याप्रियोभूत्वाशक्रलोकमवाप्नुया
त् ॥ ५७ ॥ पूर्व्वस्यान्तुसुकान्तस्यरक्षःकूटाह्वयोगिरिः ॥ यत्रास्तेसततन्देवोनिर्ऋतीराक्षसेश्वरः ॥ ५८ ॥ खड्गहस्तो
महाकायोवामेचर्म्मधरस्तथा ॥ जटाजूटसमायुक्तःप्रांशुःकृष्णाचलोपमः ॥ ५९ ॥ द्विभुजःकृष्णवासास्तुगर्द्दभोपरिसंस्थि
तः ॥ प्रान्तोपान्तौबिन्दुचन्द्रसदितावादिरेवच ॥ ६० ॥ नैर्ऋत्यङ्कथितम्बीजन्तेनतम्परिपूजयेत् ॥ रक्षःकूटंसमारुह्यनि
र्ऋतिंराक्षसेश्वरं ॥ ६१ ॥ यःपूजयेद्विधानेनचण्डिकांराक्षसेश्वरीम् ॥ नतस्यराक्षसेभ्योस्तिभयन्नृपकदाचन ॥ ६२ ॥
राक्षसाश्चपिशाचाश्चवेतालागणनायकाः ॥ तन्दृष्ट्वापुरुषंराजन्सर्व्वेदेवप्रविभ्यति ॥ ६३ ॥ रक्षःकूटात्पूर्व्वदिशिभैरवोना
ममाधवः ॥ पाण्डुनाथइतिख्यातोग्रावरूपेणसंस्थितः ॥ ६४ ॥ तम्पाण्डुनाथंसततमष्टाक्षरभवोत्तरम्[1] ॥ तेनैवपूजयेदेव
म्पाण्डुनाथाह्वयंहरिम् ॥ ६५ ॥ वर्णेनरक्तगौराङ्गोगदापद्मधरःकरे ॥ दक्षिणेचक्रशङ्कौचबाहुभ्यामपिबिभ्रतम् ॥ ६६ ॥
चतुर्भुजंरक्तपद्मसंस्थितम्मुकुटोज्ज्वलम् ॥ कुण्डलेबिभ्रतंशुद्धेश्रीवत्सोरस्कमुत्तमम् ॥ ६७ ॥ नमोनारायणायेतिमूलबीजे
नवाहरेः ॥ एवंसम्पूजयेद्भूपचतुर्व्वर्गस्यसिद्धये ॥ पाण्डुनाथस्योत्तरस्याम्ब्रह्मकूटाह्वयंसरः ॥ ६८ ॥ ब्रह्मणानिर्म्मितम्पूर्व्वंस्ना
नार्थंस्वर्ग्गवासिनाम् ॥ आयामेनशतव्यामंविस्तीर्णन्त्वेतदर्द्धकम् ॥ ६९ ॥ सर्व्वपापहरम्पुण्यन्देवलोकात्समागतम् ॥

१ अष्टाक्षरभवोद्भवम् इ० पा० ॥

कमण्डलुसमुद्भूतब्रह्मकुण्डामृतस्रवः ॥ ७० ॥ हरमेसर्व्वपापानिपुण्यंस्वर्गञ्चसाधय ॥ इत्यनेनतुमन्त्रेणस्नात्वातंस्मिन्स
रोजले ॥ ७१ ॥ पाण्डुनाथञ्चसम्पूज्यविष्णुसायुज्यमाप्नुयात् ॥ ब्रह्मकुण्डजलेस्नात्वापूजयित्वाउमापतिम् ॥ ७२ ॥ वायु
कूटंसमारुह्यमुक्तिमेवाप्नुयान्नरः ॥ पाण्डुनाथात्पूर्व्वदिशिगिरिश्चित्रहरोहरिः ॥ सततय्यँत्ररमतेविष्णुर्व्वाराहरूपधृक् ॥ ७३ ॥
ततस्तुनीलकूटाख्यङ्कामाख्यानिलयम्परम् ॥ तत्पूर्व्वभागेवसतिब्रह्माब्रह्मगिरिःपुनः ॥ ७४ ॥ ब्रह्मशैलस्यपूर्व्वस्याम्भू
मिपीठंव्यवस्थितम् ॥ चारुनिम्नशुभावर्त्तङ्कामाख्यानाभिमण्डलम् ॥ ७५ ॥ तत्रोग्रतारारूपेणरमतेपरमेश्वरी ॥ तत्रतेनै
वरूपेणपूजितव्याशुभात्मिका ॥ ७६ ॥ तस्यास्तुबीजम्पूर्व्वस्मिन्नुत्तरेप्रतिपादितम् ॥ रूपंशृणुनरश्रेष्ठयेनध्येयासदाशि
वा ॥ ७७ ॥ कृष्णालम्बोदरीदीर्घाविरलारक्तदन्तिका ॥ चतुर्भुजाकृशाङ्गीतुदक्षिणेकर्तृखर्प्परौ ॥ ७८ ॥ खड्गञ्चेन्दीवर
व्वाँमेशीर्षेचैकाजटापुनः ॥ वामपादंशवस्योर्व्वाधान्नियाङ्घ्रिन्तुदक्षिणम् ॥ ७९ ॥ शवस्यहृदयेन्यस्यसाट्टहासम्प्रकुर्व्वती ॥
नागहारशिरोमालाभूषिताकामदापरा ॥८० ॥ त्रिकोणंमण्डलञ्चास्याहुङ्कारम्मध्यबीजकम् ॥ द्वारेशानांयोगिनीनान्नामान्य
स्यास्तुतन्त्रके ॥८१॥ ज्ञेयानिनरशार्दूलयत्प्रोक्तव्वाँम्यगोचरे ॥ उर्व्वश्याव्विधिवत्स्नात्वास्पृष्ट्वापाण्डुशिलान्तथा ॥ ८२ ॥ नी
लकूटंसमारुह्यपुनर्योनौनजायते ॥ पुरन्दरपुरायातेवाराणस्याःकलाधिके ॥ ८३ ॥ सुधासङ्कीर्णतोयौघैःपापंहरममोर्व्वशि ॥

अमृतश्राविणीदेवीसुधौघपरिपूरिणि ॥ ८४ ॥ अमृतेनामृतम्मेद्यदेहिदेविममोर्व्वशि ॥ पुरन्दरप्रियेदेविवाराणस्याःसदाम्बि
के ॥ ८५ ॥ लोहित्यन्हृदसङ्कीर्णैपापंहरममोर्व्वशि ॥ इत्येभिःस्तुतिभिर्म्मन्त्रैःस्नात्वापुण्योर्व्वशीजले ॥ ८६॥ सर्व्वपापवि
निर्म्मुक्तोविष्णुलोकेविचेष्टते ॥ उर्व्वशीद्विभुजाप्रोक्तास्वर्णकङ्कणधारिणी ॥ ८७ ॥ सौवर्णपात्रममृतस्रावणायबिभर्त्तिच ॥
शुक्लवस्त्रागौरवर्णापीनोन्नतपयोधरा ॥८८॥ सर्व्वाङ्गसुन्दरीशुद्धासर्व्वाभरणभूषिता॥ एतन्नामाद्यक्षरन्तुमन्त्रमस्याःप्रकीर्त्ति
तम्॥८९॥उमातन्त्रेतुगदितम्मन्त्रमस्याःप्रकीर्त्तितम् ॥ गणेशःपूर्व्वद्वारस्थःकामाख्यापर्व्वतस्यतु ॥९०॥ तत्रैवचाग्निवेतालः
स्थितोद्वारिमनोहरः ॥ तयोरूपञ्चमन्त्रञ्चयथोक्तंशम्भुनापुरा॥९१॥तदहम्प्रतिवक्ष्यामिमहाराजशृणुष्वमे ॥ ॐनमउल्कामु
खायेतिमूलबीजादिसङ्गतम् ॥९२॥ मन्त्रंसिद्धगणेशस्यद्वारस्थस्यप्रकीर्त्तितम्॥ रूपन्तस्यप्रवक्ष्यामिगजवक्त्रन्त्रिलोचनम्
॥ ९३ ॥ लम्बोदरञ्चतुर्बाहुर्व्यालयज्ञोपवीतिनम् ॥ सूर्य्यकर्णम्बृहद्दण्डमेकदंष्ट्रम्पृथूदरम् ॥ ९४॥ दक्षिणेतुकरेदण्डमुत्प
लञ्चतथापरे ॥ लड्डुकम्परशुञ्चैववामतःपरिकीर्त्तितम् ॥ ९५ ॥ बृहत्वाक्षिप्तगगनम्पीनस्कन्धाङ्घ्रिपाणिनम् ॥ युक्तम्बुद्धि
कुबुद्धिभ्यामधस्तान्मूषिकान्वितम् ॥ ९६ ॥ तन्त्रस्तुयादृशःप्रोक्तःपञ्चवक्त्रस्यपूजने ॥ सएवतन्त्रोग्राह्यस्तुतादृग्विधिनिषे
धनम् ॥ ९७ ॥ द्विभुजःपीनवदनोरक्तनेत्रोभयङ्करः ॥ क्षुरिकान्दक्षिणेपाणौवामेरुधिरपात्रकम् ॥ ९८ ॥ दंष्ट्राकराल

१ एभिर्म्मन्त्रैर्य्यास्तुतयस्ताभिःस्नात्वेत्यर्थः । २ सुशोभनमितिवापाठः ।

वदनःकृशोधमनिसन्ततः ॥ जटान्दीर्घाम्मूर्द्धिबिभ्रद्घोरएवयुतस्तथा ॥ ९९ ॥ पचतुर्थोग्निबीजेनषष्ठस्वरविभूषितः ॥ अ
ग्निवेतालबीजोयंसर्व्वत्रभयनाशकः ॥ १०० ॥ पूजयेदग्निवेतालंसर्व्वत्रभयकारणम् ॥ यःपूजयेतस्यपुनर्भूतादिभ्यो
भयन्नहि ॥ १ ॥ अष्टानामथमन्त्राणांयोगिनीनाङ्क्रमान्नृप ॥ शैलपुत्रीप्रमुख्यानान्मन्त्राण्यष्टाक्षराणितु ॥ २ ॥ वैष्णवी
तन्त्रसंस्थानिपूर्वंप्रोक्तानितानितु ॥ शैलयपुत्र्यास्तथाचाङ्गमन्त्रम्प्राक्प्रतिपादितम् ॥ ३ ॥ रूपन्तुनरशार्दूलयोगिनी
नाव्विँशेषतः ॥ प्रत्यक्षरेणबीजेनदुर्ग्गातन्त्रेणवात्विमाः ॥ ४ ॥ नेत्रबीजेनैवपूज्यायोगिन्योनृपसत्तम ॥ कात्यायनीम्पा
दुदुर्ग्गान्दुर्ग्गातन्त्रेणपूजयेत् ॥५॥ तदेवपूजनंरूपन्तत्पूर्व्वम्प्रतिपादितम् ॥ कालरात्र्यास्तुमन्त्रेणकालरात्रिंप्रपूजयेत् ॥ ६ ॥
कालरात्र्यारूपमन्त्रौपुरेवप्रतिपादितौ ॥ महामायातन्त्रमन्त्रैःपूजयेद्भुवनेश्वरीम् ॥ ७ ॥ एताःसर्व्वास्तयोगिन्यःकामाख्या
वरफलप्रदाः ॥ विशेषयोयत्रनैवोक्तोरूपेतन्त्रेचपूजने ॥ ८ ॥ दुर्ग्गातन्त्रेणमन्त्रेणतत्रपूजांसमाचरेत् ॥ प्रत्येकय्योगिनीयस्तुपू
जयेन्नरसत्तमः ॥९॥ ससर्व्वयज्ञस्यफलंप्राप्नोतिनरसत्तम ॥ नीलशैलस्यपूर्व्वस्मिन्स्वरूपम्प्रतिपादितम् ॥१०॥ नाभिमण्ड
लपूर्व्वस्याम्भस्मकूटस्यदक्षिणे ॥ पूर्व्वस्याङ्कर्प्पटोनामपर्व्वतोयमरूपधृक् ॥ ११ ॥ तत्रयाम्यशिलाकृष्णानीलाञ्जनसमप्र
भा ॥ आधित्यकायांराजेंद्रयामपञ्चसुविस्तृता ॥ १२ ॥ पूजयेत्तत्रशमनम्पाणौदण्डंसदैवयः ॥ १३ ॥ धत्तेतुपाणिनानित्यं

प्राणिदण्डस्यसाधनम् ॥ कृष्णवर्णन्तुद्विभुजङ्किरीटमुकुटोज्वलम् ॥ दधतश्चासिपुत्रीञ्चवामपाणौसदैवहि ॥ १४॥ कृष्ण
वस्त्रंस्थूलपद्मम्वहिर्न्निःसृतदन्तकम् ॥ भयाभयप्रदन्नित्यन्नृणामहिषवाहनम् ॥ १५ ॥ पूजयेत्परयाभक्त्यायाम्यबीजेनसा
धकः ॥ उपान्तवर्ग्गस्यादिर्य्योवर्णोबिद्विन्दुसय्युतः ॥ १६ ॥ यमबीजमितिख्यातय्यँमस्यप्रीतिदायकम् ॥ अनेनैवतुमन्त्रे
णशमनम्पूजयेत्तुयः ॥१७॥ कर्प्पटाख्येऽचलवरेनापमृत्युमवाप्नुयात् ॥ पूर्व्वस्याङ्कर्प्पटाख्यान्तुशैलाच्चित्रइतिस्मृतः ॥१८॥
यःपूर्वभागप्रान्तेऽभूद्दिशाग्नेय्यामवस्थितः ॥ पीठस्तुब्रह्मग्रावस्तुसप्राक्पर्व्वतउच्यते॥१९॥ तस्मिन्वसंतिसततङ्ग्रहानवयथे
च्छया ॥ तत्रतान्पूजयेद्यस्तुसनाप्नोत्यापदंक्कचित् ॥ १२० ॥ रूपम्मन्त्रञ्चसूर्य्यस्यचन्द्रस्यप्रतिपादितम् ॥ सप्तानामितरे
षान्तुमन्त्रंरूपंश्शृणुष्वमे ॥२१॥ रक्ताम्बरधरःशूलीशक्तिमाँश्चगदाधरः ॥ चतुर्ब्भुजोमेषरथोवरदोमङ्गलोमतः ॥ २२ ॥ पीता
म्बरधरःशूलीपीतमाल्यानुलेपनः ॥खड्गचर्म्मगदापाणिःसिंहस्थोवरदोबुधः ॥२३॥ स्वर्णगौरःपीतवासाःस्वर्णपर्य्यङ्कसंस्थि
तः ॥ मालाक्कमण्डलुन्दण्डव्वाँमेनवरदायकम् ॥ २४ ॥ चतुर्ब्भुजञ्चसर्व्वज्ञञ्चिन्तयेद्देवतीर्थकम् ॥ सर्व्वैर्देवगणैर्नित्यन्तप्य
मानम्मनोहरम् ॥ २५ ॥ शुक्लवस्त्रंशुक्लवर्णंशङ्खनागोपरिस्थितम् ॥ चतुर्भुजम्पाशमालांपुस्तकाञ्चवराभये ॥ २६ ॥ क्रमाद्द
क्षिणवामांन्यान्धत्तेदैत्यगुरुःसदा ॥ इन्द्रनीलनिभःशूलीवरदोगृध्रवाहनः ॥२७॥ पाशबाणासनधरोध्यातव्योर्क्कसुतःसदा ॥

कामदेवस्यबीजन्तुमन्त्रम्भौमस्यकीर्त्तितम् ॥ २८ ॥ दुर्ग्गायानेत्रबीजस्ययत्तुमध्याक्षरंशुभम् ॥ तन्मन्त्रंशशिपुत्रस्यस
र्व्वकामफलप्रदम् ॥ २९ ॥ नकारपञ्चमोद्विस्तुचतुःषट्स्वरसंय्युतम् ॥ गणेशबीजान्तमिदङ्गुरोर्म्मन्त्रम्प्रकीर्त्तितम् ॥ ३० ॥
बिन्द्विन्दुसंय्युतञ्चापिपूर्व्ववर्णद्वयम्पुनः ॥ सप्तमस्वरसंय्युक्तोमकरस्त्वादिरन्तरम् ॥ ३१ ॥ प्रान्तवर्ग्गाद्यक्षरन्तुबिन्द्वि
न्दुभ्यांसमन्वितम् ॥ भवेच्छुक्रस्यबीजन्तुसर्व्वकामसमृद्धिदम् ॥ ३२ ॥ प्रान्तवर्ग्गाद्यक्षरन्तुचन्द्रबिन्दुसमन्वितम् ॥ आ
द्यमन्त्रस्वरोपेतन्तदेवेत्यादिसंय्युतम् ॥ ३३ ॥ शनैश्चरस्यमन्त्रोयंसर्व्वदोषविनाशनः ॥ बिन्दुचन्द्रसमायुक्तन्नामाद्यक्ष
रमेववा ॥ ३४ ॥ तेषांसर्व्वग्रहाणाव्वैमन्त्रमङ्गंप्रकीर्त्तितम् ॥ शान्तिकेपौष्टिकेकृत्येएभिर्म्मन्त्रैर्ग्ग्रहानिमान् ॥ ३५ ॥ पूज
येत्सर्व्वदाधीरोभूतिकामोमहामतिः ॥ वरदाभयहस्तश्चखड्गचर्म्मधरस्तथा ॥ ३६ ॥ सिंहासनगतःकृष्णोबाहुर्द्वीरःप्रच
क्ष्यते ॥ धूम्रवर्णोविशालाक्षःपुच्छरूपीचतुर्भुजः ॥ ३७ ॥ खड्गचर्म्मगदाबाणपाणिःकेतुःशरासनः ॥ उपान्तादिर्द्वादशे
नस्वरेणसहितःपुनः ॥ ३८ ॥ उपान्तःपञ्चमेनेन्दुबिन्दुभ्यांसहितावुभौ ॥ मन्त्रोयमनुलोमेनराहोःकेतोर्व्विलोमतः ॥
॥ ३९ ॥ आद्यक्षरम्पूर्व्ववद्वामन्त्रयुक्तमथैतयोः ॥ एवञ्चित्रेशैलवरेपूजयित्वानवग्रहान् ॥ ४० ॥ अभिष्टाल्लभतेकामान्न
रःशान्तितथोत्तमाम् ॥ चित्रकूटात्तुपूर्व्वस्यांकज्जलाचलउत्तमः ॥४१॥ सर्व्वविद्याधराद्यास्तुसन्त्यस्मिन्देवयोनयः ॥ तम्पर्व्व

तसमारुह्यप्रणम्यसकलान्सुरान् ॥ ४२ ॥ स्वर्ग्गंय्याँन्तिनरःश्रेष्ठइहचाप्यतुलांश्रियम् ॥ कज्जलाचलशैलात्तुपूर्व्वस्मिञ्छु
भपर्व्वतः ॥ ४३ ॥ शच्यासार्द्धम्पुरारेमेयत्रचक्रःसुरेश्वरः ॥ तत्पूर्व्वस्याम्महादेवीनदीकपिलगङ्गिका ॥ ४४ ॥ तस्यांस्नात्वा
नरोगङ्गास्नानजम्फलमाप्नुयात् ॥ कामाख्यानिलयात्पूर्व्वन्दक्षिणस्यान्तथादिशि ॥ ४५ ॥ विद्यतेमहदावर्त्तम्भुविब्रह्मबिल
म्महत्॥पञ्चविंशतिमानेनयोजनानान्नरेश्वर॥४६॥तस्मादायातिसुनदीसिताम्भोपमतोयभाक् ॥कोब्रह्माकीर्त्तितोदेवैर्य्यस्मा
त्तस्यविलासृता ॥४७॥ गङ्गेवफलदायस्मात्तस्मात्कपिलगङ्गिका ॥ स्नात्वाकपिलगङ्गायांसर्व्वमन्वन्तरासुच ॥ ४८॥ नवः
स्वर्ग्गमवाप्यादौब्रह्मलोकन्ततोव्रजेत् ॥ अतीत्यतान्नदींपूर्व्वभागेदमनिकाह्वया ॥४९॥ नदीमहाकृष्णतोयापापस्यदमनीत
था ॥ ततोवृद्धाह्वयाचाभूदपरासरिदुत्तमा॥५०॥तस्यानद्याःपूर्व्वभागेगङ्गावत्फलदायिनी॥माघन्तुसकलम्मासंस्नात्वामुक्ति
मवाप्नुयात् ॥५१॥ तथादमनिकायाश्चपरन्निर्व्वाणमाप्नुयात्॥ततःपूर्व्वेपरादेवीनाम्नासासरिदुत्तमा ॥५२ ॥ महतीदिव्यय
मुनायमुनावत्फलप्रदा॥दक्षिणाद्रिसमुद्भूतादक्षिणोदधिगामिनी ॥ ५३ ॥ तस्यान्तुकार्त्तिकम्मासंस्नात्वामुक्तिमवाप्नुयात् ॥
इहचैवोत्तमान्भोगान्भागधेयान्प्रतिष्ठितान् ॥५४॥ तन्मध्येभैरवोदेवोभर्ग्गसम्भोगसम्भवः॥दुर्ज्जयाख्येवरगिरावस्त्युपत्य
कभूमिगः॥५५॥योसौशरभरूपस्यमध्यखण्डोतिभैरवः ॥ सएवभैरवाख्योयम्पञ्चवक्त्रस्यमन्त्रकैः ॥५६॥ सम्पूज्यतत्रमति

मान्सयातिशिवलोकताम् ॥ कामेश्वरस्ययपूजाकथितानीलनिर्णये॥५७॥सम्पूज्यश्वाचलश्रेष्ठेदुर्ज्जयेचाचलोत्तमे॥ तत्रभै
रवगङ्गास्तिसरोवैभैरवाह्वयम् ॥५८॥तयोःस्नात्वानरोयातिशिवलोकंसनातनम् ॥ दुर्ज्जयाख्यस्यपूर्व्वस्याम्पुरन्नामवरासनं
॥५९॥तद्दक्षिणेमहाशैलःक्षोभकोनामनामतः॥तस्मिन्गिरौशिलापृष्ठेरक्तदेवीव्यवस्थिता ॥१६०॥पञ्चपुष्करणीनाम्नापञ्चयो
निस्वरूपिणी ॥ एकत्रपञ्चभिर्दुर्ग्गायोनिभिःपञ्चवक्त्रकम् ॥६१॥ स्थितारमपितुन्तत्रानित्यमेवहिमाद्रिजा ॥ तच्छैलपूर्व्वभा
गेतुकान्तानाममहानदी ॥ ६२ ॥ दक्षिणंसागराय्याँतिप्रथमश्चोत्तरश्रवा ॥ दिव्यङ्कुण्डम्महाकुण्डन्तच्छैलोपत्यकाक्षितौ
॥ ६३ ॥ संस्थितंतत्रस्नात्वातुतान्देवीम्परिपूजयेत् ॥ दिव्यकुण्डेनरःस्नात्वापञ्चपुष्करणींशिवाम् ॥ ६४ ॥ यःपूजयेन्महा
भागःसयोनौनहिजायते ॥ पञ्चयोनिःपुष्करिणीपञ्चैवपरिसंस्थिताः ॥ ६५ ॥ यतस्ततःपञ्चरूपापञ्चपुष्करिणीमता ॥ य
थावल्कलपुष्पाणितथैताःपञ्चयोनयः ॥ ६६ ॥ पञ्चपुष्करणीदेव्यःप्रचण्डाःसर्व्वकामदाः ॥ त्रिपुरायास्तुतन्त्रेणताःपूज्या
साधकोत्तमैः ॥ ६७ ॥ कामेश्वरीतन्त्रमन्त्रैरथवापूजयेच्छिवाम् ॥ बालायास्त्रिपुरायास्तुमन्त्रमस्याःप्रकीर्त्तितम् ॥ ६८ ॥ का
मेश्वर्य्यास्तुवामन्त्रम्पूजनेस्याःप्रकीर्त्तितम् ॥ उग्रचण्डाप्रचण्डाचचण्डोग्राचण्डनायिका ॥ ६९ ॥ चण्डाचेतिचयोगिन्यःप
ञ्चास्याःपरिकीर्त्तिताः ॥ शिवलिङ्गञ्चतत्रास्तिशिलायांहेरुकाह्वयम् ॥१७० ॥ देवीदक्षिणपूर्व्वस्यान्नायकन्तन्तुपूजयेत् ॥

भैरवस्यतुमन्त्रणपूजयित्वादिवव्व्रँजेत् ॥ ७१ ॥ निर्म्माल्यधारिणीदेवीचण्डगौरीतिकीर्त्तिता ॥ एतस्यांनरशार्दूलपुराभर्गे
णभाषिता ॥ ७२॥ कान्तायाःसलिलेस्नात्वावसन्तेमानवोत्तमः ॥ रूपवान्गुणवान्भूत्वाशिवलोकायगच्छति ॥ ७३ ॥ क्षोभ
कारव्यान्महाशैलादैशान्याम्पर्व्वतोत्तमः ॥ तुङ्गसंध्याचलोनामवसिष्ठोयत्रशप्तवान् ॥ ७४ ॥ निमिनाम्नस्तुराजर्षेःशापाद्ब्र
ह्मसुतःपुरा ॥ वसिष्ठोत्द्यशरीरोभूतच्छापाच्चनिमिस्तथा ॥ ७५ ॥ ततोब्रह्मोपदेशेननिर्ज्जनेकामरूपके ॥ सन्ध्याचलेतपस्ते
पेतस्यविष्णुरभूत्तदा ॥ ७६ ॥ प्रत्यक्षस्तस्यदेवस्यवरदानान्महामुनिः ॥ अमृतान्यवतार्य्याशुकुण्डङ्कृत्वागिरेस्तटे ॥ ७७ ॥
तत्रस्नात्वाचपीत्वाचशरीरम्प्रापपूरितम् ॥ तस्मादमृतकुण्डाच्चसंध्यानामनदीवरा ॥ ७८ ॥ निःसृतातत्रचाप्लुत्याचिरायुरग
दोभवत् ॥ तस्मात्पूर्व्वन्तुललिताललिताख्यासरिद्वरा ॥ ७९ ॥ सागराद्दक्षिणात्पूर्व्वम्महादेवावतारिता ॥ वैशाखशुक्लपक्ष
स्यतृतीयायान्नरस्तुयः ॥ १८० ॥ कुर्य्याद्वैललितास्नानंसशम्भुसदनव्व्रँजेत् ॥ ललितायाःपूर्व्वतीरेभगवान्नामपर्व्वतः
॥ ८१ ॥ स्वय्यँविष्णुर्लिङ्गरूपीतत्रास्तेभगवान्हरिः ॥ ललितायान्नरःस्नात्वाद्वादश्यांशुक्लपक्षके ॥ ८२ ॥ भगवन्तंसमारु
ह्ययोजयेत्परमेश्वरम् ॥ सयातिविष्णुसदनंशरीरेणविराजता ॥ ८३ ॥ एताःपूर्व्वोदितानद्यःसर्व्वाश्चैवोत्तरश्रवाः ॥ क्रमात्तु
दक्षिणय्याँन्तिसागरञ्जाह्नवीसमा ॥ ८४ ॥ कामाख्याम्प्रथमन्दृष्ट्वास्नात्वाचैवौर्व्वशीजले ॥ यएतासुचरेत्स्नानंसतुमुक्तिम

वाप्नुयात् ॥ ८५ ॥ ॥ इतिकालिकापुराणेद्व्यशीतितमोध्यायः ॥ ८२ ॥ ॥ छ ॥ ॥ और्व्वउवाच ॥ ॥ शाश्वती
कथितायातुनदीमत्स्यध्वजासिता ॥ तस्याःपूर्व्वेसमाख्यातानदीदीपवतीमता ॥ १ ॥ एषाचहिमवज्जाताच्छिन्दन्तीदीपव
त्तमः ॥ तेनदेवमनुष्येषुनदीदीपवतीस्मृता ॥ २ ॥ दीपवत्याःपूर्व्वतस्तुशृङ्गाटोनामपर्व्वतः ॥ तत्रदेवस्यभर्गस्यलिङ्गमेकम्प्र
तिष्ठितम् ॥ ३ ॥ सरित्तुसिद्धत्रिःस्त्रोतादक्षिणोदधिगामिनी ॥ ४ ॥ शृङ्गाटकस्यसततंस्त्रवन्तीसातुपादतः ॥ दक्षिणंसागरय्यातिभ
र्गस्यप्रियकारिणी ॥ ५ ॥ सलिलेयोनरःस्नात्वात्रिःस्त्रोतायानरोत्तमः ॥ शृङ्गाटकंसमारुह्यपूजयेल्लिङ्गशङ्करम् ॥ ६ ॥ सदी
प्तकायःशुद्धात्माप्राप्यकामानिहातुलान् ॥ अन्तेभर्गगृहय्यातिततोमोक्षमवाप्नुयात् ॥ ७ ॥ हरस्तुद्विभुजस्तस्मिन्सदावृ
षभवाहनः ॥ उमयारमतेसार्द्धव्वामदेवस्यमन्त्रकैः ॥ ८ ॥ तन्त्रैश्चपूजयेद्देवमुमामन्त्रेणचण्डिकाम् ॥ तत्पूर्व्वतोनिम्नगा
तुनाम्नातुवृद्धदेविका ॥ ९ ॥ तस्यांस्नात्वाफलम्मर्त्योदेविकास्नानजल्लभेत् ॥ ततोभट्टारिकानामहिमशैलसमुद्भवा ॥ १० ॥
महानदीदेवगणैर्य्यासदोपास्यतेसुखम् ॥ तस्यार्घ्यंःकुरुतेस्नानंयुगादिषुचतुष्वपि ॥ ११ ॥ सयातिपरमंस्थानन्तद्विष्णोः
परमम्पदम् ॥ अस्तिनाटकशैलेतुसारोमानससन्निभम् ॥ १२ ॥ यत्रसार्द्धंशैलपुत्र्याजलक्रिडांसदाहरः ॥ कुरुतेनरशार्दूलस्व
र्णपङ्कजशोभिते ॥ १३ ॥ तस्यपश्चान्मध्यपूर्व्वभागेभ्यस्तुसरित्त्रयम् ॥ अवतीर्णम्प्रयात्येवदक्षिणंसागरम्प्रति ॥ १४ ॥

तस्यपार्श्वमभागेतुनदीदिक्करिकाह्वया ॥ दिग्गजक्षतसञ्जातातेनदिक्करिकाह्वया ॥ १५ ॥ मध्यभागात्सृतायातुशङ्करेणावता
रिता ॥ वृद्धगङ्गाह्वयासातुगङ्गेवफलदायिनी ॥ १६ ॥ यानिःसृतापूर्व्वभागात्तस्माद्गिरिवरान्नदी ॥ सुवर्णस्राविणीख्यातासा
गङ्गासदृशीफले ॥ १७ ॥ कुर्व्वत्याःसरसिस्नानम्पार्व्वत्यास्वशरीरतः ॥ निःसृतास्वर्णकणिकास्तावहन्तिजलैरिमा ॥
॥ १८ ॥ क्रीडार्थंशम्भुनागात्रेकणिकाभिःसमाचिताः ॥ स्वस्थानात्तत्रसल्लँग्नास्ततश्चन्दनबिन्दवाः ॥ १९ ॥ ताउमायाः
शरीरात्तुसंस्रवन्तिजलैःसह ॥ ततःस्वर्णवहानामस्वर्णश्रीःसर्व्वतोऽधिका ॥२०॥ एतासुचैत्रमासन्तुस्नात्वामर्त्योनरर्षभः ॥
कृष्णपक्षेचतुर्दश्यान्त्रिकालय्यँत्रमानवः ॥ २१ ॥ चिरंशिवगृहेस्थित्वाशेषेब्रह्मगृहव्व्रँजेत् ॥ भूमाववगतःपश्चात्सार्व्वभौ
मोनृपोभवेत् ॥ २२ ॥ वृद्धगङ्गाजलस्यान्तस्तीरेब्रह्मसुतस्यवै ॥ विश्वनाथाह्वयोदेवःशिवलिङ्गसमन्वितः ॥ २३ ॥ विश्वदे
वीमहादेवीयोनीमण्डलरूपिणी ॥ हयग्रीवेणयुयुधेतत्रदेवोजगत्पतिः ॥ २४ ॥ हयग्रीवय्यँत्रहत्वामणिकूटम्पुरागमत् ॥
तत्रयःपूजयेद्दुर्गांशारदांतन्त्रमन्त्रकैः ॥ २५ ॥ हयग्रीवस्यमन्त्रेणतन्त्रेणगरुडध्वजम् ॥ कामेश्वरस्यतन्त्रेणमन्त्रेणापिचश
ङ्करम् ॥ २६ ॥ योयजेत्परयाभक्त्याद्वादश्यांसमुपोषितः ॥ अष्टम्याञ्चतुर्दश्यान्तस्यपुण्यफलंश्रृणु ॥ २७॥ कल्पकोटित्रयं
स्थित्वाशिवगेहेगृहेहरे ॥ तावन्तंसंस्थिताःकालन्तावन्तञ्चशिवागृहे ॥ २८ ॥ शेषेभुवंसमासाद्यवेदविद्ब्राह्मणोभवेत् ॥

नद्यः स्वर्णश्रियः पूर्वन्नदी कामाह्वया शुभा ॥ २९ ॥ कामायाः पूर्वभागे तु नदी सोमासनाह्वया ॥ शोभासनायाः पूर्वस्यान्नदी नाम्ना वृषोदका ॥ ३० ॥ ततः पूर्वे कामरूपम्पीठन्ते जगताम्प्रसूः ॥ जगन्मयी महामाया देवी दिक्करवासिनी ॥ ३१ ॥ एतायाः कथितानद्यः सकलादक्षिणश्रवाः ॥ तासु स्नात्वा च पीत्वा च स्वर्गलोकमवाप्नुयात् ॥ ३२ ॥ प्रान्ते दिक्करवासिन्याः सदा वहति स्वर्णदी ॥ सितगङ्गाह्वया लोके साक्षाद्गङ्गाफलप्रदा ॥ ३३ ॥ सा भूमिपीठसंस्था च देवी दिक्करवासिनी ॥ अन्तर्जलैः प्लावयन्ती याति प्रत्यक्षतां सुरैः ॥ ३४ ॥ सितगङ्गाजले स्नात्वा दृष्ट्वा शम्भुं हरिं विधिम् ॥ दृष्ट्वा ललितकान्ताख्यं पुनर्योनौ न जायते ॥ ३५ ॥ लिङ्गस्वरूपी भगवाञ्छम्भुस्तत्र स्वयं स्थिताः ॥ विष्णुः शिलास्वरूपेण ब्रह्मा लिङ्गस्वरूपधृक् ॥ ३६ ॥ पीठे दिक्करवासिन्याद्विरूपा रमते शिवा ॥ तीक्ष्णकान्ताह्वया त्वेका योग्रतारा प्रकीर्तिता ॥ ३७ ॥ परा ललितकान्ताख्या या श्रीमङ्गलचण्डिका ॥ तस्यास्तु सततं रूपन्तीक्ष्णकान्ताह्वयन्नृप ॥ ३८ ॥ कृष्णा लम्बोदरी पातु सा स्यादेकजटा शिवा ॥ तेन रूपे गतान्देवीं सततम्परिपूजयेत् ॥ ३९ ॥ अङ्गमन्त्रश्च रूपञ्च तस्याः प्राक्प्रतिपादितम् ॥ त्रिकोणं मण्डलञ्चास्याः कर्तव्यम्मन्त्रपूर्वकम् ॥ ४० ॥ आदौ रेखे ततः पश्चात्सुरेखेति पदन्ततः ॥ तथा पदञ्चाधिगम्य तिष्ठान्विति पदन्ततः ॥ ४१ ॥ मण्डलस्यास मन्त्रोयन्तीक्ष्णायाः परिकीर्त्तितः ॥ नरत्रिपुरदेवादियमवेतालदुर्द्धराः ॥ ४२ ॥ गणग्रामेत्यन्तकान्ताद्वारपालाः प्रकीर्त्तिताः ॥ एतांस्तु पूजयेत्सम्यग्मण्डलस्या

ष्टदिक्षुवै ॥ ४३ ॥ आदौसम्बोधनंकृत्वावज्रपुष्पन्ततःपरम् ॥ वह्निजायाततःपश्चान्मन्त्रमेषाम्प्रकीर्त्तितम् ॥ ४४ ॥
पात्रोपकरणादीनांस्थानस्यान्यस्यसर्व्वतः ॥ सर्व्वमुत्तरतन्त्रोक्तङ्कुर्य्यंरूपद्वयेपिच ॥ ४५ ॥ चामुण्डाचकरालाचसुभगाभी
षणाभगा ॥ विकटेतिचयोगिन्यःप्रोक्तायस्यास्तवैवषट् ॥ ४६ ॥ हेभगवत्येकजटेविद्महेपदमन्ततः ॥ विकटदंष्ट्रेधीमहितन्न
स्तारेप्रचोदयात् ॥ ४७॥एषातुतीक्ष्णगायत्रीपीठदेव्याःप्रकीर्त्तिता ॥ निर्म्माल्यधारिणीचास्यादेवीविकटचण्डिका ॥ ४८ ॥
मालातुमृन्मयीप्रोक्तारुद्राक्षसम्भवापिवा ॥ विशेषएषदेव्यास्तुपूजनेपरिकीर्त्तितः ॥ ४९ ॥ उपचारादिकङ्कृत्यम्बलिदानञ्च
पादिकम् ॥ सर्व्वन्तुपूर्व्ववद्राज्ञ्यङ्कामाख्यापूजनेयथा ॥ ५० ॥ पानेषुमदिराशस्तानरोबलिषुपार्थिव ॥ मोदकोनारिकेलञ्च
मांसव्यञ्जनमैक्षवम् ॥५१॥ नैवेद्येषुप्रियकरातीक्ष्णायाःपरिकीर्तिताः ॥ यैषाललितकान्ताख्यादेवीमङ्गलचण्डिका ॥ ५२ ॥
वरदाभयहस्तासाद्विभुजागौरदेहिका ॥ रक्तपद्मासनस्थाचमुकुटोज्ज्वलमंडिता ॥ ५३ ॥ रक्तकौशेयवसनास्मितवक्त्राशु
भानना ॥ नवयौवनसम्पन्नाचार्व्वङ्गीललितप्रभा ॥ ५४ ॥ उमायाभासितम्मन्त्रय्यँत्पूर्व्वन्त्वेकमक्षरम् ॥ मन्त्रमस्या
स्तुतज्ज्ञेयन्तेनदेवीम्प्रपूजयेत् ॥ ५५ ॥ नारायण्यैविद्महेत्वांचण्डिकायैतुधीमहि ॥ तन्नोललितकान्तेतिततःपश्चात्प्रचो
दयात् ॥ ५६ ॥ एषाललितगायत्रीदेव्याइष्ट्यैप्रकीर्तिता ॥ लोहिताङ्गस्यदिवसःप्रियोस्याःपरिकीर्त्तितः ॥ ५७ ॥

कालोवसन्तकालश्चस्वरश्चापितुपञ्चमः ॥ अष्टम्याञ्चनवम्याञ्चपूजाकार्य्याविभूतये ॥ ५८ ॥ निर्म्माल्यधारिणीचास्यादे
वीललितचण्डिका ॥ दूर्व्वाङ्कुरैःसमायुक्तमक्षतम्प्रीतिदम्परम् ॥ ५९ ॥ अयमस्याविशेषस्तुपूजनेपरिकीर्त्तितः ॥ वैष्णवी
तन्त्रमन्त्रस्यतन्त्रङ्गाद्यन्तुपूजने ॥ ६० ॥ उपचारोबलिश्चास्याविहितोयःक्रमःपुरा ॥ महामायामहादेव्यास्तद्गाद्यम्प
रिपूजने ॥ ६१ ॥ स्वगात्ररुधिरन्दद्यादात्मनश्चहितायवै ॥ पटेषुप्रतिमायाम्वाघटेमङ्गलचण्डिकाम् ॥ ६२ ॥ यःपूजये
द्भौमदिनेशुभैर्दूर्व्वाङ्कुरैःशिवाम् ॥ सततंसाधकोसोपिकाममिष्टमवाप्नुयात् ॥ ६३ ॥ एवन्दिक्करवासिन्याःकथितःपूजनक्रमः ॥
यच्छ्रुत्वानाशुभङ्किञ्चिदाप्नोतिश्रवणेरतः ॥ ६४ ॥ दिक्करस्त्वरुणःप्रोक्तस्तथाशम्भुश्चदिक्करः ॥ तस्मिन्नध्युषितादेवीतस्मा
द्दिक्करवासिनी ॥ ६५ ॥ जगत्त्रयेपियस्यास्तुसदृशीकापिसुन्दरी ॥ नान्यास्तिललितातेनदेवीललितकान्तिका ॥ ६६ ॥
शङ्करस्यपुराप्रोक्तोग्राह्योवैपूजनक्रमः ॥ शृणुराजन्नवहितोब्रह्मणःपूजनक्रमम् ॥ ६६ ॥ ब्रह्मबीजम्पुराप्रोक्तन्तम्मन्त्रंस
र्व्वतश्चरेत् ॥ तेनैवतन्तुसम्पूज्यपरन्निर्व्वाणमाप्नुयात् ॥ ६८ ॥ एतस्यचाङ्गमन्त्रस्तुयथाभर्गेणभाषितम् ॥ वेतालभैर
वाभ्यान्तुरूपञ्चशृणुभूमिप ॥ ॥ ६९ ॥ यत्तृतीयश्चवह्निश्चशेषस्वरसमन्वितः ॥ चन्द्रबिन्दुसमायुक्तोब्रह्ममन्त्रम्प्रकीर्त्तित
म् ॥ ७० ॥ अनेनैवतुमन्त्रेणब्रह्माणय्यँःप्रपूजयेत् ॥ सकाममिष्टंसम्प्राप्यब्रह्मलोकेषुमोदते ॥ ७१ ॥ ब्रह्माकमण्डलु

धरश्चतुर्व्वक्रश्चतुर्भुजः ॥ कदाचिद्रक्तकमलेहंसारूढःकदाचन ॥ ७२ ॥ वर्णेनरक्तगौराङ्गःप्रांशुस्तुङ्गाङ्गउन्नतः ॥ कमण्डलुर्व्वामकरेश्रुंचहस्तेचदक्षिणे ॥ ७३ ॥ दक्षिणाधस्तथामालांवामाधश्चतथाश्रुवम् ॥ आज्यस्थालीवामपार्श्वेदेवाःसर्व्वेऽग्रतःस्थिताः ॥ ७४ ॥ सावित्रीवामपार्श्वस्थादक्षिणस्थासरस्वती ॥ सर्व्वेचऋषयोह्यग्रेकुर्य्यादेवंविचिन्तनम् ॥ ॥ ७५ ॥ चतुष्कोणञ्चतुर्द्वारमष्टपत्रसमन्वितम् ॥ चतुष्कोणेष्वङ्कितन्तुस्रुक्कमण्डलुस्रकूस्रुवैः ॥ ७६ ॥ सम्मार्जनादिकंसर्व्वंयाश्चान्याःप्रतिपत्तयः ॥ अष्टाश्चोत्तरतन्त्रोक्तायोगपीठेङ्गिकादिकाः ॥ ७७ ॥ आधारशक्तिप्रमुखाँस्तथासर्व्वांस्तुपूजयेत् ॥ अष्टपत्रेषुपद्मस्यदिक्पालाँश्चप्रपूजयेत् ॥ ७८ ॥ पद्मासनायविद्महेहंसारूढायधीमही ॥ तन्नोब्रह्मन्नितिपदन्ततःपश्चात्प्रचोदयात् ॥ ७९ ॥ एषातुब्रह्मगायत्रीपूजयेदनयाविधिम् ॥ निर्माल्यधारीचैतस्यसनत्कुमारउच्यते ॥ ८० ॥ उपचाराःपूर्व्ववत्तुनेत्राञ्जनविवर्ज्जिताः ॥ रक्तकौशेयवस्त्रन्तुब्रह्मप्रीतिकरम्परम् ॥ ८१ ॥ अन्नंसपायसंसर्पिस्तिलयुक्तञ्चभाजनम् ॥ सितरक्तासमायुक्तञ्चन्दम्परिकीर्तितम् ॥ ८२ ॥ पार्श्वयोःशङ्करविष्णुंपूजनेपूजयेत्पुरः ॥ श्रुवादीनकरसंस्थास्तुमण्डलेपरिपूजयेत् ॥ ८३ ॥ सरस्वतीञ्चसावित्रींहंसम्पद्मन्तथैवच ॥ अयव्विशेषःकथितःप्रणामश्चास्यदण्डवत् ॥ ८४ ॥ पद्मबीजभवामालाजपकर्म्मणिकीर्तिता ॥ पूर्णादशौतिथिग्राह्यौपूजाकर्म्मणिसर्व्वदा ॥ ८५ ॥ क्षीरेणार्घ्यम्प्रदद्यात्तुसर्व्वदाब्रह्मणेनृप ॥ अयन्तेक

१ अस्यद्धानेतिशेषः । २ माला ।

थितोभूपयथाभर्गेणभाषितः ॥ ८६ ॥ दर्शयतास्वपुत्राभ्याङ्कामरूपाह्वयंशुभम् ॥ यत्रतत्रविधिश्चैवसाधकःपरिपूजयेत्
॥ ८७॥ पीठेसम्यक्पूजयित्वापरन्निर्व्वाणमाप्नुयात् ॥ कथिताब्रह्मणःपूजापूजनंशृणुवैष्णवम् ॥ ८८ ॥ बीजन्तुवासुदेवस्य
पुरैवप्रतिपादितम् ॥ तदङ्गमन्त्रंराजेन्द्रद्वादशाक्षरमुच्यते ॥८९॥ ॐनमोभगवतेपूर्व्ववासुदेवायवैपरम् ॥ अङ्गमन्त्रमिदञ्चैव
वासुदेवस्यकीर्तितम् ॥ ९० ॥ अस्यप्रत्यङ्गरूपन्तुदधिवामनसञ्ज्ञकम् ॥ तस्यमन्त्रन्नरःश्रेष्ठशम्भुनाभाषितंशृणु ॥ ९१ ॥
ॐनमोविष्णवेपूर्व्वम्पदन्तस्यप्रकीर्तितम् ॥ पदञ्चसुरपतयेचतुर्थ्यंतंमहाबलम् ॥ ९२ ॥ स्वाहान्तंहृदयासन्नंप्रत्यङ्गव्वैष्ण
वम्मतम् ॥ मन्त्रत्रयन्तुयोवेदबीजम्प्रत्यङ्गसञ्ज्ञकम् ॥ ९३ ॥ स्वपुमान्देवकायस्तुनसभूयोभिजायते ॥ सर्व्वउत्तरतन्त्रो
क्तःक्रमोग्राह्यःप्रपूजने ॥ ९४ ॥ त्रिषुमन्त्रेषुचसदाविशेषंशृणुभूपते ॥ रूपन्तुबीजमन्त्रस्यप्रथमंशृणुभूपते ॥ ९५ ॥ पूर्णच
न्द्रोपमःशुक्लःपक्षिराजोपरिस्थितः ॥ चतुर्भुजःपीतवस्त्रैस्त्रिभिःसंव्वीतदेहभृत् ॥ ९६ ॥ दक्षिणोर्द्ध्वेगदान्धत्तेतदधोविक
चाम्बुजम् ॥ वामोर्द्ध्वेचक्रमत्युग्रन्धत्तेऽधःशङ्खमेवच ॥ ९७॥ श्रीवत्सवक्षासततङ्कौस्तुभंहृदिचांशुमत् ॥ धत्तेकक्षेत्वधोवा
मेतूणीरम्बाणपूरितम् ॥ ९८ ॥ दक्षिणेकोषगङ्खड्गन्नन्दकंसशराशनम् ॥ शीर्षेकिरीटंसद्योतङ्कर्णयोःकुण्डलद्वयम् ॥ ९९ ॥
आजानुलंबिनीञ्चित्रांवनमालाङ्गलेस्थिताम् ॥ दधानन्दक्षिणेदेवींश्रियम्पार्श्वेतुबिभ्रतम् ॥ १०० ॥ सरस्वतींव्वा

१ ओं नमोविष्णवेसुरपतयेमहाबलायनमस्वाह ।

मपाश्वाचिंतयेद्वरदंहरिम् ॥ बीजमन्त्रस्यरूपञ्चकथितन्तवपार्थिव ॥ १ ॥ द्वादशाक्षरमन्त्रस्यरूपमेतच्छृणुष्वमे ॥ नी
लोत्पलदलश्यामन्तथैवचचतुर्भुजम् ॥ २ ॥ दक्षिणोर्द्ध्वेस्थितम्पद्मंगदाञ्चाधःप्रयोजयेत् ॥ वामेधश्चक्रमतुलमूर्द्ध्वेशङ्खञ्चबिभ्र
तम् ॥ ३ ॥ चिन्तयेद्वरदन्देवंसर्व्वमन्यच्चपूर्व्ववत् ॥ अष्टादशाक्षरस्यास्यप्रत्यङ्गस्यचचिन्तनम् ॥ ४ ॥ शृणुराजन्नवहितोदा
रिद्र्यभयनाशनम् ॥ पूर्णेन्दुसदृशङ्कान्त्याशुक्लवर्णव्विचिन्तयेत् ॥ ५ ॥ करेविचिन्तयेद्वामेपीयूषापूरितङ्घटम् ॥ दध्यन्नखण्डस
म्युक्तंदक्षिणेस्वर्णभाजनम् ॥ ६ ॥ पद्मासनगतन्देवञ्चन्द्रमण्डलमध्यगम् ॥ शुक्लवस्त्रधरन्देवम्प्रमाणाद्वामनंसदा ॥ ७ ॥ इ
षद्धासससमायुक्तन्त्रिलोकेशन्त्रिविक्रमम् ॥ चिन्तयेद्वरदन्देवंसर्व्वकामफलप्रदम् ॥ ८ ॥ दहनप्लवनादौचपूर्व्वतन्त्रोदितायथा ॥
तथामन्त्राःपरिग्राह्यास्तथाचोत्तरतन्त्रगाः ॥ ९ ॥ मण्डलस्यक्रमन्तस्यशृणुभर्गेणभाषितम् ॥ रेखयानित्यपूजासुरजो
भिःपञ्चभिःस्तथा ॥ १० ॥ नैमित्तिकेयथाकार्य्यम्भेदाभेदेनसाम्प्रतम् ॥ हस्तमात्रञ्चतुर्द्वारंव्वर्त्तुलाम्बुजसन्निभम् ॥ ११ ॥
चतुष्कोणेचतुर्भिस्तुशङ्खैर्य्युक्तम्मनोहरम् ॥ बद्धद्वारन्दिक्पतीनामायुधैःकरणैस्तथा ॥ १२ ॥ अष्टासुदिक्षुनिहितंसबाहि
र्व्वेष्टपद्मकम् ॥ एवय्यँथारजोभिस्तुकार्य्यन्तच्छृणुपार्थिव ॥ १३ ॥ सितैःपीतैस्तथारक्तैःश्यामैश्चहरितैःक्रमात् ॥ रजोभि
र्म्मण्डलङ्कुर्य्यादन्यथानसमाचरेत् ॥ १४ ॥ चतुर्हस्तन्त्रिहस्तञ्चद्विहस्तंहस्तमात्रकम् ॥ सर्व्वत्रमण्डलङ्कुर्य्याद्यथोक्तंवाधिक

म्पुनः ॥ १५ ॥ राजसूयाश्वमेधादौ चतुर्हस्ताधिकम्मतम् ॥ कल्पानतिक्रमाद्रूपयथाकर्त्तव्यंयत्रयत्रच ॥ १६ ॥ दिक्पालायु
धपद्मानाम्पूर्व्ववल्लिखनक्रमः ॥ सितैरजोभिःकर्त्तव्यम्मध्येपद्मंसुवर्त्तुलम् ॥ १७ ॥ कर्णिकापीतवर्णास्यकेशराग्रन्तथारुण
म् ॥ रक्तैःपीतैःपूरयेत्तुबहिःपद्मस्यसर्व्वतः ॥ १८ ॥ वज्रंशक्तिर्लौहदण्डःखड्गम्पाशाङ्कुशंगदा ॥ शूलमष्टदिगीशानामायुधा
निक्रमात्पुनः ॥ १९ ॥ शम्भुर्गौरीतथाब्रह्मारामःकृष्णस्तथैवच ॥ रजस्तुसततम्पूज्याःसंस्थिताःपञ्चदेवताः ॥ २० ॥ नक
दाचिदधःकुर्य्याच्छम्भुगौर्य्योर्व्वियोजनम् ॥ वियोगेतुकृतापूजानिष्फलातस्यजायते ॥ २१ ॥ विच्छिन्नम्मूर्द्धिभूतन्तुपूजितं
शक्तमेवच ॥ न्यासेतुमण्डलस्यास्यरजोदोषव्विवर्ज्जयेत् ॥ २२ ॥ सर्व्वत्रमण्डलङ्कार्य्यंवासुदेवस्यपूजने ॥ एवमेवनृपश्रेष्ठनि
ष्फलञ्चान्यथेतरम् ॥ २३ ॥ बलभद्रश्चकामश्चअनिरुद्धस्तदुद्भवः ॥ नारायणस्तथाब्रह्माविष्णुःषष्ठःप्रकीर्त्तितः ॥ २४ ॥ नर
सिंहोवराहश्चयोगिनोष्टौप्रकीर्त्तिताः ॥ पुर्व्वाद्यष्टदलेश्वेतांरूपतोमन्त्रतःपृथक् ॥ २५ ॥ पूजयेत्कर्णिकामध्येवासुदेवन्तुनाय
कम् ॥ विमलानायिकातस्यवासुदेवस्यकीर्त्तिता ॥ २६ ॥ बलभद्रमुखानान्तुयोगिनीःशृणुपार्थिव ॥ आदावुत्कर्षिणीज्ञेयाज्ञा
नापश्चात्क्रियापरा ॥ २७ ॥ योगाप्रज्ञातथैशानीअनुग्राहीतथाष्टमी ॥ सर्व्वाश्चतुर्भुजाःप्रोक्ताःशङ्खचक्रगदाधराः ॥ २८ ॥ यो
गिनोबलभद्रन्तुकामव्विधिमतेतथा ॥ विधिरूपन्तुपूर्व्वोक्तंहलञ्चमुशलम्बलः ॥ २९ ॥ शङ्खञ्चक्रञ्चधत्तेयोगदांपार्श्वेस्थितांस

दा ॥कामस्तुपुष्पकोदण्डन्धत्तेवामेनपाणिना॥३०॥गदांचक्रञ्चपुष्पञ्चधत्तेऽन्यैःपाणिभिःपुनः॥पार्श्वैपद्मन्तथाधत्तेसर्व्वमन्य
च्चपूर्व्ववत् ॥ ३१ ॥ चक्रंशङ्खौवराहस्यदक्षिणेपरिकीर्त्तितौ ॥ नृसिंहस्यपुनश्चक्रशङ्खौदक्षिणवामयोः ॥ ३२ ॥ शङ्खपद्म
न्तथाविष्णोःपाण्योर्द्दक्षिणयोःस्थितम् ॥ शङ्खोगदावामतस्तुनारायणकरस्थितौ ॥ ३३ ॥ दक्षिणाधोगदान्धत्तेह्यनिरुद्धो
नरोत्तमः ॥ सितरक्तस्तथापीतोभिन्नाञ्जननिभस्तथा ॥ ३४ ॥ नीलोत्पलदलश्यामस्तथारक्तघनप्रभः ॥ भ्रमरश्यामलः
पिङ्गःस्वर्णगौरःक्रमादिमे ॥ ३५ ॥ वर्णतोयोगिनःप्रोक्तावासुदेवस्यपार्थिव ॥ यादृग्वर्णश्चध्यानञ्चयस्ययस्यचयोगिनः
॥ ३६ ॥ तादृशीर्योगिनीस्तस्यचिन्तयेत्तुत्समीपगाः ॥ आधारशक्तिप्रमुखाःसर्व्वाआसनदेवताः ॥ ३७ ॥ ग्रहाश्चसर्व्वे
दिक्पालाध्यानतोमन्त्रतस्तथा ॥ पूजनीयायथोद्देशंमण्डलस्यक्रमान्नृप ॥ ३८ ॥ देवस्यचिन्तितय्यँद्यच्छरीरेकमलाङ्
कम् ॥ धृतास्त्रव्वँज्रशक्त्यादिगरुडादींश्चपूजयेत् ॥ ३९ ॥ वर्णमालांशम्भुमतामासाद्यक्रमयोगतः ॥ आद्यद्वितीयक्रम
तोगदादीनान्तुमन्त्रकम् ॥ ४० ॥ पञ्चरात्रोदितेभागेनारदेनयथोदिताः ॥ मन्त्राश्चक्रगदादीनाङ्ग्राह्याःसर्व्वत्रपूजने ॥
॥ ४१ ॥ गरुत्मान्त्सूर्य्यसङ्काशोगदाकृष्णायसीपुनः ॥ सरस्वतीशुक्लवर्णालक्ष्मीर्हेमप्रभासदा ॥ ४२ ॥ मध्याह्नसूर्य्य
प्रतिमञ्चक्रन्तुपरिकीर्त्तितम् ॥ सम्पूर्णप्रतिमःशङ्खःशङ्खस्तुपरिकीर्त्तितः ॥ ४३ ॥ कौस्तुभोह्यरुणःप्रोक्तःश्रीवत्सोह्यरुणद्यु

ति: ॥ आरक्तःकौस्तुभोज्ञेयोमालाचित्राप्रकीर्त्तिता ॥ ४४ ॥ विद्युत्प्रभा:सर्व्वबाणा:शक्रचापप्रभन्धनुः ॥ स्वर्णचूर्णप्रकाश
न्तुवस्त्रमस्यप्रकीर्त्तितम् ॥४५॥ बालसूर्य्यप्रतीकाशेकुण्डलेद्वेश्रवोगते ॥ सूर्य्यस्यसदृशंशीर्षेकिरीटम्परिकीर्त्तितम् ॥ ४६ ॥
शृणुन्यासन्ततोभूपयैर्न्यासैर्व्विष्णुरूपधृक् ॥ साधकोहिभवेन्नित्यंस्वर्गमोक्षप्रदायकम् ॥४७॥ न्यासन्तुप्रथमङ्कुर्य्यान्मंत्र
विद्द्वादशाक्षरैः ॥ वासुदेवस्यबीजेनबीजैश्चैवाथयोगिनाम् ॥ ४८ ॥ ततोन्यसेन्महामन्त्रेणतश्चाष्टादशाक्षरैः ॥ ततस्तुहृ
दयादीनांषड्भिर्म्मन्त्रैर्द्विधापुनः ॥ ४९ ॥ एवञ्चतुर्भ्भिर्न्यासैस्तुपूजामेकंसमाचरेत् ॥ प्रथमन्दक्षिणाङ्गुष्ठेन्यसेदाद्यक्षरम्बुधः ॥
॥ १५० ॥ द्वादशाक्षरमन्त्रस्यशेषबीजानितुक्रमात् ॥ तर्ज्जन्यादौदक्षिणस्यवामाङ्गुष्ठान्तमेवच ॥ ५१ ॥ शेषाक्षरद्वयम्प
श्चान्न्यसेत्पाणितलद्वये ॥ हृदिशीर्षेशिखायाञ्चवर्णन्तेद्वेकपोचण्डयोः ॥ ५२ ॥ पृष्ठेतुभुजयोःपाण्योर्ज्जङ्घयोःपादयोःक्रमात् ॥
द्वादशाक्षरमन्त्रस्यबीजानिचततोन्यसेत् ॥ ५३ ॥ अङ्गुष्ठयोस्तुप्रथमव्वाँसुदेवस्यतत्वकम् ॥ तर्ज्जन्यादौयोगिनान्तुविजा
न्यष्टौद्वयोर्न्यसेत् ॥ ५४ ॥ शिरोदृगास्यकण्ठोष्ठोनाभिगुह्येषुजानुनोः ॥ पादयोर्व्वासुदेवस्ययोगिबीजानिविन्यसेत् ॥५५॥
मन्त्राणिद्दृदयादीनय्याँन्युक्तानिपुरानृप ॥ तानिन्यस्याङ्गुष्ठमुख्यङ्गुलीजातेद्वयेद्वये ॥ ५६ ॥ वामदक्षिणपाण्योस्तु
शेषन्तुतलयोर्न्यसेत् ॥ हृदयाद्यस्त्रपर्यन्तम्पुनस्तानिक्रमान्न्यसेत् ॥ ५७ ॥ अष्टादशाक्षरस्यादिनववर्णान्न्यसेद्बुधः ॥

१ सन्देहोद्विरुक्तत्वात्। २ द्वयोर्हस्तयोरित्यर्थः। ३ दिग्भूरितिपाठः।

शिरेनत्रादिपुर्व्वोक्तेनवबीजस्यगोचरे ॥ ५८ ॥ शेषान्वर्णानसंकर्णपार्श्ववस्थिषुशेफसि ॥ कट्योरुर्व्वोर्ज्जङ्घयोश्चन्यसे
त्पादाङ्गुलीषुच॥ ५९ ॥ यस्यमन्त्रस्ययापूजातन्त्रैस्तुयत्रचोदिता ॥ तस्यतन्त्रस्यतत्रैवन्यासम्मन्त्रीसमाचरेत् ॥६० ॥ अ
थचैकत्रसर्व्वेषांन्यासङ्कुर्य्याद्विचक्षणः ॥ चतुर्व्विधैःकृतैर्न्यासैःपूतात्माधूतकल्मषः ॥ ६१ ॥ साक्षाद्विष्णुर्भवेन्मन्त्रीसम्य
क्पूजाफलँल्लभेत् ॥ विनापिपूजनर्य्यस्तुन्यासङ्कुर्य्याच्चतुर्विधम्॥६२॥सधीरोविष्णुसायुज्यमाप्नोतिपरमम्पदम् ॥ योगपी
ठन्ततोध्यात्वागरुडञ्चक्रशङ्खकौ ॥६३॥ गदांलक्ष्मीञ्चक्रपद्मेक्रमादेतेषुविन्यसेत् ॥ पूर्व्वंदक्षिणकौबेरपश्चात्कोणेषुवैक्रमात्
॥ ६४ ॥ दक्षिणेचोत्तरेवापिविन्यसेन्मन्त्रविद्बुधः ॥ वनमालाम्पद्ममध्येश्रीवत्सङ्कौस्तुभर्म्मणिम् ६५ ॥ विन्यस्यदक्षिणेतस्य
न्यसेच्छाङ्गँशरासनम् ॥ तूणीरयुगलव्वाँमेखड्गन्दक्षिणतोन्यसेत् ॥ ६६ ॥ वामेचर्म्मनिधायाशुतत्रकुर्य्यात्सरस्वती ॥ पूज
यित्वाचसर्व्वाणिततोमुद्राम्प्रदर्शयेत् ॥ ६७॥ मुद्राःपुटाद्यायाःप्रोक्ताविष्णोर्य्याश्चापियोगिनाम् ॥ ग्रहाणांदिक्पतीनाञ्चमु
द्रास्तादर्शयेत्पृथक् ॥६८॥ शेषमन्त्राःपुराप्रोक्ताअच्छिद्रस्यावधारणे ॥ तन्मन्त्रान्त्सम्पठित्वैवसूर्य्यायार्घन्निवेदयेत् ॥ ६९ ॥
निर्म्माल्यधारीविष्णोस्तुविष्वक्सेनश्चतुर्भुजः ॥ शङ्खचक्रगदापाणिर्दीर्घश्मश्रुजटाधरः ॥१७० ॥ रक्तपिङ्गलवर्णस्तुसितप
द्मोपरिस्थितः ॥ यत्तृतीयस्वरान्तेनसय्युँक्तोबिन्दुनेन्दुना ॥ ७१ ॥ कीर्तितस्तस्यमन्त्रोयन्तेनतम्परिपूजयेत् ॥ विसर्ज्जनन्त

थाविष्णोरैशान्याम्परिकीर्तितम् ॥ ७२ ॥ अन्येषाम्मनसाकुर्य्याद्बलादीनाव्विँसर्ज्जनम् ॥ एवय्यँःकुरुतेपूजांविष्णोः शम्भो
र्व्विधेःक्वचित् ॥ ७३ ॥ पीठेदिक्कवासिन्याःसयातिपरमम्पदम् ॥ यत्रयत्रभवेद्विष्णोःपूजनन्नृपसत्तम ॥ ७४ ॥ तत्रत
त्रैवतन्त्रोयङ्गाद्योवैवैष्णवैर्बुधैः ॥ सङ्क्षेपेणैवतत्रैवपूजयेद्दधिवामनम् ॥ ७५ ॥ हृदयाद्यङ्गपूजातुनकर्त्तव्यास्यपूजने ॥
सङ्क्षेपैर्विस्तरैर्व्वापिवासुदेवम्प्रपूजयेत् ॥ ७६ ॥ रक्तङ्कौशेयवस्त्रञ्चपीतंशुक्लन्तथैवच ॥ प्रीतिदंवासुदेवस्यवस्त्रमेतत्प्रकीर्तितम्
॥ ७७ ॥ घृतप्रदीपोदिपेषुगन्धेषुमलयोद्भवः ॥ पानार्घ्यभोज्यपात्रेषुताम्रंप्रीतिकरम्मतम् ॥ ७८ ॥ किरीटंकुण्डलंहारो
भूषणंविष्णुतुष्टिदम् ॥ शङ्खस्नानीयपात्रेषुधूपेष्वगुरुरेवच ॥ ७९ ॥ प्रीतिदोवासुदेवस्यसततम्परिकीर्तितः ॥ कदम्बंकु
ब्जकंजातीमल्लिकामालतीतथा ॥ १८० ॥ पङ्कजञ्चेतिपुष्पाणितद्विष्णोःप्रीतिदान्युत ॥ निर्ज्जलंस्थण्डिलंस्थानन्तीर्थन्तो
यमथापिवा ॥ ८१ ॥ तद्विष्णोरितिमन्त्रस्तुस्तुतिःपुरुषसुक्तिकं ॥ पुत्रञ्जीवोद्भवामालाप्रशस्ताविष्णुपूजने ॥ ८२ ॥ ति
थिश्चद्वादशीप्रोक्तावसन्तःकालउत्तमः ॥ शाल्योदनंहविष्यान्नय्यँावकम्पायसंघृतम् ॥ ८३ ॥ कृशरान्नन्तथान्नेषुपानेषु
क्षीरमिष्यते ॥ दलेषुतुलसीपत्रम्बैल्वमामलमेवच ॥ ८४ ॥ हरेः प्रीतिकराणिस्युरेतानिन्नृपसत्तम ॥ सर्व्वाणिपरकीयानि
यानितानिचवर्ज्जयेत् ॥ ८५ ॥ एवय्यँःपूजयेद्विष्णुसततन्नरसत्त ॥ कुलकोटिंसमुद्धृत्यसस्वयंस्याज्जनार्दनः ॥ ८६ ॥

इदन्तेकथिम्भूपवासुदेवस्यतन्त्रकम् ॥ पीठस्यकामरूपस्यसङ्क्षेपान्निर्णयन्तथा ॥ ८७॥ इतिसर्व्वङ्कामरूपपीठशम्भुरदर्शयत् ॥ पुत्राभ्यांसपुनस्ताभ्याङ्कैलासम्प्रययौगिरिम् ॥८८॥ तत्र गत्वायथायोगन्निधायतनयौस्वकौ ॥ विमुक्तशापास्तेजाताशम्भुर्गिरिसुतातथा ॥८९॥ वैतालोभैरवश्चेतिनृपसत्तमनिर्ज्जराः ॥ इदय्योमहदाख्यानंश्रृणोत्येकाग्रमानसः ॥१९०॥ शापभीतिर्न्नतस्यास्तिव्याधयस्तस्यनाधयः॥ पुत्रपौत्रधनैश्वर्य्ययुक्तःसर्व्वत्रवल्लभः॥ ९१ ॥सर्व्वंकल्याणसय्युँक्तोदीर्घंकालंसजीवति ॥ कामरूपम्महापीठय्योजानातिनरोत्तमः ॥९२॥सदिव्यज्ञानसपन्नःपरन्निर्व्वाणमाप्नुयात् ॥ यःकामरूपेसकलेपाठयात्रांसमाचरेत् ॥ ९३ ॥ आसाद्यसकलान्पीठान्पूजयेत्सर्व्वदेवताः ॥ दशपूर्व्वान्दशपरानात्मानञ्चैकविंशतिम् ॥९४ ॥ दिव्येज्ञानेनिधायाशुसर्वम्मुक्तिमियान्सह ॥ ९५॥ ॥ इतिश्रीकालिकापुराणेत्र्यशीतितमोध्यायः॥ ८३ ॥ ॥छ॥

और्व्वउवाच ॥ ॥ कामरूपेमहापिठेस्नात्वापीत्वाचदेवताः ॥ पूजयित्वाचविपुलालोकाःस्वर्ग्गंपुराययुः ॥ १ ॥ केचिद्व्रेजुश्चनिर्व्वाणङ्केचिद्यातिस्मशम्भुताम् ॥ नयमस्तान्वारयितुन्नेतुञ्चनिजमन्दिरम् ॥ २ ॥ क्षमोभून्नरशार्दूलशिवाद्याजातसाध्वसाः॥ यमदूतन्तत्रयान्तबान्धतेशङ्करागणाः ॥ ३ ॥ नतद्भियातत्रयान्तियमदूताःप्रचोदिताः ॥ तथादृष्ट्वाथशमनःस्वक्रियापरिवर्ज्जितः ॥ ४ ॥ विधातारंसमासाद्यवचनञ्चेदमब्रवीत् ॥ विधातःकामरूपेस्मिन्स्नात्वापीत्वाचमानवाः ॥५॥ कामा

स्थागणताय्यौँतितथाशम्भुगणेशताम् ॥ तत्रमेनाधिकारोस्तिनतान्वारयितुङ्क्षमः ॥ ६ ॥ विधत्स्वात्रोचितांनीतिय्यैँज्यतेय
दिगोचरे ॥ तस्यतद्वचनंश्रुत्वाब्रह्मालोकपितामहः ॥ ७ जगामविष्णुभवनंसहैवसमवर्त्तिना ॥ तमासाद्यतथाप्राहविष्णुर्वै
यमभाषितम् ॥ यथावत्सर्व्वलोकेशःसचतद्वाक्यमग्रहीत् ॥ ८ ॥ सहब्रह्मयमाभ्यान्तुविष्णुश्शम्भुय्यँमौततः ॥ सत्कृतस्तेन
पृष्टश्चप्राहेदय्यँमभाषितम् ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ सर्व्वदेवैःसर्व्वतीर्थैःसर्व्वक्षेत्रैस्तथैवच ॥ एतद्यातङ्कामरूप
न्नातोन्यद्विद्यतेपरम् ॥ १० ॥ इदम्पीठंसमासाद्यदेवत्वय्याँन्तिमानवाः ॥ अमृतत्वङ्गणत्वञ्चतत्रशक्तोयमोनहि ॥ ११ ॥ त
थाकुरुमहादेवयथास्यादक्षमोयमः ॥ यमोनिरस्तोयत्रास्तिमर्य्यादानप्रदृश्यते ॥१२॥ ॥ और्व्वउवाच ॥ ॥ एतद्विष्णुवचः
श्रुत्वाविधिनासहितस्यतु ॥ अङ्गीचकारहृदयेतद्वचःसाध्यसाधने ॥ १३ ॥ विसृज्यतान्ब्रह्मविष्णूयमान्वृषभवाहनः ॥ आ
दायस्वगणान्सर्व्वान्कामरूपान्तरय्ययौ ॥ १४ ॥ उग्रतारान्ततोदर्वीगणञ्चप्राहशङ्करः ॥ उत्सारयन्तुसकलानिमाँल्लो
कान्गणाद्रुतम् ॥ १५ ॥ उग्रतारेमहादेवित्वञ्चाप्युत्सारयद्रुतम् ॥ ततोगणाःकामरूपादेवीचाप्यपराजिता ॥१६॥ लोका
नुत्सारयामासुःपीठङ्कर्तुंहरस्यकम् ॥ ॥ उत्सार्य्यमाणेलोकेतुचतुर्व्वर्णेद्विजातिषु ॥ १७ ॥ सन्ध्याचलगतोविप्रोवसिष्ठःकु
पितोमुनिः ॥ सोप्युग्रतारयादेव्याउत्सारयितुमीशया ॥ १८ ॥ गणैःसहधृतःप्राहशापङ्कुर्व्वन्सुदारुणम् ॥ यस्मादृह

न्धृतोवामेत्वयोत्सादयिन्तुम्मुनिः ॥ १९ ॥ तस्मात्वव्वाँम्यभावेनपूज्याभवसमन्त्रिका ॥ भ्रमन्तिम्लेच्छवद्यस्माद्गणाना
म्मन्दबुद्धयः ॥ २० ॥ भवन्तुम्लेच्छास्तस्माद्वैभवन्तःकामरूपके ॥ महादेवोपियस्मान्मान्निःसारयितुमुद्यतः ॥ २१ ॥
तपोधनम्मुनिन्दान्तम्म्लेच्छवद्वेदपारगम् ॥ तस्मान्म्लेछप्रियोभूयाछङ्करश्चास्थिभस्मधृक् ॥ २२ ॥ एतत्तुकामरूपाख्य
म्म्लेच्छैर्गुप्तम्मदत्वरम् ॥ स्वयव्विँष्णुर्न्नचायातियावत्स्थानमिदम्पुनः ॥ २३ ॥ विरलाश्चागमाःसन्तुयएतत्प्रतिपाद
काः ॥ विरलय्यँस्तुजानातिकामरूपागमम्बुधः ॥ २४ ॥ सएवप्राप्तेकालेपिसम्पूर्णम्फलमाप्स्यति ॥ एवमुक्त्वावसिष्ठ
स्तुतत्रैवान्तरधीयत ॥ २५ ॥ तेगणाम्लेछताय्याँताःकामरूपेसुरालये ॥ वामाभूदुग्रतारापिशम्भुर्म्म्लेछरतोभवत् ॥ २६॥
आगमाविरलाश्चासन्येचमत्प्रतिपादकाः ॥ वेदमन्त्रविहीनन्तुचतुर्व्वर्णविवर्जितम् ॥ २७ ॥ कामरूपङ्गणाज्जातय्यँद्यमे
नानुसारितम् ॥ आगतेपिहरौमुक्तेशापात्पीठेफलप्रदे ॥ २८ ॥ यथानसम्यक्स्थास्यन्तितत्पीठेदेवमानुपाः ॥ गुप्तयेस
र्व्वकुण्डानाम्ब्रह्मोपायन्तथाकरोत् ॥ २९ ॥ अपुनर्भ्भवकुण्डस्यसोमकुण्डस्यचोभयोः ॥ ब्रह्मोर्व्वशीकुण्डयोस्तुनदीनाम
पिभूरिशः ॥ ३० ॥ नदीनाम्पूर्व्वमुक्तानामनुक्तानाञ्चगुप्तये ॥ सर्व्वस्यैकफलज्ञानेब्रह्मोपायन्तथाकरोत् ॥ ३१ ॥ अमो
घायंशान्तनोस्तुभार्य्यायान्तनयंस्वकम् ॥ जलरूपंसमुत्पाद्यजामदग्न्येनधीमता ॥ ३२ ॥ अवतारयदव्यग्रम्प्लावयन्का

मरूपकम् ॥ सतुब्रह्मसुतोधीरःप्लावयन्कुण्डसञ्चयान् ॥ ३३ ॥ आच्छाद्यसर्व्वतीर्थानिभुविगुप्तानिचाकरोत् ॥ लोहि
त्यमात्रय्यँयेकेचिज्जानन्तितत्रवैनराः ॥ ३४ ॥ तेलोहित्यस्नानफलम्प्राप्नुवन्तिसुनिश्चितम् ॥ नजानन्तिचकुण्डानिनापितीर्थानिचान्यतः ॥ ३५ ॥ वसिष्ठशापादेतत्तुप्रवृत्तन्तीर्थगोपनम् ॥ यःकश्चित्तत्रजानातितीर्थानाञ्चविशेषताम् ॥ ३६ ॥ स
मवाप्नोतितत्स्नानफलंसम्यङ्नरोत्तम ॥ सर्व्वानदीःसमाप्लाव्यसर्व्वतीर्थानिसर्व्वतः ॥३७॥ लौहित्योब्रह्मणःपुत्रोयातिदक्षि
णसागरम् ॥ एवन्तेकथितंराजन्कामरूपस्यकीर्त्तनम् ॥ ३८ ॥ यदन्यद्रोचतेतुभ्यन्तत्पृच्छनिगदामिते ॥ ३९ ॥ इतिश्री
कालिकापुराणेचतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥छ॥ ॥ मार्क्कण्डेयउवाच ॥ ॥ और्व्वस्यवचनंश्रुत्वासगरस्तम्मु
निम्पुनः ॥ पप्रच्छेदन्द्विजश्रेष्ठाहर्षसम्प्लुतमानसः ॥ १ ॥ ॥ सगरउवाच ॥ ॥ अमोघायाङ्कथय्यँज्ञेलौहित्योब्रह्मणःसुतः ॥
कथंशान्तनुजायायांरतःसकमलासनः ॥ २ ॥ पारक्षैणेयपुत्रोवाकथञ्जज्ञेपितामहात् ॥ तत्सर्व्वंश्रोतुमिच्छामिकथयस्व
द्विजोत्तम ॥ ३ ॥ ॥ और्व्वउवाच ॥ ॥ शृणुत्वंराजशार्द्दूलकथयामिमहत्तरम् ॥ आख्यानम्ब्रह्मपुत्रस्यलौहित्य
स्यमहात्मनः ॥ ४ ॥ हरिवर्षेमहावर्षेशान्तनुर्न्नामनामतः ॥ मुनिरासीन्महाभागोज्ञानवान्सतपोरतः ॥ ५ ॥ तस्यभार्य्या
महाभागाअमोघाख्यामहासती ॥ हिरण्यगर्भ्भस्यमुनेस्तृणबिन्द्वाश्रमोद्भवा ॥ ६ ॥ तयासार्द्धंसकैलासंमर्य्यादापर्व्वतेव

१ सर्वतीर्थत्वेनजानन्तीत्यर्थः ।

सन् ॥ लोहिताख्यस्यसरसस्तीरेवैगन्धमादने ॥ ७॥ एकदासतपोनिष्ठोनिजपुष्पादिगोचरे ॥ जगामवनमध्यन्तुचिन्व
न्बहुफलानिच ॥ ८ ॥ तस्मिन्नवसरेब्रह्मासर्व्वलोकपितामहः ॥ तत्राजगामयत्रास्तिअमोघाशान्तनोःप्रिया ॥ ९ ॥
तान्दृष्ट्वादेवगर्भ्भाभार्य्यायुवतीमतिसुन्दरीम् ॥ मोहितोमदनेनाशुतदाभूद्दूषितेन्द्रियः ॥१०॥ उदीरितेन्द्रियोभूत्वाजिघृक्षुस्ता
म्महासतीम् ॥ अथाधावत्ततोब्रह्मासम्मुखोमदनार्दितः॥११॥धावमानव्विँधातारन्दृष्ट्वामोहामहासती ॥ नैवंनैवमितिप्रोक्ता
पर्णशालाव्व्यँलीयत ॥ १२ ॥ इदञ्चोवाचधातारममोघाकुपितातदा ॥ पर्णशालान्तरङ्गत्वाद्वारमावृत्यतत्क्षणात् ॥ १३ ॥
अकार्य्यन्नमयाकार्य्यम्मुनिपत्न्याविगर्हितम् ॥ बलात्प्रमाथ्याचाहञ्चेत्त्वयात्वाञ्चशपाम्यहम् ॥ १४ ॥ अमोघयाचैवमुक्तेवि
धातुश्चतदानृप ॥ रेतश्चस्कन्दतत्रैवआश्रमेशान्तनोर्म्मुनेः ॥ १५ ॥ च्युतेरेतसिधातापिहंसयानंसमुत्थितः ॥ लज्ज
यातिपरीतात्माद्रुतव्वैँस्वाश्रमय्ययौ ॥ गतेवेधसिशान्तनुश्चनिजमाश्रममागतः ॥ १६॥ आगत्यदृष्ट्वाहंसानाम्पदक्षोभन्त
दाभुवि ॥ तेजश्चपतितम्भूमौविधातुर्ज्ज्वलनोपमम्॥१७॥अमोघाम्परिपप्रच्छपर्णशालान्तरस्थिताम् ॥ किमेतदत्रशुभ
गेप्रवृत्तन्दृश्यतेतुयत् ॥ १८ ॥ पक्षिणञ्चपदक्षोभन्तेजश्चेदञ्चकीदृशम् ॥ सातस्यवचनंश्रुत्वाशान्तनुम्मुनिसत्तमम् ॥ १९ ॥
अमर्षितैवन्यगददाकुलाविकलानना ॥ हंसयुक्तस्यन्दनेनकोप्यागत्यचर्म्मुखः ॥ २० ॥ कमण्डलुकरोतीवरतिम्मांसमया

चत ॥ ततोमयातार्ज्जितःसउटजान्तरलीनया ॥ २१ ॥ प्रच्याव्यतेजःसर्य्यांतोममशापभयार्द्दितः ॥ कुरुतत्रप्रतीकारंयदिश
क्नोषिशान्तनो ॥ २२ ॥ नहिमांधर्षणांसोढुङ्कश्चिच्छक्नोतिजीवभृत् ॥ सनस्यावचनंश्रुत्वास्वयम्ब्रह्मासमागतः ॥ २३ ॥ इति
निश्चित्यमनसातदाध्यानपरोभवत् ॥ दिव्यज्ञानेनसञ्ज्ञात्वादेवकार्य्यमुपस्थितम् ॥ २४ ॥ तीर्थावतरणाञ्चापिहितायजग
ताम्मुनिः ॥ ज्ञात्वोदर्कञ्चिन्तयित्वास्वभार्य्यामिदमब्रवीत् ॥ २५ ॥ इदन्तेजोब्रह्मणस्त्वम्पिबामोघेममाज्ञया ॥ हितायस
र्व्वजगतान्देवकार्य्यार्थसिद्धये ॥ २६ ॥ भवत्यानिकटम्ब्रह्मास्वयमेवसमागतः ॥ त्वामप्राप्यमहत्कृत्यमावयोःससमर्प्य
च ॥ २७ ॥ गतोनिजास्पदन्तत्त्वङ्कर्तुमर्हसितद्वचः ॥ तच्छ्रुत्वाशान्तनोर्व्वाक्यममोघातीवलज्जिता ॥ २८ ॥ सान्त्वयन्ती
वतम्प्राहपतिन्त्वामहासती ॥ नान्यस्यतेजोधास्यामिनचेतेविमनस्कता ॥ २९ ॥ अवश्यर्य्यदिकर्तव्यम्पीत्वात्वम्मयिचो
त्सृजा ॥ ततस्तस्यावचःश्रुत्वायुक्तन्तथ्यञ्चशान्तनुः ॥ ३० ॥ स्वयम्पीत्वातुतत्तेजस्वभार्य्यायान्यसेचयत् ॥ सङ्क्रमितैः
शान्तनुनातेजोभिर्ब्रह्मणःसती ॥ ३१ ॥ गर्भन्दधारामोघाख्याहितायजगतान्ततः ॥ तस्याःकालेतुसंप्राप्तेनासातोजलस
ञ्चयः ॥ ३२ ॥ तन्मध्येतनयश्चापिनीलवासाःकिरीटधृक् ॥ रत्नमालासमायुक्तोरक्तगौरश्चब्रह्मवत् ॥ ३३ ॥ चतुर्भुजःपद्म
विद्याध्वजशक्तिधरस्तथा ॥ शिशुमारशिरस्थश्चतुल्यकायोजलोत्करैः ॥ ३४ ॥ तज्जातञ्चतथाभूतंशान्तनुर्लोकशान्तनुः ॥

चतुर्णाम्पर्व्वतानाञ्चमध्यदेशेन्यवीविशत् ॥३५॥ कैलासश्चोत्तरेपार्श्वेदक्षिणेगन्धमादनः ॥ जारुधिःपश्चिमेशैलःपूर्व्वेशव्वँ
काह्वयः ॥ ३६ ॥ तेषांमध्येस्वयङ्कुण्डंपर्वतानाव्विँधेःसुतः ॥ कृत्वातिववृधेनित्यंशरदीवनिशाकरः ॥ ३७ ॥ तन्तोयमध्यग
म्पुत्रमासाद्यद्रुहिणःसुतम् ॥ क्रमतस्तस्यसंस्कारानकरोद्देहशुद्धये॥३८॥अथकालेबहुतिथेव्यतीतेब्रह्मणःसुतः॥तोयराशि
स्वरूपेणववृधेपञ्चयोजनान् ॥ ३९ ॥ तस्मिन्देवाःपपुसस्नुर्द्दितीयइवसागरे ॥ सीतामलजलेह्रद्येदेव्यैश्चाप्सरसाङ्गणः
॥४०॥ तस्मिन्नवसरेरामोजामदग्न्यःप्रतापवान् ॥ चक्रेमातृवधङ्घोरमयुक्तम्पितुराज्ञया ॥४२॥ तस्यपापस्यमोक्षायस्वपि
तुश्चोपदेशतः ॥ सजगाममहाकुण्डंब्रह्माख्यंस्नातुमिच्छया ॥ ४३ ॥ तत्रस्नात्वाचपीत्वाचमातृहत्यामपानयत् ॥ वीथीम्परशु
नाकृत्वातम्मत्यामवतारयत् ॥४४॥ सगरउवाच ॥ जमदग्नेःसुतोरामःकिमर्थन्निजमातरम् ॥ जघानतस्यमाताचकिनाम्नीक
स्यचात्मजा॥४५॥मुनेःपुत्रःकथञ्जातस्तथाक्रूरोमहाबलः ॥ योयुद्धकुशलोवीरोराजन्यान्समपोथयत्॥४६॥तदहंश्रोतुमिच्छा
मितत्त्वतोमुनिसत्तम ॥ कथयस्वमहाभागयदिगुह्यन्तथापिमे ॥ ४७॥ ॥और्व्वउवाच॥ ॥ शृणुराजन्यवहितोजमदग्नेः
सुतस्यवै ॥ चरितंसयथाजज्ञेप्रसूङ्कुरतरश्चसः ॥ ४८ ॥ ब्रह्मपुत्रोभृगुर्न्नामऋचीकस्तत्सुतोभवत् ॥ सभार्य्यार्थीचरन्भूमौ
कान्यकुब्जङ्गतःपुरा ॥ ४९ ॥ ददर्शचारण्यगतञ्जह्नोर्व्वंशसमुद्भवम् ॥ कुशिकस्यसुतङ्गाधिन्तपस्थंनृपसत्तम ॥ ५० ॥ अर

१ व्रतधरइतिपाठान्तरम्।

ण्यस्थस्यतस्याथपुत्रकामस्यभूभृतः॥सभार्य्यस्यसुताजज्ञेदेवकन्यासमागुणैः॥५१॥ऋचीकोभृगुपुत्रस्तांभार्य्यार्थंसमयाचत ॥ गाधिन्नृपतिशार्दूलंसचोवाचनृपोमुनिम्॥५२॥ दातुर्य्योग्यासुतामेद्यत्वद्विधायमहामुने ॥ किंत्वेकःकुलधर्म्मोमेविद्यते शुक्लसङ्ग्रहे ॥ ५३ ॥ एकत्रकृष्णवर्णानामश्वानाचन्द्रवर्च्चसाम् ॥ सहस्रमेकंयोदद्यात्तस्मैपुत्रीप्रदीयते ॥५४॥ ऋचीक उवाच ॥ दास्याम्यश्वसहस्रंवैतवराजंस्तथाविधम् ॥ किञ्चित्कालम्प्रतीक्षस्वयावत्तदहमानये॥५५॥एवमस्त्वितितङ्गाधिरुवाच भृगुसूनवे ॥ गङ्गातीरङ्गान्यकुब्जंसोगच्छद्धयसाधने ॥ तत्राराध्यभृगोःपुत्रोवरुणय्यांदसाम्पतिम् ॥ ५६ ॥ तेनदत्तन्तदालेभेसहस्रव्वाँजिनाम्मुनिः ॥ तेनयत्रतदालब्ध्वाअश्वान्नृपतिसत्तम ॥ ५७ ॥ तदश्वतीर्थंव्विख्यातम्महाफलकरम्परम् ॥ गङ्गाजलादुत्थितन्तुदत्तंसम्यक्त्रचेतसा ॥ ५८ ॥ आदायाश्वसहस्रन्तुमुनिर्ग्गाधिमथाभ्ययात् ॥ तानश्वान्गाधिरादायपुत्रींसत्यवतींसुताम् ॥ ५९ ॥ ऋचीकायददौलक्ष्मींकेशवायेवसागरः ॥ ऋचीकोगाधितनयांलब्ध्वाभार्य्यामनिन्दिताम् ॥ ६० ॥ मुदितःसतयारेमेयथाकामंस्वकाश्रमे ॥ कृतदारंसुतंश्रुत्वाद्रष्टुम्पुत्रंस्नुषाम्भृगुः ॥ ६१ ॥ अथाजगाममतिमान्स्नुषान्दृष्ट्वाननन्दच ॥ दम्पतीतंसमासीनम्भृगुन्देवगणार्च्चितम् ॥ ६२ ॥ पूजयित्वायथान्यायन्तस्थतुस्तौकृताञ्जली ॥ ततोभृगुःस्नुषांस्वीयांसुप्रीतइदमब्रवीत् ॥ ६३ ॥ वरम्वृणीष्वदास्यामिवाञ्छितव्वँरवर्णिनि ॥ अदेयन्दुष्करव्वाँपियत्रते

विद्यतेस्पृहा ॥ ६४ ॥ ततःसत्यवतीपुत्रन्तपआम्नायपारगम् ॥ मातुश्चवीरमतुलम्पुत्रव्वँरमयाचत ॥६५॥ सचैवमस्त्वि
त्युक्त्वैवभूत्वाध्यानपरस्तदा ॥ विश्रमात्त्यमनसायत्नाच्छ्वासंससर्ज्जसः ॥ ६६ ॥ तस्यनिःश्वासवातात्तुनिःसृतव्वैचरुद्वय
म् ॥ तस्यैतद्धितयन्दत्वाभृगुस्तामिदमब्रवीत् ॥ ६७ ॥ चरुद्वयङ्गृहाणेदंस्नुषेसत्यवतिस्त्वयम् ॥ स्नात्वाकृतौकृतौमाता
स्नुषेत्वञ्चकरिष्यथः ॥६८॥ आलिङ्ग्याश्वत्थवृक्षन्तेमातापुंसवनायवै ॥ चरुमारक्तकञ्चेमंसाप्रोक्ष्यतिसुतस्ततः ॥ ६९॥
त्वञ्चोदुम्बरवृक्षन्तुसमालिङ्ग्यासितञ्चरुम् ॥ प्रोक्षसेतवपुत्रस्तुभविष्यतिसनातनः ॥ ७० ॥ एवमुक्त्वाभृगुर्य्यातोयथेच्छंसा
पिसम्मुदम् ॥ अवापमातासहिताभर्त्रापित्राचभाविनी ॥ ७१ ॥ अथस्नानदिनेऽश्वत्थमालिङ्ग्यारक्तकञ्चरुम् ॥ आदा
त्सत्यवतीतस्यामाताफल्गुंसितञ्चरुम् ॥ ७२ ॥ परिवर्त्तन्तुतज्ज्ञात्वादिव्यज्ञानोभृगुर्म्मुनिः ॥ अथागत्यस्नुषान्तान्तुव
चनञ्चेदमब्रवीत् ॥ ७३ ॥ विपर्य्ययस्त्वयाभद्रेवृक्षालिङ्गनकर्म्मणि ॥ तथाचरुप्राशनेतुतत्रेदन्तेभविष्यति ॥ ७४ ॥ ब्रा
ह्मणःक्षत्रियाचारस्तवपुत्रोभविष्यति ॥ क्षत्रियोब्राह्मणाचारोमातुस्तेभवितासुतः ॥ ७५॥ इत्युक्ताभृगुणासाध्वीतदासत्य
वतीभृगुम् ॥ पुनःप्रसादयामासपौत्रोमेस्त्वितितादृशः ॥ ७६॥ एवमस्त्वितिसप्रोच्यतत्रैवान्तर्दधेभृगुः ॥ अथकालेसुतन्दी
प्तञ्जमदग्निञ्चगाधिजा ॥ ७७॥ सुषुवेजननीतस्याविश्वामित्रन्तपोनिधिम् ॥ जमदग्निस्ततोवेदाश्चतुरःप्रापमाचिरम्॥७८॥

प्रादुरासीद्धनुर्व्वेदः स्वयन्तस्मिन्महात्मनि ॥ विश्वामित्रोऽपिसकलान्वेदानायतथाचिरात् ॥ ७९ ॥ धनुर्व्वेदन्तथाकृत्स्नाव्विँ
प्रश्चाभूत्तपोबलात् ॥ जाज्वल्यमानस्तेजस्वीजमदग्निर्म्महातपाः ॥ वेदैस्तपोभिः समुनीनन्याक्रामश्चसूर्य्यवत् ॥ ८० ॥
इतिश्रीकालिकापुराणेपञ्चाशीतितमोऽध्यायः ॥ ८५॥ ॥ और्व्वउवाच ॥ ॥ अथकालेऽव्यतीतेतुजमदग्निर्म्महातपाः ॥ विद
र्भराजस्यसुताम्प्रयत्नेनजितांस्वयम् ॥ १ ॥ भार्य्यार्थम्प्रतिजग्राहरेणुकाल्लक्षणान्विताम् ॥ सातस्मात्सुषुवेपुत्रांश्चतुरोवेद
सम्मितान् ॥ २ ॥ मरुत्वन्तंसुषेणञ्चवसुव्विँश्वावसुन्तथा ॥ पश्चात्तस्यांस्वयञ्जज्ञेभगवान्मधुसूदनः ॥ ३ ॥ कार्त्तवीर्य्यव
धायाशुशक्राद्यैः सकलैः सुरैः ॥ याचितः पञ्चमः सोऽभूत्तेषांरामाह्वयस्तुसः ॥ ४ ॥ भारावतरणार्थायजातः परशुनासह ॥ सह
जम्परशुन्तस्यनजहातिकदाचन ॥ ५ ॥ अयन्निजपितामत्याश्चरूभुक्तिविपर्य्ययात् ॥ ब्राह्मणः क्षत्रियाचारोरामोभूत्क्रूरक
र्म्मकृत् ॥ ६ ॥ सवेदानखिलाञ्ज्ञात्वाधनुर्व्वेदाँश्चसर्व्वशः ॥ सततः कृतकृत्योऽभूद्वेदविद्याविशारदः ॥ ७॥ एकदातस्यजननी
स्नानार्थंरेणुकागता ॥ गङ्गातोयेत्वथापश्यन्नाम्नाचित्ररथन्नृपम् ॥८॥आर्य्याभिः सदृशीभिश्चजलक्रिडारतंशुभम् ॥ सुमालिनं
सुवस्त्रन्तन्तरुणञ्चन्द्रमालिनम् ॥ ९ ॥ तथाविधन्नृपन्दृष्ट्वासञ्जातमदनाभृशम् ॥ रेणुकास्पृहयामासतस्मैराज्ञेसुवर्च्चसे ॥ १० ॥
स्पृहायुतायास्तस्यास्तुसंक्लेदः समजायत ॥ त्रिचेतनाम्भसाक्लिन्नात्रस्तासास्वाश्रमय्ययौ ॥ ११ ॥ अबोधिजमदग्निस्तांरे

णुकाव्विँकृतान्तथा ॥ धिग्धिक्काररतेत्येवन्निनिन्दचसमन्ततः ॥ १२ ॥ ततःसतनयान्प्राहचतुरःप्रथमम्मुनिः ॥ मरुत्वत्प्रमु
खान्सर्व्वानेकैकङ्क्रमतोद्रुतम् ॥ १३ ॥ छिन्धीमाम्पापनिरतांरेणुकाव्व्यँभिचारिणीम् ॥ तेतद्वचोनैवचक्रुर्म्मूकाश्चासञ्जडा
इव ॥ १४ ॥ कुपितोजमदग्निस्ताञ्छशापेतिविचेतसः ॥ भवध्वय्यूँयमचिराज्जडागोबुद्धिवर्द्धिताः ॥ १५ ॥ यथाजगामचर
मोजामदग्न्योतिवीर्य्यवान् ॥ तञ्चराममपिताप्राहपापिष्ठाञ्छिन्धिमातरम् ॥ १६ ॥ सभ्रातॄंश्चँतथाभूतान्दृष्ट्वाज्ञानविवर्ज्जि
तान् ॥ पित्राशतान्महातेजाःप्रसुम्परशुनाच्छिनत्॥१७॥रामेणरेणुकांछिन्नान्दृष्ट्वाविक्रोधनोभवत् ॥ जमदग्निःप्रसन्नसन्नि
तिवाचमुवाचह ॥ १८ ॥ प्रीतोस्मिपुत्रभद्रन्तेयत्त्वयामद्वचःकृतम् ॥ तस्मादिष्टान्वरान्कामाँस्त्वँव्वैवरयसाम्प्रतम् ॥ १९ ॥
सतुरामोवरान्वव्रेमातुरुत्थानमादितः ॥ वधस्यास्मरणन्तस्याभ्रातॄणांशापमोचनम् ॥ २० ॥ मातृहत्याव्यपनयय्युँद्धेसर्व्व
त्रवैजयम् ॥ आयुःकल्पान्तपर्य्यन्तङ्क्रमाद्वैनृपसत्तम॥२१॥सर्व्वान्वरान्त्सप्रददौजमदग्निर्म्महातपाः ॥ सुप्तोत्थितेवजननी
रेणुकाचतदाभवत् ॥ २२ ॥ वधन्नचापिसस्मारसहजाप्रकृतिस्थिताः ॥ युद्धेजयश्चिरायुष्यँल्लेभेरामस्तदैवहि ॥२३॥ मातृह
त्याव्यपोहायपितातव्वाँक्यमब्रवीत् ॥ नपुत्रवरदानेनमातृहत्यापगच्छति ॥ २४॥ तस्मात्त्वम्ब्रह्मकुण्डायगच्छस्नातुञ्चतज्ज
ले ॥ तत्रस्नात्वामुक्तपापोनचिरात्पुनरेष्यसि ॥२५ ॥ जगद्धितायपुत्रत्वम्ब्रह्मकुण्डंव्व्रँजद्रुतम् ॥ सतस्यवचनंश्रुत्वारामःपर

शुधृक्कदा ॥ २६ ॥ उपदेशात्पितुर्य्यातोब्रह्मकुण्डव्वृँषोदकम् ॥ तत्रस्नानञ्चविधिवत्कृत्वाधौतपरश्वधः ॥ २७ ॥ शरीरान्निः
सृताम्मातृहत्यांसम्यग्व्यलोकयत् ॥ जातसम्प्रत्ययःसोथतीर्थमासाद्यतद्वरम् ॥ २८ ॥ वीथीम्परशुनाकृत्वाब्रह्मपुत्रमवाह
यत् ॥ ब्रह्मकुण्डात्सृतःसोथकासारेलोहिताह्वये ॥ २९ ॥ कैलासोपत्यकायान्तुन्यपतद्ब्रह्मणःसुतः ॥ तस्यापिसरसस्तीरेस
मुत्थायमहाबलः ॥ ३० ॥ कुठारेणादिशम्पूर्व्वामनयद्ब्रह्मणःसुतम् ॥ ततोपरत्रापिगिरिंहेमशृङ्गंविभिद्यच ॥ ३१ ॥ कामरू
पान्तरम्पीठमवाहयदमुंहरिः ॥ तस्यनामस्वयञ्चक्रेविधिर्ल्लौहितगङ्गकम् ॥ ३२ ॥ लौहितात्सरसोजातोलौहिताख्यस्ततो
भवत् ॥ सकामरूपमखिलम्पीठमाप्लाव्यवारिणा ॥ ३३ ॥ गोपयत्सर्व्वतीर्थानिदक्षिणय्याँतिसागरम् ॥ प्रागेवदिव्ययमुनां
सत्यक्ताब्रह्मणसुतः ॥ ३४ ॥ पुनःपततिलौहित्येगत्वाद्वादशयोजनम् ॥ चैत्रेमासिसिताष्टम्याय्योँनरोनियतेन्द्रियः ॥
चैत्रन्तुसकलम्मांसंशुचिःप्रयतमानसः ॥ ३५ ॥ स्नातिलौहित्यतोयेषुसयातिब्रह्मणःपदम् ॥ ३६ ॥ लौहित्यतोयेयःस्ना
तिसकैवल्यमवाप्नुयात् ॥ इतितेकथितंराजन्यदर्थम्मातरंपुरा ॥ ३७ ॥ आहवीरोजामदग्न्योयस्माद्वाक्रूरकर्म्मकृत् ॥ इदन्तुम
हदाख्यानय्यँःशृणोतिदिनेदिने ॥ ३८ ॥ सदीर्घायुःप्रमुदितोबलवानभिजायते ॥ इतितेकथितंराजञ्छरीरार्द्धय्यँथाद्रिजा
॥ ३९ ॥ शम्भोर्जहारवेतालभैरवौचयथाह्वयौ ॥ यस्यवातनयौजातौयथायातौगणेशताम् ॥ ४० ॥ किमन्यत्कथयेतुभ्यन्तद्व

दस्वन्नृपोत्तम ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इत्यौर्व्वस्यचसव्वाँदःसगरेणमहात्मना ॥ ४१ ॥ योसौकायार्द्धहरणःशम्भोर्गिरि
जयाकृतः ॥ सवोद्यकथितोविप्राःपृष्टय्यँच्चान्यदुत्तमम् ॥ ४२ ॥ सिद्धस्यभैरवाख्यस्यपीठानाञ्चविनिर्णयम् ॥ भृङ्गिणश्च
यथोत्पत्तिर्म्महाकालस्यचैवहि ॥ ४३॥ रुचितव्वःकिमन्यत्तुपृछन्तुद्विजसत्तमाः ॥ इतिसकलसुतन्त्रन्तन्त्रमन्त्रावदानम्बहुत
रफलकारिप्राज्ञविश्रामकल्पं ॥ उपनिषदमवेत्यज्ञानमार्गैकतानंस्रवतिसइहनित्यंयःपठेतन्त्रमेतत् ॥ ४४ ॥ इतिश्रीका
लिकापुराणेषट्शीतितमोध्यायः ॥ ८६ ॥ ॥ ऋषयऊचुः ॥ ॥ कथितोभवतासर्ग्गःसंशयाश्चापिशातिताः ॥ त्वत्प्रसा
दान्महाभागकृतकृत्यावयङ्गुरो ॥ १॥ भूयश्चश्रोतुमिछामोवयमेतद्द्विजोत्तम ॥ कोन्योभृङ्गमहाकालोजातौवेतालभैरवौ ॥ वि
तालञ्चमहाकालम्भैरवंभृङ्गिणन्तथा ॥ २ ॥ शृणुमोद्विजशार्द्दूलकथमेषाञ्चतुष्टयम् ॥ ॥मार्कण्डेयउवाच ॥ ॥ भुवङ्गतेमहाका
लेमानुष्यस्थेचभृंगिणी ॥३ ॥ वेतालभैरवाख्येचतयोर्म्भूतेद्विजोत्तमाः ॥ वरलब्धेचवेतालेभैरवेतेनसङ्गते ॥४॥ अन्धकन्तप
सायुक्तम्भृङ्गिणञ्चाकरोद्धरः ॥ अन्धकस्तुहरम्पूर्व्वव्विरुध्यापदमागतः ॥ ५ ॥ पश्चाद्धरंसमाराध्यपुत्रोभूत्तस्यसोसुरः ॥ भृ
ङ्गिस्नेहाद्भृङ्गिणन्तंसंज्ञयाचाकरोद्धरः ॥ ६ ॥ स्नेहेनतुमहाकालेबाणम्बलिसुतंहरः ॥ विष्णुनाछिन्नबाहुन्तुमहाकालमथा
करोत् ॥ ७॥ एवंमुनिवरास्तेषांसयतञ्चचतुष्टयम् ॥ वेतालभैरवौभृङ्गिमहाकालोत्यनुक्रमात् ॥ ८ ॥ ॥ ऋषयऊचुः ॥ ॥ य

स्पृष्टुंसगरेणैवमुनिमौर्व्वम्महाधिपम् ॥ नीत्यायोज्यायंयथाभार्यासुतआत्माथवागुरो ॥ ९ ॥ रजनीतौसतान्नीतौसदाचारे
चर्येस्थिताः ॥ विशेषास्तेनयेप्रोक्ताऔर्व्वेणसुमहात्मना ॥ १० ॥ विशेषेणद्विजश्रेष्ठश्रोतुंसम्यक्तपोधन ॥ इछामस्तान्महा
भागकथयस्वजगद्गुरो ॥ ११ ॥ ॥ मार्कंडेयउवाच ॥ ॥ येयेविशेषाःकथिताऔर्व्वेणसमुहात्मना ॥ तद्वःसर्व्वम्प्रवक्ष्यामिशृण्व
न्तुमुनिसत्तमाः ॥१२॥ श्रुत्वैवंसगरोराजामन्त्रकल्पादिकम्पुनः॥विशेषान्परिपप्रछनीत्यादीनाम्महामुनिम्॥१३॥सगरउवा
च ॥ ॥ ययानीत्याप्रयोक्तव्यःसुतआत्माप्रियातथा ॥ तेषांव्विंशेषैःसहितंसदाचारव्वँदस्वमे ॥१४॥ और्व्वउवाच॥क्रमेणशृ
णुराजेंद्रययानीत्यानियोजिताः॥आत्मासुतोवाभार्य्यावातद्विशेषंशृणुष्वमे॥१५॥ज्ञानविद्यातपोवृद्धान्वयोवृद्धान्सुदक्षिणा
न् ॥ सेवेतप्रथमव्विँप्रानसूयापरिवर्जितान् ॥१६॥तेभ्यश्चशृणुयान्नित्यव्वँदशास्त्रविनिश्चयम्॥यदूचुस्तेचतत्कार्य्यम्प्राज्ञश्चै
वनृपश्चरेत्॥१७॥पञ्चेन्द्रियाणिपञ्चाश्वाशरीरंरथउच्यते॥ आत्मारथीकराज्ञानंसारथिर्म्मनउच्यते॥१८॥अश्वान्सुदान्तान्कु
र्व्वीतसारथिश्चात्मनोवशम् ॥ कशादृढासदाकार्य्याशरीरस्थिरतातथा ॥१९॥अदान्तांस्तुसमारुह्यसैन्धवानस्पन्दनीयथा ॥
अश्वानामिछयागछन्नुत्पथम्प्रतिपद्यते ॥ २० ॥ तत्रावशःसारथिस्तुस्वेछयाप्रेरयन्हयान् ॥ नयेत्परवशंसम्यग्रथितव्वीरम
प्युत ॥ २१ ॥ तथेन्द्रियाणिनृपतिर्व्विषयाणाम्परिग्रहे ॥ स्ववश्यानिप्रकुर्व्वीतमनोज्ञानन्दृढन्तथा ॥ २२ ॥ ज्ञानेदृढेकसाया

श्चदृढायान्नृपसत्तम ॥ सारथिःस्ववशोदान्तानीशःप्रेरयितुंहयान् ॥ २३ ॥ अतोनृपःस्वेन्द्रियाणिवशेकृत्वामनस्तथा ॥
ज्ञानमार्गमधिष्ठायप्रकुर्व्वीतात्मनोहितम् ॥ २४ ॥ भोक्तव्यंस्वेच्छयाभूपोनकुर्य्याल्लोभमासवे ॥ द्रष्टव्यमितिद्रष्टव्यन्नद्र
ष्टव्यश्चस्वेच्छया ॥ २५ ॥ श्रोतव्यमितिश्रोतव्यन्नाधिकंश्रवणेचरेत् ॥ शास्त्रतत्त्वमृतेघोरःश्रुतिवश्योभवेन्नहि ॥२६ ॥ एव
ङ्घ्राणन्त्वचञ्चापिवशीकृत्येच्छयानृपः ॥ स्वेच्छयानोपभुञ्जीतनोद्दामंविषयंव्रजेत् ॥ २७ ॥एवंयदिभवेद्राजातदासस्या
ज्जितेन्द्रियः ॥ जितेन्द्रियत्वेहेतुश्चशास्त्रवृद्धोपसेवनम् ॥ २८ ॥ अवृद्धसेव्यशास्त्रज्ञोनृपःशत्रुवशोभवेत् ॥ तस्माच्छास्त्रमधि
ष्ठायभवेद्राजाजितेन्द्रियः ॥ २९ ॥ धृतिःप्रागल्भ्यमुत्साहोवाक्पटुत्वंविवेचनम् ॥ दक्षत्वन्धारयिष्णुत्वन्दानंमैत्रीकृतज्ञता॥
दृढशासनतासत्यंशौचम्मतिविनिश्चयम् ॥ ३० ॥ पराभिप्रायवेदित्वञ्चारित्रन्धैर्य्यमापदि ॥ क्लेशधारणशक्तिश्चगुरुदेव
द्विजार्च्चनम् ॥ ३१ ॥ अनसूयात्यकोपित्वङ्गुणानेतान्नृपोभ्यसेत् ॥ कार्य्याकार्य्यविभागञ्चधर्म्मार्थेकामएवच ॥ ३२ ॥
सततम्प्रतिबुध्येतकुर्य्यादवसरेपितत् ॥ सामदानञ्चभेदश्चदण्डश्चेतिचतुष्टयम् ॥ ३३ ॥ ज्ञात्वोपायाँस्तुतत्कालेतदुपाया
न्प्रयोजयेत् ॥ साम्नस्तुविषयेभेदोमध्यमःपरिकीर्त्तितः ॥ ३४ ॥ दानस्यविषयेसामयोग्यमेवोपलक्ष्यते ॥ दानस्यविषये
दण्डोत्यधमःपरिकीर्त्तितः ॥ ३५ ॥दण्डस्यविषयेदानन्तदप्यधममुच्यते ॥ साम्नस्तुगोचरेदण्डोत्यधमादधमःस्मृतः ॥ ३६ ॥

१ बुभुक्षाभावेऽन्येच्छयानभोक्तव्यमितितात्पर्यम् ।

सौजन्यंसततञ्ज्ञेयम्भूभृताभेददण्डयोः ॥ साम्नोदानस्यचतथासौजन्यय्याँतिगोचरे ॥ ३७ ॥ कामःक्रोधश्चलोभश्चह
र्षोमानोमदस्तथा ॥ एतानतिशयान्राजाशत्रूनिवविशातयेत् ॥ ३८ ॥ सेव्याःकालेसुयुक्तयौतेलोभगर्व्वौविवर्ज्जयेत् ॥ तेजए
वनृपाणान्तुतीव्रंसूर्य्यस्यवैयथा ॥ ३९ ॥ तत्रगर्व्वंरोगयुक्तंकायवाँस्तंतुसन्त्यजेत् ॥ आखेटकाक्षौस्त्रोसेवापानञ्चैवार्थदूष
णम् ॥४०॥ वाग्दण्डयोश्चपारुष्यंसप्तैतानिविवर्ज्जयेत् ॥ परस्त्रीषुविरक्तासुसेवामेकान्ततस्त्यजेत् ॥४१॥ सतीषुनिजनारी
षुयुक्तःकुर्य्यान्निवेशनम् ॥ रतिपुत्रफलादारास्तास्तुनैकान्ततस्त्यजेत् ॥ ४२ ॥ तयोःसिद्ध्यैस्त्रियःसेव्यावर्ज्जयित्वातिसक्त
ताम् ॥ मृगयान्तुप्रमादानांस्थानन्नित्यव्विवर्ज्जयेत् ॥ ४३ ॥ अक्षाँस्तथानकुर्व्वीतसत्कार्य्यासक्तिनाशनान् ॥ अन्यैःकृत
ङ्कदाचित्तुसेवेतनात्मनाचरेत् ॥ ४४ ॥ अकार्य्यकरणेबीजङ्कृत्यानाञ्चविवर्ज्जने ॥ अकालमन्त्रभेदेचकलहेसत्कृतिक्षये ॥
॥ ४५ ॥ वर्ज्जयेत्संततम्पानंशौचमाङ्गल्यनाशनम् ॥ अर्थक्षयकरंनित्यंत्यजेच्चैवात्मदूषणम् ॥४६॥ अभिशस्तेषुचोरेषुवात
केष्वाततायिषु ॥ सततम्पृथिवीपालोदण्डपारुष्यमाचरेत् ॥ ४७॥ नान्यत्रदण्डपारुष्यङ्कुर्य्यान्नृपतिसत्तमः ॥ वाक्पारुष्य
ञ्चसर्व्वत्रनैवकुर्य्यात्कदाचन ॥४८॥ रक्षणीयंसदासत्यंसत्यमेकम्परायणम् ॥ क्षमान्तेजस्विताञ्चैवप्रस्तावान्नृपआचरे
त् ॥ ४९ ॥ यानासनाश्रयद्वैधसन्धयोविग्रहस्तथा ॥ अभ्यसेत्षड्गुणानेतान्स्तेषांस्थानञ्चशाश्वतम् ॥ ५० ॥ यःप्रमाण

न्नजानातिस्थानेवृद्धौतथाक्षये ॥ कोषेजनपदेदण्डेनसराज्येवतिष्ठते॥५१॥कोषेजनपदेदण्डेचैकैकन्त्रत्रयन्त्रयम्॥प्रस्तावाद्वि
नियुञ्जीतरक्षेन्नैकान्ततस्त्विमान् ॥५२॥मित्रेशत्रावुदासीनेप्रभावन्त्रिष्वपीरयेत् ॥ उत्साहोविजिगीषायान्धर्म्मकृत्येष्टवर्ग्ग
के ॥५३॥शरीरयात्रानिर्व्वाहेक्रियेतसततन्नृपैः ॥ मन्त्रनिश्चयसम्भूताम्बुद्धिंसर्व्वत्रयोजयेत् ॥५४॥अमात्येशात्रवेराज्येपुत्रे
ष्वन्तःपुरेषुच ॥ कृषिन्दुर्ग्गञ्चवाणिज्यङ्खड्गानाङ्करसाधनम् ॥ ५५ ॥ आदानंसैन्यकरयोर्बन्धनङ्गजवाजिनोः ॥ शून्ये
सद्मसुखानाञ्चयोजनंसततञ्जनैः ॥५६॥ प्रयाणांसारसेतूनाम्बन्धनञ्चेति चाष्टमम् ॥ एतदष्टासुवर्ग्गेषुचारान्सम्यक्प्रयोज
येत् ॥ ५७ ॥ कार्य्याकार्यविभागायचाष्टवर्ग्गाधिकारिणाम् ॥ अष्टौचारान्नियुञ्जीयादष्टवर्ग्गेषुपार्थिवः ॥ ५८ ॥ दशशून्येषु
युञ्जीतक्रमतःशृणुतानिमे ॥ स्वामीसचिवराष्ट्राणिमित्रङ्कोशोबलन्तथा ॥५९ ॥ दुर्ग्गन्तुसप्तमंज्ञेयंराज्यांगङ्गुरुभाषितम् ॥
दुर्गयुक्तंचाष्टवर्ग्गेचारान्नात्मनियोजयेत् ॥६०॥ तस्मादिमानिशेषाणिपञ्चचारपदानिच ॥ शुद्धान्तेषुचपुत्रेषुसयूथादौमहान
से ६१ ॥ शत्रूदासीनयोश्चापिबलाबलविनिश्चये ॥ अष्टादशसुचैतेषुचारान्राजाप्रयोजयेत् ॥ ६२ ॥ नयत्प्रकाशञ्जानीयात्त
त्तच्चारैर्निरूपयेत्॥निरूप्यतत्प्रतीकारमवश्यंच्छिद्रतश्चरेत् ॥ ६३ ॥ यथानियोगमेतेषाय्योंयोयत्रान्यथाचरेत् ॥ज्ञात्वातत्रनृप
श्चारैर्दण्डयेद्वावियोजयेत् ॥६४॥ चारांस्तुमन्त्रिणासार्द्धंरहस्येसंस्थितोनृपः ॥ प्रदोषसमयेपृच्छेत्तदानीमेवसाधयेत् ॥६५॥

स्वपुत्रेचाथशुद्धान्तेयेतुचारामहानसे ॥ नियुक्तास्तान्मध्यरात्रेपृच्छेत्स्वेपिचमन्त्रिणि ॥ ६६ ॥ एताँश्चारान्स्वयम्पश्येन्नृप
तिर्म्मन्त्रिणाविना ॥ अन्याँस्तुमन्त्रिणासार्द्धन्निरूप्यप्रदिशेत्फलम् ॥ ६७ ॥ नैकवेशधरश्चारोनैकोनोत्साहवर्ज्जितः ॥ संस्तु
तोनहिसर्व्वत्रनातिदीर्घोनवामनः ॥ ६८ ॥ सततन्नदिवाचारीनरोगोनाप्यबुद्धिमान् ॥ नवित्तविभवैर्हीनोनभार्य्यापुत्रवर्ज्जि
तः ॥ ६९ ॥ कार्य्यश्चारोनृपतिनातत्त्वगुह्यविनिर्णये ॥ अनेकवेशग्रहणक्षमम्भार्य्यासुतैर्युतम् ॥ ७० ॥ बहुदेशवचोभिज्ञ
म्पराभिप्रायवेदकम् ॥ दृढभक्तम्प्रकुर्वीतचारसक्तमसाध्वसम् ॥७१॥ अभितिष्ठत्स्वयंराजाकृषिमात्मसमैस्तथा ॥ वणिक्प
थेतुदुर्ग्गादौतेषुशक्तान्नियोजयेत् ॥ ७२ ॥ अन्तःपुरेपितुस्तुल्यान्धीरान्वृद्धान्नियोजयेत् ॥ षण्डान्पण्डांस्तथावृद्धाँस्त्रियो
वाबुद्धितत्पराः ॥ ७३ ॥ शुद्धान्तेद्वारियुञ्जीयात्स्त्रियोवृद्धामनोषिणीः ॥ नेकःस्वपेत्कदाचित्तुनैकोभुञ्जीतपार्थिवः ॥ ७४ ॥ नै
काकिनीन्तुमहिषीन्व्रजेन्मैत्रायनेककः ॥ अमात्यानुपधाशुद्धान्भार्य्याःपुत्राँस्तथैवच ॥७५॥ प्रकुर्य्यात्सततम्भूपःसप्रसादं
समाचरन् ॥ धर्म्मार्थकाममोक्षैश्चप्रत्येकम्परिशोधनैः ॥७६॥ उपेत्यधीयतेयस्मादुपधासाप्रकीर्त्तिता ॥ अर्थकामोपधाभ्या
न्तुभार्य्यापुत्राँश्चशोधयेत् ॥ ७७॥ धर्म्मोपधाभिर्व्विप्रांस्तुसर्व्वाभिःसचिवान्पुनः ॥ एभिर्य्यज्ञैस्तथादानैरिहैवनृपतिर्भवेत्
॥ ७८॥ तस्माद्भवाँस्तुराज्यार्थीधर्म्ममेवंसमाचरेत् ॥ अनेनैवाभिचारेणयज्ञैर्व्वापार्थिवोत्थ्यम् ॥ ७९ ॥ प्राणाँस्त्यक्ष्यतिरा

जात्वम्भविष्यसिनसंशयः ॥ इतिधर्म्मोनृपस्यैवअश्वमेधादिकश्चयः ॥ ८० ॥ स्वयन्नकुरुतेभूपस्तस्मात्वङ्कुरुसत्तम ॥ एव
म्मन्त्रैर्म्मन्त्रयित्वानृपःकार्य्यान्तिकाद्द्विजात् ॥ ८१ ॥ तैरज्ञातान्स्वयञ्ज्ञात्वागूढ्योयात्तस्यतैर्म्मनः ॥ यदिराज्याभिलाषेणस
चिवोधर्म्ममाचरेत् ॥ ८२ ॥ नृपतौवाधिकङ्कुर्य्याद्धर्म्मन्तंहीनतान्नयेत् ॥ अभिचारिकमत्यर्थङ्कुर्व्वाणन्तुविघातयेत् ॥ ८३ ॥
प्रवासयेद्ब्राह्मणन्तुपार्थिवश्चाभिचारिकम् ॥ एषाधर्म्मोपधाज्ञेयातैरमात्यान्सुताञ्जयेत् ॥ ८४ ॥ एतादृशीन्तथैवान्यामुपधा
न्धर्म्मतश्चरेत् ॥ कोषाध्यक्षान्समामन्त्र्यराजामात्यान्प्रतारयेत् ॥ ८५ ॥ पुत्रानन्यान्प्रतितथामन्त्रसंव्वँरणाक्षमान् ॥ अयं
हिप्रचुरःकोषोमदायत्तोनरोत्तम ॥ ८६ ॥ आनयेतवसम्मत्यातद्यदित्वम्प्रतीच्छति ॥ तवार्थलग्नादस्माकञ्जीवनंचभविष्यति
॥ ८७ ॥ त्वञ्चापिप्रचुरैःकोषैःकिङ्किव्वाँनकरिष्यसि ॥ एवमन्यैःकोषगतैरुपायैर्नृपसत्तमः ॥ ८८ ॥ पुत्रामात्यादिकान्सर्व्वा
न्सततम्परिशोधयेत् ॥ कोषदोषकरान्हन्यात्कर्त्तुमिच्छून्विवासयेत् ॥ ८९ ॥ द्वैधचित्तान्विमन्येतकुर्य्याद्वैकोषरक्षणम् ॥
दासीश्चशिल्पिनीर्व्वृद्धामेधाधृतिमतीस्त्रियः ॥ ९० ॥ अन्तर्व्वहिश्चयायान्तिविदिताःसचिवादिभिः ॥ ताराजारहसिस्थितश्च
भार्य्यादिभिरलक्षितः ॥ ९१ ॥ अभिमन्त्र्याथसम्मन्त्र्यप्रेषयेत्सचिवान्प्रति ॥ तागत्वाहृदयंबुद्ध्वास्त्रियोविज्ञानतत्पराः ॥ ९२ ॥
महिषीप्रमुखाराज्ञस्त्वाव्वैकामयतेशुभाः ॥ तत्राहय्यौजयिष्यामियदितेविद्यतेस्पृहा ॥ ९३ ॥ सचिवस्त्वांकामयतेत्वद्योग्योवर

वर्णिनि॥तंचसङ्गमयतुंशक्तायदिश्रद्धातवास्त्यहम्॥१४॥इत्यनेनप्रकारेणनानोपायैस्तथोत्तरैः॥आर्य्याःपुत्रदुहित्रोश्चस्नुषा
श्वश्रस्नुषास्तथा॥१५॥शोधयेत्सचिवान्पुत्रान्पौत्रादीन्सेवकाँस्तथा॥कामोपधाविशुद्धांस्तुघातयेदविचारयन्॥स्त्रियस्तु
योज्यादण्डेनब्राह्मणाँस्तुप्रवासयेत्॥१६॥मोक्षमार्ग्गविशक्तन्तुहिंसापैशुन्यवर्जितम्॥क्षमैकसारंनृपतिःसचिवम्परिवर्ज
येत्॥१७॥मोक्षमार्ग्गविषक्तांस्तुदण्डानपिनदण्डयेत्॥समबुद्धिस्तुसर्व्वत्रतस्मात्तम्परिवर्जयेत्॥१८॥इतिसूत्रश्चोपधा
नामुपधाबहुधापुनः॥विवेचिताचोशनसातच्छास्त्रेतत्रबोधयेत्॥११॥विग्रहेसततंराजापरैर्न्नसम्यगाचरेत्॥भूवित्तमित्र
लाभेषुनिश्चितेष्वेवविग्रहाः॥१००॥सप्ताङ्गेषुप्रसादश्चसदाकार्य्योनृपोत्तमैः॥कोषस्यसञ्चयंरक्षांसततंसम्यगाचरेत्॥१॥
मन्त्रिणस्तुनृपःकुर्य्याद्विप्रान्विद्याविशारदान्॥विनयज्ञान्कुलीनांश्चधर्म्मार्थकुशलानृजून्॥२॥मन्त्रयेत्तैःसमञ्ज्ञानंनात्य
र्थंबहुभिश्चरेत्॥एकैकेनैवकर्त्तव्यम्मन्त्रस्यचविनिश्चयम्॥३॥व्यस्तैःसमस्तैश्चान्यस्यव्यपदेशैःसमन्ततः॥सुसंवृतम्म
न्त्रगृहंस्थलमारुह्यमन्त्रयेत्॥४॥अरण्येनिःशलाकेवानयामिन्याङ्कदाचन॥शिशूञ्छाखान्मृगान्षण्डाञ्छुकान्वैसारिका
स्तथा॥५॥वर्ज्जयेन्मन्त्रगेहेतुमनुष्यान्विकृताँस्तथा॥दूषणम्मन्त्रभेदेषुनृपाणांयत्तुजायते॥नतच्छक्यंसमाधातुन्द
क्षैर्नृपशतैरपि॥६॥दण्ड्यांस्तुदण्डयेद्दण्डैरदण्ड्यान्दण्डयेन्नहि॥अदण्डयन्नृपोदण्ड्यान्नदण्ड्यांश्चापिदण्डयन्॥७॥नृ

पतिर्व्वाच्यताम्प्राप्य चौरकिल्बिषमाप्नुयात् ॥ दुर्ग्गस्तु समताङ्कुर्य्यात्प्राकाराट्टालतोरणैः ॥ ८ ॥ भूषितान्नगराद्राजा दूरे दुर्ग्गा
श्रयञ्चरेत् ॥ दुर्ग्गम्बलन्नृपाणान्तु नित्यन्दुर्ग्गम्प्रशस्यते ॥ ९ ॥ शतमेको योधयति दुर्ग्गस्थो यो धनुर्द्धरः ॥ शतन्दशसहस्रा
णि तस्माद्दुर्ग्गम्प्रशस्यते ॥ १० ॥ जलदुर्ग्गम्भूमिदुर्ग्गं वृक्षदुर्ग्गन्तथैव च ॥ अरण्यबलदुर्ग्गञ्च शैलजम्परिखोद्भवम् ॥ ११ ॥
दुर्ग्गङ्कार्य्यन्नृपतिना यथा दुर्ग्गं स्वदेशतः ॥ दुर्ग्गङ्कुर्वन्पुरङ्कुर्य्यात्त्रिकोणन्धनुराकृति ॥ १२ ॥ वर्त्तुलञ्च चतुष्कोणन्नान्यथा नग
रञ्चरेत् ॥ मृदङ्काकृति दुर्ग्गन्तु सततङ्कुलनाशनम् ॥ १३ ॥ यथा राक्षसराज्यस्य लङ्का दुर्ग्गान्विता पुरा ॥ बलेः पुरं शोणिताख्यन्ते
जो दुर्ग्गैः प्रतिष्ठितम् ॥ १४ ॥ तद्यस्माद्व्यजनाकारमनोभ्रष्टः शिवाबलिः ॥ सौभाग्यं सा तु राज्यस्य नगरम्पञ्चकोणकम् ॥ १५ ॥
द्विबियद्वृत्ते ते राजंस्तच्च भ्रष्टं भविष्यति ॥ यच्चायोध्याह्वयम्भूपपुरमिक्ष्वाकुभूभृताम् ॥ १६ ॥ धनुराकृति तच्चापि ततोऽभूद्विजयप्रद
म् ॥ दुर्ग्गभूमौ जयेद्दुर्ग्गान्दिक्पालांश्चैव द्वारतः ॥ १७ ॥ पूजयित्वा विधानेन जयम्भूपः समाप्नुयात् ॥ अतो दुर्ग्गन्नृपः कुर्य्या
त्सततञ्जयवृद्धये ॥ १८ ॥ न ब्राह्मणान्सदा राजा केनाप्यवमनीकृतान् ॥ अवामन्य नृपो विप्रान्प्रेत्येह दुःखभाग्भवेत् ॥ १९ ॥
न विरोधस्तु तैः कार्य्यः स्वानि तेषान्न चाददेत् ॥ कृत्यकालेषु सततन्तानेव परिपूजयेत् ॥ २० ॥ नैषान्निन्दाम्प्रकुर्व्वीत नाभ्यसू
यान्तथाचरेत् ॥ एवन्नृपो महाबुद्धिस्तत्तन्मण्डलसंय्युतः ॥ २१ ॥ अप्रमादी चारचक्षुर्ग्गुणवान्सुप्रियंवदः ॥ प्रेत्येह महतीं सि

द्धिंप्राप्नोतिसुखभोगवान् ॥ २२ ॥ यैर्ग्गुणैर्योजितश्चात्मातैःपुत्रानपियोजयेत् ॥ नृपस्यचस्वतन्त्रत्वंसततंस्वांविना
शयेत् ॥ २३ ॥ स्वतन्त्रोभूपतनयोविकारर्य्यातिनिश्चितम् ॥ निर्व्विकारायसततव्वृद्धाँश्चपरियोजयेत् ॥ २४ ॥ भो
जनेशयनेयानेपुरुषाणाञ्चवीक्षणे ॥ वियोजयेत्सदादारान्भूपःकामविचेष्टने ॥ २५ ॥अस्वतन्त्राःस्त्रियःकार्य्याःसततम्पा
र्थिवेनतु ॥ ताःस्वतन्त्रास्त्रियोनित्यंहानेयसम्भवन्तिहि ॥ २६ ॥ तस्मात्कुमारम्महिषीमुपधाभिर्म्मनोहरैः ॥ शोधयित्वा
नियुञ्जीतयौवराज्यावरोधयोः ॥ २७ ॥ अन्तःपुरप्रवेशेतुस्वतन्त्रत्वन्निषेधयेत् ॥ भूपपुत्रस्यभार्य्यायाबहिःसारेतथैवच
॥ २८ ॥ अयव्विँशेषःसङ्क्षेपान्नृपधर्म्मोमयोदितः ॥ पुत्राणाङ्गुणविन्यासेभार्य्याणामपिभूपते ॥ २९ ॥ उशनाराज
नीतीनान्तन्त्राणितुबृहस्पतिः ॥ चकारान्यान्विशेषस्तुतयोस्तन्त्रेषुबोधयेत् ॥ ३० ॥ एवंराजामहाभागोराजनीतौविशेषता
म् ॥ कुर्व्वन्नसीदतिसदाभूयसींश्रियमश्नुते ॥ ३१ ॥ इतिश्रीकालिकापुराणेसप्ताशीतितमोध्यायः ॥ ८७ ॥
॥ ॥ और्व्वउवाच ॥ ॥ सदाचारेषुराजेंद्रविशेषाच्छृणुसम्प्रति ॥ यानवश्यन्नृपःकुर्यात्तान्मत्तःसकलाञ्छृणु ॥ साधवः
क्षीणदोषाश्चसच्छब्दःसाधुवाचकः ॥ तेषामाचरणय्यँत्तुसदाचारःसउच्यते ॥ २ ॥ आगमेषुपुराणेषुसंहितासुयथोदितान् ॥
समुद्दिष्टसदाचारान्गृह्णीयात्तान्गृहस्थवत् ॥ ३ ॥ ऋषीन्यजेद्वेदपाठैर्द्देवान्होमैःप्रपूजयेत् ॥ श्राद्धैःपितॄँस्तर्प्पयेत्तुभूतानिबलि

भिस्तथा ॥ ४ ॥ मैत्रम्प्रधावनंस्नानन्दन्तधावनमञ्जनम् ॥ सर्व्वेङ्गृहस्थवत्कुर्य्यान्निषेकाद्यव्विधिन्तथा ॥ ५ ॥ षट्कर्म्मसु
नियुञ्जीतराजाविप्रान्त्समन्ततः ॥ तथैवक्षत्रियादींश्चस्वेस्वेकर्म्मणियोजयेत् ॥ ६ ॥ यःस्वधर्म्मम्परित्यज्यपरधर्म्मंसमाच
रेत् ॥ तंशतेननृपोदण्डम्पुनस्तस्मिन्नियोजयेत् ॥ ७ ॥ सांव्वत्सरेषुकृत्येषुविशिष्यैतान्त्समाचरेत् ॥ अवश्यम्पार्थिवोराज
न्तान्विशेषाच्छृणुष्वमे ॥ ८ ॥ शरत्कालेमहाष्टम्यान्दुर्ग्गायाःपरिपूजनम् ॥ नीराजनन्दशम्यान्तुकुर्य्याद्वैबलवृद्धये ॥ ९ ॥ पौ
षेमासितृतीयायाङ्कुर्य्यात्पुष्याभिषेचनम् ॥ पूजयित्वाश्रियन्देवींश्रीपञ्चम्यान्नृपश्चरेत् ॥ १० ॥ श्रीयज्ञन्धनधान्यस्यवृद्धये
नृपसत्तम ॥ ज्येष्ठेदशहरायान्तुविष्णोरिष्टिन्तथाचरेत् ॥ ११ ॥ रवौहरिस्थेद्वादश्यांशक्रपूजान्तथाचरेत् ॥ विशिष्यैतांस्तुनृप
तिःकुर्य्याद्यज्ञान्बहुव्ययैः ॥ १२ ॥ एभिःकृतैर्व्बलंराज्यङ्कोषश्चापिविवर्द्धते ॥ अकृतेष्वेषुयज्ञेषुदुर्भिक्षम्मरणन्तथा ॥ १३ ॥
जायन्तेचेतयःसर्व्वाविशिष्यैतांस्ततश्चरेत् ॥ शरत्कालेमहाष्टम्यान्दुर्ग्गायाःपूजनेविधिः ॥ १४ ॥ पुराप्रोक्तस्तुविधिनातेन
कार्य्यन्तुपूजनम् ॥ विधिन्नीराजनस्यत्वंशृणुपार्थिवसत्तम ॥ १५ ॥ कृतेनयेनचाश्वानाङ्गजानामपिचैधनम् ॥ आश्विनेशुक्ल
पक्षेतुतृतीयास्वातियोगिनी ॥ १६ ॥ ऐशान्यांस्वपुरस्यैवगृह्णीयात्स्थानमुत्तमम् ॥ नीराजनन्ततःकुर्य्यात्संप्राप्ते
दिवसेष्टमे ॥ १७ ॥ नीराजनस्यकालस्तुपूर्व्वमुक्तोमयातव ॥ विधानमात्रंशृणुमेकृतकृत्योभविष्यसि ॥ १८ ॥ एकंहयम्महास

लंसुमनोहरमेवच ॥ १९ ॥ पूजयेत्सप्तदिवसान्गन्धपुष्पांशुकादिभिः ॥ तृतीयादौपूजयित्वानयेतद्यज्ञमण्डलम् ॥ २० ॥ चे
ष्टान्निरूपयँस्तस्यजानीयात्तुशुभाशुभम् ॥ परराष्ट्रावमर्द्दःस्यादश्वोयदिपलायते ॥ २१ ॥ म्रियतेराजपुत्रस्तुयदिचाश्रूणि
मुञ्चति ॥ नीयमानोनगच्छेत्तुमहिषीमरणन्ततः ॥ २२ ॥ तथैवमुखनासाक्षिशब्दङ्कुर्य्याद्धयोयदि ॥ यःकाष्ठाभिमुखःकुर्य्या
त्तत्काष्ठायाजयेद्रिपून् ॥ २३ ॥ उत्क्षिप्यदक्षिणाग्रन्तुपदमश्वोमतेःपुरः ॥ तदायदिसमस्ताँश्चनृपतीर्व्विजयेद्रिपून् ॥ २४ ॥
प्रातर्न्नीराजनङ्कुर्य्याद्दशम्यान्नृपसत्तम ॥ तदप्राप्तौचद्वादश्यान्तस्यामेवसमाचरेत् ॥ २५ ॥ कार्त्तिकेपञ्चदश्याव्वातत्राभावेतु
पार्थिव ॥ ऐशान्यांस्वपुरस्योच्चैर्हस्तमानेनषोडश ॥२६॥दशहस्तन्तुविपुलङ्कुर्य्याद्वैतत्रतोरणम् ॥ द्वात्रिंशद्धस्तमात्रन्तुहस्त
षोडशविस्तृतम् ॥२७॥ यज्ञार्थम्मण्डलङ्कुर्य्यान्मध्येवेदीव्विँनिर्दिशेत् ॥ वेद्याश्चोत्तरतश्चाश्ववेदिङ्कुर्य्यादनुत्तमाम् ॥ २७ ॥ य
त्रसंस्थाप्यचाश्वश्चपूजितव्यःपुरोहितैः ॥ सज्जोदुम्बरशाखानामर्ज्जुनस्याथवानृप ॥ २९ ॥ मत्स्यशङ्खाङ्कितैश्चक्रैर्ध्वजैश्चा
प्यभिभूषयेत् ॥ तोरणङ्कनकैरत्नैस्तथानानाविधैःफलैः ॥ ३० ॥ भल्लातकंशालिकुष्ठंसिद्धार्थैसैन्धवस्यतु ॥ कण्ठदेशेनिबध्नी
यात्पुष्टिशान्त्यर्थमेवच ॥ ३१ ॥ वैष्णवंमण्डलङ्कृत्वादिक्पालाँश्चनवग्रहान् ॥ विश्वदेवाँस्तुमन्त्रेणविष्णुमुख्यान्प्रपूजयेत्
॥ ३२ ॥ आज्यैस्तिलैश्चपुष्पैश्चमिश्रीकृत्यपुरोहितः ॥ रवेस्तुवरुणस्यैवप्रजेशस्यतथैवच ॥ ३३ ॥ पुरुहूतस्यविष्णोश्चहो




१ परेणशत्रुणारक्षाभिमर्दइत्यर्थः ।

मंसप्ताहमाचरेत् ॥ एकैकस्यसहस्त्रव्वाँअष्टोत्तरशतञ्चवा ॥ ३४ ॥ कुर्य्यात्तुप्रत्यहंहोमञ्चतुर्व्वर्ग्गस्यसिद्धये ॥ समिधश्चापिहोत
व्याःपलाशाखादिरास्तथा ॥ ३५ ॥ औदुम्बरश्चकाश्मर्य्याअश्वत्थाश्चपुरोधसा ॥ सौवर्णान्राजतान्वापिमार्त्तिकान्वायथे
च्छया ॥ ३६ ॥ कुर्य्यात्तुकलशानष्टौफलाम्राान्वरयोजितान् ॥ क्षिपेत्तेषुघटेष्वेवसमङ्गहरितालकम् ॥ ३७ ॥ चन्दनञ्चत
थाकुष्ठंप्रियङ्गुञ्चमनःशिलम् ॥ अञ्जनञ्चहरिद्राञ्चश्वेतान्दन्तीन्तथैवच ॥ ३८ ॥ भल्लातकम्पूर्णकोन्दंसहदेवींशतावरी
म् ॥ वचांसनाकुगसुमांसोमराजींसुगुप्तिकाम् ॥ ३९ ॥ तुलयंचकरवीरंचतुलसीदलमेवच ॥ एतानिनिःक्षिपेन्मध्ये
कलशानाम्पुरोहितः ॥ ४० ॥ कनकैरम्बुजैर्य्यज्ञदारुभिःश्रुक्सुवौतथा ॥ कर्त्तव्येशान्तिकामेननीराजनविधौनृप ॥ ४१ ॥
एवंसप्ताहपर्य्यन्तम्पूजाभिर्हवनैस्तथा ॥ पूर्व्वोक्तान्पूजयित्वातुनृपःसप्ताहमाचरेत् ॥ ४२ ॥ यावन्नीराजनङ्कुर्य्यात्तावद्रा
जावसेद्गृहे ॥ रात्रौनयज्ञभूमौतुनिवसेच्छान्तिमिच्छुकः ॥ ४३ ॥ नारोहयेत्तुरगन्तङ्गजंव्वातत्रपार्थिवः ॥ यावत्सप्ताह
पर्य्यन्तन्तस्यााँनान्येनवैव्रजेत् ॥ ४४ ॥ भक्ष्यैर्न्नानाविधैश्चैवमधुपायसयावकैः ॥ मोदकैर्व्वाबलिंकुर्य्यादंन्नव्यञ्जनसम्भ
वैः ॥ ४५ ॥ पूर्व्वोक्तानान्तुदेवानांसप्ताहय्यावदुत्तमम् ॥ सप्तमेह्नितुरेमन्तम्पूजयेत्तोरणान्तरे ॥ ४६ ॥ सूर्यपुत्रम्महा
बाहुन्द्विभुजङ्कवचोज्वलम् ॥ ज्वलन्तंशुक्लवस्त्रेणकेशानुद्ध्रथ्यवाससा ॥ ४७ ॥ कशाव्वामकरेबिभ्रद्दक्षिणन्तुकरम्पुनः ॥ सव

ङ्गन्यस्यवालायासितसैन्धवसंस्थितम् ॥ ४८ ॥ एवव्विँधन्तुरेमन्तम्प्रतिमायाङ्कटेपिवा ॥ सूर्यंपूजाविधानेनपूजयेत्तो रणान्तरे ॥ ४९ ॥ पूजयित्वातुरेमन्तन्द्विरदन्तुरगन्तथा ॥ अहताव्वँरसव्विँत्तंस्त्रक्कन्दसमन्वितम् ॥ ५० ॥ सुवर्णं विद्धनिस्त्रिंशव्विँचित्रंकवचादिभिः ॥ युक्तन्तुहोमकुण्डस्यऐशान्यामश्ववेदिकाम् ॥ ५१ ॥ पूर्व्वंङ्कृतान्नयेदश्वगजपातौपृ थक्पृथक् ॥ नीयमानेगजेवाश्वेपूर्व्वोक्तन्तुनिमित्तकम् ॥ ५२ ॥ यत्नाद्वीक्षेतनृपतिःफलश्चैवावधारयेत् ॥ होमकुण्डस्यो त्तरस्याव्वैयाघ्रेचर्म्मणिस्थितः ॥ ५३ ॥ दैवविदाचाश्वविदासहितोवीक्ष्यसैन्धवम् ॥ नीतायतुरगायाशुभक्तपिण्डींसुग न्धिनीम् ॥ ५४ ॥ दद्यात्पुरोहितस्तत्रसंमन्त्र्यशान्तिमन्त्रकैः ॥ भक्षणाद्यदिजिघ्रेत्तदशनीयाद्धाहयःसच ॥ ५५ ॥ तदा स्यात्सर्व्वंकल्याणविँपरीतमतोन्यथा ॥ शाखामौदुम्बरीमार्द्रांसङ्कुशाश्चघटोदके ॥ ५६ ॥ आह्लाव्याह्लाव्यतुरगान्राजान्भू पश्चसैनिकान् ॥ रथाँश्चसस्पृशेन्मन्त्रैः शान्तिकैःपौष्टिकैस्तथा ॥ ५७॥ सेचयेत्सहितैर्व्विप्रैश्चतुङ्गंपुरोहिताः ॥ दिक्पालाना ङ्ग्रहाणाश्चमन्त्रैश्चवैष्णवैस्तथा ॥ ५८ ॥ बहुधाचाभिषिच्याथततःसौवर्णदर्प्पणम् ॥ वीक्षयित्वानृपश्चैर्व्विकृततोमन्त्रि णमेवच ॥ ५९ ॥ राजपुत्रन्तथामात्यानन्यानपिचसैनिकान् ॥ कम्पयन्द्विजशार्दूलःसर्व्वानेवतुदर्शयेत् ॥ ६० ॥ चतुरङ्ग स्यस्वस्यापिकृत्वैवंशान्तिपौष्टिके॥ मृण्मयंशात्रवङ्कृत्वाचाभिचारिकमन्त्रकैः॥ हृदिशूलेनविध्वातंशिरःखड्गेनछेदयेत्॥ ६१॥

आचार्य्यःकंविकाम्पश्चादशिमन्त्र्यहयायवै ॥ ऐन्द्रैःप्रभाकरैर्म्मन्त्रैर्द्द्याद्वक्त्रेस्वयम्पुनः ॥ ६२ ॥ तमनेनतुमन्त्रेणसमारुह्यनृपस्तदा ॥ गच्छेदुत्तरपूर्व्वान्तुदिशंसर्व्वैर्व्वलैःपुनः ॥ ६३ ॥ ऋत्विक्पुरोहिताचार्य्याःसर्व्वएवनृपन्तथा ॥ अनुगच्छेयुरन्यानिनिमित्तानिविलोकयन् ॥ ६४ ॥ वादित्रघोषैस्तु मुलैरातपत्रैर्वृतस्तथा॥ गच्छेन्नीराजनेराजादारयन्निवमेदिनीम् ॥ ॥ ६५ ॥ मणिविद्रुममुक्तादिस्वर्णरत्नैरलङ्कृतः॥ क्रोश मात्रन्ततोगत्वापूर्व्वद्वारेणपार्थिवः ॥६६ ॥ स्वपुरम्प्रविशेद्विप्रैर्य्यज्ञंयायात्पुरोहितः ॥ तत्रगत्वादक्षिणान्तुहिरण्यङ्गान्तथातिलम् ॥ ६७ ॥ दत्वापश्चाद्विजेभ्यस्तुदद्याद्दानानिशक्तितः ॥ एवन्नीराजनङ्कृत्वाबलानाञ्चमहीक्षितः ॥ ६८॥ प्रेत्येहसुस्थिराल्लक्ष्मीन्नृपतिःप्राप्नुयात्तथा ॥ त्वमश्वामृतसञ्जातसागरोद्भवसैन्धव ॥ ॥ ६९ ॥ येनसत्येनवहसेशक्रन्तेनेहमाव्वँह ॥ येनसत्येनरेमन्तय्येँनसत्येनभास्करम् ॥ ७० ॥ वहसेतेनसत्येनविजयायवहस्वमाम् ॥ आभ्यान्तुभूपमन्त्राभ्यामश्वारोहणमाचरेत् ॥७१॥ आरुह्याग्रेमहिष्यास्तुशुद्धान्तेलम्बयेत्ततः ॥ महिषीचततोभूपम्पर्यङ्कोपरिसंस्थितम् ॥ ७२॥दूर्व्वाक्षतैःससिद्धार्थैःस्त्रीभिःसहतमर्च्चयेत् ॥ कृतेतुभूमिग्रहणेतृतीयायांनिराजने ॥७३ ॥ सूतकय्यँदिजायेतत्रदुष्यतिकेवलम् ॥ सूतकीमृतकोवापिपार्थिवस्तुयथातथा ॥ ७४ ॥ बलनीराजनङ्कुर्य्यात्तन्मात्रञ्चविशेषतः ॥ ७५॥सद्यःशौचम्भवेद्राज्ञोव्यवहारविलोकने ॥ तथाधिवासिनेयज्ञेपरराष्ट्रविमर्दने ॥ ७६ ॥ अयन्तेकथितो

१ लगाम इतिप्रसिद्धः।

राजन्नीराजनक्रमोमया ॥ पुष्यस्नानविधानन्तुपार्थिवशृणुसाम्प्रतम् ॥ ७७ ॥ इतिश्रीकालिकापुराणेऽष्टाशीतितमोध्यायः ॥ ८८ ॥ ॥ ॥ और्व्वउवाच ॥ ॥ शृणुराजन्प्रवक्ष्यामिपुष्यस्नानविधिक्रमम् ॥ येनविज्ञानमात्रेणविघ्नानश्यन्तिसन्ततम् ॥ १ ॥ पौषेपुष्यर्क्षगेचन्द्रेपुष्यस्नानन्नृपश्चरेत् ॥ सौभाग्यकल्याणकरन्दुर्भिक्षमरणापहम् ॥ २ ॥ विष्ट्यादिदुष्टकरणेव्यतीपातेचवैधृतौ ॥ वज्रेशूलेहर्षणादौयोगेतुयदिलभ्यते ॥ ३ ॥ तृतीयायुक्तपुष्यर्क्षेरविशौरिकुजेहनि ॥ तदासमस्तदोषाणान्तत्स्नानंहानिकारकम् ॥ ४ ॥ ग्रहदोषाश्चजायन्तेयदिवाज्येषुचेतयः ॥ तदापुष्यर्क्षमन्त्रेतुकुर्य्यान्मासान्तरेपिच ॥ ५ ॥ इयन्तुब्रह्मणाशान्तिरुद्दिष्टागुरवेपुरा ॥ शक्रास्यसर्व्वदेवानांशान्त्यर्थञ्चजगत्पतिः ॥ ६ ॥ तुषकेशास्थिवल्मीककीटदेशादिवर्जिते ॥ शर्क्कराकृमिकुष्माण्डम्बहुकृष्टाविवर्जिते ॥ ७ ॥ काकोलूककङ्कश्चकाकोलैर्गृध्रशोनकैः ॥ वर्जितेकण्टकिवनेविभीतकविवर्जिते ॥ ८ ॥ शिग्रुश्लेष्मातकाभ्यान्तुजलौकाद्यैर्विवर्जिते ॥ स्वस्थानेचम्पकाशोकबकुलादिविराजिते ॥ ९ ॥ हंसकारण्डवाकीर्णेसरस्तीरेथवाशुचौ ॥ पुष्यस्नानायनृपतिर्गच्छेयात्स्थानमुत्तमम् ॥ १० ॥ ततःपुरोहितोराजानानावादित्रनिःस्वनैः ॥ प्रदोषसमयेगच्छेत्तत्स्थानम्पूर्व्ववासरे ॥ ११ ॥ तस्यस्थानस्यकौबेर्य्यान्दिशिस्थित्वापुरोहितः ॥ सुगन्धचन्दनैःपानैःकर्पूरदधिवासितैः ॥ १२ ॥ गारोचनाभिःसिद्धार्थैरक्षतैःसफलादिभिः ॥ गन्धद्वारेत्यादिभिस्तुमन्त्रैःसर्व्वौधिसिक्तकैः ॥ १३ ॥ अधि

वास्यतु त्स्थानम्पूजयेत्तत्रदेवताः॥गणेशङ्केशवंशक्रम्ब्रह्माणञ्चापिशङ्करम् ॥१४॥ उमयासहितन्देवंसर्व्वाश्चगणदेवताः॥मा
तृश्चपूजयेत्तत्र नृपतिःसपुरोहितः ॥ १५ ॥ मङ्गलान्कलशान्कृत्वानानानैवेद्यसञ्चयान् ॥प्रदद्यात्पायसंस्वादुफलमोदकयाव
कौ ॥ १७॥ अधिवास्यचतत्स्थानंदूर्व्वासिद्धार्थकाक्षतैः ॥ तत्स्थानाच्चापिभूतानिसारयेन्मन्त्रमीरयन् ॥ १७ ॥ अपसर्प्प
न्तुतेभूतायेभूताभूमिपालकाः ॥ भूमिनामविरोधेनपूजाकर्म्मकरोम्यहम् ॥ १८ ॥ ततःकरौपुटीकृत्यमन्त्रेणानेनपार्थिवः ॥
आवाहयेदिमान्देवान्पूज्यान्पुष्पाभिषेकतः ॥ १९ ॥ आगच्छन्तुसुराःसर्व्वेयेत्रपूजाभिलाषिणः ॥ दिशोहिपालकाःसर्व्वेयेचा
न्येप्यंशभागिनः ॥२०॥ ततःपुष्पाञ्जलिन्दत्वापुनर्म्मन्त्रम्पठेदिमम् ॥ अद्यतिष्ठन्तुविबुधाःस्थानमासाद्यमामकम् ॥ २१॥
स्वपूजाम्प्राप्यपातारोदत्वाशान्तिम्महीभुजे ॥ तस्तान्नृपतीरात्रिन्नयेत्तुसपुरोहितः ॥ २२॥ स्वप्नेशुभाशुभव्विंद्यान्नृपस्तुस
पुरोहितः ॥ कृत्वापूजान्तुदेवानांरात्रौस्थानेनृपःस्वपेत् ॥ २३ ॥ शुभाशुभफलंस्वप्नेज्ञेयन्दोषज्ञसम्मते ॥ दुःस्वप्नदर्शनञ्चे
त्स्यात्तदापुष्पाभिषेचने ॥ २४ ॥ होमश्चतुर्ग्गणङ्कुर्य्यादत्वाचापिगवांशतम् ॥ गोवाजिकुञ्जराणान्तुप्रासादस्यगिरेस्तरोः
॥ २५ ॥ आरोहणंशुभकरंराज्यश्रीवृद्धिकारकम् ॥ दधिदेवसुवर्णानाम्ब्राह्मणस्यप्रदर्शनम् ॥ २६ ॥ वीणादुर्वाक्षतफलंपु
ष्पछत्रविलेपनम्॥शीतांशुचक्रशत्रूनाम्पद्मस्यसुहृदन्तथा ॥२७॥ लाभाःक्षयकराःशत्रौरत्नकारस्यभूभृतः॥ दर्शनञ्चोपराग

स्यनिगडेनचबन्धनम् ॥ २८ ॥ मांसस्यभोजनञ्चैवपर्व्वतस्यावर्तनम् ॥ नाभिमध्येतरूत्पत्तिम्मृतम्प्रत्यनुरोदनम् ॥ २९ ॥
अगम्यागमनङ्कूपपङ्कगर्म्भावितीर्णता ॥ पर्व्वतस्यतथानद्याःस्रोतसालङ्घनन्तथा ॥ सपुत्रमरणञ्चैवपानंरुधिरमद्ययोः ॥ ३० ॥
भोजनम्पायसस्यापिमनुष्यारोहणन्तथा ॥ ३१ ॥ कल्याणसुखसौभाग्यराज्यशत्रुक्षयन्तथा ॥ एतेःस्वप्नाःप्रकुर्व्वन्तिनृप
स्यनृपसत्तम ॥ ३२ ॥ खरोष्ट्रमहिषाणाञ्चआरोहोराज्यनाशनः ॥ नृत्यङ्गीतन्तथाहास्यंपाठश्चाप्यशुभप्रदः ॥ ३३ ॥ र
क्तवस्त्रपरीधानंरक्तमाल्यानुलेपनम् ॥ रक्ताङ्कृष्णांस्त्रियञ्चैवकामयन्मृत्युमाप्नुयात् ॥ ३४ ॥ कूपान्तरेप्रवेशःस्याद्दक्षिणाशा
गतिस्तथा ॥ पङ्केनिमज्जनंस्नानम्भार्यापुत्रविनाशनम् ॥ ३५ ॥ लाभस्तस्यभवेत्स्वप्नोनरूत्पत्तिर्नृपस्यच ॥ आदायगर्भ्भं
नाडीन्तुसकुलेयातिखन्दुनम् ॥ ३६ ॥ सतुराज्यान्तरम्प्राप्यमहाकल्याणमाप्नुयात् ॥ दीर्घंव्विँशतिहस्तन्तुहस्तषोडशवि
स्तृतम् ॥ ३७ ॥ कुर्यात्तुलक्षणोपेतय्यँज्ञमण्डलमुत्तमम् ॥ ततोपरेह्निपूर्व्वाह्णेमातॄणाम्पूजनञ्चरेत् ॥ ३८ ॥ कुव्यलग्नाव्वँ
सोधाराव्वँृद्धिश्राद्धन्तथैवच ॥ चन्दनागुरुकस्तूरीधूमकर्प्पूरचूर्णकैः ॥ ३९ ॥ सम्पूज्यमण्डलस्थानन्तस्मिन्ह्रौंशंभवेनमः ॥
अस्त्रायहुम्फडित्येवल्लिँखेन्मन्त्रद्वयम्बुधः ॥ ४० ॥ मन्त्रविन्मण्डलञ्जश्चसूत्रैःकम्बलसम्भवैः ॥ कौशेयैर्व्वास्वस्तिकाख्यम्प्र
थमम्मण्डलँल्लिखेत् ॥ ४१ ॥ चतुर्हस्तप्रमाणन्तुमण्डलव्विँलिखेत्ततः ॥ हस्तप्रमाणम्पद्मन्तुमण्डलस्यप्रकीर्त्तितम् ॥ ४२ ॥

द्वाराणिसार्द्धहस्तानिकर्णिकाकेशरोज्ज्वलम् ॥ सितंरक्तञ्चपीतञ्चकृष्णंहरितमेवच ॥ ४३ ॥ शालिचूर्णैश्चकौशुम्भैर्हारिद्रैर्ह
रिद्रवैः ॥ कुर्य्यात्तथाञ्जनैश्चूर्णैराजामण्डलवृद्धये ॥ ४४ ॥ पद्मान्ततःसमारभ्यतालम्पश्चिमगामिनम् ॥ पश्चिमद्वारम
ध्येचचतुर्हस्तव्विंनिर्दिशेत् ॥ ४५ ॥ प्रत्येकन्द्वारमध्येतुपद्मंचैवाष्टपत्रकम् ॥ कुर्य्यान्मण्डलभागज्ञश्चूर्णैरेवपृथक्पृथक् ॥
॥ ४६ ॥ चूर्णैस्तुमण्डलङ्कृत्वासूत्राण्युत्सारयेत्ततः ॥ उत्साय्यंसूत्रंप्रथमम्मण्डलम्पूजयेत्ततः ॥ ४७ ॥ भवनायनमइतिततो
हस्तव्विंयोजयेत् ॥ सव्यावलम्बहस्तन्तुरजःपातंसमाचरेत् ॥ ४८ ॥ मध्यमानामिकाङ्गुष्ठैरुपरिष्टाद्यथेच्छया ॥ अधो
मुखाङ्गुलीङ्कृत्वापातयेच्चविचक्षणः ॥ ४९ ॥ समारेखातुकर्त्तव्याविच्छिन्नापुष्परञ्जिता ॥ अङ्गुष्ठपर्व्वनैपुण्यात्समाकार्य्या
विजानता ॥ ५० ॥ संशक्तव्विषमंस्थूलव्विंछिन्नङ्कृशंतथाकृतम् ॥ पर्य्यन्तमपिंपतंह्रस्वमालिखेन्नकदाचन ॥ ५१ ॥ संश
क्तेकलहव्विंद्याद्दूर्द्धरेखेतुविग्रहम् ॥ अतिस्थूलेभवेद्व्याधिर्न्नित्यम्पीडाविनिश्रिते ॥ ५२ ॥ बिन्दुभिर्भयमाप्नोतिशत्रुपक्षान्नसं
शयः ॥ कृशायाञ्चार्थहानिःस्याच्छिन्नायाम्मरणन्ध्रुवम् ॥ ५३ ॥ वियोगोवाभवेत्तस्यइष्टद्रव्यसुतस्यवा ॥ अविदित्वालि
खेद्यस्तुमण्डलन्तुयथेच्छया ॥ ५४ ॥ सर्व्वदोषानवाप्नोतियेदोषाःपूर्व्वमीरिताः ॥ सितसर्षपदूर्व्वाभ्यांरेखाःकार्याविजान
ता ॥ ५५ ॥ विमलव्विंजयम्भद्रव्विंमानंशुभदंशिवम् ॥ वर्द्धमानञ्चदेवञ्चशताक्षङ्कामदायकम् ॥ ५६ ॥ रुचिकंस्वस्तिक

श्चैवद्वादशैतेतुमण्डलाः ॥ यथास्थानय्यँथायज्ञय्यँोजनीयाद्विचक्षणैः ॥ ५७ ॥ सागरेमथ्यमानेतुपीयूषार्थंसुरोत्करैः ॥ पी
यूषधारणार्थायनिर्म्मिताविश्वकर्म्मणा ॥ ५८ ॥ कलाङ्कलान्तुदेवानाम्मसित्वातेपृथक्पृथक् ॥ यतःकृतास्तुकलशास्ततस्ते
परिकीर्त्तिताः ॥ ५९ ॥ नवैवकलशाःप्रोक्तानामतस्तान्निबोधत ॥ गोह्योपगोह्योमरुतोमयूखश्चतथापरः ॥ ६० ॥ मनो
हाचार्यभद्रश्चविजयस्तनुदूषकः ॥ इन्द्रियघ्नोथविजयोनवमःपरिकीर्त्तितः ॥ ६१ ॥ तेषामेवक्रमाद्रूपनवनामानियानितु ॥
शृणुतान्यपराण्येवशान्तिदानिसदैवहि ॥ ६२ ॥ क्षितीन्द्रःप्रथमःप्रोक्तोद्वितीयोजनसम्भवः ॥ पवनाग्नीततोद्वेतुयजमान
स्ततःपरः ॥ ६३ ॥ कोषसम्भवनाम्न्यांतुषष्ठःसपरिकीर्त्तितः ॥ सोमस्तुसप्तमःप्रोक्तआदित्यस्तुतथाष्टमः ॥ ६४ ॥
विजयोनामकलशोयोसौनवमउच्यते ॥ सतुपञ्चमुखःप्रोक्तोमहादेवस्वरूपधृक् ॥ ६५ ॥ घटस्यपञ्चवक्त्रेपुपञ्चवक्त्रः
स्वयन्तथा ॥ यथाकाष्ठांस्थितःसम्यग्वामदेवादिनामतः ॥ ६६ ॥ मण्डलस्यतुपश्चान्तःपञ्चवक्त्राङ्कटन्न्यसेत् ॥ क्षिती
न्द्रम्पूर्व्वतोन्यस्यपश्चिमेजलसम्भवम् ॥ ६७ ॥ वायव्येवायवन्न्यस्यआग्नेयेत्वग्निसम्भवम् ॥ नैर्ऋत्येयजमानन्तुऐ
शान्याङ्कोषसम्भवम् ॥ ६८ ॥ सोममुत्तरतोयोज्यंसौरंदक्षिणतोन्यसेत् ॥ न्यस्यैवङ्कलशाँश्चैवतेपुचैतान्विचिन्तये
त् ॥ ६९ ॥ कलशानाम्मुखेब्रह्माग्रीवायांशङ्करस्थितः ॥ मूलेतुसंस्थितोविष्णुर्मध्येमातृगणाःस्थिताः ॥ ७० ॥ दिक्पा

लादेवताःसर्व्वाविष्टयन्तिदिशोदश ॥ कुक्षौतुसागराःसप्तसप्तद्वीपाश्चसंस्थिताः ॥ ७१ ॥ नक्षत्राणिग्रहाःसर्व्वेतथैवकुल
पर्व्वताः ॥ गङ्गाद्याःसरितःसर्व्ववेदाश्चत्वारएवच ॥ ७२ ॥ कलशेसंस्थिताःसर्व्वेतेषुतानिविचिन्तयेत् ॥ रत्नानिसर्व्वबीजा
निपुष्पाणिचफलानिच ॥ ७३॥ वज्रमौक्तिकवैदूर्य्यमहापद्मेन्द्रस्फाटिकैः ॥ सर्व्वधाममयम्बिल्वन्नागरोदुम्बरन्तथा ॥ ७४ ॥
बीजपूरकजम्बीरकाश्मीराम्रातदाडिमान् ॥ यवंशालिञ्चनीवारङ्गोधूमंसितसर्षपम् ॥ ७५ ॥ कुङ्कुमागुरुकर्प्पूरमदनंरोचन
न्तथा ॥ चन्दनञ्चतथामांसीमेलाङ्कुष्ठन्तथैवच ॥ ७६ ॥ कस्तूरिपत्रचूर्णञ्चजलनिर्य्यासकाम्बुदम् ॥ शैलेयम्बदरञ्जातीप
त्रपुष्पेतथैवच ॥ ७७॥ कालशाकन्तथापृक्कांदेवीपर्णकमेवच ॥ वचान्धात्रींसमञ्जिष्टान्तुरुष्कम्मङ्गलाष्टकम् ॥ ७८॥ दूर्व्वांमो
हनिकाम्भद्रांशतमूलींशतावरीम्॥वर्णांनांसरलाङ्कुद्रांसहदेवाङ्गजाह्वयाम् ॥७९॥ पूर्णकोषांसिताम्पीठाङ्कुञ्चांशिरसिकानलो
॥ ८० ॥ व्यामकङ्गजदन्तञ्चशतपुष्पाम्पुनर्न्नवाम् ॥ ब्राह्मींदेवींशिवांरुद्रांसर्व्वसन्धानिकान्तथा ॥ ८१॥ समाहृत्यशुभानेता
न्कलशेषुनिधापयेत् ॥ कलशस्ययथादेशव्विधिंशम्भुङ्गदाधरम् ॥८२ ॥ यथाक्रमम्पूजयित्वाशम्भुंमुख्यतयायजेत् ॥ प्रासा
देनतुमन्त्रेणशम्भुतन्त्रेणशङ्करम् ॥ ८३ ॥ प्रथमम्पूजयेन्मध्येनानानैवेद्यवेदनैः ॥ दिक्पालानाङ्घटेष्वेवदिक्पालानपिपूज
येत् ॥ ८४ ॥ पूर्व्वबहिःस्थापितेषुग्रहाणाङ्कलशेषुच ॥ नवग्रहान्पूजयेत्तुमातृर्म्मातृघटेषुच ॥ ८५ ॥ सर्व्वेदेवाघटेपूज्याःघ

१ पत्रचन्द्रश्च इ०पा० । २ पृक्काशाकविशेषः ।

टास्तेषाम्पृथक्पृथक् ॥ नवैवतत्रपूर्व्वोक्ताःस्मृतामुख्यतयानृप ॥८६॥ भक्ष्यैर्भोज्यैश्चपेयैश्चपुष्पैर्न्नानाविधैःफलैः ॥ यावकैः
पायसैश्चैवयथासम्भवयोजितैः ॥ ८७ ॥ पुष्पस्नानायनृपतिःपूजयेत्सकलान्सुरान् ॥ दक्षिणेमण्डलस्याथकुण्डन्निर्म्मायपा
यसैः ॥ ८८ ॥ समिद्भिःशालिसिद्धार्थैर्घृतैर्दूर्व्वाक्षतैस्तथा ॥ केवलैश्चतथैवाज्यैःपूजितान्सकलान्सुरान् ॥८९॥ होमेनतोष
येद्भूद्वयैर्नृपःसार्त्विक्पुरोहितः ॥ होमान्तेमण्डलोदीच्यांवेदिकायांसपट्टकम् ॥ ९० ॥ रोचनाख्यमलङ्कारांस्तथासर्व्वान्नियोज
येत् ॥ वृद्धावङ्गुलमङ्गुल्याषड्विंशाङ्गुलिकावधि ॥ ९१ ॥ वृत्तंवाचतुरस्रंवापद्मन्त्रिकोणसञ्ज्ञकम् ॥ रत्नेशान्पद्ममध्येतु
गोमुष्टिकविनायकैः ॥ ९२ ॥ श्रीश्रीवृक्षवरारोहामुमादेवींशुभान्विताम् ॥ रत्नैःसर्व्वैरलङ्कारैःपट्टङ्कार्य्यन्द्विहस्तकम् ॥ ९३ ॥
हस्तविस्तारमुच्छ्रायन्नवहस्तन्दशाङ्गुलम् ॥ स्नानार्थंसार्द्धहस्तञ्चपट्टंवृत्तङ्गुणान्वितम् ॥ ९४ ॥ शय्याचतुर्गुणादीर्घाधनु
र्म्मानन्तुपीठकम् ॥ गजसिंहकृताटोपंहेमरत्नविभूषितम् ॥ ९५ ॥ सिंहाख्यंसार्द्धविस्ताराद्दण्डासनमथापिवा ॥ व्याघ्रचित्र
कपट्टैर्वाउपधानानिकारयेत् ॥ ९६ ॥ अन्यैर्व्वानिर्मितैश्चर्म्मसृदुतूलकपूरिता ॥ शय्यादीर्घार्द्धविस्तीर्णाचतुर्हस्तासुलक्ष
णा ॥ ९७ ॥ वितस्त्यधिकमिच्छन्तिनृपस्यगुरुविद्यया ॥ अर्द्धचन्द्रसमङ्कुर्य्यादासनञ्चतुरस्रकम् ॥ ९८ ॥ उपधानानिश
य्यायाःकर्णादिमूलभेदतः ॥ षोडशैवात्रकार्य्याणिवर्णचित्रयुतानिच ॥ ९९ ॥ यानंसिंहासनम्पट्टंशय्योपकरणादिकम् ॥ रा

ज्ञोनूतनयोग्यन्तद्वेद्या उत्तरतोन्यसेत् ॥ १०० ॥ तेषान्तुपश्चिमेस्वर्णरत्नौघखचितेवरे ॥ पर्य्यङ्केयज्ञदार्व्वोघनिर्म्मितेम
हदास्तरे ॥ १ ॥ उर्द्ध्वाच्छादनसंय्युक्तेचर्म्मावृतचतुष्टये ॥ वृषभस्यतथोर्णायाःसिंहशार्दूलयोरपि ॥ २ ॥ पादपी
ठेरत्नयुतेपादावारोप्यपार्थिवः ॥ तस्मिन्पर्यङ्कपीठस्थेचर्म्मखड्गचतुष्टये ॥ ३ ॥ नानालङ्कारभूषाढ्यन्नृपतिंरत्नशालिनम् ॥
स्नापयेद्ब्राह्मणैःसार्द्धंराजानंसुखसंङ्गतम् ॥ ४ ॥ सर्व्वौतकम्बलंकृष्णंम्बहुवस्त्रैश्चशोभितम् ॥ कलशैर्ब्बलिपुष्पाद्यैःशा
लिचूर्णैश्चस्नापयेत् ॥ ५ ॥ अष्टौषोडशविंशाष्टशतमष्टाधिकञ्चवा ॥ कलशानांसमाख्याताअधिकस्योत्तरोत्तरम् ॥
॥ ६ ॥ जयकल्याणदैर्म्मन्त्रैर्म्मङ्गलोत्थैश्चशाम्भवैः ॥ वैष्णवैरथदिक्पालैर्ग्ग्रहमन्त्रैश्चमातृकैः ॥ ७ ॥ आज्यन्तेजःसमुद्दिष्ट
माज्यम्पापहरंपरम् ॥ आज्यंसुराणामाहारमाज्येलोकाःप्रतिष्ठिताः ॥ ८ ॥ भौमान्तरिक्षदिव्यव्वायत्तेकल्मषमागतम् ॥
सर्व्वन्तदाज्यसंस्पर्शात्प्रणाशमुपगच्छतु ॥ ९ ॥ततोपनीयगात्रात्तुकम्बलव्वस्त्रमेवच ॥ कलशैःस्नापयेद्भूपपुष्पस्नानायपूरि
तैः ॥ ११० ॥ एभिर्म्मन्त्रैर्न्नरश्रेष्ठतनुतत्त्वार्थसाधकैः ॥ सुरास्त्वामभिषिञ्चन्तुयेचसिद्धाःपुरातनाः ॥ ११ ॥ ब्रह्माविष्णुश्चरु
द्रश्चसाध्याश्चसमरुद्गणाः ॥ आदित्यावसवोरुद्राआश्विनेयौभिषग्वरौ ॥ १२ ॥ अदितिर्देवमाताचस्वाहालक्ष्मीःसरस्वती ॥
कीर्तिर्ल्लक्ष्मीर्धृतिःश्रीश्चसिनीवालीकुहूस्तथा ॥ १३ ॥ दितिश्चसुरसाचैवविनताकद्रुरेवच ॥ देवपत्न्यश्चयाःप्रोक्तादेवमातर

१ संस्थितमितिवापाठः । २ हृष्टामितिपाठः ।

एवच ॥ १४ ॥ सर्व्वास्त्वामभिषिञ्चन्तुसिद्धाश्चाप्सरसाङ्गणाः ॥ नक्षत्राणिमुहूर्ताश्चपक्षाहोरात्रसन्धयः ॥ १५ ॥ सर्व्वेस
रानिमेषाश्चकलाःकाष्ठाःक्षणालवाः॥ सर्व्वेत्वामभिषिञ्चन्तुकालस्यावयवास्तथा॥१६॥ वैमानिकाःसुरगणामनवःसागरैः
सह॥ सरितश्चमहानागानागाःकिम्पुरुषास्तथा ॥ १७॥ वैखानसामहाभागाद्विजावैहायसाश्चये ॥ सप्तर्षयःसदाराश्चध्रु
वस्थानानियानितु ॥ १८ ॥ मरीचिरत्रिःपुलहःपुलस्त्यःक्रतुरङ्गिराः ॥ भृगुःसनत्कुमारश्चसनकश्चसनन्दनः॥ १९ ॥ सनात
नश्चदक्षश्चजैगीषव्योभिनन्दनः ॥ एकतश्चद्वितश्चैवत्रितोजाबालिकाश्यपौ ॥ २० ॥ दुर्व्वासादुर्विनीतश्चकण्वःकात्यायन
स्तथा ॥मार्कण्डेयोदीर्घतपाःशुनःशेपोविदूरथः ॥ २२ ॥ और्व्वःसँवर्त्तकश्चैवच्यवनोत्रिःपराशरः ॥ द्वैपायनोयवक्रीतोदेव
रातःसहात्मजः ॥२३॥ एतेचान्येचबहवोवेदव्रतपरायणाः ॥ सशिष्यास्तेभिषिञ्चन्तुसदाराश्चतपोधनाः ॥२४॥ पर्व्वतास्तर
वोनद्यःपुण्यान्यायतनानिच ॥ प्रजापतिःक्षितिश्चैवगावोविश्वस्यमातरः ॥२५॥ वाहनानिचदिव्यानिसर्व्वेलोकाश्चराचराः २९६
॥ अग्नयःपितरस्ताराजीमूताःखन्दिशोजलम् ॥ २६ ॥ एतेचान्येचबहवःपुण्यसङ्कीर्त्तनाःशुभाः ॥ तोयैस्त्वामभिषिञ्चन्तुस
र्व्वोत्पातनिबर्हणैः ॥२७॥इत्येवंशुभदैरेतैर्दिव्यैर्म्मन्त्रैस्तथापरैः॥शौरैर्न्नारायणैरौद्रैर्ब्रह्मशक्रसमुद्भवैः ॥२८॥ आपोहिष्ठाहिर
ण्येतिसम्भवेतिसुरेतिच॥मानस्तोकेतिमन्त्रेणगन्धद्वारेत्यनेनच॥२८॥सर्व्वमङ्गलमाङ्गल्येश्रीश्चतेग्रहयोगिभिः॥ इत्येवंस्त्वा

नमासाद्यगात्रमावृत्यकम्बलैः ॥ २९ ॥ सर्व्वमङ्गलमन्त्रेणवस्त्रङ्कार्प्पासकन्धियात् ॥ आचम्यचततोदेवान्गुरूंविप्रांश्चपूज
येत् ॥ ३० ॥ ध्वजञ्छत्रञ्चामरञ्चघण्टाञ्चाश्वान्गजांस्तथा ॥ मन्त्रञ्जप्त्वाधारयेत्तुततोगच्छेद्धुताशनम् ॥ ३१ ॥ तत्रग
त्वावह्निमध्येवह्नेःश्रीर्व्वीक्ष्यपार्थिवः ॥ सुनिमित्तानिमित्तानिलक्षयेत्तत्रबिन्दुभिः ॥ ३२ ॥ दैवज्ञकञ्चुक्यमात्यबन्दि
पौरजनैर्वृतः ॥ वादित्रघोषैस्तुमुलैस्तथातौर्य्यत्रिकैःशुभैः ॥ ३३ ॥ कृत्वाशेषेपुनःशान्तिमाशीर्व्वाच्यचवैद्विजान् ॥ पूर्णा
व्विधायविधिवद्दक्षिणाङ्कनकान्विताम् ॥ ३४ ॥ धान्यानिचाथवासांसिदत्त्वाकुर्य्याद्विसर्ज्जनम् ॥ ततःशेषजलैःसर्व्वा
नामात्यादीन्पुरोहितः ॥ ३५ ॥ सेचयेच्चतुरङ्गञ्चबलञ्चापिसराष्ट्रकम् ॥ एवङ्कृत्वानृपःपश्चात्त्रिरात्रंसंयतोभवेत् ॥ ३६ ॥
मांसमैथुनहीनश्चकुर्य्यान्माङ्गल्यसेवनम् ॥ पुष्पनक्षत्रयुक्तातुतृतीयायदिलभ्यते ॥ ३७ ॥ तस्याम्पूज्यासदादेवीचण्डिका
शङ्करेणह ॥ पञ्चालिकाविहाराद्यैःशिशूनाङ्कौतुकैस्तथा ॥ ३८ ॥ वैवाहिकेनविधिनामोहयेच्चण्डिकांशिवाम् ॥ चतुष्पथे
षुसर्व्वेषुदेवदेवीगृहेषुच ॥ ३९ ॥ पताकाभिरलङ्कुर्य्याद्देवंकुर्वन्नसीदति ॥ एवङ्कृत्वाशान्तियागन्तथापुष्पाभिषेचनम् ॥ ४० ॥
चतुरङ्गैःसमंराजाभार्य्याभिस्तनयैस्सह ॥ राज्यमण्डलसंयुक्तःपरत्रेहनसीदति ॥ ४१ ॥ नातःपरतरोयज्ञोनातःपरत
रोत्सवः ॥ नातःपरतराशान्तिर्न्नातःपरतरंशिवम् ॥ ४२ ॥ अनेनैवविधानेननृपतेरभिषेचनम् ॥ युवराज्याभिषेकञ्चकुर्य्या

१ वह्निभिरितिपाठः । २ अन्तःपुररक्षकःकञ्चुकी । ३ कन्यापुत्तलिकाप्रसिद्धा ।

द्राजपुरोहितः ॥ ४३ ॥ नृपाभिषेककरणमादौयदिसमाचरेत् ॥ अनेनैवविधानेनस्थिरःस्यान्नृपतिस्तदा ॥ ४४ ॥ अय
ध्यैञ्ज्ञःसमुद्दिष्टःशक्रार्थंब्रह्मणःपुरा ॥ एवय्यँज्ञन्नृपः कृत्वापरत्रेहनसीदति ॥ ४५ ॥ इतिश्रीकालिकापुराणेएकोननवतितमो
ध्यायः ॥८९॥ और्वउवाच ॥ अथातःशृणुराजेन्द्रशक्रोत्थानंध्वजोत्सवम् ॥ यत्कृत्वानृपतिर्य्यातिनकदाचित्पराभवम् ॥ १ ॥
रवौहरिस्थेद्वादश्यांश्रवणेनबिडौजसम् ॥आराधयेन्नृपःसम्यक्सर्व्वविघ्नोपशान्तये ॥ २ ॥ राजोपरिचरोनामवसुनामापरस्तु
यः ॥ नृपस्तेनायमतुलोयज्ञःप्रावर्त्तितःपुरा ॥ ३ ॥ प्रावृट्कालेचतमसिद्वादश्यामसितेतरे ॥ पुरोहितोबहुविधैर्व्वाद्यैस्तू
र्णैःसमन्वितः ॥ ४ ॥ प्रथमंशक्रकेत्वर्थंव्वृक्षमामन्त्र्यवर्द्धयेत् ॥ सोव्वँःसरोवार्द्धकिश्चकृतमङ्गलकौतुकः ॥ ५ ॥ उद्यानेदे
वतागारेश्मशानेमार्गमध्यतः ॥ येजातास्तरवस्तांस्तुवर्जयेद्वासवध्वजे ॥ ६ ॥ बहुवल्लीयुतंशुष्कम्बहुकण्टकसय्युँतम् ॥ कु
ब्जव्वृक्षादनीयुक्तल्लताछन्नन्तरुन्त्यजेत् ॥ ७ ॥ पक्षिवाससमाकीर्णङ्कोटरैर्ब्बहुभिर्य्युतम् ॥ पवनानलविध्वस्तन्तरुय्यँत्नेन
वर्ज्जयेत् ॥ ८ ॥ नारीसञ्ज्ञाश्चयेवृक्षाअतिह्रस्वाअतिकृशाः ॥ तान्त्सदावर्ज्जयेद्धीरःसर्व्वदाशक्रपूजने ॥ ९ ॥ अर्ज्जुनोप्यश्वकः
र्णश्चप्रियकोषवएवच ॥ औदुम्बरश्चपञ्चैतेकेत्वर्थेत्युत्तमाःस्मृताः ॥ १० ॥ अन्येचदेवदार्व्वाद्याःशालाद्यास्तरवस्तथा ॥ प्र
शस्तास्तुपरिग्राह्यानाप्रशस्ताःकदाचन ॥ ११ ॥ धृत्वावृक्षन्ततोरात्रौस्पृष्ट्वामन्त्रमिमम्पठेत् ॥ यानिवृक्षेषुभूतानितेभ्यः

१ गणकः । २ सालभेदः । ३ वांझीतिदशभषा ४ तश्चेतिपाठोवा ।

स्वस्तिनमोस्तुवः ॥१२॥ उपहारङ्गृहीत्वेमङ्क्रियताव्वाँसवध्वजम् ॥ पार्थिवस्त्वाव्वँरयतेस्वस्तितेस्तुनगोत्तम ॥१३॥ ध्वजा
र्थन्देवराजस्यपूजेयम्प्रतिगृह्यताम् ॥ ततोपरेह्नितच्छित्वामूलमष्टाङ्गुलम्पुनः ॥ १४ ॥ जलेक्षिपेत्तथाग्रस्यछित्त्वैवच
तुरङ्गुलम् ॥ ततोनीत्वापुरद्वारङ्केतुन्निर्म्मापयतत्रवै ॥ १५ ॥ शुक्लाष्टम्याम्भाद्रपदेकेतुव्वँदीम्प्रवेशयेत् ॥ द्वाविंशद्धस्तमा
नस्तुअधमःकेतुरुच्यते ॥ १६ ॥ द्वात्रिंशत्तुततोज्यायान्द्वाचत्वारिंशदेवच ॥ ततोधिकःसमाख्यातोद्वापञ्चाशत्तथो
त्तमः ॥ १७॥ कुमार्य्यःपञ्चकर्त्तव्याःशक्रस्यनृपसत्तम ॥ शालमय्यस्तुताःसर्व्वाअपराःशक्रमातृकाः ॥ १८ ॥ के
तोःपादप्रमाणेनकार्य्याःशक्रकुमारिकाः ॥ मातृकार्द्धप्रमाणन्तुयन्त्रहस्तद्वयन्तथा ॥ १९ ॥ एवङ्कृत्वाकुमारीश्चमातृ
काःकेतुमेवच ॥ एकादश्यांसितेपक्षेयष्टिन्तामधिवासयेत् ॥ २० ॥ अधिवास्यततोयष्टिङ्गन्धद्वारादिमन्त्रकैः ॥ द्वाद
श्याम्मण्डलङ्कृत्वावासवव्विँस्तृतात्मकम् ॥ २१ ॥ अच्युतम्पूजयित्वातुशक्रम्पश्चात्प्रपूजयेत् ॥ शक्रस्यप्रतिमाङ्कुर्य्या
त्काञ्चनीन्दारवीञ्चवा ॥ २२ ॥ अन्यतैजससम्भूतांसर्व्वाभावेतुमृन्मयीम् ॥ ताम्मण्डलस्यमध्येतुपूजयित्वाविशेषतः ॥२३॥
ततःशुभेमुहूर्तेतुकेतुमुत्थापयेन्नृपः ॥ वज्रहस्तसुरारिघ्नबहुनेत्रपुरन्दर ॥ २४ ॥ क्षेमार्थंसर्व्वलोकानाम्पूजेयम्प्रतिगृह्यताम् ॥
एह्येहिसर्व्वामरसिद्धसङ्घैरभिष्टुतोवज्रधरामरेश ॥ समुत्थितस्त्वंश्रवणाद्यपादेगृहाणपूजाम्भगवन्नमस्ते ॥ २५ ॥ एवमु

त्तरतन्त्रोक्तैर्दहनप्लवनादिभिः ॥ २६॥ इतिमन्त्रेणतन्त्रेणनानानैवेद्यवेदनैः ॥ अपूपैःपायसैःपानैर्गुडैर्द्धानाभिरेवच ॥ २७॥
भक्ष्यैर्भोज्यैश्चविविधैःपूजयेच्छ्रीविवृद्धये ॥ घटेषुदशदिक्पालान्ग्रहाँश्चपरिपूजयेत्॥२८॥ साध्यादीन्सकलान्देवान्मातॄःस
र्व्वाअनुक्रमात् ॥ ततःशुभेमुहूर्त्तेतुज्ञानीवर्द्धकिसंयुतः ॥ २९ ॥ केतूत्थापनभूमिन्तुयज्ञवेद्यास्तुपश्चिमे ॥ विप्रैःपुरोहितैः
सार्द्धङ्गच्छेद्राजासुमङ्गलैः ॥ ३० ॥ रज्जुभिःपञ्चभिर्ब्बद्धयन्त्रश्लिष्टंसमातृकम् ॥ कुमारीभिस्तुसंयुक्तन्दिक्पालानाञ्चपट्ट
कैः ॥ ३१ ॥ बृहद्भिरतिकान्तैश्चनानाद्रव्यैःसुपूरितैः ॥ यथावर्णैर्य्यथादेशेयोजितैर्व्वस्त्रवेष्टितैः ॥३२॥ युक्तन्तंकिङ्किणीजा
लैर्ब्बृहद्घण्टौघचामरैः ॥ भूषितम्मुकुरैरुच्चैर्म्माल्यैर्ब्बहुविधैस्तथा ॥ ३३ ॥ बहुपुष्पैःसुगन्धैश्चभूषितंरत्नमालया ॥ चित्रमा
ल्याम्बरैश्चैवचतुर्भिरपितोरणैः ॥ ३४ ॥ उत्थापयेन्महाकेतुंराजकीयःशनैःशनैः ॥ तमुत्थायमहाकेतुम्पूजितम्मण्डलान्तरे
॥३५॥ प्रतिमान्तान्नयेन्मूलङ्केतोःशक्रव्विंचिन्तयन् ॥ यजेत्तम्पूर्व्ववत्तत्रशचीम्मातलिमेवच ॥३६॥ जयन्तन्तनयन्तस्यवज्र
मैरावतन्तथा ॥ ग्रहाँश्चाप्यथदिक्पालान्सर्व्वाश्चगणदेवताः ॥३७॥ अपूपाद्यैःपूजयेत्तुबलिभिःपायसादिभिः॥पूजितानाञ्च
देवानांशश्वद्धोमंसमाचरेत्॥३८॥ होमान्तेतुबलिन्दद्याद्वासवायमहात्मने ॥ तिलञ्चतण्डुलञ्चाक्षतञ्चपुष्पन्दूर्व्वान्तथैवच ॥ ३९॥
एतैस्तुजुहुयाद्देवान्स्वैःस्वैर्म्मन्त्रैर्न्नरोत्तम ॥ ततोहोमावसानेतुभोजयेद्ब्राह्मणानपि ॥ ४० ॥ एवंसम्पूजयेन्नित्यंसप्तरात्र

न्दिनेदिने ॥ ब्राह्मणैःसहितोराजावेदवेदाङ्गपारगैः ॥४१॥ सर्व्वत्रशक्रपूजासुयज्ञेषुपरिकीर्त्तितः ॥ त्रातारमितिमन्त्रोयर्व्वा
सवस्यप्रियःपरः ॥४२॥ एवङ्कृत्वादिवाभागेशक्रोत्थापनमादितः ॥ श्रवणर्क्षयुतायान्तुद्वादश्याम्पार्थिवःस्वयम् ॥ ४३ ॥
अन्तपादेभरण्यान्तुनिशिशक्रव्विँसर्ज्जयेत् ॥ सुप्तेषुसर्व्वलोकेषुयथाराजानपश्यति ॥४४॥ षण्मासान्मृत्युमाप्नोतिराजादृष्ट्वा
विसर्ज्जनम् ॥ शक्रस्यनृपशार्दूलतस्मान्नेक्षेतत न्नृपः ॥४५॥विसर्ज्जनस्यमन्त्रोयम्पुराविद्भिरुदीरितः ॥ सार्द्धंसुरासुरगणैःपुर
न्दरशतक्रतो॥४६॥उपहारङ्गृहीत्वेमम्महेन्द्रध्वजगम्यताम् ॥ सूतकेतुसमुत्पन्नेवारेभौमस्यवाशनेः॥ ४७ ॥भूमिकम्पादिको
त्पातेवासवन्नविसर्ज्जयेत् ॥ उत्पातेसप्तरात्रन्तुतथोपप्लव दर्शने ॥४८॥ व्यतीत्यशनिभौमौचत्वन्यर्क्षेपिविसर्ज्जयेत् ॥ सूतके
त्वथसम्प्राप्तेव्यतीतेसूतकेपुनः॥४९॥यस्मिँस्तस्मिन्दिनेचैवसूतकान्तेविसर्ज्जयेत् ॥ तथाकेतुन्नृपोरक्षेत्पतन्तिशाकुनायथा
॥५०॥नकेतौनृपशार्दूलयावन्नहिविसर्ज्जनम् ॥ शनैःशनैःपातयेत्तुयथोत्थापनमादितः ॥ ५१ ॥ कृतन्तथान्यथाभग्नेकेतौमृ
त्युमवाप्नुयात् ॥ विसृष्टंशक्रकेतुन्तुसालङ्कारन्तथानिशि॥५२॥क्षिपेदनेनमन्त्रेणत्वगाधेसलिलेनृप॥तिष्ठकेतोमहाभागयाव
त्सव्वँत्सरञ्जले ॥५३॥ भवायसर्व्वलोकानामन्तरायविनाशक ॥उत्थापयेत्तूर्य्यरवैःसर्व्वलोकस्यवैपुरः ॥ ५४ ॥ रहोविसर्ज्ज
येत्केतुव्विँशेषोयम्प्रपूजने ॥ एवय्यँःकुरुतेपूजाव्वाँसवस्यमहात्मनः॥ ५५॥ सचिरम्पृथिवीम्भुक्त्वावासवल्लँोकमाप्नुयात् ॥

नतस्यराज्येदुर्भिक्षन्नाधयोव्याधयःक्वचित् ॥५६॥ स्थास्यन्तिमृत्युर्न्नाकालेजनानान्तत्रजायते ॥ तत्तुल्यःकोपिनान्योस्ति प्रियःशक्रस्यपार्थिवः ॥ तस्यपूजासर्व्वपूजाकेशवाद्याश्चतत्रगाः ॥ ५७ ॥ सकलकलुषहारिव्याधिदुर्भिक्षनाशंसकलभवनिवेशंसर्व्वसौभाग्यकारि ॥ सुरपतिगृहगाभिर्व्वाञ्छनंशक्रकेतोःप्रतिशरदमनेकैःपूजयेच्छ्रीविवृद्ध्यै ॥५८॥ ॥ इतिश्रीकालिकापुराणेनवतितमोध्यायः॥ ॥ ९० ॥

॥ और्व्वउवाच ॥

॥ ज्येष्ठेदशहारयान्तुविष्णोरिष्टिन्नृपशृणु ॥ येनवाविधिनाकुर्य्यादिष्टिव्विँष्णोर्नृपःसदा ॥१॥ प्रत्यब्दम्पार्थिवःकुर्य्यात्प्रतिमाङ्काञ्चनींहरेः ॥ अन्यतेजोमयीव्वाँपिदारवीव्वाँशिलामयीम् ॥२॥ ताम्प्रतिष्ठाप्यविधिनामानोन्मानैस्तुशिल्पिभिः ॥ प्रतिष्ठाव्विँधिवत्तस्याःकुर्य्याद्विप्रैःपुरोहितैः ॥३॥ तांसंस्थाप्यसुरागारेस्वयंव्वाँयत्नतःकृते ॥ वासुदेवस्यबीजेनपूर्व्वोक्तविधिनातथा ॥ ४ ॥ सर्व्वोपचारैर्भक्त्यातुवासुदेवंप्रपूजयेत् ॥ पूजान्तेसंस्कृतेवह्नौकुण्डमध्येस्थितोद्विजः ॥५॥ आज्यैःसहस्रञ्जुहुयादाहुतीनांहरेःप्रिये ॥ सम्पूज्यवासुदेवन्तुहोमङ्कृत्वाततोद्विजः ॥ ६ ॥ नृपस्यानुमतेतान्तुप्रतिमांमण्डलन्नयेत् ॥ प्रतिमायाःकपोलौद्वौस्पृष्ट्वादक्षिणपाणिना ॥ ७ ॥ प्राणप्रतिष्ठाङ्कुर्व्वीततस्यान्देवस्यवैहरेः ॥ कृतायान्तुप्रतिष्ठायाम्प्राणानांनृपसत्तम ॥८॥ विष्णुप्राणास्ताम्प्रतिमामायांतिनियतंस्वयम् ॥ प्राणेष्वथागतेष्वस्यादेवत्वन्नियतम्भवेत् ॥ ९ ॥ अकृतायाम्प्रतिष्ठायाम्प्राणानाम्प्रतिमासुच ॥ यथापूर्व्वन्तथाभावःस्वर्णा

दीनान्नविष्णुता ॥ १० ॥ अन्येषामपिदेवानाम्प्रतिमास्वपिपार्थिव ॥ प्राणप्रतिष्ठाकर्तव्यातस्यादेवत्वसिद्धये ॥ ११ ॥सु
वर्ण्णन्तुसुवर्ण्णंस्याच्छिलादारुतथाशिला ॥ अन्यच्चस्वस्वरूपंस्यात्प्राणस्थानमृतेसदा ॥१२॥ वासुदेवस्यबीजेनतद्विष्णोरि
त्यनेनच ॥ तथैवाङ्गाङ्गिमन्त्राभ्याम्प्रतिष्ठामाचरेद्धरेः ॥१३॥ तथैवहृदयेङ्गुष्ठन्दत्वाशश्वच्चमन्त्रवित् ॥ एभिर्म्मन्त्रैःप्रतिष्ठाप्य
हृदयेऽपिसमाचरेत् ॥१४ ॥ अस्यैप्राणाःप्रतिष्ठन्तुअस्यैप्राणाःक्षरन्तुयत् ॥असौदेवत्वसङ्ख्यायैस्वाहेतियजुरुच्चरन् ॥१५॥ अ
ङ्गमन्त्रैरङ्गिमन्त्रैर्व्वैदिकैरित्यनेनच ॥ प्राणप्रतिष्ठांसर्व्वत्रप्रतिमासुसमाचरेत् ॥ १६ ॥ प्रतिमापूजनेकुर्य्यादात्मन्यपिचमन्त्र
वित् ॥ प्राणप्रतिष्ठाम्प्रथमम्पूजाभागविशुद्धये ॥ १७ ॥ अस्मिन्प्राणप्रतिष्ठान्तुप्रतिमापूजनादृते ॥ नकश्चित्तुबुधःकुर्य्या
त्कृत्वामृत्युमवाप्नुयात् ॥ १८ ॥ विष्णोरिष्टिमिमाङ्कृत्वादशम्याम्पार्थिवोत्तमः ॥ तस्यामेवतुपूर्णायाम्प्रतिमांस्थापयेत्ततः
॥ १९ ॥ एवन्दशहरायान्तुकृत्वेष्टिम्पार्थिवोहरेः ॥ सर्व्वान्कामानवाप्नोतिनिर्विघ्नोऽपिसजायते ॥ २० ॥ श्रीपञ्चम्यांश्रियन्दे
वीङ्कुन्दैःसम्पूजयेत्सदा ॥ वासवङ्गजराजस्थमुपहारैस्तथोत्तमैः ॥२१॥ लक्ष्म्यास्तन्त्रम्महामन्त्रव्वाँसवस्यपुरोदितम् ॥ अ
त्रापिपूजनेग्राह्यम्मण्डलादियथाक्रमम् ॥ २२ ॥ एवङ्कृतेपूजनेतुश्रीपञ्चम्याव्विँशेषतः ॥श्रीयुतोनृपतिर्भूयान्नश्रीहानिमवा
प्नुयात् ॥ २३ ॥ सदाचारविशेषोयङ्कथितस्तवपार्थिव ॥ निषेधेतुविशेषांश्चशृणुयेनश्रियेष्यते ॥ २४ ॥ असम्पूज्यतथाविष्णुं

शिवमग्निम्पुरदरम् ॥ अदत्वाचतथादानन्नभुञ्जीतनृपःक्वचित्॥२५॥हावयेदग्निहोत्रन्तुनित्यमेवपुरोहितैः॥अकृत्वाचाग्निहो
त्रन्तुभुञ्जन्नरकमाप्नुयात् ॥२६॥ नारक्षितेगृहेराजारत्नदीपविवर्जिते ॥ स्वपेत्तथास्त्रियासार्द्धन्नकदाचनसंविशेत् ॥२७॥भुक्त्वा
न्नंश्रीफलन्नाद्यात्तथाधात्रीफलंनृपः॥ बुद्धिक्षयकरात्र्येतामाषआसवमृत्तिकाः २८ निम्बाटरूषचूताश्चबुद्धिवृद्धिकरामताः॥बु
द्धिक्षयकरानित्यन्त्यजेद्राजायभोजने ॥२९॥भक्षयेदन्वहम्बुद्धिवृद्धिहेतुन्नृपोत्तमः॥नपर्य्यायविहीनन्तुप्रारोहेदासनन्नृपः ३०
नयानन्नगजन्नाश्वमारोहेद्धीनमासनैः॥ नैकस्तुविचरेद्राजाकदाचिदपिनिर्ज्जने॥३१॥मदहेतुन्नभुञ्जीयात्कदाचिदपिभोजने॥
कदाचिन्नापिसेवेतत्त्वष्टम्याम्मांसमैथुने ॥३२॥ दर्शस्नानङ्क्रयाश्राद्धन्तिलैस्तर्प्पणमेवच ॥ नजीवत्पितृकोभूपकुर्य्यात्कृत्वा
घमाप्नुयात् ॥ ३३ ॥ नक्षेत्रजादींस्तनयान्राज्येराजाभिषेचयेत् ॥ पितॄणांशुद्धयेनित्यंऔरसेतनयेसति ॥ ३४ ॥ औरसः
क्षेत्रजश्चैवदत्तःकृत्रिमएव ॥ गूढोत्पन्नोपविद्धश्चभागार्हास्तनयाइमे ॥ ३५॥ कानीनश्चसहोढश्चक्रीतःपौनर्भवस्तथा ॥
स्वयन्दत्तश्चदासश्चषडेतेपुत्रपांसुलाः ॥ ३६ ॥ अभावेपूर्व्वपूर्व्वेषाम्परान्समभिषेचयेत् ॥ पौनर्भवंस्वयन्दत्तन्दासंरा
ज्येनयोजयेत् ॥ ३७ ॥ दत्ताद्याश्चापितनयानिजगोत्रेणसंस्कृताः ॥ आयातिपुत्रतांसम्यगन्यबीजसमुद्भवाः ॥ ३८ ॥
पितुर्गोत्रेणयःपुत्रःसंस्कृतःपृथिवीपतेः ॥ आचूडान्तन्नपुत्रःसपुत्रतांयातिचान्यतः ॥ ३९ ॥ चूडान्तायदिसंस्कारानि

जगोत्रेणसंस्थिताः ॥ दत्ताद्यास्तनयास्तेस्युरन्यथादासउच्यते ॥ ४० ॥ उर्द्धन्तुपञ्चमाद्वर्षाद्दत्ताद्यांश्चसुतान्नृप ॥ गृहीत्वाप
श्चवर्षीयम्पुत्रेष्टिम्प्रथमञ्चरेत् ॥ ४१ ॥ पौनर्भवन्तुतनयञ्जातमात्रंसमानयेत् ॥ कृत्वापौनर्भवष्टोमञ्जातमात्रस्यतस्यवै
॥ ४२ ॥ सर्व्वांस्तुकुर्य्यात्संस्काराञ्जातकर्म्मादिकान्नरः ॥ कृतेपौनर्भवष्टोमेसुतःपौनर्भवःस्मृतः ॥ ४३ ॥ एकोद्दिष्टंपि
तुःकुर्य्यान्नश्राद्धम्पार्व्वणादिकम् ॥ क्रीतायावनितामूल्यैःसादासीतिनिगद्यते ॥ ४४ ॥ तस्याय्योंजायतेपुत्रोदासःपुत्र
स्तुसस्मृतः ॥ नराज्ञोराज्यभाक्सस्याद्विप्राणान्नापिश्राद्धकृत् ॥ ४५ ॥ अधमःसर्व्वपुत्रेभ्यस्तन्तस्मात्परिवर्ज्जयेत् ॥ पु
राणंधर्म्मशास्त्राणिसंहिताश्चमुनीरिताः ॥ ४६ ॥ नाध्यापयेन्नृपःशूद्रैर्व्विहितानियदृच्छया ॥ यस्यराज्येसदाशूद्राःपुराणंसं
हितान्तथा ॥ ४७॥ पठन्तिस्यात्सहीनायुःराजाराष्ट्रेणसान्वयः ॥ मोहाद्वाकामतःशूद्रःपुराणंसंहितांस्मृतिम् ॥ ४८ ॥
पठन्नरकमाप्नोतिपितृभिःसहपापकृत् ॥ शूद्रेभ्योविहितय्यँत्तुयश्चमन्त्रउदाहृतः ॥ ४९ ॥ तद्विप्रवचनाद्वास्यंद्वयंशूद्रैःसदैव
हि ॥ नयोजयेन्नृपःशूद्रव्व्यँवहारस्यदर्शने ॥ ५० ॥ नियोज्यतत्रतम्भूपतामिस्त्रेतेनपच्यते ॥ हीनायुश्चभवेल्लोकोराजावा
पिसहायजः ॥५१॥ काणव्व्यँङ्गमपुत्रव्वाँनभिज्ञमजितेन्द्रियम् ॥ नह्रस्वव्व्याँधितव्वाँपिनृपःकुर्य्यात्पुरोहितम् ॥ ५२ ॥ कृ
पणस्यधनंराजानगृह्णीयात्कदाचन ॥ नद्विजानान्तथादद्याद्धनानिविपुलान्यपि ॥ ५३ ॥ नारोहेत्कामुकोन्मत्तगजंराजाक

दाचन ॥ आरुह्यकामुकन्तत्तुपरत्रेहविषीदति ॥ ५४ ॥ अनायुष्यन्नकुर्य्यात्तुकर्म्मभूपःकदाचन ॥ सततञ्चायुषोवृद्ध्यै
यतेतसकलैर्द्धनैः ॥ ५५ ॥ नक्रूरवारेनाष्टम्यान्नषष्ठ्यान्नृपसत्तमः ॥ अञ्जनाभ्यञ्जनेकुर्य्यात्ताम्बूलस्यापिभोजनम् ॥
॥ ५६ ॥ अतिसूक्ष्मन्तथापूर्णङ्ग्रहणञ्चन्द्रसूर्य्ययोः ॥ नालोकयेत्स्वयंराजारक्तंसूर्य्यन्तथैवच ॥ ५७ ॥ उत्पातञ्चाय
तेयत्तुदिव्यम्भौमञ्चनाभसम् ॥ नेक्षेतयत्नान्नृपतिर्दृष्ट्वानाद्याद्यहम्पुनः ॥ ५८ ॥ सर्व्वदामङ्गलंरत्नन्धारयेत्सहदूर्व्व
या ॥ अवस्त्राच्छादितङ्गात्रन्नविप्रेभ्यःप्रदर्शयेत् ॥ ५९ ॥ नतोयेपुमुखम्पश्येन्नाद्यान्मांसानिपर्व्वसु ॥ नारोहयेत्खरञ्चो
ष्ट्रन्नवामामपिगुर्व्विणीं ॥ ६० ॥ एवन्नरयुतोराजाचतुरङ्गंविवर्द्धयन् ॥ आत्मानंसततंरक्षन्त्सदावीर्य्यंविवर्द्धयेत् ॥
॥ ६१ ॥ बीजक्षयकरन्नित्यम्भक्ष्यम्भोज्यञ्चपानकम् ॥ वर्ज्जयेत्क्षारशाकाद्यान्बह्वम्लम्बहुतिक्तकम् ॥ ६२ ॥ कांस्य
राजतपात्रस्थन्तोयनद्याश्चवर्द्धनम् ॥ मूत्रवृद्धिकरंवीर्य्यक्षयकारिविवर्ज्जयेत् ॥ ६३ ॥ ताम्रायःस्वर्णशीशानाम्पात्रस्थंफलच
र्म्मणोः ॥ शुक्रवृद्धिकरन्तोयन्तदुपासीतयत्नतः ॥ ६४ ॥ सर्व्वमूलेपुकृत्येपुसदाचारेपुनिष्ठितः ॥ भुक्तेहविविधान्भोगानै
न्द्रंस्थानंव्व्रजेत्परे ॥ ६५ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ एवमौर्व्वस्तुसगरंशशासमुनिपुङ्गवः ॥ शास्त्राणिचैवसर्व्वाणिस
दाचारांश्चगृह्यकान् ॥ ६६ ॥ बहुशःकथयामाससगरायमहात्मने ॥ तन्नास्तियत्पुरौर्व्वेणकथितंसगरायनः ॥ ६७ ॥ राजनी

तिःसतान्नीतिर्य्यच्चान्यच्छास्त्रसम्भवम् ॥ संहितासुपुराणेषुयच्चागमचयेस्थितम् ॥ ६८ ॥ सर्व्वंशुश्रावसगरोमुखादौर्व्वस्य
धीमतः ॥ तेषान्तुकथितङ्किञ्चिद्वृत्यद्दिजसत्तमाः ॥६९॥ विष्णुधर्मोत्तरेपूर्व्वंम्मयारहसिभाषितम् ॥ राजनीतिंसदाचारव्वै
दवेदाङ्गसङ्गतम् ॥ ७० ॥ रहस्यंसततव्विँष्णोर्व्वीक्षध्वन्द्विजसत्तमाः ॥ यच्चानुदितमन्यत्रगदितव्वाँससंशयम् ॥ ७१ ॥ सं
शयच्छेदनन्तेषुयुष्मम्यङ्कथितन्द्विजाः ॥ अनुक्तसंशयच्छेदिपुराणङ्कालिकाह्वयम् ॥ योभ्यसेत्सततव्विँप्रःसवेदानाम्फलल्लँ
भेत् ॥ ७२ ॥ ॥इतिश्रीकालिकापुराणेएकनवतितमोध्यायः॥९१॥ ॥छ॥ ॥ऋषयऊचुः॥ ॥सङ्क्षेपतःसदाचा
रव्विँशेषंराजनीतिषु ॥ श्रुतस्त्वद्वचनादौर्व्वःसगराययथोक्तवान् ॥ १ ॥ विष्णुधर्म्मोत्तरेतन्त्रेबाहुल्यंसर्व्वतःपुनः ॥ द्रष्ट
व्यस्तुसदाचारोद्रष्टव्यास्तेप्रसादतः ॥ २ ॥ भूयोनःसंशयोयोस्तितदनुक्तन्त्वयापुरा ॥ छिन्धिविप्रेन्द्रपृच्छामःपरङ्कौतूहलंहि
नः ॥३॥ अपुत्रस्यगतिर्न्नास्तिश्रूयतेवेदलोकयोः ॥ वेतालभैरवौयातौपुरावैतपसेगिरिम् ॥ ४ ॥ पूर्व्वन्त्वकृतदारौतौतयोःपु
त्रानचश्रुताः॥नजाताप्यथवाजातायदिनानाद्विजोत्तम ॥५ ॥ तेषान्तुसम्यगिच्छामिश्रोतुंसंस्थानमुत्तमम्॥ ॥मार्कण्डेयउ
वाच ॥ ॥ अपुत्रस्यगतिर्न्नास्तिनिश्चितञ्चेतिसत्तमाः ॥ ६ ॥ स्वपुत्रैर्भ्रातृपुत्रैर्व्वापुत्रवन्तोहिस्वर्ग्गताः ॥ जातापत्यौच
तौविप्राधीरौवेतालभैरवौ ॥ ७ ॥ तयोर्व्वंशान्प्रवक्ष्यामिशृण्वन्तुचमहर्षयः ॥ सम्यक्सिद्धिमवाप्यैवयदावेतालभैरवौ

॥ ८ ॥ हरस्यमन्दिरम्प्राप्तौकैलासम्प्रतिहर्षितौ ॥ तदाहरस्यवचनान्नन्दीतौरहसिद्विजाः ॥ ९ ॥ प्राहेदव्वँचनन्तथ्यंसा
न्त्वयन्निवबोधकृत् ॥ नन्द्युवाच ॥ अपुत्रौपुत्रजननेभवंतौशङ्करात्मजौ ॥ १० ॥ यतताञ्ज्ञातपुत्रस्यसर्व्वत्रसुलभागतिः ॥ पु
न्नामनरकम्पुत्रविहीनःपरिपश्यति ॥ ११ ॥ नतपोभिर्न्नधर्म्मैर्गतन्मोचयतुमीश्वरः ॥ केवलात्पुत्रजननात्तस्मान्मोक्षःप्रजा
यते ॥ १२ ॥ तदुत्पादयताम्पुत्रम्भवन्तौदेवयोनिषु ॥ अमर्त्यतातुयुवयोःक्षीरपानादजायत ॥ १३ ॥ कात्यायन्यास्ततःपु
त्रानमर्त्याःस्वसमायतः ॥तस्माद्यथातथापुत्रानुत्पाद्यसुरयोनिषु ॥ १४॥ प्रियौभवन्तौशिवयोर्भवतन्नचिरादिति॥मार्कण्डेय
उवाच ॥तस्येतिवचनंश्रुत्वानन्दिनःप्रीतमानसौ॥१५॥एवमेवकरिष्यावोनन्दिन्नित्यभाषताम् ॥ ततस्तौसततङ्कत्वानन्दि
नोवचनंहृदि॥१६॥ अचेष्टतांस्वपुत्रार्थैत्रजन्तौताविनस्ततः ॥अथैकदाभैरवोसौउर्व्वशीमप्सरोवराम्॥१७॥हिमवत्पर्व्वतप्र
स्थेददर्शसुमनोहराम्॥अथताङ्कामुकोभूत्वाययाचेसुरतोत्सवम् ॥१८॥ वेश्याभावाच्चसुप्रीतासायथेच्छमुवाचतम् ॥ ततस्त
स्याम्भैरवस्तुचकारसुरतोत्सवम् ॥१९॥ प्रीतायामुर्व्वशीदेव्यांसुप्रीतोभूच्चकेलिभिः॥सुप्रीतायामथोर्व्वश्यान्तेजोभिर्भैरव
स्यतु ॥ २० ॥ सद्योजातोभवत्पुत्रोबालसूर्य्यसमप्रभः ॥ तन्तुपुत्रंपरित्यज्यययौस्वस्थानमुर्व्वशी॥२१॥ आदायतनयम्प
श्चाद्भैरवःस्वपदय्ययौ ॥ संस्कृत्यतनयन्तन्तुभैरवोमोदसय्युँतः ॥ २२ ॥ सुरेशमितितन्नाम्नाचकारसगणाधिपः ॥ अथत

ज्ञातवयसंशक्रस्सूर्य्यसमप्रभम् ॥ २३ ॥ विद्याधराधिपत्येतुसुरेशमभ्यषेचयत् ॥ सतुविद्याधराध्यक्षस्तनयामतिसुन्दरीम्
॥ २४ ॥ येमेगन्धर्व्वराजस्यधृतराष्ट्राह्वयस्यच ॥ तस्यान्तस्यसुतोजज्ञेरुरुर्न्नामामनोहरः ॥ २५ ॥ रुरोस्तुतनयोबाहुर्म्मैना
क्यामभ्यजायत ॥ वाहोस्तुपुत्राश्चत्वारस्तपनोङ्गदईश्वरः ॥ २६ ॥ कुमुदोभूत्कनीयाँस्तुचार्व्वत्यान्तुमनोहरः ॥ कुमुद
स्यसुतोजज्ञेदेवसेनोमहाबलः ॥ २७ ॥ सदेवसेनःपृथिवीमवतीर्य्यमनोहरः ॥ मान्धातुर्य्यौवनाश्वस्यतनयाङ्केशिनीम्मुहुः
॥२८॥ वरयामासभार्य्यार्थैमृद्वङ्गीमप्सरःसमाम् ॥ यौवनाश्वोपिमान्धाताशक्रस्यवचनाददौ ॥२९॥ केशिनीन्तनयांस्वीया
न्देवसेनायवाञ्छया ॥ केशिनीमुपयम्याथदेवसेनस्तयासह ॥ ३० ॥ वाराणस्यांशम्भुपुर्य्यांहरमाराधयच्छिवम् ॥ आराधि
तोहरःप्रीतस्तस्येष्टम्प्रददौवरम् ॥ ३१ ॥ सौप्यादद्देहरात्तस्मादिष्टमेववरत्रयम् ॥ यावच्चसूर्य्योभवितातावत्स्थास्यतिसन्त
तिः ॥ ३२ ॥ अस्यामेवनगर्य्याम्मेमद्वंशस्यापिराजता ॥ प्रसन्नोममवंशेत्वन्नित्यमेवभविष्यसि ॥ ३३ ॥ इत्यादायवरंसोपि
देवसेनोमहाकृती ॥ शङ्करस्यप्रसादेनचिरन्ताम्बुभुजेपुरीम् ॥ ३४ ॥ देवसेनोथकेशिन्याञ्जनयामासपुत्रकान् ॥ यूयंशृणुत
सप्तैतान्नामतःकीर्तितांस्तथा ॥ ३५ ॥ सुमनावसुदानश्चक्रतुधृग्यवनःकृतो ॥ नोलोविवेकोह्येतेवैसर्व्वशास्त्रविशारदाः ॥ ३६ ॥
सर्व्वेवंशकराःपुत्रादेवसेनस्यसत्तमाः ॥ अथकालेतुसंप्राप्तेदेवसेनोपिभार्य्यया ॥ ३७ ॥ पुत्रेषुराज्यन्निःक्षिप्ययातोविद्याधर

क्षयम् ॥ ततस्तेतस्यतनयाःकृत्वासुमनसन्नृपम् ॥ ३८॥ वसुदानादयःसर्व्वेबुभुजुश्चोत्तमांश्रियम् ॥ जातासुमनसःपुत्राश्च
यःशूरामहाबलाः ॥ ३९ ॥ सुमतिश्चविरूपश्चसत्यःशास्त्रार्थपारगाः ॥ सुमतेरभवत्कन्यासुतःसत्यस्यडिण्डिमः ॥४० ॥ वि
रूपस्याभवद्राधिर्गाधेर्म्मित्रोभवत्सुतः ॥ तेपाङ्कल्पोभवद्राजाकल्पात्तुविजयोभवत् ॥ ४१ ॥ योविजित्यक्षितिंसर्व्वान्पार्थि
वान्भूरितेजसः ॥ शक्रस्यानुमतेचक्रेखाण्डवंशतयोजनम् ॥ ४२ ॥ यत्सव्यसाचीव्यदहत्पाण्डुपुत्रःप्रतापवान् ॥ आवहत्प
रमाम्प्रीतिञ्ज्वलनस्यमहात्मनः ॥ ४३ ॥ ॥ ऋषयऊचुः ॥ ॥ कथंसखाण्डवञ्चक्रेविजयःशतयोजनम् ॥ तद्वयंश्रोतुमिच्छा
मःकथयस्वतपोधन ॥ ४४॥ ॥मार्कण्डेयउवाच॥ ॥ सोमवंशेभवद्राजामहाबलपराक्रमः॥धीरःसुदर्शनोनामचारुरूपः
प्रतापवान् ॥ ४५ ॥ सर्वैर्हिमवतोनातिदूरेभङ्क्कामहावनम् ॥ सिंहान्व्याघ्रान्समुत्सार्य्यकंचिच्चापितपोधनान् ॥४६ ॥ खा
ण्डवीन्नामनगरीमकरोत्तत्रशोभनाम् ॥ त्रिंशद्योजनविस्तीर्ण्णामायतांशतयोजनाम् ॥४७॥ उच्चप्राकारसय्युँक्तांसाट्टालाम्बु
द्तोरणाम् ॥ निम्नाभिरतिदीर्घाभिःपरिखाभिःसमावृताम् ॥ ४८ ॥ अधृष्यामपरैर्वीरैर्न्नानाजनसमावृताम् ॥ दीर्घिका
भिश्चोपवनैर्ब्बहुभिश्चाप्सरोगणैः ॥ ४९ ॥ आकीर्णाञ्चतथारामैरुत्तमैरपिमानवैः ॥सोत्सवाःसततय्यँत्रजनादेवान्दिविस्थि
तान् ॥ ५० ॥ स्पर्द्धन्तेस्ममुदायुक्ताआद्याभोगसमन्विताः ॥ सर्वैसुदर्शनोराजाखात्वाभूमिव्विँदार्य्यच ॥ ५१ ॥ गङ्गाङ्क

नखलान्देवीव्वाँहयामासखाण्डवीम् ॥ सम्प्लाव्यखाण्डवीमध्यन्तेनखातैश्चवर्त्मभिः ॥ ५२ ॥ वक्रानुवक्रगाभूत्वायातिसी
तान्नदीम्प्रति ॥ सजित्वासकलान्भूपान्वित्तान्याहृत्यभूरिशः ॥ ५३ ॥ राशीचकारखाण्डव्यामध्येरत्नैरनेकशः ॥ अन्येषा
न्नगरेभ्यस्तुजनानानीयभूपतिः ॥ ५४ ॥ खाण्डव्याव्वाँसयामासहठादपिसुदर्शनः ॥ देवदानवगन्धर्व्वाञ्जित्वाजित्वायुधा
कृतीः ॥ ५५॥ देववृक्षन्देवरत्नन्देवीञ्चापितथौषधीम् ॥ खाण्डव्यांरोपयामाससभूपालःसुदर्शनः ॥ ५६ ॥ असहिष्णुस्ततो
जिष्णुर्न्नृपतिन्तंसुदर्शनम् ॥ कृतापचारम्बहुधादेवानाञ्चतथानृणाम्॥५७॥वाराणसीपतिर्व्वीरर्व्विजयञ्जयशालिनम्॥सन्धा
यकृतसाचिव्यन्तद्वैरेसमयोजयेत् ॥ ५८ ॥ विजयोविवरम्प्राप्यमहाबलपराक्रमः ॥ सुदर्शनस्यनृपतेरवस्कन्दमथाकरो
त् ॥ ५९ ॥ नासहत्सोह्यवस्कन्दव्विँजयस्यसुदर्शनः ॥ चतुरङ्गबलेनाशुयुद्धायाभिमुखोभवत् ॥ ६० ॥ विजयोरथमा
रुह्यनियोज्यचतुरङ्गिणीम् ॥ सेनांसुदर्शनय्येयाँद्धुंसम्मुखोभवदञ्जसा ॥ ६१ ॥ तदामहायुद्धमासीद्विजयेनमहात्मना ॥ सु
दर्शनस्यनृपतेर्व्वृत्रवासवयोर्य्यथा ॥६२॥सुदर्शनस्यसेनानीरुन्वामान्नामवीर्य्यवान् ॥ काञ्चनंरथमारुह्यविजयंसम्मुखोभ्य
यात् ॥ ६३ ॥ अक्षौहिण्यस्तुसप्तास्यपरिवार्य्यसमन्ततः ॥ व्यधमत्तांशत्रुसेनाय्याँवतीमुद्यतायुधः ॥ ६४ ॥ विजयस्यच
सेनानीःसञ्जयःसरिपुञ्जयः ॥ नागानीकेनजग्राहरुमन्वन्तंससैनिकम् ॥ ६५ ॥ तयोर्म्महदभूद्युद्धंसेनान्योर्व्वीरयोर्म्मह

१ अवस्कन्दः विजिगीषूणां निवेशस्थानम् । २ अस्यसप्त अक्षौहिण्य आसन् ताभिः परिवार्ये त्यर्थः

त् ॥ ववर्षशरवर्षेणरुमन्वानथसञ्जयम् ॥ ६६ ॥ कुर्वंश्चापिमहानादङ्गजन्दृष्ट्वैवकेशरी ॥ रुमन्वानथविंशत्याबाणैर्विव्द्वा
थसञ्जयम् ॥ ६७ ॥ क्षुरप्रेणधनुस्तस्यचिच्छेदकृतहस्तवत् ॥ सोपिकार्म्मुकमादायतदान्यत्सञ्जयस्त्रिभिः ॥ ६८ ॥ बाणै
र्विव्याधभल्लेनधनुश्चिच्छेदतत्क्षणात् ॥ शतान्यष्टौचनागानांसहस्राणिचपञ्चषट् ॥ ६९ ॥ पत्तीनांवाँजिनान्त्रीणिसहस्रा
णिसमन्ततः ॥ सञ्जयोनिजघानाशुबाणवर्षैःसुदारुणैः ॥ ७० ॥ अथान्यद्धनुरादायरुमन्वान्कुपितोभृशम् ॥ भल्लेनसा
रथेरस्यशिरःकायादपाहरत् ॥७१॥ हयांश्चास्यचतुर्भिस्तुबाणैर्निन्येयमक्षयम् ॥ चतुरःपञ्चभिर्ब्बाणैरविध्यच्चापिसञ्जयम्
॥७२॥ सञ्जयोप्यतिवेगेनगदामादायतत्क्षणात् ॥ अवतीर्य्यरथोपस्थाद्रुमन्वन्तमधावत ॥७३॥ सधावन्तंसञ्जयन्तंरुमन्वा
न्द्रुतहस्तवत्॥ शरवर्षेणसञ्छाद्यवारयामाससञ्जयम्॥७४॥ गदायाभ्रामणेनासौनिवार्य्यशरवर्षणम्॥आससादरुमन्वन्त
ङ्केशरीवमहागजम् ॥७५॥ आसाद्यताङ्गदाङ्गुर्व्वीमाविद्ध्यातीवसञ्जयः॥एकेनैवप्रहारेणसरथन्तव्व्यपोथयत्॥७६॥सपपा
तमहावीरःपृथिव्याङ्गदयाहतः॥वज्राहतोयथाशालःप्रफुल्लोवनमध्यगः॥७७॥ रुमन्वन्तन्निपतितन्दृष्ट्वाराजासुदर्शनः ॥ शो
ककोपसमाविष्टःसधूमइवपावकः ॥७८॥ जज्वालाकुलदेहोपिक्रोधेनातीवसय्युँतः ॥आरुह्यपवनैरश्वैर्य्युक्तंव्वैयाघ्रकृत्तिना
॥७९॥रथङ्काञ्चनचित्राङ्गंसिंहध्वजविभूषितम्॥आमुक्तोधनुरादायविस्फार्य्यचपुनःपुनः॥८०॥ससैन्यःसञ्जयंराजासमाद्रव

१रुमन्वन्तम् ।

तवेगवान्॥ अथास्यनिशितैःशस्त्रैःसेनामग्रगताम्भृशम्॥८१॥ न्यहन्यत्सकलान्राजामृगानिवमृगाधिपः ॥एकामक्षौहिणी मग्रगामिनीव्विँपुलौजसाम्॥ ८२ ॥क्रोशद्वयेनन्यहनत्तमांसीवदिवाकरः॥ हत्वाचाक्षौहिणीमेकामासाद्यसञ्जयन्नृपः॥८३॥ बाणैःषष्ट्यातुविव्याधध्वजमेकेनचिच्छिदे ॥ सञ्जयोप्यथविंशत्याहृदिविद्ध्वासुदर्शनम् ॥ ८४ ॥ ललाटेत्वेकबाणेनप्राविध्य त्कृतहस्तवत्॥ क्षुरप्रेणास्यकोदण्डञ्छित्वाराज्ञःप्रतापवान् ॥८५॥ सारथिन्दशभिर्ब्बाणैःपुनर्व्विव्याधसञ्जयः॥ कोदण्ड मन्यमादायतदाराजासुदर्शनः ॥ ८६ ॥ शरवर्षेणतीव्रेणववर्षातीवसञ्जयम् ॥ तयोर्म्महदभूद्युद्धम्मुनिविस्मयकारकम् ॥ ८७ ॥ शस्त्रैरस्त्रैर्भृशन्तीक्ष्णैर्ब्बलिवासवयोरिव ॥ ततःसुदर्शनोराजाभल्लेनास्यदृढन्धनुः॥८८॥ चिच्छेदसारथिश्चास्य जघाननिशितैःशरैः॥ स्वयंसर्य्यँम्यवाहान्ससञ्जयःपरवीरहा॥८९ ॥ धनुरन्यत्समादायपरिवार्य्यसुदर्शनम्॥ विव्याधद शभिर्ब्बाणैर्द्धनुरप्यच्छिनद्दृढम् ॥९०॥ शरासनान्तरंराजासमादायसुदर्शनः ॥सञ्जयस्यचतुर्व्वाहाञ्छरैर्न्निन्येयमक्षयम् ॥ ९१ ॥ मुष्टौधनुश्चचिच्छेदतञ्चविव्याधपञ्चभिः॥ विरथश्छिन्नवाहश्चसञ्जयःखड्गचर्म्मणी ॥ ९२ ॥ आदायसम्मुखंरा ज्ञोभ्यद्रवत्कुपितोभृशम् ॥ तस्यचापन्ततःखड्गङ्क्षुरप्रेणसुदर्शनः॥९३॥द्विधाचिच्छेदभल्लेनचर्म्मचाप्यच्छिनत्तदा॥ अथद्रुत न्तदोपेत्यसञ्जयः स्यन्दनोत्तमम्॥९४॥सुदर्शनस्य सूतन्तुकराभ्याम्पातयत्क्षितौ॥रथाभ्याशगतस्यास्यसञ्जयस्यसुदर्शनः

१ आर्षत्वादडभावः

॥९५॥ शिरश्चिच्छेदखड्गेनततोसौन्यपतद्भुवि ॥ सपपाततदातस्यरथाभ्याशेमहाबलः ॥ ९६ ॥ कृतःपरशुनारण्येपुष्पि
तःशालवृक्षवत् ॥ सञ्जयम्पतितन्दृष्ट्वाविजयःक्रोधमूर्च्छितः ॥ ९७॥ महताशङ्खनादेननादयँस्तुनभःस्थलम् ॥ रथेनस्वर्ण
चित्रेणव्याघ्रचर्म्मविराजता ॥ ९८ ॥ केतुनावृषभेणाथयोजनार्द्धोच्छ्रितेनच ॥ नादयन्ककुभःसर्व्वारथौघपरिवेष्टितः॥९९॥
विमुञ्चञ्छरवर्षाणिसससादसुदर्शनम् ॥ आसाद्यतन्नृपम्भूपोविजयःपरवीरहा ॥ १०० ॥ हृदिविद्धात्रिभिर्ब्बाणैस्तिष्ठतिष्ठे
तिचाब्रवीत् ॥ सुदर्शनोपिविजयन्नदन्तङ्कुञ्जरोपमम् ॥ १ ॥ दशभिर्न्निशितैर्ब्बाणैर्व्विद्धाचिच्छेदतद्धनुः ॥ अथैनञ्छि
न्नधन्वानञ्जत्रुदेशेत्रिभिःशरैः ॥ २ ॥ निर्ब्बिभद्याथमहानादंननादससुदर्शनः ॥ सोन्यद्धनुःसमादायकङ्कपत्रैस्त्रिभिःशरैः
॥ ३ ॥ विव्याधहृदयेवीरोविजयोपिसुदर्शनम् ॥ ततस्तन्नृपमुद्दिश्यमहाशक्तिंसुदीपिताम् ॥ ४ ॥ नागकन्याङ्कोपयु
क्ताँल्लेलिहानामिवातुलाम् ॥ स्वर्णदण्डांसुतीक्ष्णाग्रान्तैलधौतांसुनिर्म्मलाम् ॥ ५ ॥ समुद्यम्याथचिक्षेपविजयःशात्र
वम्प्रति ॥ सुदर्शनस्यहृदयेसाशक्तिःप्रविवेशह ॥ ६ ॥ सविह्वलोरथोपस्थेत्वधोवक्त्रउपाविशत् ॥ तस्मिन्मोहसमापन्न
नृपतौचसुदर्शने ॥ ७ ॥ तस्याग्रतस्तथापार्श्वेयेस्थितास्तत्रसैनिकाः ॥ तान्सर्व्वानहनद्राजाक्षणमात्राद्द्विजोत्तमाः
॥८ ॥ रथान्दशसहस्राणितावन्त्येवचदन्तिनाम् ॥ पञ्चविंशसहस्राणिवाजिनाञ्चतरस्विनाम् ॥ ९ ॥ लक्षद्वयन्तुपत्तीना

ङ्क्षणमात्रादपोथयत् ॥ सतुलब्ध्वाततःसञ्ज्ञान्धनुरादायवैद्दढम्॥ १ १ ०॥ शरवर्षेणविजयव्वँवर्षससुदर्शनः ॥ निवार्य्यशरव
र्षैणविजयन्तुसुदर्शनः ॥१ १॥ भल्लेनकार्म्मुकंसज्यन्तस्यचिच्छेदतत्क्षणात् ॥ सारथेस्तुशिरःकायाद्भल्लेनापाहरत्ततः॥ १ २॥
हयाँश्चचतुरश्चास्यप्रेषयामासमृत्यवे ॥ अथैनव्विँरथम्भूपन्दशभिःकङ्कपत्रिभिः ॥ १ ३ ॥ विव्याधहृदयेभूयोननादचसुदर्श
नः ॥ सच्छिन्नधन्वाविरथोगदामादायवेगवान् ॥ १४ ॥ विजयोविजयाकाङ्क्षीसुदर्शनमधावत॥ आपतन्तम्महावीरम्बाणव
र्षैःसुदर्शनः॥ १ ५॥ववर्षवर्षासुयथावारिदःपृथिवीधरम्॥ विजयःशरवृष्टिन्ताम्प्राच्छाद्यरुवशरेणवै॥१६॥गदयातंरथारूढमा
ससादतुतत्क्षणात् ॥ आसाद्यतंमहावीर्य्यव्विँजयोथसुदर्शनम् ॥ १ ७॥ शीर्षेप्रहृत्यगदयापातयामासभूतले ॥ गिरेःशृङ्गय्यँ
थातुङ्गव्वँज्राशनिविदारितम् ॥ १८ ॥ तथासुदर्शनोराजादारितोगदयापतत् ॥ तस्मिन्निपतितेवीरेसेनाभिस्तस्यसैनिकाः
॥ १९ ॥ भयात्सम्प्राद्रवंस्तस्माद्दिशश्चप्रदिशस्तथा ॥ नष्टेषुतस्यसैन्येषुविजयःखाण्डवीम्पुरीम् ॥ १२० ॥ प्रविश्यददृशे
तत्रराशीभूतान्गिरीनिव ॥ सुवर्णानाञ्चरत्नानांसञ्चयान्बहुशःपुनः ॥ २१ ॥ दृष्ट्वासरांसितत्रैषप्रफुल्लकमलानिच ॥ हंस
कारण्डवानादैर्न्नादितानिसमन्ततः ॥ २२ ॥ राशीन्स्सुवर्णरत्नानाम्पर्व्वतानिवविस्तृतान् ॥ पुष्पितान्देववृक्षाँश्चभ्रमद्भ्रमर
भूषितान् ॥२ ३॥ प्रासादान्विपुलाञ्छुभ्रान्कैलाससदृशान्गजान्॥ प्रस्फुटाँश्चसुगन्धाढ्यान्प्रतिगेहेव्यवस्थितान्॥२४॥उत्फु

ल्लनयनोराजाविजयःपरवीरहा ॥ मेनेममरावतीन्तान्तुपुरीङ्क्षितिगतामिव ॥ २५ ॥ तव्वींक्षन्तन्नरपतिन्नगरीन्तांसुरेश्वरः ॥
समेत्यविजयम्प्राहसान्त्वयञ्श्लक्ष्णयागिरा ॥२६॥ ॥ इन्द्र उवाच ॥ ॥ राजन्महावनमिदमासीद्देवगणावृतम्॥नचग
न्धर्व्वयक्षाणाम्मुनीनाञ्चमनोहरम् ॥ २७ ॥ सर्व्वानुत्साय्यंदेवादीन्ममचाप्यप्रियेरतः ॥ अङ्कावनमिदङ्कृत्यमुत्साद्यचत
पोधनम् ॥ २८ ॥ खाण्डवीन्नगरीञ्चक्रेहठाद्राजासुदर्शनः ॥ तदिदम्पुनरेवत्वव्वँनङ्कुरुनरोत्तम ॥ २९ ॥ तत्राहव्विँहरिष्या
मितक्षकेणसमंरहः ॥ मुनीनाञ्चतपःस्थानमतुलन्तेप्रसादतः ॥१३०॥ भविष्यतिचयक्षाणाङ्किन्नराणाञ्चपार्थिव ॥ मार्कण्डेय
उवाच॥एतच्छ्रुत्वावचस्तस्यशक्रस्यविजयस्तदा ॥ ३१ ॥ वनमेवाकरोत्तत्तुखाण्डवींशक्रगौरवात्॥गच्छन्तुभोयथास्थानम्प्र
जाःसर्व्वायथेच्छया ॥३२॥येषाव्वाञ्छास्तिलोकानाम्मद्राज्यगमनेपुनः॥वाराणसीन्तेगच्छन्तुमयैवप्रतिपालिताम् ३३॥तत
स्तस्यवचःश्रुत्वाजनाःकेचिन्निजास्पदम्॥जग्मुर्व्वाराणसीङ्केचिद्विजयेनाभिपालिताः ॥३४॥ततोधनानान्तात्राशीन्रत्नाना
ञ्चपृथक्पृथक्॥मणीनांकनकानाञ्चकुप्यानाव्विँजयस्तथा ॥३५॥विविधैर्व्वारयामासपुरीव्वाँराणसीम्प्रति॥गन्धर्व्वाणाञ्च
देवानायँद्यदानीतंहठात्पुरा॥३६॥रत्नदार्व्वादिकय्यँत्तुविजयन्तत्प्रसाद्यच ॥ तैस्तैर्न्नीतञ्चखाण्डव्याःस्वस्थानम्प्रतिहर्षितैः
॥३७॥त्रिंशद्योजनविस्तीर्णांशतयोजनमायताम् ॥ताम्पुरीव्विँजयश्चक्रेनचिरादेववैवनम् ॥ ३८॥ तस्मिञ्छक्रस्यसम्मत्यात

क्षकः सहितोगणैः ॥ उवाससुचिरन्तत्रततोभून्निर्ज्जनव्वनम् ॥ ३९ ॥ तत्रदेवाःसगन्धर्व्वाःक्रीडन्तेप्सरसाङ्गणाः ॥ आशंस
न्तश्चविजयंरणेषुविजयावहम् ॥ १४० ॥ अष्टाविंशतिमेप्राप्तेयुगेद्वापरशेषतः ॥ वह्निर्ब्राह्मणरूपेणभिक्षाञ्जिष्णुमयाचत
॥ ४१ ॥ दातुमङ्गीकृतेभिक्षान्तदापाण्डुसुतेनवै ॥ वह्निःस्वरूपमास्थायजिष्णुव्वँचनमब्रवीत् ॥ ४२ ॥ अहमग्निःपाण्डुपु
त्रयज्ञभागाभिभोजनात् ॥ व्याधितोहन्ततोव्याधिम्ममत्वन्नाशयाधुना ॥ ४३ ॥ खाण्डवन्नामविपिनंसपक्षिमृगराक्षसम् ॥
यदित्वम्माम्भोजयितुंशक्तोसिश्वेतवाहन ॥ ४४ ॥ तदाममत्यसौव्याधिरपयास्यतिनोचिरात् ॥ पुरातुविजयोराजाखाण्ड
वीन्नामताम्पुरीम् ॥ ४५ ॥ भङ्क्त्वावनय्यँतश्चक्रेतेनतत्खाण्डवव्वँनम् ॥ मदर्थन्देवविहितव्वँनन्तुच्छ्वेतवाहन ॥ ४६ ॥ विरोधा
त्तुशक्रस्यनस्वयम्भोक्तुमुत्सहे ॥ तस्मात्त्राहिमहाभागवनेतस्मिन्नियोजय ॥ ४७ ॥ यथाहंसकलम्भोक्तुंशक्नोमित्वत्प्र
सादतः ॥ तस्यतद्वचनंश्रुत्वासव्यसाचीमहाबलः ॥ ४८ ॥ दाहयामासविपिनन्तत्सर्व्वम्प्राणिसय्युँतम् ॥ देवकीतनये
नासौवासुदेवेनपालितः ॥ ४९ ॥ खाण्डवन्दाहयामासज्वलनस्यहितेरतः ॥ सुप्रीतःप्रददौतस्मादर्ज्जुनायमहात्मने ॥ १५० ॥
वह्निर्द्धनुश्चगाण्डीवव्वाँरुणन्देवनिर्म्मितम् ॥ अक्षय्येचेषुधीदिव्येरूप्याभाँश्चतुरोहयान् ॥ ५१ ॥ हनूमताधिष्ठितन्तुमहा
न्तव्वाँनरध्वजम् ॥ खड्गञ्चत्रिशिखन्तीक्ष्णन्दहनःसव्यसाचिने ॥ ५२ ॥ नीरोगश्चाभवद्वह्निस्तदाजिष्णुप्रसादतः ॥ तैर्व्वा

णैस्तेनधनुषातेनखड्गेनकेतुना ॥ ५३ ॥ तदश्वेस्यन्दनेनापिविजिग्येफाल्गुनोरिपून् ॥ एवम्भैरववंशेषुसञ्जातोविजयोनृपः
॥५४॥खाण्डवन्नामविपिनञ्चकारसुमहाकृती ॥ विजयस्यसुताजातात्रयोदशमहाबलाः ॥५५॥ द्युतिमान्सौम्यदर्शीचभूरिः
प्रद्युम्नएवच ॥क्रतुस्तुण्डोविरूपाक्षोविक्रान्तोथधनञ्जयः ॥५६॥ प्रहर्षःप्रबलःकेतुस्तथोपरिचरोपरः ॥ एषांराजाभवद्वीरःशे
षोपरिचरस्तुयः ॥५७॥ वाराणस्यान्नगर्य्यायोयज्ञलक्षम्पुराकरोत् ॥ लक्षयज्ञकरःकोपिनासीन्नापिभविष्यति ॥५८॥ राजा
क्षितौमहाभागोयथोपरिचरस्तथा ॥ एषांसूतिप्रसूतैश्चव्याप्तंसर्व्वमिदञ्जगत्॥५९॥ चिरेणतान्नकःसङ्ख्यातुंशक्नोतिभुविमा
नुषः ॥ क्रमाद्भैरववंशेनव्याप्तल्लोकत्रयन्त्विदम् ॥६० ॥ एतद्वःकथितव्विप्राःसन्तानम्भैरवस्यतु ॥ येषांश्रुत्वाकथामात्र
न्नापुत्रोजायतेनरः॥६१॥इदय्यःकीर्त्तयेत्पुण्यञ्चरितव्विजयस्यतु॥सततव्विजयस्तस्यजायतेनपराभवः ६२॥ एकाग्रमनसा
यस्तुशृणुयादिदमुत्तमम् ॥ तस्यवंशस्यविच्छेदोनकदाचिद्भविष्यति ॥६३॥ इतिकालिकापुराणेद्विनवतितमोध्यायः ॥९२॥
॥ ॥मार्कण्डेयउवाच॥ ॥वेतालस्यचसन्तानंशृण्वन्तुमुनिसत्तमाः ॥ यच्छ्रुत्वासर्व्वपापेभ्यस्तत्क्षणादेवहीयते ॥१॥ द
क्षस्यतनयाचाभूत्सुरभिर्नामनामतः ॥ गवाम्मातामहाभागासर्व्वलोकोपकारिणी॥२॥ तस्यान्तुतनयाजज्ञेकश्यपात्तुप्रजाप
तेः ॥ नाम्नासारोहिणीशुभ्रासर्व्वकामदुघानृणाम् ॥३॥तस्याञ्जज्ञेशुनःशेपान्मुनेरिरितितपोधनात् ॥ कामधेनुरितिख्याताऽस

र्व्वलक्षणसंय्युँता ॥ ४ ॥ सासिताभ्रप्रतीकाशाचतुर्व्वेदचतुष्पदा ॥ स्तनैश्चतुर्भिर्द्धर्म्मार्थकामप्रसवकारिणी ॥ ५ ॥ सासुव
र्णशरीरातुकालेनमहतासती ॥ निर्म्मलय्यौवनम्प्रापकामधेनुर्म्मनोहरम् ॥ ६ ॥ ताञ्चरन्तीम्मेरुपृष्ठेचारुरूपांसुलक्षणाम्
॥ ददर्शसतुवेतालःकामुकश्चाभ्यपद्यत ॥ ७ ॥ तङ्कामुकञ्चवेतालव्विँदित्वाकामधेनुका ॥ पशुधर्म्मात्स्वयम्भेजेतम्पुत्रंशशभृ
द्भृतः ॥ ८ ॥ सोवापतस्याम्परममामोदंशङ्करात्मजः ॥ साचापिपरमान्तस्मिन्मुदमापातिहर्षिता ॥ ९ ॥ तयोःप्रवृत्तेसुर
तेतस्यागर्भोभवत्तदा ॥ कालेप्राप्तेतुसुषुवेकामधेनुर्म्महावृषम् ॥ १० ॥ सोचिरेणैवकालेनसुमहान्वृषभोभवत् ॥ महाककुद
सय्युँक्तश्चारुशृङ्गसंमन्वितः ११ ॥ उत्क्षिप्यविचलत्कर्णयुगलोदीर्घवालधिः ॥ ककुदेनचशृङ्गाभ्याङ्कर्णाभ्यांससिताभ्रवत्
॥ १२ ॥ विचलन्ददृशेदेवैःशृङ्गैरिवसिताचलः ॥ वेतालस्त्वकरोत्तस्यनामशृङ्गइतिद्विजाः ॥ १३ ॥ सतुशृङ्गोज्ञानशालीसमा
राधयदीश्वरम् ॥ सोपितुष्टोवरन्तस्मैददाविष्टंहरःप्रभुः ॥ १४ ॥ तमेववाहनञ्चक्रेकृत्वादेवतनुंव्वृँषम् ॥ सचिरायुश्चबलवान्पृ
थिवीधारणेक्षमः ॥ १५ ॥ शृङ्गोनाममहातेजाःकेतुःसोप्यभवत्प्रभोः ॥शृङ्गोभूत्वामतोयस्माच्छङ्करस्यमहात्मनः ॥ १६ ॥
अतोभृङ्गइतिख्यातिमथप्राहमहेश्वरः ॥ सतुभृङ्गोमहादेवेध्यानासक्तेक्वचित्क्वचित् ॥ १७ ॥ वरुणस्यगृहङ्गत्वासुरभेस्तनया
स्तुयाः ॥ रूपयौवनसम्पन्नाभेजेलंसुरनेनताः ॥ १८ ॥ वरुणस्यगृहेगावःसर्व्वलक्षणसय्युँताः ॥ तिष्ठन्तिसततव्विँप्रास्तासु

१ शृंगद्वयान्वित इतिवापाठः ।

तासुसुताःपुनः ॥१९॥ बहवस्तुसमुत्पन्नास्तेषांसूतिप्रसूतिभिः ॥ सर्व्वञ्जगदिदव्ँयाप्तन्तेभ्योयज्ञंप्रवर्त्तते ॥२०॥ आज्येनदेवास्तुष्यन्तियज्ञाआज्येप्रतिष्ठिताः॥ यज्ञाधीनमिदंसर्व्वञ्जगत्स्थावरजङ्गमम्॥२१॥तदाज्यन्तुगवाधीनन्ततःसर्व्वङ्गविस्थितम् ॥ तदिदंसकलव्ँविश्वङ्गवाधीनन्द्विजोत्तमाः ॥ २२ ॥ वेतालस्यचतागावोवंशाःसर्व्वप्रियाःसदा ॥ यइदंशृणुयान्नित्यव्ँवेतालस्यमहात्मनः॥२३॥वंशानाञ्जन्मविप्रेन्द्राःससुखीबलवान्भवेत् ॥ नगावोनापिविभवास्तस्यनश्यन्तिवैक्वचित् ॥ २४ ॥ नचभूतपिशाचाद्यास्तम्पश्यन्तिकदाचन॥वेतालःसततन्तस्यरक्षामाचरतिस्वयम् ॥ इतिवःकथितव्ँविप्राःयथावेतालभैरवौ ॥२५॥जनयामासतुःपुत्रान्विच्छिन्नाःसंशयाश्चवः ॥ यथाचकालिकादेवीमोहयामासशङ्करम् ॥२६॥ यथोत्पन्नाशरीराद्वैकृतंशम्भोर्य्यथातथा॥ कालिकायैनमस्तुभ्यमितियोभाषतेस्वयम् ॥२७॥ तस्यहस्तेस्थितामुक्तिस्त्रिवर्गस्तुवशानुगः ॥ इतिवःकथितम्पुण्यम्पुराणङ्कालिकाह्वयम् ॥२८॥मन्त्रयन्त्रमयंशुद्धञ्ज्ञानदङ्कामदम्परम् ॥ इतिगुह्यतमल्ँलोकेवेदेषुचतथाद्विजाः ॥२९॥देवगन्धर्व्वसिद्धाद्यैःस्पृहणीयमिदंसदा ॥ अधीतञ्चश्रुतम्मत्तोवशिष्ठेनमहात्मना ॥३०॥ इदम्पुराणममृतङ्कालिकाह्वयमुत्तमम् ॥ तेनगुप्तमिदंसर्व्वङ्कामरूपेसुरालये॥३२॥तदिदानींसमाख्यातव्ँयक्तोकृत्यमहर्षयः ॥ युष्माभिरपिनोदेयङ्गोप्यल्ँलोकेषुसर्व्वदा॥३२॥ शठायचलचित्तायनास्तिकायाजितात्मने ॥ भक्तिश्रद्धाविहीनायनदातव्यङ्कदाचन॥३३॥इदंसकृत्प

ठेद्यस्तुपुराणङ्कालिकाह्वयम् ॥ सकामानलिखान्प्राप्यशेषेऽमृतमवाप्नुयात् ॥ ३४ ॥ मन्दिरेलिखितय्यँस्यपुराणमिदमुत्तमम् ॥ सदातिष्ठतिनोतस्यविघ्नःसञ्जायतेद्विजाः ॥ ३५ ॥ योऽधीतेहन्यहन्येतद्गुह्यन्तन्त्रमिदम्परम् ॥ अधीताःसकलावेदास्तेनेहद्विजसत्तमाः ॥ ३६ ॥ तस्मान्नैवाधिकोन्योस्तिकृतकृत्येविचक्षणः ॥ ससुखीबलवाल्लँोकेदीर्घायुरपिजायते ॥ ॥ ३७ ॥ योलोकमीशःसततम्बिभर्तियःपालयत्यन्तकरस्तथाते ॥ इदंसमस्तम्भ्रमंभ्रमव्वाँयदीयरूपञ्चनमोस्तुतस्मै ॥ ३८ ॥ प्रधानपुरुषोयस्यप्रपञ्चोयोगिनांहृदि ॥ यःपुराणाधिपोविष्णुःप्रसीदतुसवःस्थितः ॥ ३९ ॥ योहेतुरुग्रःपुरुषःपुराणःसनातनःशाश्वतईश्वरःपरः ॥ पुराणकृद्वेदपुराणवेद्यःप्रस्तौमितन्नौमिपुराणशेषे ॥ ४० ॥ इतिसकलजगद्बिभर्तियासांमधुरिपुमोहकरीरमास्वरूपा ॥ रमयतिचहरंशिवास्वरूपावितरतुवोविभवंशुभानिमाया ॥ ४२ ॥ ॥ इतिकालिकापुराणेत्रिनवतितमोध्यायः ॥ ९३ ॥ ॥छ॥ संपूर्णमेतत्कालिकापुराणम् । ॥छ॥ ॥छ॥

१ समस्तंक्रममक्रमव्वाँ इतिवापाठः ।

श्रीमन्महेशकुलदुग्धनिधिप्रसूतः श्रीरुद्रसिंहशशभृन्मिथिलाधिराजः ॥
श्रीमाँस्ततोऽजनि गुणेश्वरसिंहनामा यो धर्म्मनिष्ठगुणसागरदानवीरः ॥ १ ॥
धनञ्जयो येन सुवर्णकारः सुवर्णसिद्धिं विदधाति यद्वत् ॥
विद्वत्तमो येन तथाऽस्य शुद्धिं कृत्वा स्वचीकरादिदं समुद्रितञ्च ॥ २ ॥
नेत्रेन्दुवसुशीतांशुसम्मिते शाकवत्सरे ॥
शुभे भाद्रपदे मासि पक्षे वर्द्धितशीतगौ ॥ ३ ॥

अङ्कित्वा प्रसिद्धिमानीतं श्रीकृष्णदासाङ्गजनुषा गङ्गाविष्णुना खेमराजेन च
स्वकीय श्रीवेङ्कटेश्वरनाम्निमुद्रालये । मुम्बय्याम् ।
शके १८१३ संवत् १९४८

